॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीधर्मरत्नकरंडटीका प्रारभ्यते ॥

॥ प्रथमो भागः ॥

( कर्ता—श्रीवर्धमानसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

प्रणम्य श्रीजिनं वीरं । वीरितांतरशात्रवं ॥ कल्पद्रुममिवानल्प—संकल्पितफलप्रदं ॥ १ ॥ यथाबोधं विबुद्धीनां । सुखसंबोधहेतवे ॥ वक्ष्ये वृत्तिं समासेन । धर्मरत्नकरंडके ॥ २ ॥ तत्र तावदादावेव प्रकरणकारः शिष्टसमयप्रतिपालनाय प्रत्यूहव्यूहव्यपोहकृतेऽभीष्टदेवतानमस्काररूपभावमंगलाभिधानार्थं प्रयोजनादित्रयप्रतिपादनार्थं च श्लोकचतुष्टयमुपन्यस्तवान्, तद्यथा—

॥ मूलम् ॥—सर्वनीतिप्रणेतारं । सर्वधर्मप्रदर्शकं ॥ सर्वविद्यालतामूलं । नौमि श्रीनाभिनं·

दनं ॥ १ ॥ सर्वकर्मविनिर्मुक्तं । सर्वलोकैकभास्करं ॥ सर्वामरनरैर्वंद्यं । वंदे वीरं जिनेश्वरं ॥ २ ॥ अन्यानपि नमस्यामि । श्रीमतस्तीर्थनायकान् ॥ सिद्धांश्च सर्वसूरींश्च । वाचकांश्च मुनींस्तथा ॥३॥ एवं कृतनमस्कारः । स्वान्योपकृतिवांछया ॥ वक्ष्ये प्रकरणं नाम्ना । धर्मरत्नकरंडकं ॥ ४ ॥ व्याख्या —इह हि शिष्टाः क्वचिदभीष्टे वस्तुनि प्रवर्तमानाः संतोऽभीष्टदेवतानमस्कारपुरस्सरमेव प्रवर्तंते, यत उक्तं—प्रेक्ष्य पूर्वकृतां प्रायः । प्रारंभेषु चतुष्टयं ॥ वक्तुं युक्तं विनेयानां । वृत्त्युत्साहनिबंधनं ॥ १ ॥ मंगलं शास्त्रसंबंधः । शरीरं सप्रयोजनं ॥ चतुष्टयमभिप्रेतं । प्रत्यूहापोहिमंगलं ॥ २ ॥ इत्यादि, अयमप्याचार्यो न हि न शिष्ट इत्यतः शिष्टसमयपरिपालनाय, तथा श्रेयांसि बहुविघ्नानि भवंतीत्युक्तं च—श्रेयांसि बहुविघ्नानि । भवंति महतामपि ॥ अश्रेयसि प्रवृत्तानां । क्वापि यांति विनायकाः ॥ १ ॥-इति. इदं च प्रकरणं धर्माधर्मादिफलप्रतिपादकत्वेन सम्यग्दर्शनज्ञानादिहेतुत्वात श्रेयोभूतं वर्तते, अतो विघ्नविनायकोपशांतये, तथा प्रयोजनादिरहिते प्रेक्षावंतो न प्रवर्तंते, तदुक्तं—सर्वस्यैव हि शास्त्रस्य । कर्मणो वापि कस्यचित् ॥ यावत्प्रयोजनं नोक्तं । तावत्तत्केन गृह्यतां ॥ १ ॥ तथा—सिद्धार्थं सिद्धसंबंधं । श्रोतुं श्रोता प्रवर्तते ॥ शास्त्रादौ तेन वक्तव्यः । संबं-

धः सप्रयोजनः ॥ १ ॥ अतः प्रयोजनादिप्रतिपादनार्थं च, तत्र सर्वनीतिप्रणेतारमित्यादिश्लोकत्रयेणाभीष्टदेवतानमस्कारमाह, अयमेव चोक्तन्यायेन प्रत्यूहप्रतिहतिहेतुः, एवं कृतनमस्कार इत्यादिना श्लोकेन प्रयोजनादित्रयमुक्तं, तथाहि—

स्वान्योपकृतिवांछयेति वदता प्रयोजनमुक्तं, वक्ष्ये प्रकरणं नाम्ना धर्मरत्नकरंडकमित्यनेन पुनरिदं प्रकरणमभिधेयतया निर्दिष्टं. अभिधानाभिधेयलक्षणश्च संबंध इति समुदायार्थः. अवयवार्थो व्याख्यालक्षणानुरोधाद्योजनीयस्तच्चेदं—संहिता च पदं चैव । पदार्थः पदविग्रहः ॥ चालनाप्रत्यवस्थानं । व्याख्यातंत्रस्य षड्विधाः ॥ १ ॥ इह च गमनिकामात्रफलत्वात्प्रस्तुतारंभस्य प्रायः संहितादिचर्चाव्यपोहेन भावार्थकथनमेव क्रियते, शेषव्याख्यालक्षणयोजना तु स्वयमेव सुधिया वर्णनीया. तत्र सर्वनीतिप्रणेतारमित्यत्र नौमीति क्रिया, ततश्च नौमि स्तौमि, कं कर्मतापन्नं? श्रीनाभिनंदनं, नाभेर्नाभिकुलकरस्य नंदनः पुत्रो नाभिनंदनः, श्रिया लक्ष्म्योपलक्षितो नाभिनंदनः श्रीनाभिनंदनो युगादिदेव इत्यर्थस्तं, किंविशिष्टं? सर्वनीतिप्रणेतारं. सर्वाश्च ता नीतयश्च लोकलोकोत्तरव्यवहाराः सर्वनीतयस्तासां प्रणेता स्रष्टा सर्वनीतिप्रणेता तं, पुनरपि किंविशिष्टं? सर्वधर्म-

प्रदर्शकं, सर्वे च तेऽस्तिधर्मश्रुतधर्मचारित्रधर्मग्रामधर्मादयो धर्माश्च सर्वधर्माः, तेषां प्रदर्शकः प्रकाशकः सर्वधर्मप्रदर्शकस्तं, भूयोऽपि किंभूतं? सर्वविद्यालतामूलं, सर्वाश्च ता विद्याश्च शब्दविद्याप्रभृतयः प्रज्ञप्त्यादयश्च सर्वविद्यास्ता एव वल्लयः सर्वविद्यालतास्तासां मूलं कारणं सर्वविद्यालतामूलं, तं श्रीनाभिनंदनं नौमीति श्लोकार्थः. तथा सर्वकर्मविनिर्मुक्तमित्यत्र श्लोके वंदे इति क्रिया, कं वंदे? वीरं, किंविशिष्टं? जिनेश्वरं जिनाः केवलमनःपर्यायावधिज्ञानिनश्चतुर्दशनवपूर्वविदश्च, तेषामीश्वरो जिनेश्वरस्तं. पुनरपि किंविशिष्टं? सर्वकर्मविनिर्मुक्तं. सर्वकर्माणि ज्ञानावरणादीनि तेभ्यो विशेषेण बंधोदयोदीरणापेक्षया नितरां सत्तापेक्षया मुक्तः सर्वकर्मविनिर्मुक्तस्तं. पुनरपि किंविशिष्टं? सर्वलोकैकभास्करं सर्वश्चासौ लोकश्च सर्वलोकस्तस्य प्रकाशकारित्वादेकोऽद्वितीयो भास्कर इव भास्करस्तं. भूयोऽपि किंविशिष्टं? सर्वामरनरैर्वंद्यं सकलसुरनराणां स्तुत्यमिति श्लोकार्थः. तथान्यानप्यजितादीन् महाविदेहजादींश्च नमस्यामि नमस्करोमि श्रीमतो लक्ष्मीवतस्तीर्थनायकांस्तीर्थाधिपतीन् सिद्धांश्चेत्यादौ चकाराः समुच्चयार्थाः. ततश्च सिद्धांश्च सकलकर्मक्षयेण निष्ठितार्थान्. सूरींश्चाचार्यांश्च वाचकांश्चोपाध्यायांश्च मुनीन् साधून् तथा तेनैव प्रकारेण नमस्यामीति श्लोकार्थः.

ततश्चैवं कृतनमस्कार एवममुना प्रकारेण पूर्वोक्तेन कृतो विहितो नमस्कारः प्रणामो येन मया स कृतनमस्कारोऽहं स्वान्योपकृतिवांछया स्वस्यात्मनोऽन्येषां च परेषामुपकृतिरुपकारस्तस्यां वांछेच्छा स्वान्योपकृतिवांछा तया स्वान्योपकृतिवांछया, अनेन कर्तुः श्रोतुश्चानंतरं प्रयोजनमुक्तं, परंपरं तु द्वयोरपि मुक्तिरिति वक्ष्येऽभिधास्ये प्रकरणं लघुशास्त्रविशेषं नाम्ना नामधेयेन धर्मरत्नकरंडकं, धर्मस्य शुभाध्यवसायरूपस्य संबंधीनि रत्नानीव रत्नानि, पुण्यप्राणिभिरेव प्राप्यत्वादचिंत्यचिंतामणिकल्पत्वेन सकलसमीहितार्थप्रदायकत्वाच्च ज्ञानदर्शनचारित्ररूपाणि, दानशीलतपोभावनास्वभावानि, दयादानदाक्षिण्यसौजन्यौदार्यगांभीर्यविनयनयप्रशमादिसत्पुरुषगुणगणरूपाणि च धर्मरत्नानि, तेषां करंडक इव करंडकस्तं धर्मरत्नकरंडकं वक्ष्ये, इति श्लोकचतुष्टयार्थः. अथ प्रकरणाधिकारांस्तत्संख्यां च बिभणिषुः श्लोकपंचकमाह—

॥ मूलम् ॥—धर्माधर्मौ १ जिने पूजा २। गुरुभक्तिरकृत्रिमा ३ ॥ परोपकारः ४ संतोषः ५ । संसारासारतामतिः ६ ॥ १ ॥ शोकशंकोः समुच्छेद ७—श्चेतसो निष्कषायिता ८ ॥ सर्वलोकविरुद्धानां । दूरतः परिवर्जनं ९ ॥ २ ॥ दानं १० शीलं ११ तपो १२ भावः १३ । शिष्टसंगो १४ वि-

नीतता १५ ॥ विषयेषु च वैमुख्यं १६ । विवेको १७ मृदुभाषिता १८ ॥ ३ ॥ सर्वधर्मशिरोरत्नं । दयाधर्मः सदोत्तमः १९ ॥ विधिवत्संघपूजा च २० । सर्वत्रामी न सद्गुणाः ॥ ४ ॥ धर्माधर्मादिकामेनां । संघपूजावसानिकां ॥ वक्ष्येऽहमधिकाराणा—मानुपूर्व्येह विंशतिं ॥ ५ ॥ व्याख्या—तत्र धर्माधर्मौ प्रतीतौ, तावत्र प्रकरणे भणिष्येते, इति क्रिया सर्वत्र योज्या, जिनपूजेत्यादिचतुष्टयं सुगमं. संसारासारतामतिरिति संसारस्यासारता संसारासारता, तस्यां मतिः संसारासारतामतिः, सा चात्र भणिष्यते, शोकशंकोः शोककीलस्य समुच्छेदः सर्वथा विनाशः. चेतसश्चित्तस्य निष्कषायिता कषायकालुष्यरहितत्वं. सर्वलोकविरुद्धानां सर्वलोकस्य सकलशिष्टजनस्य विरुद्धानि विरोधवंति कर्माणि सर्वलोकविरुद्धानि, परुषता वा तेषां दूरतो दूरेण परिवर्जनं परित्याग इति, इतः पदनवकं सुगममेव. तथा सर्वधर्मशिरोरत्नमिति सर्वधर्माणां शिरोरत्नमिव चूडामणिरिव दयाधर्मो दयैव धर्मो दयाधर्मः, सदा सर्वकालमुत्तमः प्रधान इति., विधानेन विधिवद्विधिपूर्वकमित्यर्थः, संघपूजा साधुसाध्वीश्रावकश्राविकालक्षणचतुर्विधश्रमणसंघसपर्या कर्तव्येति तात्पर्यमिति. सर्वत्र सर्वप्राणिष्वमी एते न नैव सद्गुणाः शोभनगुणा भवंतीति गम्यते. तथा धर्माधर्मावादी यस्याः सा धर्माधर्मा-

दिका, तां धर्माधर्मादिकानामेनामिमां, संघपूजावसानं पर्यंतो यस्याः सा संघपूजावसानिका, तां वक्ष्ये भणिष्याम्यहमधिकाराणां प्रस्तावनामानुपूर्व्या परिपाट्या इहात्र प्रकरणे विंशतिं, विंशतिप्रमाणानधिकारानिति भावः. इति श्लोकपंचकसमासार्थः. अथ प्रथममधिकारमभिधित्सुर्धर्माधर्मयोरेकार्थिकशब्दान् श्लोकद्वयेनाह—

॥ मूलम् ॥—धर्मः पुण्यं वृषः श्रेयः । सद्वृत्तं सुकृतं शुभं ॥ सदनुष्ठानमित्याद्याः । शब्दास्तुल्यार्थवाचकाः ॥ १ ॥ अधर्मः किल्बिषं पाप—मवद्यं दुष्कृतं तथा ॥ दुरनुष्ठानमित्याद्याः । शब्दास्तुल्यार्थवाचकाः ॥ २ ॥ व्याख्या—तत्र दुर्गतिपतज्जंतुधारणाद्धर्मः, तदुक्तं—दुर्गतिप्रसृतान् जंतून् । यस्माद्धारयते ततः ॥ धत्ते चैतान् शुभे स्थाने । तस्माद्धर्म इति स्मृतः ॥ १ ॥ स च जीवस्य शुभपरिणामः, कारणे कार्योपचारेण तत्वार्थश्रद्धानं चैत्यवंदनादिक्रियाकलापरूपं बाह्यमनुष्ठानं चोच्यते, यथा तंदुलान् वर्षति पर्जन्यः, पर्जन्यो हि जलं वर्षति, तेन च तंदुला निष्पद्यंते, ततो जले कारणभूते तंदुलाः कार्यभूता उपचर्यंते इति. एवं धर्मोऽपि शुभाध्यावसायरूपः कारणं, सदनुष्ठानं च क्रियारूपं कार्यं, तत्र शुभाध्यवसाये कारणभूते सदनुष्ठानं कार्यभूतमुपचर्यते, अयमभिप्रायः—

सदनुष्ठानं क्रियारूपं धर्मशब्देन व्यपदिश्यत इति. एवं सर्वत्र कार्यकारणभावो वेदितव्यः. तथा धर्महेतुत्वात्पुण्यमपि धर्मः, पुण्यं च पुण्यप्रकृतयः, ताश्चेमाः—सायं उच्चगोयं । सत्ततीसं च नाम पगईउ ॥ तिन्नि य आउणि तहा । बायालं पुन्नपगईउ ॥ १ ॥ सत्ततीसं नामस्स । पगईउ पुन्नमाय ता य इमा ॥ मणुयगइ तयणुपुव्वी । देवगइ तयणुपुव्वी य ॥ २ ॥ पंचिंदियजाई तह । देहाणं पंचयं च ते य इमे ॥ उरालिय वेउव्विय । आहारय तेय कम्मइगा ॥ ३ ॥ अंगोवंगा तिन्नेव । आइमा आइमं च संघयणं ॥ समचउरंसं अणहा । वन्न रसा गंध फासा य ॥ ४ ॥ अगुरुलहु पराघायं । उसासं आयवं च उज्जोयं ॥ सुपसत्था विहगगइ । तसाइदसगं च निम्माणं ॥ ५ ॥ तस बायर पज्जत्तं । पत्तेय थिरं सुभं च सुभगं च ॥ सूसरआएज्जजसं । तसाइदसगं इमं होइ ॥ ६ ॥ तित्थयरेणं सहिया । सत्ततीसं तु नाम पगईउ ॥ तिन्नि य आउणित्ति य । सुरनरतिरियाउभेएण ॥ ७ ॥ तथा वृषः, वृषशब्देन धर्मोऽभिधीयते. श्रेयः श्रेयःकर्म प्रशस्यं सदनुष्ठानमेव. सद्वृत्तं सुकृतं च तदेव. शुभस्य पुण्यवद्व्याख्या. सदनुष्ठानमिति, सच्च तदनुष्ठानं च शुभव्यापाररूपं सदनुष्ठानं. इत्याद्या एवमाद्याः, आदिशब्दात सच्चारित्रं सुचरितं चरणं निवृत्तिर्विरति-

र्नियमः संयमश्चैवमादयो द्रष्टव्याः, शब्दा ... ,
चिच्छेदेऽपि तुल्यार्थत्वेन विवक्षितत्वान्न पर्यनुयोगः कर्तव्य इति श्लोकार्थः. अधर्मो धर्मविपक्षस्तस्य
व्याख्यानं पूर्ववद्विपक्षत्वेनैव कर्तव्यं. किल्बिषमित्यधर्महेतुकत्वादतीवनिंद्यं कर्म अधर्मशब्दाभिधायि
भवतीति सर्वत्र योज्यं. पापमिति जीवस्वरूपपांशनान्मलिनकारित्वात् पापं पापकर्मप्रकृतयस्ताश्चे·
माः—नाणंतरायदसगं । दंसण नव मोहपयम्मिछवीसं ॥ नामस्स य चउतीसं । तिण्हं एकेकपावा·
उ ॥ १ ॥ मइसुयउहीमणपज्ज—वाण तह केवलस्स आवरणं ॥ नाणावरणं कम्मं । पंचविहं
होइ एवं तु ॥ २ ॥ जं दाणलाभभोगो—वभोगविरयाण विग्घसंजणणं ॥ तेणंतरायकम्मं । पं·
चविहं वन्नियं समए ॥ ३ ॥ चक्खू अचक्खू उही । वरकेवलदंसणाण आवरणं ॥ चउरो पंच य
निद्दा । दंसण उवउग विग्घछा ॥ ४ ॥ निद्दा निद्दा निद्दा । पयला अन्ना उ पयलपयलत्ति ॥
थीणद्धी य तहेवं । दंसणावरणं भवे नवहा ॥ ५ ॥ मिछत्तमोहणीयं । सोलसभेयं कसायमोह·
णीयं ॥ कोहाईण चउण्हं—णंताइ चउविहत्तणाउ ॥ ६ ॥ इत्थीपुरिसनपुंसग—वेया हासो य
रइ य अरइ य ॥ सोगो भयं दुगंछत्ति । नवविहं इयरमोहणियं ॥ ७ ॥ मोहछवीस एसा । एसा

पुण होइ नाम चउतीसा ॥ नरयगई तिरियगई । एसिं चिय आणुपुवीउ ॥ ८ ॥ एगिंदियाइ चउरो । जाई बीयाइ कम्मसंघयणा ॥ एवं संठाणवि य । वन्नाइचउकमपसडं ॥ ९ ॥ उवघायं कुविहगई । थावरसुहुमं तहा अपज्जत्तं ॥ साहारणा थिराऽसुभ—मसुभगदूसर अणाइज्जं ॥१०॥ अजसकित्ति य तहा । तिएहं एक्केक्कियत्ति अपसत्था ॥ गोयाउवेयणिज्जा—णुपावमेक्केक्किया पगई ॥ ११ ॥ नीयं गोत्तं निरया—उयं च असायवेयणिज्जं च ॥ एया सवामिलिया । बासीई पावपगईउ ॥ १२ ॥ तथा अवद्यं पापमेव हिंसादि अधर्महेतुकत्वेन, तदप्यधर्मः. दुःकृतं दुष्टं कृतं दुःकृतं, दुरध्यवसायनिमित्तकत्वादेतदप्यधर्मः. दुरनुष्टानं दुष्टं हिंसादिमहारंभादिरूपमनुष्टानमशुभप-रिणामप्रवृत्तिकत्वादिदमप्यधर्म एव. इत्याद्या एवंप्रभृतयः, आदिशब्दाद्दुश्चरितदुश्चेष्टितादिग्रहः. शब्दा ध्वनयस्तुल्यार्था एकार्था भवंतीति श्लोकद्वयसमासार्थः. अथ धर्माधर्मयोर्बाह्यांतरहेतूनुपदर्शयन् श्लोकषट्कमाह—

॥ मूलम् ॥—मानुष्यं शोभनो देशः । शुभा जातिः शुभं कुलं ॥ सुरूपं दीर्घमायुष्य—मारोग्यं बुद्धिपाटवं ॥ १ ॥ कल्याणमित्रसंसर्गः । पापमित्रविवर्जनं ॥ शुश्रूषा सुश्रुतिश्चैव । सुकलत्रा-

दिपरिछदः ॥ २ ॥ अंतरंगद्विषां मांद्य—मौदार्यं पापभीरुता ॥ सुनीतौ प्रीतिरित्याद्या । बहवो ध·
र्महेतवः ॥ ३ ॥ कुदेशः कुत्सितो वासः । कुजातिः कुत्सिता गतिः ॥ कुशास्त्राणि कुमित्राणि ।
कुकलत्रादिपरिछदः ॥ ४ ॥ कुश्रुतिः कुमतिश्चैव । कुविद्या कुत्सितो गुरुः ॥ अत्यंतमुत्कटो रागो ।
द्वेषो मोहश्च कुग्रहः ॥ ५ ॥ महारंभो महादंभो । महालोभो महामदः ॥ कुनीतौ प्रीतिरित्याद्या
। बहवः पापहेतवः ॥ ६ ॥ व्याख्या—मानुष्यं मानुषत्वं धर्मस्य बाह्यो हेतुर्भवतीति सर्वत्र क्रिया·
योगः कर्तव्यः. इदं चातीवदुर्लभत्वेन संपूर्णधर्मकर्मकारणत्वेन च धर्मप्राप्तौ बाह्यहेतुत्वेन प्रथममुप·
न्यस्तमिति, दुर्लभत्वं चास्य चुल्लकादिदृष्टांतैर्भावनीयं, ते चामी—चुल्लग १ पासग २ धन्ने ३ ।
जूए ४ रयणे य ५ सुमिण ६ चक्के य ७ ॥ चम्म ८ जुगे ९ परमाणू १० । दस दिठंता मणुय·
लंभे ॥ १ ॥ एतत्कथानकानि पुनरतिक्षुण्णत्वान्न लिख्यंतेऽस्माभिः, आवश्यकादिभ्य एवावसेयानि.
तथा शोभनो देश इति, शोभनः प्रधानो देशो जनपद आर्यदेश इत्यर्थः, सोऽपि धर्मस्य बाह्यो
हेतुरिति, स च शोभनो देशः सार्धपंचविंशतिजनपदात्मको यथा—

रायगिहमगह १ चंपा । अंगा २ तह तामलित्ति वंगा य ३ ॥ कंचणपुरं कलिंगा ४ । वा

णारसी चेव कासी य ५ ॥ १ ॥ साकेय कोसला ६ गय—उरं च कुरु ७ सोरियं कुसट्टा य ८ ॥ कंपिल्लं पंचाला ९ । अहिछत्ता जंगला चेव १० ॥ २ ॥ बारवई य सुरठा ११ । मिहिल विदेहा य १२ वछ कोसंबी १३ ॥ नंदिपुरं संडिल्ला १४ । भद्दिलपुरमेव मलया य १५ ॥ ३ ॥ वइराड व-छ १६ वरणा—छा १७ तह मत्तियावइ दसन्ना १८ ॥ सुत्तिमईया चेई १९ । वीअजयं सिंधुसोवीरा २० ॥ ४ ॥ महुरा य सूरसेणा २१ । पावा भंगीय २२ मासपरिवट्टा २३ ॥ सावत्थी य कुणाला २४ । कोडीवरिसं च लाटा य २५ ॥ ५ ॥ सेयंवियावि य नयरी । केईअद्धं च आयरियं भणियं ॥ जत्थुप्पत्ति जिणाणं । चक्कीणं रामकण्हाणं ॥ ६ ॥ शुद्धा जातिः शुद्धं कुलमिति, तत्र मातृसमुत्था जातिः, सापि शुद्धा धर्मस्य बाह्यो हेतुः, पितृसमुत्थं कुलं, तदपि शुद्धं तथैव. अथवा ब्राह्मणक्षत्रियवैश्यशूद्रस्वरूपा जातिः, उग्रभोगज्ञातईक्ष्वाकुकौरव्यहरिवंशादिकं कुलमिति. तथा सुरूपमिति शोभनं रूपं सुरूपमविकलपंचेंद्रियत्वमिदमपि धर्मस्य हेतुः, यस्मादनुपहतपूर्णपंचेंद्रियत्व एव जीवः संपूर्णधर्मयोग्यो भवति, न त्वितर इति. तथा दीर्घमायुष्कमिति, दीर्घं वर्षशतादिजीवनत्वेन प्रलंबमायुष्कं जीवितं, एतदपि धर्मस्य बाह्यं कारणं, यस्मादल्पायुर्जीवो मानुष्यादिसामग्रीं प्रा-

ण्यापि न धर्मं साधयितुमलमिति. तथारोग्यमिति, अरोगस्य जाव आरोग्यमिदमपि धर्मस्य बाह्यं निमित्तं, यतो दीर्घायुरपि जंतुः सरुक् धर्मं कर्तुं न समर्थ इति. तथा बुद्धिपाटवमिति बुद्धेः प्रज्ञायाः पाटवं दक्षत्वं बुद्धिपाटवं तीक्ष्णधिषणत्वमित्यर्थः, एतच्च धर्मस्यांतरंगमंगं, यतो दीर्घायुरपि नीरोगोऽपि सद्बुद्धिविकलः प्राणी न धर्मकर्माणि सम्यक्कर्तुं पारयति. तथा कल्याणमित्रसंसर्गः, कल्याणं सुखं, तत्कारीणि मित्राणि, तैः सह संसर्गः संबंधः कल्याणमित्रसंसर्गः सदुपदेशदायिजनसंपर्क इत्यर्थः. कल्याणमित्रसंगमो हि धर्मस्य बाह्यं प्रधानं कारणमिति.

तथा पापमित्रवर्जनमिति, पापकारीणि मित्राणि पापमित्राणि, तेषां विवर्जनं परिहरणं पापमित्रविवर्जनं, पापमित्रसंगतो हि पापेष्वेव रमते, न धर्मकर्मसु, तत्संगपरिहारी तु विबंधकाभावात् सुखेनैव धर्मं प्रतिपद्यते, अतः पापमित्रवर्जनमपि बाह्यं धर्मनिबंधनमिति. तथा शुश्रूषा श्रोतुमिच्छा शुश्रूषा सदागमस्येति गम्यते. सुश्रुतिश्चैवेति, चवेति समुच्चये, शोभना श्रुतिः सुश्रुतिः सम्यगागमश्रवणं. सुकलत्रादिपरिच्छद इति, शोभनानि कलत्राणि सुकलत्राणि. तान्यादिर्यस्य सुपुत्रसुमित्रभ्रातृसुस्वजनादिकस्य सुकलत्रादिः, स चासौ परिच्छदश्च परिवारश्च सुकलत्रादिपरिच्छदः, अयमपि

धर्मस्य बाह्यो हेतुः, यतः शोभनेषु कलत्रपुत्रादिष्वाज्ञाविधेयतया सुखं धर्मः प्रतिपत्तुं कर्तुं च शक्यत इति. तथांतरंगद्विषां मांद्यमिति, अंतरंगद्विषो रागादयो ज्ञानावरणादिकर्माणि च. तेषां मांद्यं मंदता प्रतनुत्वमित्यर्थः. तथौदार्यं, उदारस्य भाव औदार्यं दानरसिकत्वमित्यर्थः. पापभीरुता पापेभ्यः पापकर्मभ्यो भीरुता सभयत्वं पापभीरुता. सुनीतौ प्रीतिरिति, शोभना चासौ नीतिश्च सुनीतिः सुन्यायस्तस्यां सुनीतौ प्रीतिः प्रमोदः. इत्याद्या एवमादयः, आदिशब्दाद्दाक्षिण्यसौजन्यपरोपकर्तृत्वौचित्यकरणत्वादिपरिग्रहः, बहवः प्रभूता धर्महेतवो धर्मकारणानि; इह च बुद्धिपाटवशुश्रूषा सुश्रुतिः, रागादिमांद्यं, औदार्यं पापभीरुता सुनीतिप्रीतिरित्येते सप्तांतरंगा धर्महेतवः, मानुष्यं सुदेशः सुजातिः सुकुलं सुरूपं दीर्घायुष्कमारोग्यं कल्याणमित्रसंसर्गः, पापमित्रविवर्जनं, सुकलत्रादिपरिच्छदश्चेत्येते दश बाह्या धर्महेतव इति श्लोकत्रयार्थः.

अथाधर्महेतूनाह—तत्र कुदेश इत्यनार्यदेशः, तत्राधर्म एव प्रवर्तते, न धर्मस्य नामापि ज्ञायते, अतः कुदेशः सर्वेषामपि प्राणिनामधर्महेतुरेव, एवं सर्वत्राधर्महेतुत्वं भावनीयमिति. कुत्सितो वास इति, यत्र बहवो मद्यमांसाशिनः पापिष्ठलोका वसंति स कुत्सितो वासः, आर्यदेशेऽपि

तथाविधग्रामादौ वसतां प्रायो न धर्मप्राप्तिरिति. कुजातिश्चांडालकोलिकादिका, तत्रापि समुत्पन्नो जंतुः प्रायः पापेष्वेव रमते. कुत्सिता गतिरिति नरकतिर्यक्त्वमानुषत्वकुदेवत्वलक्षणा कुत्सिता गतिः, तत्रापि प्रायः प्राणिनः पापप्रिया एव भवंति. कुशास्त्राणीति कुत्सितानि शास्त्राणि, येषु धर्मव्याजेनापि प्राणिनां वधो वर्ण्यते यथा वेदेषु, तथा यानि वात्स्यायनवशीकरणधातुवादादिशास्त्राणि, तान्यपि प्रायः श्रूयमाणानि पापमेव पुष्णंति. कुमित्राणीति पापमित्राणि, तान्यपि पापेष्वेव प्रेरयंतीति. कुकलत्रादिपरिच्छद इति. कुत्सितः पापप्रियः कलत्रादिपरिवारः, तेन धार्मिकोऽपि बलादपि पापकर्मसु प्रेर्यत इति. कुश्रुतिरिति कुत्सितागमश्रवणं, तदपि प्राणिवधादौ प्रेरयतीति. कुमतिरिति कुत्सिता मतिः, कुमतिरनर्थपरंपरावर्तिका, तयाप्यधर्म एव प्राणी प्रवर्त्यत इति. कुविद्येति कुत्सिता विद्या खड्गधनुर्वेदविद्यादिका, सापि पापप्रवर्तिकैव. कुत्सितो गुरुरिति कुधर्माचार्यः, सोऽपि व्याजेनाधर्ममेव कारयतीति. अत्यंतमुत्कटो राग इति सचेतनाचेतनवस्तुषु नितरामभिष्वंगः, स च पापहेतुत्वेन प्रसिद्ध एव. एवं द्वेषो मोहः कुग्रहश्च, नवरं द्वेषोऽनिष्टवस्तुषु रोषप्रसरः, मोहः पुनरज्ञानं ममत्वं वा, कुग्रहो यत्र कुत्रापि शोभनेऽशोभने वा वस्तुनि लग्नस्तत्र बद्धाग्रहत्वमिति. महा

रंभ इति महान् कृष्याद्यारंभः, अयमपि पापहेतुत्वेन प्रसिद्ध एव. महादंभो नानाकूटकपटैरत्यंतम-परेषां वंचनं, पापहेतुत्वमस्य प्रकटमेव. महाक्षोभो महामदश्च प्रतीतौ, कुनीतौ प्रीतिरित्यन्यायप्रियत्वमित्यर्थः. इत्याद्या एवं प्रभृतयः, आदिशब्दान्महापरिग्रहादिग्रहः, बहवो भूयांसः पापहेतवः पापकरणानीति. इह च कुदेशादयो बाह्या अधर्महेतवः, रागादयः पुनरंतरंगा इति स्वधिया भावनीयमिति श्लोकषट्कार्थः. अथ धर्माधर्मयोः स्वरूपमुपदर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—यत्राहिंसा वचः सत्य—मस्तेयं ब्रह्मसेवनं ॥ संतोषश्च स विज्ञेयो । धर्मः सर्वज्ञभाषितः ॥ १ ॥ यत्र हिंसा मृषा भाषा । चौर्यं मैथुनसेवनं ॥ महालोभश्च सोऽधर्मो । विज्ञेयो जिनदेशितः ॥ २ ॥ व्याख्या—यत्रेति धर्मेऽहिंसादया सर्वसत्वेषु वर्ण्यते क्रियते च स धर्मो विज्ञेय इति क्रिया सर्वत्र योज्या. वचो वचनं सत्यं तथ्यं वर्ण्यते भाष्यते च स धर्म इति. यत्र वा चौर्यं चोरस्य भावश्चौर्यं स्तैन्यं तद्विपरीतमचौर्यं वर्ण्यते च स धर्म इति. ब्रह्मसेवनमिति. ब्रह्म ब्रह्मचर्यं, तस्य सेवनं पालनं ब्रह्मचर्यसेवनं, तद्यत्र वर्ण्यते पाल्यते च स धर्म इति. संतोषः संतुष्टता सचित्ताचित्तवस्तुषु मूर्छापरिहार इत्यर्थः. स च यत्र वर्ण्यते सेव्यते स विज्ञेयो ज्ञातव्यो धर्मः श्रु-

तच्चारित्रात्मकः सर्वज्ञभाषितः सर्ववेदिभिः प्ररूपित इति. उक्तं धर्मस्वरूपमथाधर्मस्वरूपमाह—य·
त्र यस्मिन्नधर्मे हिंसा प्राणिप्रहाणरूपा वर्ण्यते क्रियते च सोऽधर्म इति सर्वत्र योज्यं. मृषा वितथा
भाषा वाणी यत्र वर्ण्यते भाष्यते च, चौर्यं स्तैन्यं यत्र प्ररूप्यते विधीयते. यत्र मैथुनसेवनमब्रह्म·
निषेवनं स्त्रीसेवनमित्यर्थः प्रदर्श्यते सेव्यते च, यत्र महालोभश्च सचित्ताचित्तवस्तुषु महाभिलाष·
श्च मूर्छातिरेकश्च निरूप्यते क्रियते च सोऽयमधर्मः पापं विज्ञेयो वेदितव्यो जिनदेशितो जिनप्र·
रूपित इति श्लोकद्वयार्थः. अथ धर्माधर्मयोः फलमुपदर्शयन् श्लोकचतुष्टयमाह—

॥ मूलम् ॥—सत्कुले जातिरारोग्यं । सौभाग्यं रूपसंपदः ॥ आयुर्दीर्घं वरा लक्ष्मीः । कीर्ति·
र्विद्या वरस्त्रियः ॥ १ ॥ यदन्यदपि सद्वस्तु । सुंदरं हृदयेप्सितं ॥ जीवानां जायते लोके । सर्वं ध·
र्मस्य तत्फलं ॥ २ ॥ हीनजातिः सरोगत्वं । दरिद्रत्वं पराभवः ॥ अल्पमायुः कुरूपत्वं । दौर्भाग्यं
दीनवृत्तिता ॥ ३ ॥ यदन्यदपि वस्त्वत्र । प्राणभाजां न सुंदरं ॥ दुःखाय जायते लोके । तत्सर्वं
पापजृंभितं ॥ ४ ॥ व्याख्या—सत्कुले शोभनवंशे उग्रभोगादौ जातिरुत्पत्तिर्यद्भवति तद्धर्मफलमि
ति सर्वत्र संबंधः कार्यः. आरोग्यं नीरोगता, सौभाग्यं सर्वजनवल्लभत्वं, रूपसंपदः शरीरसौंदर्यश्रियः,

आयुर्जीवितं दीर्घं प्रलंबं, वरा प्रधाना लक्ष्मी राज्यादिसंपत्, कीर्तिः ख्यातिः, विद्या शब्दविद्यादिका पांडित्यमित्यर्थः, वरस्त्रियः प्रधानयोषितः, यदन्यदपि यदपरमपि सत् शोभनं वस्तु पदार्थः सुंदरं रमणीयं हृदयेप्सितं हृदयवांछितं जीवानां प्राणिनां जायते संपद्यते लोके जगति सर्वं समस्तं धर्मस्याहिंसादिरूपसदनुष्ठानस्य फलं, सत्कुलजात्यादिप्राप्तिरूपं सर्वमेतद्धर्ममाहात्म्यमित्यर्थः. अथाधर्मफलमाह—

हीनेत्यादि, हीना हीनम्लेच्छादिलोकसंबंधिनी जातिरुत्पत्तिर्वंशरूपा, सरोगत्वं सव्याधित्वं, दरिद्रत्वं दुर्गतत्वं, पराभवः परैरपमाननं, अल्पं स्तोकमायुर्जीवितं. कुरूपत्वं हीनरूपत्वं, दौर्भाग्यं लोकावल्लभत्वं, दीनवृत्तिता दीनाऽनुकंपार्हा वृत्तिर्वर्तनं यस्य स दीनवृत्तिस्तस्य भावो दीनवृत्तिता, जघन्यवृत्त्या परप्रेष्यत्वसेवकत्वरूपया निर्वाह इत्यर्थः. यदन्यदपि यदपरमपि वस्तु कलत्रादिकः पदार्थोऽत्रास्मिन् लोके प्राणभाजां प्राणिनां न सुंदरमशोभनं दुःखाय चित्तसंतापाय जायते संपद्यते लोके भुवने तत्सर्वं तत्समस्तं पापजृंभितं पापविलसितं, तदेतत्सर्वमशुभं पापानुष्ठानविपाकेन प्राप्यते प्राणिभिरित्यर्थः, इति श्लोकचतुष्टयार्थः. अथ धार्मिकाधार्मिकयोः स्वरूपं पूज्यतां निंद्यतां च

प्रदर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—निवृत्ताः सर्वपापेभ्यः । प्रवृत्ता धर्मकर्मसु ॥ इहैव धार्मिका लोकाः । पूज्यंते मनुजामरैः ॥ १ ॥ इहैव पापकर्माणि । कुर्वंतः पापिनो जनाः ॥ निंद्यंते सर्वलोकेन । प्राप्यंते च कदर्थनाः ॥ २ ॥ व्याख्या—निवृत्ता व्यावृत्ताः सर्वपापेभ्यः, सर्वाणि च तानि पापानि च प्राणिवधादीनि तेभ्यः सर्वपापेभ्यः, प्रवृत्ताः प्रवृत्तिं कृतवंतो धर्मकर्मसु धर्मक्रियासु, इहैवात्रैव लोके धार्मिका धर्मवंतो लोका जनाः पूज्यंतेऽर्च्यंते मनुजामरैर्नरत्रिदशैरिति. इहैव पापकर्माणि अत्रैव प्राणिवधमहारंभादिपापक्रियां कुर्वंतो निर्वर्तयंतः पापिनः पापिष्ठा जना लोका निंद्यंते हील्यंते सर्वलोकेन सकलजनेन, प्राप्यंते लभ्यंते कदर्थना विडंबना इति श्लोकद्वयार्थः. अथ धर्माधर्मप्रशंसाऽप्रशंसार्थं श्लोकद्वादशकमाह—

॥ मूलम् ॥—तस्मादधर्ममुत्सृज्य । धर्मे चित्तं निवेश्यतां ॥ स्वर्गापवर्गसंसर्ग—हेतुर्धर्मो यतोंगिनां ॥ १ ॥ सेतुर्भवार्णवे धर्मो । दुर्गतिद्वाररोधकः ॥ कृशानुः कर्मकांतारे । निःश्रेणिः शिवमंदिरे ॥ २ ॥ सर्वापायविनिर्मुक्तः । सर्वशिष्टनिषेवितः ॥ माभीःप्रदायको लोके । धर्म एव न चा·

परः ॥ ३ ॥ जननी जनको भ्राता । पुत्रः पुत्री सुहृज्जनं ॥ एतानि कृत्रिमाण्येव । धर्मः पुनरकृत्रिमः ॥ ४ ॥ तिष्ठंत्यर्था गृहेष्वेव । श्मशानेषु च बांधवाः ॥ दत्वा जलांजलिं भूयो । मोदंते गृहमागताः ॥ ५ ॥ परलोकप्रयाणस्थं । विमुक्तं मित्रबांधवैः ॥ धर्माधर्माविमं जीवं । गच्छंतमनुगच्छतः ॥ ६ ॥ यत्र यत्र प्रयात्येष । जीवो धर्मसहायकः ॥ तत्र तत्रास्य सौख्यानि । जायंते चोत्तराः श्रियः ॥ ७ ॥ यत्र यत्र प्रयात्येष । जीवः पापसमन्वितः ॥ तत्र तत्रास्य दुःखानि । दारिद्र्यं च प्रजायते ॥ ८ ॥ दुःखद्विषो जनाः सर्वे । सर्वेऽपि सुखलिप्सवः ॥ सुखं च धर्मतः सर्वं । दुःखं पुनरधर्मतः ॥ ९ ॥ जानंतोऽप्येवमत्यर्थं । महामोहवशंगताः ॥ सक्ताः सांसारिके सौख्ये । धर्म्यं कर्म न कुर्वते ॥ १० ॥ सुखे वैषयिके लुब्धाः । प्रार्थयंतस्तदेव हि ॥ दुःसहान्यपि दुःखानि । गणयंति न देहिनः ॥ ११ ॥ हस्त्यादिभ्यो महाभीतिं । विगणय्य विमूढधीः ॥ मधुबिंदुरसासक्तो । यथा कूपगतो नरः ॥ १२ ॥ व्याख्या—तस्मात्कारणादधर्मं पापानुष्ठानमुत्सृज्य परित्यज्य धर्मे सदनुष्ठानरूपे चित्तं मनो निवेश्यतां निधीयतां? स्वर्गापवर्गसंसर्गहेतुर्देवलोकसिद्धिसंपर्ककारणं धर्मो दयाप्रधानमनुष्ठानं यतो यस्मात्कारणादंगिनां शरीरिणामिति. सेतुर्मार्गो भवार्णवे संसारसमुद्रे, दुर्गतिद्वाररो-

धको नरकादिदुःखपिधायकः, कृशानुज्वलनः कर्मकांतार कर्मवनगहन, निःश्रे[illegible]
वमंदिरे परमपदप्रासाद इति. ॥ २ ॥ सर्वापायविनिर्मुक्तः सर्वदोषविवर्जितः, सर्वशिष्टनिषेवितः स-
र्वसाधुजनाचरितः, माभीःप्रदायको मा भयं कार्षुरित्येवमाश्वासकवचनदायकः, लोके जगति धर्म
एव शुभानुष्ठानमेव. न चापरो नान्य इत्यर्थः. ॥ ३ ॥ जननी माता, जनकः पिता, भ्राता सहोद-
रः, पुत्रः सुतः, पुत्री दुहिता, सुहृन्मित्रं, धनं द्रव्यं, एतान्यमूनि कृत्रिमाण्येवासहजान्येव, धर्मः पु-
नः शुभानुष्ठानं पुनरकृत्रिमः सहज एवैकरूप इत्यर्थः. ॥ ४ ॥ तिष्ठंत्यासतेऽर्था द्रव्याणि गृहेष्वेव
मंदिरेष्वेव, श्मशाने पितृवने यांति गच्छंति बांधवाः स्वजनाः, दत्वा वितीर्य जलांजलिं पानीयांज-
लिं भूयोऽपि पुनरपि, अपेर्गम्यमानत्वान्मोदंते क्रीडंते गृहं मंदिरमागता आयाता इति. ॥ ५ ॥
परलोकप्रयाणस्थं परभवे प्रस्थितं, विमुक्तं परित्यक्तं मित्रबांधवैः सुहृज्जनैः, धर्माधर्माविमं जीवं सु-
कृतदुःकृते एनं जंतुं गच्छंतं व्रजंतमनुगच्छतोऽनुव्रजत इति. ॥ ६ ॥ यत्र यत्र यस्मिन् यस्मिन् स्थाने
प्रयाति प्रगच्छति एषोऽयं जीवो जंतुर्धर्मसहायको धर्मद्वितीयस्तत्र तत्रास्यैतस्य सौख्यानि सुकर्माणि
जायंते संपद्यंते, चस्य भिन्नक्रमत्वादुत्तराः प्रधानाः श्रियः संपदश्च. ॥ ७ ॥ यत्र यत्र प्रयात्येष जी-

व इति पूर्ववत पापसमन्वितः पापयुक्तस्तत्र तत्रास्य दुःखानि दारिद्र्यं च प्रजायते, दुःखानि शारी-
रमानसिकसंतापाः, दारिद्र्यं निर्धनत्वं च भवतीत्यर्थः. ॥ ८ ॥ दुःखद्विषो दुःखद्वेषिणो जना लोकाः
सर्वे समस्ताः, सर्वे च सुखलिप्सवः सुखाभिलाषिणः, सुखं च शर्म च धर्मतो धर्मादेव, दुःखं पुनर-
धर्मतो दुरनुष्ठानादेव. ॥ ९ ॥ जानंतोऽपि विदंतोऽप्येवममुना प्रकारेणात्यर्थमतिशयेन महामो-
हवशंगता बृहदज्ञानवश्यतां प्राप्ताः. सक्ता आसक्ताः सांसारिके भवसंबंधिनि सुखे शर्मणि धर्म्यं ध-
र्मार्हं कर्मानुष्ठानं न कुर्वते न विदधतीति. ॥ १० ॥ सुखे शर्मणि वैषयिके शब्दरसरूपगंधस्पर्शरू-
पविषयजे लुब्धा गृद्धाः प्रार्थयंतो वांछतस्तदेव विषयसुखमेव, हिः पूरणे, दुःसहान्यपि दुःखानि कृ-
च्छ्राणि गणयंति तेनैव देहिनो जीवा इति. ॥ ११ ॥ हस्त्यादिभ्यो गजादिभ्यः, आदिशब्दादज-
गरमूषकमक्षिकादिपरिग्रहः, महाभीतिं महती चासौ भीतिश्च महाभीतिस्तां महाभयमित्यर्थः, विग-
णय्यापकर्ण्य विमूढधीर्विशेषेण मूढा मोहं गता धीर्बुद्धिर्यस्य स विमूढधीः, मधुबिंदुरसासक्तो मधुनः
क्षौद्रस्य बिंदवो लवा मधुबिंदवस्तेषां रसस्तत्रासक्तो गृद्धो मधुबिंदुरसासक्तो यथा येन प्रकारेण कू-
पगतोऽवटमध्यप्रविष्टो नरो मानव इति श्लोकद्वादशकार्थः ॥ १२ ॥ अवटगतमधुबिंदुरसासक्तमनु-

जकथानकमिदं—

बभूव भारते क्षेत्रे । देशे च मगधाभिधे ॥ क्षितिप्रतिष्ठितं नाम । पुरं शक्रपुरोपमं ॥ १ ॥ भांति यत्र सपद्मानि । सरांसि च गृहाणि च ॥ कामिन्यः काव्यबंधाश्च । सालंकाराश्चकासति ॥ ॥ २ ॥ शूरः सत्यप्रतिज्ञश्च । तत्रासीद् दुर्गशासनः ॥ चंद्र इव प्रजानंदो । डोणमेघो नराधिपः ॥ ॥ ३ ॥ सहजातो क्रीमितो धूल्या । सहैव च विवर्धितः ॥ निर्भाग्यशेखरस्तस्य । डुंगरोऽजनि सेवकः ॥ ४ ॥ ददाति शतशो राजा । बालमित्रधिया धनं ॥ तच्च तस्य क्वचिद्याति । दारिद्र्यमवतिष्ठते ॥ ५ ॥ ततोऽसौ निष्फलारंभो । दीनो दारिद्र्यभाजनं ॥ कष्टां दशां समापन्नः । कष्टं नयति वासरान् ॥ ६ ॥ अन्येद्युः साधिताशेष—प्राभातिकप्रयोजने ॥ सभासिंहासनासीने । द्रोणमेघनराधिपे ॥ ७ ॥ वर्णगंधरसस्पर्शै—र्हृद्यं जनमनोहरं ॥ बीजपूरफलं राज्ञे । मालाकारेण ढौकितं ॥ ॥ ८ ॥ प्रयोजनवशायाता । राजमाता वसुंधरा ॥ सन्मानिता नरेंद्रेण । भद्रासनमुपाश्रिता ॥ ९ ॥ यावदास्ते क्षणं तावद् । डुंगरोऽपि समागतः ॥ प्रणम्य भूभुजः पादा—न्निविष्टो दर्शितासने ॥ ॥ १० ॥ वसुंधरा बभाणेदं । राजानं जातविस्मया ॥ किमेष दुःखितो वत्स । डुंगरस्तव सेवकः ॥

॥ ११ ॥ त्वं हि विश्वंभरो राजा । कुंगरश्च त्वदाश्रितः ॥ रत्नाकरः सखा यस्य । स कथं दुर्गताय-
ते ॥ १२ ॥ एतन्निशम्य संजात—गुरुखेदो नराधिपः ॥ जगादेदं जगत्पूज्यो । मातृप्रत्यायनाकृते
॥ १३ ॥ दत्तमस्मै मया मात—र्धनं जीवनहेतवे ॥ न तिष्ठति परं याति । छिद्रहस्ते यथा जलं
॥ १४ ॥ एवमुक्त्वा समाहूतः । शिल्पिकरत्नभेदकोविदः ॥ तथा च पाटितं तेन । मातुलिंगं प्रवेशि-
तं ॥ १५ ॥ नृपांगुलीयकं तत्र । लक्षमूल्यं मनोहरं ॥ सीवितं च तथा तेन । दुर्लक्ष्यं जायते यथा
॥ १६ ॥ युग्मं ॥ भणिता वसुंधरा राज्ञा । स्वहस्तेन समर्पय ॥ फलमस्मै महामूल्यं । मुद्रालंका-
रसंभृतं ॥ १७ ॥ तयापि ढौकितं तस्मै । चलितोऽसौ निजे गृहे ॥ गछता चिंतितं तेन । किमने-
न करोम्यहं ॥ १८ ॥ यस्य मे भोजनं नास्ति । फलं तस्य करोति किं ॥ ततश्च गछता तेन । व-
णिक्पुत्रो धनंजयः ॥ १९ ॥ धनवानग्रतो दृष्टः । फलमस्मै समर्पितं ॥ तेनापि रूपको दत्त—स्त-
मादाय गृहं गतः ॥ २० ॥ युग्मं ॥

न ददात्यधिकं दातुं । विधिरस्य विबंधकः ॥ इतश्चास्ति सशृंगारा । मान्या मन्मथमंदिरं ॥
॥ २१ ॥ मगधासुंदरीनाम । राजपिंगविलासिनी ॥ धनंजयेन तत्तस्यै । दत्तं कामसुखार्थिना ॥२२॥

युग्मं ॥ तथापि सुंदरं ज्ञात्वा । रक्षितं न तु भक्षितं ॥ प्रभाते च तमादाय । सा गता नृपमंदिरे
॥ २३ ॥ प्रणम्य नृपतेः पादौ । तया तत्फलमर्पितं ॥ प्रत्यायनाकृते राज्ञा । समाहूता वसुंधरा ॥
॥ २४ ॥ ततः सुखासनस्थाया । दत्तमस्याः करे फलं ॥ ततो विलासिनी पृष्टा । कुतो लब्धमिदं
त्वया ॥ २५ ॥ तया वणिक्सुतः शिष्टो । वणिजापि च डुंगरः ॥ एतत् श्रुत्वा च दृष्ट्वा च । विस्म-
यस्मेरलोचना ॥ २६ ॥ प्रोवाचेदं सभामध्ये । राजमाता वसुंधरा ॥ अहो सत्यापितोऽनेन । जन-
वादोऽयमीदृशः ॥ २७ ॥ युग्मं ॥ अथवास्यापि नो दोषो । यस्य कर्म पराङ्मुखं ॥ द्रोणमेघजलं
जातु । डुंगरे नावतिष्ठते ॥ २८ ॥ अप्राप्तं जायते नैव । नाकृतं कर्म भुज्यते ॥ संप्राप्तं च कृतं
चैव । कर्म जीवफलप्रदं ॥ २९ ॥ भणितं च—जो जेत्तियस्स अत्थस्स । भायणं लहइ तेत्तियं
सो उ ॥ वुठेवि दोणमेहे । न डुंगरे पाणियं ठाइ ॥ ३० ॥ न हि भवति यन्न भाव्यं । भवति
च भाव्यं विनापि यत्नेन ॥ करगतमपि नश्यति । यस्य तु भवितव्यता नास्ति ॥ ३१ ॥ यद्यावद्या-
दृशं येन । कृतं कर्म शुभाशुभं ॥ तत्तावत्तादृशं तस्य । फलमप्यवतिष्ठते ॥ ३२ ॥ एवमुक्त्वा ग-
ता राज्ञी । विसर्जितसभो नृपः ॥ राजकार्यपरो जातो । डुंगरोऽपि गतो गृहं ॥ ३३ ॥ विषादवि-

धुरो दीनः । खेदखेदितविग्रहः ॥ नष्टचेता निरानंद—श्चिंतयामास मानसे ॥ ३४ ॥ युग्मं ॥ वरं
मृतो वरं दग्धो । वरं देशांतरे गतः ॥ यो जीवति परावज्ञा—दुःखदग्धोऽपि मानवः ॥ ३५ ॥ म-
रणं वा विदेशो वा । द्वयमेव मे संगतं ॥ एवं विचिंत्य सुप्तोऽसौ । क्षपा क्षयमुपागता ॥ ३६ ॥
रत्नसागरसंबंधी । भेरीभांकारभीषणः ॥ प्रभाते चलितः सार्थः । सोऽपि तेन समं गतः ॥ ३७ ॥
कृतरक्षो महायोधैः । सुखावासप्रयाणकैः ॥ दिनैः कतिपयैरेव । महाटव्यां विवेश सः ॥ ३८ ॥ या
च नानाविधैर्वृक्षै—र्विहगैश्च विराजिता ॥ विचरत्खड्गिशार्दूला । संत्रासितजगज्जना ॥ ३९ ॥ न-
भःश्रीरिव कुत्रापि । चलच्चित्रोपशोभिता ॥ अन्यत्र सिंहज्येष्ठार्क—मूलमंदारराजिता ॥ ४० ॥ क्व-
चिद्भूतगणोपेता । भवानीव मनोहरा ॥ क्वचिद्भ्रमन्महाभोग—भुजंगशतसंकुला ॥ ४१ ॥ क्वचि-
न्महाशिवासंघ—फेत्कारसंरवाकुला ॥ क्वचित्प्रेतरसेवोच्चैः । सर्वलोकभयंकरा ॥ ४२ ॥ चतुर्भिः क-
लापकं ॥ स तस्यां दैवयोगेन । सार्थाद्भ्रष्टो भयद्रुतः ॥ बभ्राम भीषणेऽरण्ये । एकाकी कर्मयोगतः
॥४३॥ ततः प्रचंडशुंडेन । भीषिताखिलजंतुना ॥ ऊर्ध्ववालधिना तूर्ण—मितश्चेतश्च धावता ॥४४॥
वनवल्लीवितानानि । क्रोधावेशात्प्रभंजता ॥ गर्जता घनशब्देन । तुंगेन च तरस्विना ॥४५॥ का-

लेनेव तु कालेन । नगजेन गजेन सः ॥ दृष्टः क्रूरदृशा तेन । हेलया हंतुमिछता ॥ ४६ ॥ त्रि॰
भिर्विशेषकं ॥ कुंगरोऽपि गजस्याग्रे । धावमानः शनैः शनैः ॥ जराजर्जरसर्वांगीं । स्त्रियमेकां व्य॰
लोकयत् ॥ ४७ ॥ सोऽपि तं गजमालोक्य । समागछंतमातुरः ॥ नश्यन्नितस्ततः शीघ्रं । वटमेक॰
मुपागतः ॥ ४८ ॥ शतशाखं सुविस्तारं । सुपत्रं द्विजसेवितं ॥ पुण्यं पुण्यफलोपेतं । सत्पुरुषमि॰
वोन्नतं ॥ ४९ ॥ कलापिकोकिलाकांत—सारिकाशुकशब्दितैः ॥ गायंतमिव नृत्यंतं । मरुत्कंपित॰
पल्लवैः ॥ ५० ॥ तमारोढुमशक्तेन । नयन्नीतेन सर्वतः ॥ अधोऽधः पश्यता तेन । अंधकूपो विलो॰
कितः ॥ ५१ ॥ त्रिभिर्विशेषकं ॥ वन्यवारणनीतेन । प्राणप्रीणनवांछया ॥ तेनात्मा चात्रटे क्षिप्तः
। सरस्तंबस्तदंतरे ॥ ५२ ॥

विलोकितो गृहीतश्च । भुजाभ्यां जीवितार्थिना ॥ स तत्र लंबमानो हि । यावदास्ते क्षणां॰
तरं ॥ ५३ ॥ तावत्कूपतले दृष्टो—ऽजगरो यमसन्निभः ॥ ऊर्ध्ववक्त्रो महाकायो । बृहत्कुक्षिर्महो॰
दरः ॥ ५४ ॥ रौद्रः संदर्शनादेव । संपादितमहादरः ॥ इतश्च पश्यता तेन । कूपांतश्च दरीस्थिताः
॥ ५५ ॥ चत्वारः पन्नगा दृष्टा । महाकाया महाभयाः ॥ सनीरनीरदछाया । रक्ताक्षाः क्षामकुक्षयः

॥ ५६ ॥ स्निग्धस्त्रीवेणिसंकाशा । द्विजिह्वा दुर्जनोपमाः ॥ सरस्तंबतले दृष्टौ । शुक्लकृष्णौ च वर्ण·
तः ॥ ५७ ॥ मूषकौ तस्य मूलानि । खनंतौ तावनारतं ॥ इतश्च दंतिना तेन । क्रोधांधीकृतचक्षुषा
॥ ५८ ॥ तिर्यग्दत्तप्रकारेण । समुध्धृतकरेण च ॥ बलिना मदमत्तेन । दंताभ्यामाहतो वटः ॥
॥ ५९ ॥ अष्टभिः कुलकं ॥ स शाखी शतशाखोऽपि । दशनाघातपीडितः ॥ चकंपे शत्रुणा रुध्धो
। यथा कातरमानवः ॥ ६० ॥ नानानीडसमुड्डीन—विहंगमविकूजितैः ॥ मुक्तकंठं कठोरेण । रो·
दितीव स्वरेण सः ॥ ६१ ॥ अल्पसत्वस्य सत्वस्य । महतोऽपि महाभयं ॥ सिंहे लघुशरीरेऽपि ।
सत्वतो मृगराजता ॥ ६२ ॥ कूपस्योपरि या शाखा । तस्यां यन्मधुपुटकं ॥ तद्भग्नं मक्षिका नष्टा ।
धाविता कुंगरंप्रति ॥ ६३ ॥ स ताभिश्चंडतुंडाभिः । खाद्यमानो मुहुर्मुहुः ॥ किं करोति सहत्येव ।
तीव्रदुःखं परवशः ॥ ६४ ॥ शाखातः पतितो बिंदु—र्मधुनस्तस्य मस्तके ॥ शनैः शनैर्लुठन्नेष । मु·
खमूलमुपागतः ॥ ६५ ॥

ततः सर्वाणि दुःखानि । हस्त्यादीनि भयानि च ॥ विहाय पृष्टतः पापः । पपौ तं मधुबिंदुकं
॥ ६६ ॥ ललल्लालाकरालेन । जिह्वाग्रेण समंततः ॥ लिलेह स्वं मुखं श्वेव । रसास्वादनतत्परः ॥

॥ ६७ ॥ दृष्टांतोऽयं समाख्यात । एष दार्ष्टांतिकोऽधुना ॥ भण्यते भव्यसत्वानां । भवनिर्वेदहेतवे
॥ ६८ ॥ जीवः पथिकसंकाशः । संसारश्च महाटवी ॥ वनहस्तिसमो मृत्यु—र्वनिता च जरा म-
॥ ६८ ॥ जीवः पथिकसंकाशः । संसारश्च महाटवी ॥ वनहस्तिसमो मृत्यु—र्वनिता च जरा म-
ता ॥ ६९ ॥ मंदं मंदं प्रयात्येषा । पृष्ठौ लग्ना शरीरिणां ॥ एषैव सर्वजीवानां । राक्षसीव भयंकरा
॥ ७० ॥ कूपो नरभवः प्रोक्त—स्तमःस्तोमसमाकुलः ॥ आयुष्कं च सरस्तंब—मूलतुल्यं प्रचक्ष्यते
॥ ७१ ॥ वटो मोक्षसमः प्रोक्तः । सर्वजीवाभयंकरः ॥ यदर्थं योगिनः सर्वे । यतंते कृतनिश्चयाः
॥ ७२ ॥ द्वौ पक्षौ मूषकौ ज्ञेया—वायुर्मूलविनाशकौ ॥ पन्नगा इव चत्वारः । कषाया दुःखहेतवः
॥ ७३ ॥ रोगा मधुकरीतुल्या । नानादुःखनिबंधनाः ॥ यैरतीवाहतो जीवो । बंभ्रमीति भवाध्वनि ॥
॥ ७४ ॥ वक्रमाजगरं यत्तु । तद्रौद्रनरकोपमं ॥ गुरुकर्मरसासक्तो । धर्मकर्मपराङ्मुखः ॥ ७५ ॥
अभव्यो दूरभव्यो वा । पुमानेष विभाव्यतां ॥ ततो भव्या भवांभोधे—र्यदि वस्तरणे मतिः ॥
॥ ७६ ॥ तदेदृशैर्न वै भाव्यं । भवभीतभवादृशैः ॥ तदिदं धर्मसर्वस्व—मुपदेशोऽयमुत्तमः ॥ ७७ ॥
इति मधुबिंदुरसासक्तकूपगतनरकथानकं समाप्तमिति. ॥ एवं स्थिते यत्कर्तव्यं तदुपदिशन्नाह—
॥ मूलम् ॥—तदहो मानुषत्वादि—सामग्रीं प्राप्य दुर्लभां ॥ सर्वसौख्यकरे नित्यं । धर्मे य-

त्नो विधीयतां ॥ १ ॥ व्याख्या—तत्तस्मात्कारणादहो इत्यामंत्रणे मानुषत्वं मनुजत्वमादिर्यस्याः सा चासौ सामग्री च तां, आदिशब्दाद्गोत्रकुलादिग्रहः, प्राप्य लब्ध्वा दुर्लभां दुःप्रापां सर्वसौख्यकरे सकलसुखकरे जैने जैनेंद्रे धर्मे शुभानुष्ठाने यत्नः प्रयत्नो विधीयतां क्रियतामिति. ॥ अथ मानुषत्वं धर्मस्य मूलहेतुतया दर्शयन्नाह—

॥ मूलम् ॥—मानुषत्वं हि सद्धर्म—मूलनीवीसमं बुधैः ॥ कथ्यते समये श्रेष्टि—पुत्रत्रयनिदर्शनात् ॥ १ ॥ व्याख्या—श्लोकोऽयं सुगमो, न वरं सद्धर्ममूलनीवी प्रथमभांडमूल्यं तया समिति. तथा समये सिद्धांते श्रेष्टिपुत्रत्रयनिदर्शनाद्वणिक्सुतत्रयदृष्टांतादिति. कथानकमत्र—बभूव भुवनाख्याते । पुरे भूरिधनालये ॥ त्रिदशालयसंकाशे । वसंतपुरनामनि ॥ १ ॥ श्रियः स्थानं घनो नाम । श्रेष्टी धनदसन्निभः ॥ राजादीनां सदा मान्यः । सुहृद्बंधुसमाश्रयः ॥ २ ॥ बुभुजे निजकां लक्ष्मीं । बध्ध्वा सुगुणरज्जुभिः ॥ प्रियां कांतां समालिंग्य । बाहुभ्यामिव मारभाक् ॥ ३ ॥ मान्या प्रियंवदा शांता । सुरूपा शीलशालिनी ॥ सुभद्रेति बभूवास्य । गृहिणी गुणधारिणी ॥ ४ ॥ परस्परेण निश्छिद्र—प्रेमपूरितयोस्तयोः ॥ एकमेवाभवच्चित्तं । पृथक्त्वं देहमात्रतः ॥ ५ ॥ मनोर·

थशतैर्जाता—स्तयोः पुत्रास्त्रयः क्रमात् ॥ धनयक्षो धनावासो । धनचंद्रः कनिष्ठकः ॥ ६ ॥ कृता·
नि नामधेयानि । वर्धापनकपूर्वकं ॥ प्रहृष्टश्च पिता चित्ते । माता माति न भूतले ॥ ७ ॥ पंचधा·
त्रीगृहीताश्च । परिवारकृतादराः ॥ सुखंसुखेन वर्धंते । नंदने पादपा यथा ॥ ८ ॥ लालिताः पा·
लिताश्चैव । पाठिताः परिणायिताः ॥ विकारबहुले याव—दारूढा नवयौवने ॥ ९ ॥ भार्यायत्तत·
या ताव—न्मातृपितृपराङ्मुखाः ॥ ये निजास्ते परे जाता । धिग्धिग् यौवनजृंभितं ॥ १० ॥ प·
रस्परेण पितॄणां । जायते चित्तखेदनं ॥ कलहायोपतिष्ठंते । श्वश्र्वा सार्धं वधूटिकाः ॥ ११ ॥ अ·
न्येद्युः श्रेष्ठिनाचिंति । नेदं गृहविवृद्धिकृत ॥ यथा पृष्टा किलेंद्रेण । हे लक्ष्मि क्रोष्यते त्वया ॥
॥ १२ ॥ श्रुत्वा शक्रवचो लक्ष्मीः । किंचिदुत्फुल्ललोचना ॥ जगादेदं सुराधीशं । हृष्टवक्त्रा स्फुटाक्षरं
॥ १३ ॥ श्रूयतां श्रूयतां स्वामिन् । कथ्यते कथ्यते तव ॥ गुरवो यत्र पूज्यंते । धान्यं यत्र सुसं·
चितं ॥ १४॥ न दंतकलहो यत्र । तत्र शक्र वसाम्यहं ॥ कुटुंबकलहो नापि । तत्र वासो भवेन्म·
म ॥ १४ ॥ परिच्छेदो हि पांडित्यं । तदायत्ता हि सिद्धयः ॥ अपरिच्छिन्नतत्वानां । काचकिच्यं पदे
पदे ॥ १५ ॥ राज्यमंदिरगत्रानां । भारोऽयमतिदुर्वहः ॥ अयोग्यस्थापितो नूनं । स्थाणुतां न स·

मश्नुते ॥ १६ ॥ ततः कृत्वा स्वपुत्राणां । योग्यायोग्यपरीक्षणं ॥ पात्रभूते गृहभारं । निवेश्याहं
निराकुलः ॥ १७ ॥ करोमि धर्मकर्माणि । सृतं मे गृहचिंतया ॥ एवं विनिश्चयं कृत्वा । भणिता
तेन गेहिनी ॥ १८ ॥ युग्मं ॥

कुसूत्रं ते गृहं भद्रे । वद किं क्रियतेऽधुना ॥ आर्यपुत्रो विजानाति । कार्याकार्यविवेचनं ॥
॥ १९ ॥ आज्ञाकारी जनस्तेऽयं । ततः श्रेष्ठी बभाषतां ॥ महाकटकृतच्छायं । सर्वतो रचितासनं ॥
॥ २० ॥ महांतं महतां योग्यं । रम्यं रंजितसज्जनं ॥ सर्वतोऽपि परिक्षिप्तं । मंडपं रचयाम्यहं ॥२१॥
युग्मं ॥ भवत्यपि वराहारं । निष्पादयतु सत्वरं ॥ येनैष भोज्यते लोको । मंडपे चोपवेश्यते ॥
॥ २२ ॥ तथेति प्रतिपद्यासौ । पाकं कर्तुं समुद्यता ॥ निष्पन्नस्तत्क्षणादेव । पाकः पुण्यजनोचितः
॥ २३ ॥ वैवाहिकाः स्वगोत्राश्च । ये चान्ये राजपूजिताः ॥ श्रेष्ठिनामंत्रिताः सर्वे । भोजनार्थं नि-
जे गृहे ॥ २४ ॥ आयाता भोजिताश्चैव । मंडपे चोपवेशिताः ॥ तांबूलादिप्रदानेन । कृताः स-
न्मानभाजनं ॥ २५ ॥ स्वयं मंडपमध्यस्थो । निषण्णो वरविष्टरे ॥ मंडपागतलोकेन । सर्वतः परि-
वारितः ॥ २६ ॥ सहस्रमानमेकैकं । तद्भृत्यैर्वासनत्रयं ॥ श्रेष्ठिवाक्यात समानीय । मुक्तं तत्पाद-

योः पुरः ॥ २७ ॥ समाहूताः सुताः सर्वे । जनाध्यक्षं च नाषिताः ॥ वत्सा या मंदिरे लक्ष्मीः । सा सर्वापि मयार्जिता ॥ २८ ॥ तया गर्वो न कर्तव्य—स्तद्भागोऽपि न संगतः ॥ यतः सा जननीतुल्या । वंदनीया विवेकिनां ॥ २९ ॥ यौवनेऽपि समारूढा । अर्थोपार्जनवर्जिताः ॥ नरास्ते रूपमात्रेण । तत्वतो नरकीटकाः ॥ ३० ॥ न देशनाषाविज्ञानं । न देशाचारविज्ञता ॥ न च नेपथ्यविज्ञानं । न स्वपुण्यपरीक्षणं ॥ ३१ ॥ वाणिज्येन विना नैत—न्नराणामुपजायते ॥ वाणिज्यविकला लोके । पशवः शृंगवर्जिताः ॥ ३२ ॥ स्वभुजोपात्तवित्तेन । नोगो दानं च शोनते ॥ पितृलक्ष्म्या तु कुर्वंति । ये ते मानविवर्जिताः ॥ ३३ ॥ कालकारी नरो लोके । केन केन न शस्यते ॥ प्राप्नोति वांछितं चार्थं । यतोऽवाचि विचक्षणैः ॥ ३४ ॥ प्रथमे नार्जिता विद्या । द्वितीये नार्जितं धनं ॥ तृतीये नार्जितो धर्म—श्चतुर्थे किं करिष्यति ॥ ३५ ॥ इत्याद्युक्त्वा स्वहस्तेन । पुत्राणां च करे कृतं ॥ एकैकं वासनं तेन । यात यातेति जल्पता ॥ ३६ ॥

अथ प्राचींप्रति ज्येष्ट—श्चलितो हृदि पीडितः ॥ दिनैः कतिपयैरेव । प्राप्तो विश्वपुरं पुरं ॥ ॥ ३७ ॥ वेश्यास्तांबूलिकास्तत्र । द्यूतकाराश्च मालिकाः ॥ वसंति बहवो लोका । धनाकर्षणहेतवे

॥ ३८ ॥ अथ तत्र पुरे तस्य । संजाता चित्तनिर्वृतिः ॥ उन्मुच्य वासनं पैत्र्यं । चिंतितं मूढचेत-
सा ॥ ३९ ॥ सत्यापितश्च तातेन । जनवादोऽयमीदृशः ॥ वृद्धत्वे हि मनुष्याणां । पंचानिष्टसमु-
द्भवाः ॥ ४० ॥ दुर्भाषालीकभाषित्वं । निर्लज्जत्वं भयं तथा ॥ तृष्णा च प्रत्यहं तस्य । देहेन स-
ह वर्धते ॥ ४१ ॥ यदसौ न विजानाति । युक्तायुक्तविवेचनं ॥ विवेकविकलो वृद्धो । जरया वि-
मनीकृतः ॥ ४२ ॥ धनिनो यौवने धन्या । धनभोगोपभोगिनः ॥ संरक्षितेन किं तेन । दत्तभुक्त-
फलं धनं ॥ ४३ ॥ एवं वितर्क्य स स्वांते । गतः कांदविकापणे ॥ भुक्तो यथेच्छया तेना—हारश्च
मनसः प्रियः ॥ ४४ ॥ किंचिद्धनमधन्येन । वेश्याभिः सह भक्षितं ॥ किंचिद् द्यूतेन तत्तेन । हा-
रितं हीनकर्मणा ॥ ४५ ॥ पुष्पेषु व्ययितं किंचि—त्किंचित्तांबूलभक्षणे ॥ किंचिद्गायकलोकेषु ।
नत्याचार्येषु किंचन ॥ ४६ ॥ किंचित्किंचित्कृतं सर्वं । तस्य हस्ते न किंचन ॥ ततो नाकिंचनो जा-
तः । क्षामकुक्षिः सुधालयः ॥ ४७ ॥ पाटिताखिलसद्वस्त्रः । कृतकच्छोटकः कुधीः ॥ कुंभकारापणे ग-
त्वा । गृहीत्वाखंडहंडिकां ॥ ४८ ॥ रज्ज्वा संयम्य यत्नेन । गृहीत्वा दक्षिणे करे ॥ भिक्षां बभ्राम
सर्वत्र । पुरे कार्पटिको यथा ॥ ४९ ॥ युग्मं ॥ यतः—अभिमतमहामानग्रंथिप्रभेदपटीयसी । गु-

रुतरगुणग्रामांभोजस्फुटोज्ज्वलचंद्रिका ॥ विपुलविलसल्लज्जावल्लीवितानकुठारिका । जठरपिठरी दुः-
पुरेयं करोति विडंबनां ॥ ५० ॥ निर्गत्य सरसीतीरे । जलस्नेहं कुभोजनं ॥ भुक्त्वा नीत्वा दिनं
तत्र । मक्षिकाशतसंकुलः ॥ ५१ ॥ नक्तं सुष्वाप शून्येषु । देवगेहेषु दुःस्थितः ॥ वर्षावधिं नय-
त्येष । जीवन्मृतकसन्निभः ॥ ५२ ॥ धनावासोऽपि कौबेरीं । गत्वैकत्र पुरे स्थितः ॥ सोऽपि संचिं-
तयामास । यथा ज्येष्ठेन चिंतितं ॥ ५३ ॥ समस्ति कारणं किंचि—ज्ज्ञातो वेत्ति न चापरः ॥ त-
तो यामद्वयं याव—द्व्यवहारो मम संगतः ॥ ५४ ॥ उपार्जितस्य चार्थस्य । भक्षणं मूलरक्षणं ॥
सोऽपि शास्त्रे वणिग्दृष्टो । मूलं यस्य न नश्यति ॥ ५५ ॥
एवं च कुर्वतस्तस्य । प्रत्यहं यांति वासराः ॥ धनचंद्रो वारुणीं गत्वा । स्थितश्चैकत्र पत्तने ॥
॥ ५६ ॥ चिंतितं सुधिया तेन । स्वस्थानेऽपि न सुंदरं ॥ व्यसनं शिष्टलोकानां । विदेशेषु विशे-
षतः ॥ ५७ ॥ असारेऽप्यत्र संसारे । पितरौ सारतां गतौ ॥ यच्चाहितौ तदा कोऽन्यो । हितो हंत
भविष्यति ॥ ५८ ॥ व्यसनं सकलं त्यक्त्वा । ग्रासाच्छादनतत्परः ॥ अर्थचिंतापरः शेते । यामद्वंद्वं
यथा मुनिः ॥ ५९ ॥ शेषकालं गतालस्यो । व्यवहारं चकार सः ॥ जातश्चाष्टगुणो लाभ—स्त-

स्य स्वल्पदिनैरपि ॥ ६० ॥ संपूर्णाविधयः सर्वे । चलिताः स्वगृहोन्मुखाः ॥ सुखं सुखेन संप्राप्ता । ग्रामे ते गुणसुंदरे ॥ ६१ ॥ कनिष्टेन पुमानेको । वार्ताकथनहेतवे ॥ प्रेषितः श्रेष्टिनस्तेन । सर्वा वार्ता निवेदिता ॥ ६२ ॥ भणिता श्रेष्टिना भद्रा । सुभद्रे तव नंदनाः ॥ तिष्टंति मिलिताः सर्वे । ग्रामे ते गुणसुंदरे ॥ ६३ ॥ गमने यो विधिस्तेषा—मागमेऽपि स एव हि ॥ क्रियतां येन लोकस्य । प्रतीतिर्जायते प्रिये ॥ ६४ ॥ तथैव विहितं सर्वं । लोके मंडपमाश्रिते ॥ ग्रामादानायिता पुत्राः । समासन्नाश्च धारिताः ॥ ६५ ॥ पूर्वं प्रवेशितो ज्येष्टो । भृत्यैर्ग्रामकैर्धृतः ॥ लज्जानघोमुखः क्षीणः । स्खलत्पादः पदे पदे ॥ ६६ ॥ पापः प्रकटकौपीनः । कृतकच्छोटकः कटौ ॥ सर्वलोककृपास्थानं । दुर्बलोऽतिमलाविलः ॥ ६७ ॥ भृत्यद्वयेन लज्जाढु—र्धृत्वा वामेतरे करे ॥ मुक्तोऽग्रे स समानीय । श्रेष्टिनः श्रेष्टकर्मणः ॥ ६८ ॥ भणितः श्रेष्टिना वत्स । पादं पूजय मामकं ॥ दक्षिणं मूलनीव्या त्वं । लब्धलाजेन वामकं ॥ ६९ ॥ ग्रहैरिव गृहीतोऽसौ । मंत्रैरिव जम्भीकृतः ॥ निरुद्धवचनः शून्यो । भणितोऽपि न भाषते ॥ ७० ॥ आकारसंवरं कृत्वा । पृष्टं शपथपूर्वकं ॥ वत्स सत्यं प्रवक्तव्यं । तत्र गत्वा पुरे त्वया ॥ ७१ ॥

किमुक्तं चिंतितं किं वा । किं वा कर्म त्वया कृतं ॥ तेनापि च यथा वृत्तं । तथा सर्वं नि· वेदितं ॥ ७२ ॥ युग्मं ॥ तत श्रुत्वा कुपितः श्रेष्ठी । किंचित्कंपितकंधरः ॥ उवाच मिलितं लोकं । सर्वं सावेशमानसः ॥ ७३ ॥ जो पश्यत जना यूयं । ज्येष्ठपुत्रस्य चेष्टितं ॥ व्यवसायं पितृजक्तिं च । शरीरस्य स्थितिं तथा ॥ ७४ ॥ एवंविधेन वेषेण । साधुरेव प्रशस्यते ॥ पूज्यते च जनैः सर्वैः । स्तूयते स्तुतिजिस्तथा ॥ ७५ ॥ निर्धनः श्लाघ्यते साधु—रहो मुनिरकिंचनः ॥ मलिनो मान्य· तामेति । मलधारी महामुनिः ॥ ७६ ॥ दुर्बलः पूज्यते लोके । जो कष्टं तप्यते तपः ॥ दुष्टदुर्मु· खवाक्यानि । सहन् लोकेन शस्यते ॥ ७७ ॥ क्षमावानेष वंद्योऽयं । धन्यो धर्मशिरोमणिः ॥ क· दन्नजोजी लोकेन । गण्यते निःस्पृहो मुनिः ॥ ७८ ॥ जूमिशायी मुनिर्लोके । कष्टकारीति जण्य· ते ॥ रोमपादनखादीनां । वर्धनं गुणवर्धनं ॥ ७९ ॥ परुषत्वमचर्या च । केशानां श्लाघ्यते जने ॥ अस्नानं च प्रशस्यंति । नैव स्नांति दमे रताः ॥ ८० ॥ स्नानमुद्वर्तनाज्यंगे । नखकेशादिसत्क्रियां ॥ गंधं माल्यं च तांबूलं । प्रदीपं तु मुनिस्त्यजेत् ॥ ८१ ॥ स्मृतिरपि—ब्रह्मचर्यस्थितो नैव—मन्न· मद्यादि निंदितं ॥ दंतधावनगीतादि । ब्रह्मचारी विवर्जयेत् ॥ ८२ ॥ एतान्युन्नतिकारीणि । साधूः

नां शीलशालिनां ॥ अनुन्नतिकराण्येव । जायंते गृहमेधिनां ॥ ८१ ॥ उक्तं च—कार्श्यं क्षुत्प्रभवं कदन्नमशनं शीतोष्णयोः पात्रता । पारुष्यं च शिरोरुहेषु शयनं मह्यास्तले केवलं ॥ यान्येवावनतिं वहंति गृहिणां तान्युन्नतिं संयमे । दोषाश्चापि गुणीभवंति हि नृणां योग्ये पदे योजिताः ॥ ॥ ८२ ॥ तदेष ज्येष्ठपुत्रो मे । निर्भाग्यो गुरुतल्पगः ॥ अयोग्यो गृहभारस्य । शाह्यकर्मकरोऽस्त्विति ॥ ८३ ॥ मूलनीवीधनं मुक्त्वा । पादाग्रे प्रणतिं गतः ॥ द्वितीयो भणितः पित्रा । पुत्रेदं मामकं धनं ॥ ८४ ॥ दूरं दूरतरं यांति । पुरुषा लाभवांछया ॥ समूलं ते समेतस्य । वहिश्चारो निरर्थकः ॥ ८५ ॥ ज्येष्ठवदनुज्येष्ठोऽपि । कृतः शपथशापितः ॥ तेनापि कथितं सर्वं । यत्कृतं यच्च चिंतितं ॥ ८६ ॥ लोकाः शृणुत सर्वेऽपि । मिलिता मामकं वचः ॥ एषोऽपि कर्मकार्येव । मंदिरे किंतु मध्यमः ॥ ८७ ॥ कनिष्ठोऽपि समायातो । भृत्यवर्गसमन्वितः ॥ आदेशार्थी पुरोभूय । स्थितो विरचितांजलिः ॥ ८८ ॥ मूलनीवीधनं सर्वं । पादे मे मुंच दक्षिणे ॥ वामे विवर्धितं मुक्त्वा । ममोत्संगे निवेश्यतां ॥ ८९ ॥ त्वन्मुखामृतपानस्य । चिरकालमुत्कंठितः ॥ अद्याहं मुदितो जातो । जात त्वय्यवलोकिते ॥ ९० ॥ क्व मेघा बर्हिणः कुत्र । क्व चंद्रः क्व च सागरः ॥ गुणाः कुर्वंति

दूतत्वं । दूरेऽपि वसतां सतां ॥ ९१ ॥ धनचंडस्तथा प्रोक्तः । पितुरंकमुपागतः ॥ हर्षाश्रुपूरिताक्षे·
ण । तेनाचुंबि स मस्तके ॥ ९२ ॥ भणितो वत्स किं तत्र । वाणिज्यं कुर्वता सता ॥ अयमासा·
दितो लाभो । मूलादष्टगुणो महान् ॥ ९३ ॥ तेनापि कथितं सर्वं । यत्कृतं यच्च चिंतितं ॥ ला·
भश्च पूज्यपादानां । पुण्यैरासादितो मया ॥ ९४ ॥ निशम्य तस्य वाक्यानि । धनो मनसि रंजि·
तः ॥ हर्षाश्रुपूरिते बिभ्र—चक्षुषी गलदश्रुणी ॥ ९५ ॥ पुण्यानुबंधिपुण्येन । जन्म संभाव्यते तव
॥ सुक्षेत्रमिव शस्यानां । त्वं पात्रं सर्वसंपदां ॥ ९६ ॥ लभ्यते ऋक्षसंख्यापि । गण्यंते द्वीपसागराः
॥ तव देहे गुणानां तु । पर्यंतोऽपि न लभ्यते ॥ ९७ ॥ त्वयैव पुत्री पुलाहं । त्वयैव गुणवानहं ॥
त्वयैव श्लाघ्यतां नीत—स्त्वया जातो निराकुलः ॥ ९८ ॥ मनांसि शिष्टलोकानां । कूपोदकसमा·
न्यहो ॥ निर्गुणैः स्तब्धकैः शून्यै—र्गृह्यंते न कदाचन ॥ ९९ ॥ भो लोकाः साक्षिणो यूयं । वि·
संवादनिवारणे ॥ कनिष्ठेऽपि गुणाधारे । धनचंडेऽस्ति मे मनः ॥ १०० ॥ यत उक्तं—गुणा गौ·
रवमायांति । महत्त्वेन न रूपतः ॥ कलंकी न तथा पूज्यो । निष्कलंको यथा शशी ॥ १ ॥ त·
तश्च सर्वलोकानां । पुरतो मंगलपूर्वकं ॥ गृहभारोऽश्रुणा सार्धं । मूर्ध्नि तस्य निवेशितः ॥ २ ॥

कुबुद्ध्या नाशितो ज्येष्टो । गृहे कर्मकरः कृतः ॥ सुबुद्धियोगतो जातो । धनचंडो गृहाधिपः ॥३॥ कुबुद्धिदानतः क्रुद्धः । कुमित्रपरिवारितः ॥ विधिरेष उपायेन । पुंसो हरति संपदं ॥ ४ ॥ सुबुद्धिदानतस्तुष्टः । सुमित्रपरिवारितः ॥ विधिरेष उपायेन । नरस्य कुरुते श्रियं ॥ ५ ॥ नास्त्यसाध्यं सुचीर्णानां । पुरा जन्मनि कर्मणां ॥ धनचंडेण येनात्मा । लघुनापि गुरूकृतः ॥ ६ ॥ उक्तं च—लहुएणवि वम्बीयं—कुरेण साहिसयाण मझंमि ॥ तह संठविउ अप्पा । जह सेसतरू तले तस्स ॥ ७ ॥ वीचिव्याप्तवियद्वितानवसुधं क्वागाधरंध्रं पयो । गोलांगूलसलीलपाणिकलिताः क्षुद्राः क ते क्ष्माभृतः ॥ बध्ध्वा दाशरथिस्तथापि जलधिं प्रत्याजहार प्रियां । ग्रावाणोऽपि तरंति वारिणि यदा पुंसोऽनुकूलो विधिः ॥ ८ ॥ ततस्तं शिक्षयामास । श्रेष्टी स्नेहपरायणः ॥ वत्सावहितचित्तेन । श्रोतव्यं मामकं वचः ॥ ९ ॥ एष भारो महाभारो । दुर्वहः किन्नरैर्नरैः ॥ तदयं पुत्र वोढव्यो । गतालस्येन सर्वदा ॥ १० ॥ यथा न तरलायंते । दुर्जना दुःखदायिनः ॥ श्यामायंते यथा नैते । सज्जनाः सुखकारिणः ॥ ११ ॥ सर्वदैव सलज्जेन । स्वोपयोगेन सर्वदा ॥ व्यसनं व्यसनं कृत्वा । कर्तव्यं सुगुणार्जनं ॥ १२ ॥ देवानां च गुरूणां च । कार्या भक्तिरकृत्रिमा ॥ सर्वत्रो-

चितवृत्त्या च । वर्तितव्यं विवेकिना ॥ १३ ॥ माननीया जना मान्या । निंदनीया न केचन ॥ प-
रमर्म न वक्तव्यं । कर्तव्यो धर्मसंग्रहः ॥ १४ ॥ कर्कशं न वचो वाच्यं । न भाव्यं बहुमुष्टिना ॥
इंद्रियाणि वशीकृत्य । पालनीयो गृहाश्रमः ॥ १५ ॥ गृहांतर्वातलः कोऽपि । पित्तलः कोऽपि को-
पनः ॥ मानी मायी च लोभी च । कलही चापि कश्चन ॥ १६ ॥ दुःशीलो दुर्भगः कोऽपि । को-
ऽपि दुष्टो परो जडः ॥ गृहनायकेन कर्तव्या । सर्वेषामनुवर्तना ॥ १७ ॥ स्वल्पजल्पक्रियाकारी ।
देहादर्शितविक्रियः ॥ श्लाघ्यते सर्वलोकेन । यत उक्तं महात्मभिः ॥ १८ ॥ न खनति खुरैः क्षो-
णीपृष्टं न नर्दति सादरं । प्रकृतिपुरुषं प्रेक्ष्याप्यग्रे न कुप्यति गोंतरं ॥ वहति च धुरं धुर्यो धैर्यादनु-
द्धरकंधरो । जगति गुणिनः कार्यौदार्यात्परानतिशेरते ॥ १९ ॥ दानादिगुणसंयुक्तः । सदाचारप-
रायणः ॥ कुलाचारैकचित्तश्च । केन केन न शस्यते ॥ २० ॥ यतः—

त्यागैः सच्चरितैर्दयाभिरतुलैरन्योपकारैर्गुणै—र्गुर्वादेर्विनयैस्तपोभिरमलैः शुभ्रैर्यशोभिर्न यैः ॥
तारस्फारविवेकतो निजकुलाचारात्तथा धर्मतो । यो धीरैर्धुरि देहिनां न गणितः किं सोऽपि मर्त्यो
भुवि ॥ २१ ॥ सर्वस्य चोन्नतिः कार्या । वार्या दुर्जनसंगतिः ॥ स्त्रीणां वशे न गंतव्यं । वचो वा-

॰ं न कर्कशं ॥ २२ ॥ एवं च जायते कीर्ति—र्यशः सर्वत्र जृंभते ॥ लभ्यते प्रथमा रेखा । स·
त्पुरुषविचारणे ॥ २३ ॥ कियत्ते कथ्यते वत्स । संक्षेपात् शृणु सांप्रतं ॥ दोषा हेया गुणा ग्राह्याः
। कर्तव्या निर्मला दया ॥ २४ ॥ एवं श्रेष्ठी समाश्वास्य । धनचंडं मुदं दधौ ॥ गुणिन्यपि गुणा·
धानं । गुणायैवोपजायते ॥ २५ ॥ गृहस्य स्वामिनं कृत्वा । दत्वा परिजनं निजं ॥ स्वयं श्रेष्ठी स·
मारब्धो । धर्मं कर्तुमनाकुलः ॥ २६ ॥ दृष्टांतोऽयं समाख्यातो । दार्ष्टांतिक इहोच्यते ॥ संसारिका·
स्त्रयः सत्वा । मानुषीं योनिमागताः ॥ २७ ॥ तत्रैको लब्धसम्यक्त्वः । सत्यशौचसमन्वितः ॥ ल·
ब्धलाभवणिक्तुल्यो । मृत्वा देवेषु जायते ॥ २८ ॥ परस्तनुकषायत्वा—द्दानदातृत्वयोगतः ॥ मू·
लाहारिवणिक्तुल्यो । मृत्वा भवति मानवः ॥ २९ ॥ तृतीयस्तु महापापो । धर्मकर्मबहिर्मुखः ॥
जीवघाती मृषावादी । चौर्यचातुर्यसंगतः ॥ ३० ॥ परनार्यारतः पापो । महारंभपरिग्रहः ॥ समूल·
हारिणा तुल्यो । नरकं याति दारुणं ॥ ३१ ॥ मानुषत्वं भवेन्मूलं । लाभो देवगतिर्भवेत ॥ मूल·
नाशेन जीवानां । नारकतिर्यग्योनिता ॥ ३२ ॥ लब्धलाभसमैर्भाव्यं । सर्वथा भव्यजंतुभिः ॥ मू·
लाहारिसमैर्वापि । न तुल्यैर्मूलहारिणा ॥ ३३ ॥ तदहो दुर्लभं प्राप्य । मानुष्यं भवकोटिभिः ॥ य·

तध्वं सर्वदा धर्मे । येनेदं सफलं भवेत् ॥ ३४ ॥ इति वणिक्त्रयकथानकं परिसमाप्तं ॥ भूयोऽपि धर्मं प्रशंसयन् श्लोकचतुष्टयमाह—

॥ मूलम् ॥—संप्राप्य मानुषं जन्म । दुर्लभं भवकोटिभिः ॥ व्यापारितं सदा धर्मे । यैस्ते ह्यत्र नरोत्तमाः ॥ १ ॥ गछतां दुर्गसंसार—मार्गे पर्यंतवर्जिते ॥ धर्मसंबलमृते पुंसां । दुःखमानि पदे पदे ॥ २ ॥ सीदंत्यत्र न यैर्धर्मः । सम्यगासेवितः पुरा ॥ सांप्रतं न च कुर्वंति । तेषामग्रेऽपि नो सुखं ॥ ३ ॥ तदेष भगवान् धर्मो । दुर्गतिगतधारकः ॥ सद्भिः सदैव कर्तव्यः । सर्वसौख्यनिबंधनं ॥ ४ ॥ व्याख्या—संप्राप्य लब्ध्वा मानुषं मनुजभवसंबंधि जन्म जननं दुर्लभं दुःप्रापं भवकोटिभिर्नरकादिभवलक्षशतसहस्रैर्व्यापारितं नियोजितं सदा नित्यं धर्मे सदनुष्ठानरूपे यैः कैश्चिदनिर्दिष्टनामभिस्तेऽत्रास्मिन् लोके नरोत्तमाः प्रधानपुरुषाः ॥ १ ॥ गछतां व्रजतां दुर्गसंसारमार्गे विषमभववर्त्मनि पर्यंतवर्जिते निधनरहिते धर्मसंबलं धर्मपाथेयमृते विना पुंसां पुरुषाणां दुःखमानि दुःखशतविधायित्वाद् दुःखानि पदे पदे स्थाने स्थान इति. ॥ २ ॥ सीदंति समभिलषितार्थापूर्त्या दुःखमनुभवंति, अत्र मनुष्यभवे न नैव यैर्नरैर्धर्मः सुदरानुष्ठानं सम्यक् शोभनेन न्यायेनासेवितः

कृतः पुरा पूर्वं, सांप्रतमधुना च नैव कुर्वंति विदधति तेषामग्रेऽपि तेषां नराणामग्रेऽपि परलोकेऽपि नो नैव सुखं समेति. ॥ ३ ॥ तस्मात्कारणादेषोऽयं पूर्वोक्तो भगवान् सकललोकपूजनीयो धर्मः श्रुतधर्मश्चारित्रधर्मश्च दुर्गतिगतधारको दुर्गतिप्रस्थितजंतुनिवारकः सद्भिः सत्पुरुषैः सदैव सदाकालं कर्तव्यो विधेयः सर्वसौख्यनिबंधनं सकलशर्मकारणमिति श्लोकचतुष्टयसमासार्थः. ॥ ४ ॥ तथा—

॥ मूलम् ॥—धर्मो विजयी सर्वत्रा—ऽधर्मो विजयवर्जितः ॥ ततोऽधर्मं परित्यज्य । धर्मे यत्नो विधीयतां ॥ १ ॥ व्याख्या—धर्मः शोभनानुष्ठानं विजयी विजयवान् सर्वत्र सर्वलोके, अधर्मो धर्मविपक्षो विजयवर्जितो जयरहितः, ततस्तस्मात्कारणादधर्मं परित्यज्य विमुच्य धर्मे यत्न आदरो विधीयतां क्रियतामिति. ॥ १ ॥ स च सदनुष्ठानेन शिष्टसमाचारपालनेन च भवति. लोकाश्चेह बहवो महारंभमहापरिग्रहासक्ताश्चौर्यपारदार्यप्रभृतिदुर्नयकारिणश्च, तथाप्यात्मानं धार्मिकाणां धुरि धारयंति, आत्मसंतुष्टत्वाज्जगत इति. एतदर्थप्रतिपादकश्च दृष्टांतोऽयं, तद्यथा—

अस्तीह मगधो नाम । देशो देशशिरोमणिः ॥ महेश्वरकृतावासः । स कैलाश इवोन्नतः ॥ ॥ १ ॥ यत्र नार्यश्च वाप्यश्च । निर्मलाः सुपयोधराः ॥ सुतेजसः सुवंशोत्था । मुक्ताश्च मुनयोऽपि

च ॥ २ ॥ पुरं राजगृहं तत्र । निवासः सर्वसंपदां ॥ विशालेनोच्चशालेन । परितः परिवेष्टितं ॥३॥
तत्रासीत् श्रेणिको राजा । स्वगुणै रंजितप्रजः ॥ भांडागारादिसंपूर्णः । सुप्रतापी परंदमः ॥ ४ ॥
गृहीतहृदया तस्य । चेल्लणा नाम गेहिनी ॥ रोहिणीव शशांकस्य । विलसत्तारतारिका ॥ ५ ॥
तथाभयाभिधानश्च । मंत्रिपुत्रश्च सद्गुणः ॥ बुध्या सर्वातिशायिन्या । त्रिदशाचार्यसन्निभः ॥ ६ ॥
अथान्यदा समारूढः । प्रासादे मेदिनीपतिः ॥ परितः प्रेषयामास । दृष्टिं दृष्टव्यदर्शनः ॥ ७ ॥ य-
त्र यत्र प्रयात्यस्य । दृष्टिर्दर्शनलोलुपा ॥ पश्यति तत्र तत्रापि । लक्षशः कोटिशो जनान् ॥ ८ ॥
ततः सकौतुको राजा । प्रासादादवतीर्य सः ॥ सर्वतः पुरमालोक्य । सभामंडपमागतः ॥ ९ ॥
सामंतमंत्रिणः सर्वे । समायाताश्च तत्क्षणं ॥ संनिषण्णा निजे स्थाने । तान् सन्मान्य ततो नृपः ॥
॥ १० ॥ लोकविस्मयकारीद—मकालजलदोपमं ॥ प्रोवाचि च नरेंद्रेण । मंत्रिणो मिलितान् प्र-
ति ॥ ११ ॥ एतस्मिन्नगरे लोका । बहवो ये वसंति नः ॥ किं पापा धार्मिका वेति । ममेदं क-
थ्यतां द्रुतं ॥ १२ ॥ श्रुत्वेदं मंत्रिणो बुध्या । पर्यालोच्य परस्परं ॥ प्रोचुश्च बहवः पापा । वसंत्यत्र
पुरे प्रभो ॥ १३ ॥ धार्मिका गणिताः केचि—च्छतांशादपि दुर्लभाः ॥ कुकर्मकारिणां पुंसां । पर्य-

तोऽपि न लभ्यते ॥ १४ ॥ तन्मंत्रिभणितं वाक्यं । राज्ञोऽपि हृदि संस्थितं ॥ केवलं वक्ति नो किंचि—द्भयो मंत्रिणां वरः ॥ १५ ॥ अशृण्वन्निव तूष्णीक । आस्तेऽधोनमितेक्षणः ॥ भणितो भूभृता मंत्रि—न्नुत्तरं किं न दीयते ॥ १६ ॥ स प्राह न विजानेऽहं । देवोत्तरमुदीरितुं ॥ अज्ञानस्य सर्वत्र । मौनं सर्वार्थसाधनं ॥ १७ ॥ यथैते तव जानंति । मंत्रिणः कार्यनिश्चयं ॥ तथाहं न विजानामि । विभिन्ना मतयो नृणां ॥ १८ ॥ अहं तु ननु जानामि । प्रभूता धार्मिका जनाः ॥ वसंति च स्वल्पाः पापाः । कुरु तात परीक्षणं ॥ १९ ॥ स्वल्पशौचा अधर्मिष्ठा । अरण्यानीनिवासिनः ॥ अविचारा न शस्यंते । नरा गड्डुरिका यथा ॥ २० ॥ अपरीक्षितकारित्वं । मृतानां देहमंडनं ॥ बधिरेण समं मंत्रो । जात्यंधमुखमंडनं ॥ २१ ॥ ततः परीक्षणाहेतोः । पुरमध्ये सितेतरं ॥ प्रासादद्वयमुत्तुंगं । कारयित्वा मनोहरं ॥ २२ ॥ परितः पटहेनाशु । श्रावयित्वाखिलं जनं ॥ यथा भो भूभृता धर्म्यः । प्रासादः कारितो महान् ॥ २३ ॥ द्वितीयः पापनामा च । तत्र यः कोऽपि धार्मिकः ॥ धर्म्यं प्रासादमागत्य । स आरोहतु सत्वरं ॥ २४ ॥ पापो जनो द्वितीयं तु । प्रासादमुपगच्छतु ॥ एतत् श्रुत्वा जनः सर्वो । धावितो धर्ममंदिरे ॥ २५ ॥ त्रिभिर्विशेषकं ॥ निरोद्धुं श-

क्यते नैव । प्रतीहारशतैरपि ॥ चक्रिणः कल्पपालाश्च । मत्स्यबंधाश्च खट्टिकाः ॥ २६ ॥ वेश्या वागुरिका गोघ्ना । ये चान्ये पापकारिणः ॥ प्रतीहारेण ते प्रोक्ताः । किं यूयमिह चागताः ॥ २७ ॥ मद्यमांसरसासक्ता । जीवघातपरायणाः ॥ अधर्मिष्ठाः कुकर्माणो । लोकनिंद्याश्च सर्वदा ॥ २८ ॥ त्रिभिर्निर्विशेषकं ॥ जगाद चक्री चक्रं नो । धर्मांगं प्रथमं स्मृतं ॥ विचार्य प्रतीहार । कथ्यमानं वचो मम ॥ २९ ॥ द्विजपाखंडिदीनांध—पंगुन्यस्तैलधारया ॥ दत्तया किं न धर्मो न । इति सम्यग्विज्ञाव्यतां ॥ ३० ॥

तडागे खन्यमाने तु । लेष्टाकर्षणसन्निभं ॥ अर्थमात्रसमुद्बं वा । पुण्यं केन निवार्यते ॥३१॥ सौवासिनी द्विजेन्यश्च । दक्षिणा या प्रदीयते ॥ तद्भवो धर्मसंतानः । किमस्माकं न जायते ॥ ॥ ३२ ॥ ततो वयं सुधर्मिष्टा । धर्मकर्मविचक्षणाः ॥ धर्मप्रासादयोग्याश्च । मुधा वारयते भवान् ॥ ॥ ३३ ॥ अत्रांतरे समायाता । सुनंदवणिगंगजा ॥ विटभोज्या महापापा । न वेश्या न कुलांगना ॥ ३४ ॥ जारघातितभर्तृका । निर्मर्यादा गतत्रपा ॥ वर्जिता पितृवर्गेण । श्वशुरेणापि वर्जिता ॥ ३५ ॥ उद्घाटमस्तका लोकै—र्हस्यमाना मुहुर्मुहुः ॥ कुलंकुलमटंती च । सा कुलटेति विश्रु-

ता ॥ ३६ ॥ अन्यायार्जितवित्तेन । तया यक्षस्य मंदिरं ॥ कारितं तेन यक्षोऽपि । तन्नामा भुवि
विश्रुतः ॥ ३७ ॥ कुलटायक्ष इत्येषा । ख्यातिर्यक्षस्य जृंभते ॥ किं कुर्वंति विगुप्यंते । देवा अपि
कुसंगतः ॥ ३८ ॥ प्रतीहारेण सा रुद्धा । प्रोक्ता च धर्ममंदिरे ॥ प्रवेशे कोऽधिकारस्ते । सावोच-
दिदमंजसा ॥ ३९ ॥ अहं धर्मवतां सीमा । यया यक्षस्य मंदिरं ॥ कारितं निजवित्तेन । त्वमज्ञ
इव लक्ष्यसे ॥ ४० ॥ ततो मदनमंजूषा—नाम्नी वरविलासिनी ॥ प्रतीहारनिरुद्धासा—विदं वच-
नमब्रवीत् ॥ ४१ ॥ धर्मसौधे प्रविशंत्या । निषेधः क्रियते कथं ॥ स्वल्पाक्षरैः प्रतीहार—स्तामवो-
चद्विलासिनीं ॥ ४२ ॥ स्वकर्म किं न जानासि । पापे पापगृहोचितं ॥ प्रतीहारप्रबोधाय । जगा-
देदं विलासिनी ॥ ४३ ॥ त्रीन् वारान् प्रतिमासांते । कामसत्रं ददाम्यहं ॥ द्विजादिदुःस्थलोकानां
। सुस्थत्वे किं न मे शुभं ॥ ४४ ॥ एवमन्येऽपि सर्वेऽपि । मत्स्यबंध्यादयो नराः ॥ आत्मानं धा-
र्मिकंमन्या । धर्मसौधमुपागताः ॥ ४५ ॥ प्रतीहारोऽचिंतयत—सर्वस्यात्मा गुणवान् । सर्वः परदोष-
दर्शने कुशलः ॥ सर्वस्य चास्ति वाच्यं । न चात्मदोषान् वदति कश्चित् ॥ ४६ ॥ सत्यापितः प्रवा-
दोऽयं । जने नैवं प्रजल्पता ॥ जगदात्मनि संतुष्टं । सर्वः स्वं चारु मन्यते ॥ ४७ ॥ बहिष्ठान्मस्त-

के मध्ये । पार्श्वतः पृष्ठतोऽपि च ॥ सर्वतो नागरो लोको । धर्मागारमुपाश्रितः ॥ ४७ ॥ शून्यं पा-
पगृहं सर्वं । न कोऽपि क्वापि दृश्यते ॥ खरांशुर्मस्तके रूढ—स्तीव्रतेजाः सुदुस्सहः ॥ ४८ ॥ नरें-
द्रश्च समासन्नः । प्रधानपरिवारितः ॥ जनं च जनजल्पं च । पश्यति च शृणोति च ॥ ४९ ॥ अ-
त्रांतरे च पापीयः—प्रासादे कालिमालये ॥ द्वावेव पुरुषौ राज्ञा । विशंताववलोकितौ ॥ ५० ॥
विस्मयापन्नचित्तेन । अनयोऽन्याणि जृंभृता ॥ कावेतौ पुरुषौ भद्र । पापप्रासादमागतौ ॥ ५१ ॥
तेनोचे श्रावकावेतौ । प्रियंकरशुभंकरौ ॥ कारणं तत्र तद्याने । समाकार्य विचार्यतां ॥ ५२ ॥ त-
तो राज्ञा प्रतीहार—मुखेनाकारितावुभौ ॥ आगत्य प्रणतौ राज्ञे । निषण्णावुचितासने ॥ ५३ ॥
राज्ञा पृष्टौ यथा जैन—शासने श्रावकौ युवां ॥ देवश्च युवयोः श्रीमान् । समग्रैश्वर्यसंयुतः ॥५४॥
सर्वज्ञः सर्वदर्शी च । सर्वदेवनमस्कृतः ॥ गुरवः साधवश्चैव । प्राप्यंते नाल्पपुण्यकैः ॥ ५५ ॥ स-
द्विवेकः श्रिया सार्धं । विनयो विद्यया सह ॥ आत्मगुणैरनुत्सेको । युष्मास्वेव विलोक्यते ॥५६॥
भो भद्रौ शेषलोकेभ्यो । गुणित्वं वां समर्गलं ॥ ततः केन निमित्तेन । पापप्रासादमाश्रितौ ॥
॥ ५७ ॥ तावूचतुर्महाराज । यन्न तुष्टिर्निजैर्गुणैः ॥ क्रियाकांडमपि स्वीयं । न तच्चेतसि वर्तते ॥

॥ ५७ ॥ जगद्बंधुर्जिनाधीशो । देवो नौ देवदेवता ॥ क्षमावंतः श्रुताधारा । गुरवश्च सुसाधवः ॥ ॥ ५९ ॥ श्रूयते तद्वचो नित्यं । क्रियते पर्युपासना ॥ क्रियाकाले पुनः सर्वं । काकवासितसन्निभं ॥ ६० ॥ जिनाज्ञा हृदयेऽस्माक—मनुष्ठानं सकल्मषं ॥ मोक्षाध्वनि स्थितस्येदं । प्रस्थानं नरकाध्वनि ॥ ६१ ॥ ते शोच्या ये न जानंति । सर्वज्ञमतमुज्ज्वलं ॥ शोच्यानामपि ते शोच्या । ज्ञात्वा ये न प्रकुर्वते ॥ ६२ ॥

आपादितचमत्कारा । इंद्रजालिकसन्निभाः ॥ बहवो विरलास्ते च । ये रंजितस्वमानसाः ॥ ॥ ६३ ॥ अंतःशून्या बहिः सारा । नित्यशो भोजनप्रियाः ॥ ध्वनिसाराश्च संसारे । बहवो मर्दलोपमाः ॥ ६४ ॥ अंतःसद्वासनोपेता । बहिश्च बकवृत्तयः ॥ वाचंयमाः क्षमावंतो । निःस्पृहा विरला जनाः ॥ ६५ ॥ सुधर्मादिमुनींद्राणां । मौनींद्रगुणधारिणां ॥ जिनाज्ञायोगयुक्तानां । धर्मप्रासादयोग्यता ॥ ६६ ॥ तेनात्र वयमारूढा । मूढाः सन्मार्गवर्त्मनि ॥ कुकर्मकारका दत्त—सत्यंकारा भवाध्वनि ॥ ६७ ॥ जगादाथाभयो देव । स्वदोषे यस्य दोषधीः ॥ स धन्यो वंदनीयश्च । स धार्मिकशिरोमणिः ॥ ६८ ॥ दोषबुद्धिः स्वदोषेषु । गुणबुद्धिर्गुणेषु च ॥ दोषेभ्यस्ते विरज्यंते । प्रवर्तंते

गुणेषु च ॥ ६९ ॥ दोषा अपि गुणत्वेन । यैः प्रपन्ना नराधमैः ॥ दोषेभ्यश्च कदा तेषां । विनि-
वृत्तिर्न्नविष्यति ॥ ७० ॥ दर्शने परदोषाणां । लोकानां लोचनद्वयं ॥ सहस्रगुणतां याति । हा हा
मत्सरजृंभितं ॥ ७१ ॥ स्वदोषदर्शने द्वे तु । जात्यंध इव चक्षुषी ॥ ये तु धर्मपरालोका—स्ते स्व-
ल्पा न तु भूरिशः ॥ ७२ ॥ यो हि यत्कुरुते कार्यं । तदेतत्तस्य सुंदरं ॥ आत्मसंतुष्टमेवेदं । वि-
चाररहितं जगत् ॥ ७३ ॥ तेन राजन् मया प्रोक्त—मल्पे पातककारिणः ॥ स्वबुद्ध्या धार्मिकाः
सर्वे । वसंति नगरे तव ॥ ७४ ॥ ततोऽसौ रंजितो राजा । श्रेणिको मगधाधिपः ॥ श्लाघां कुर्वन्
जगादेदं । प्रतीत्य श्रावकौ तकौ ॥ ७५ ॥ अहो विवेकता वां च । अहो वां च सुन्नाषितं ॥ अ-
हो वां धर्मदार्ढ्यत्वं । न तन्मूल्यं जगत्त्रये ॥ ७६ ॥ विसर्जितौ नरेंद्रेण । प्रियंकरशुन्नंकरौ ॥ श्ला-
घ्यमानौ च लोकेन । सादरं स्वगृहं गतौ ॥ ७७ ॥ अहो अन्नय ते बुद्धिः । सर्वेषामुपरि स्थिता
॥ नाम्नैव मंत्रिणः शेषा—स्त्वमाद्यो मंत्रदर्शिनां ॥ ७८ ॥ अन्नयाय निजं दत्वा । देहस्यांशुकभू-
षणं ॥ विसर्जितसन्नो राजा । जगाम निजमंदिरं ॥ ७९ ॥ कृतस्नानो विशुद्धात्मा । संवीतशुचिशा-
टकः ॥ शांतः कृतोत्तरासंगो । धर्मधीर्धर्ममूर्तिकः ॥ ८० ॥ मालतीजात्यपत्रादि—सांद्रपुष्पैः सुगंधि-

भिः ॥ पूजयित्वा विधानेन । श्रेणिकः श्रीजिनेश्वरं ॥ ७१ ॥ जात्यकांचननिर्मित—यवानां साष्ट-कं शतं ॥ प्रत्यहं कारयित्वा च । अष्टमंगलहेतवे ॥ ७२ ॥ मंगलानि पुरो ह्यष्ट । विलेख्य विधि-पूर्वकं ॥ रोमांचार्चितसर्वांगो । योगमुद्रापुरस्सरं ॥ ७३ ॥ देवेंद्रादिस्तवैः सारैः । स्तुत्वा भुवनबां-धवं ॥ अष्टस्वंगेषु चैकैकं । नमस्कारपुरस्सरं ॥ ७४ ॥ पुष्पं दत्वा ततो भुंक्ते । निर्मलीकृतदर्शनः ॥ एवं च कुर्वतो राज्यं । तस्य गछंति वासराः ॥ ७५ ॥ कुलकं ॥

तदहो धार्मिकाः स्तोका । शिष्टाचारपरा नराः ॥ अन्यायकारिणो लोका । भूयांसो धर्मवर्जि-ताः ॥ ७६ ॥ सर्वदा सर्वकल्याण—कारके भवतारके ॥ यतध्वं भो जना धर्मे । सामग्री दुर्लभा पुनः ॥ ७७ ॥ श्रीमदभयदेवाख्य—सूरिपादांतवासिना ॥ सूरिणा वर्धमानेन । धर्मरत्नकरंमके ॥ ॥ ७८ ॥ धर्माधर्मकृताह्वाने । धर्माधर्मविवेचके ॥ प्रस्तावे प्रथमे वृत्तिः । संक्षेपादेव चर्चिता ॥ ॥ ७९ ॥ उक्तो धर्माधर्माविति प्रथमाधिकारः ॥ अथ द्वितीयो जिनपूजेति व्याख्यायते, अस्य चायमभिसंबंधः—प्रथमाधिकारे धर्माधर्मौ सप्रपंचावभिहितौ, तत्र चाधर्मं परित्यज्य धर्मे यत्नो वि-धेय इत्युक्तं, धर्मार्थिनां पुनर्देवतापूजनं प्रथममेवानुष्ठानं, अतोऽत्राधिकारे पूजाविधिरुच्यते, इत्य-

नेन संबंधेन समायातोऽयमधिकारो व्याख्यायते, तत्र द्रव्यभावभेदेन द्वैविध्यं पूजाया उपवर्णयन् श्लोकमेकमाह—

॥ मूलम् ॥—द्रव्यतो भावतश्चैव । द्विविधं देवतार्चनं ॥ द्रव्यतो जिनवेश्मादि । स्तुतिस्तोत्रादि भावतः ॥ १ ॥ व्याख्या—द्रव्यतो द्रव्यमाश्रित्य, भावतो भावमाश्रित्य, चः समुच्चये, एवोऽवधारणे, स च भिन्नक्रमो द्विविधमेवेत्यत्र द्रष्टव्यं, ततो द्विविधमेव द्विप्रकारमेव देवतार्चनं देवपूजनं, ततो द्रव्यतो द्रव्यमाश्रित्य जिनवेश्मादि जिनमंदिरादि, आदिशब्दाज्जिनबिंबप्रतिष्ठादिपरिग्रहः, उक्तं च—जिणभवणबिंबठावण—जत्तापूयाइ सत्तओ विहिणा ॥ दव्वत्थउत्ति नेयं । भावत्थयकारणत्तेण ॥ १ ॥ विहियाणुट्ठाणमिणं । तिच्चेवमेयं सया करंताणं ॥ होइ चरणस्स हेऊ । नो इह लोगा दविक्खाए ॥ २ ॥ तथा स्तुतिस्तोत्रादि भावतो भावमाश्रित्य भावपूजेत्यर्थः. तत्र स्तुतय एकश्लोकाद्या यावदष्टौ, ततः परं स्तोत्राणि भण्यंते. आदिशब्दात् पौषधसामायिकस्वाध्यायादिपरिग्रहः. साधूनाश्रित्य पुनः सकलमपि यत्यनुष्टानं भावस्तव एवेति श्लोकार्थः. ॥ १ ॥ अथ द्विविधस्यापि पूजनस्याधिकारिणो निरूपयन्नाह—

॥ मूलम् ॥—अस्याधिकारिणो ज्ञेया । द्विविधस्याप्यगारिणः ॥ प्रायो भावस्तवे चैव । साधूनामधिकारिता ॥ १ ॥ व्याख्या—अस्यैतस्य देवतार्चनस्याधिकारिणो योग्यतावंतो ज्ञेया ज्ञातव्या द्विविधस्यापि द्रव्यभावभेदेन द्विप्रकारस्याप्यगारिणो गृहस्थाः. तथा प्रायो बाहुल्येन भावस्तवे चैव भावार्चन एव, प्रायोग्रहणात्संयमाबाधया गुणमपेक्ष्य कदाचिद् द्रव्यस्तवेऽपि साधूनां यतीनामधिकारिताऽधिकारित्वं योग्यत्वमित्यर्थः. उक्तं च—दव्वत्थ य भाव—त्थ य दव्वत्थ बहुगुणो त्ति बुद्धिसिया ॥ अनिउणमइवयणमिणं । छज्जीवहियं जिणा बिंति ॥ १ ॥ छज्जीवकायसंजमो । दव्वत्थए सो विरुज्झइ कसिणो ॥ तो कसिणसंजमविऊ । पुप्फाईयं न इच्छंति ॥ २ ॥ अकसिणपवत्तयाणं । विरयाविरयाण एस खलु जुत्तो ॥ संसारपयणुकरणो । दव्वत्थए कूवदिठंतो ॥ ३ ॥ इति श्लोकार्थः ॥ १ ॥ अथ द्रव्यस्वरूपं तत्राधिकारिणस्तदुपदेशं च श्लोकेनाह—

॥ मूलम् ॥—विधाप्य विधिना श्राद्धः । सुंदरं जिनमंदिरं ॥ तत्र बिंबं प्रतिष्ठाप्य । पूजयेत् प्रतिवासरं ॥ १ ॥ व्याख्या—विधाप्य कारयित्वा विधिना शास्त्रोक्तविधानेन श्राद्धः श्रावकः सुंदरं शोभनं जिनमंदिरं जिनगृहं, तत्र तस्मिन् बिंबं जिनप्रतिमां प्रतिष्ठाप्य शास्त्रोक्तविधिना प्रतिष्ठां का-

रयित्वा पूजयेदर्चयेत् प्रतिवासरं प्रतिदिनमिति. तत्र विधाप्य विधिना श्राद्ध इत्यनेन जिनभवनं विधिनैवाधिकारिणैव च कारयितव्यमिति दर्शयति. तत्राधिकारी गृहस्थ एव शुभस्वजनादिविशेषणयुक्तो वेदितव्यः, यत उक्तं—अहिगारिणा य गिहवो। सुहसयणो वित्तसंजुओ कुलजो॥ अखुद्दो धीबलिओ। मइमं तह धम्मरागी य ॥ १ ॥ गुरुपूयाकरणरुई। सुस्सूसाइगुणसंगओ चेव ॥ नाया अहिगयविहाणस्स। धणियमाणो पहाणो य ॥ २ ॥ एसो गुणिड्डिजोगो। अणेगसत्ताण तीएविणिओगा॥ गुणरयणवियरणेणं। तं कारिंतो हियं कुणइ ॥ ३ ॥ तं तह पवत्तमाणं। दहुं केइ गुणरागिणो मग्गं॥ अन्ने उ तस्स बीयं। सहुभावाउ पवज्जंति ॥ ४ ॥ जो चिय सुहभावो खलु। सव्वन्नुमयंमि होइ परिसुद्धो॥ सो चिय जायइ बीयं। बोहीए तेण नाएण ॥ ५ ॥ जिनभवनविधिः पुनः शुद्धभूमिग्रहादिकः, भणितं च—जिणभवणकारणविही। सुद्धा भूमी दलं च कट्ठाई॥ नियगाण य संधाणं। सासणवुड्ढी य जयणा य ॥ १ ॥ दव्वे भावे य तहा। सुद्धा भूमी पएसकीला य॥ दव्वे अ पत्तिगरहिया। अन्नेसिं होइ भावेण ॥ २ ॥ इत्यादिर्जिनभवनविधापनविधिर्वक्तव्य इति. तथा तत्र बिंबं प्रतिष्ठाप्येत्यनेन जिनबिंबप्रतिष्ठाविधिः सूचितः, स चैवं क-

तंव्यस्तद्यथा—

निप्फन्नस्स य बिंबस्स । दिवसदसगस्स मज्झयारंमि ॥ कायव्वा उ पइठा । सा पुण तिविहा विणिदिठा ॥ १ ॥ वत्तक्खा खलु एका । खेत्तक्खा वन्निया तहा अपरा ॥ अन्ना य महक्खा इह । ताण सरूवं इमं होई ॥ २ ॥ जो तिब्बवई जइया । तइया तब्बिंबठावणा पढमा ॥ उसभाईणं सव्वेसिं । जाण बीया पइठत्ति ॥ ३ ॥ तइया सत्तरिसमहिय—तिहयरसयस्स पुण पइठत्ति ॥ जो जस्स जहा भावं । जणेइ सा तस्स तह जुत्ता ॥ ४ ॥ आसायणदोसोवि हु । बिंबबहुत्तेन मज्झ· णाइकज्ज ॥ संकेयव्वो जं तीए । संभवो जाव दोसो उ ॥ ५ ॥ आवस्सयाइचुन्निसु । वुत्तोवि हु बिंबठावणाइविही ॥ चरियाणुकित्तणाउ । न सेसपडिसेहगो सोवि ॥ ६ ॥ इय जहसत्तीए गुरुं । लहुं व सेलुप्पवं मणिमयं वा ॥ जिणबिंबं कारिंतो । कल्लाणपरंपरं लहइ ॥ ७ ॥ प्रतिष्ठाविधिः पुनरयं—घोसावेज्ज अमारिं । रन्ना संघस्स तह य वाहरणं ॥ विन्नाणियसम्माणं । कुज्जा खेत्तस्स य विसुद्धिं ॥ १ ॥ तह य दिसिपालठवणं । तक्किरियं गाणसंनिहाणं च ॥ दुविहसुई पोसहिउ । चेईए ठवेज्ज जिणबिंबं ॥ २ ॥ नवरं सुमुहुत्तंमि । पुव्वुत्तरदिसिमुहं सउणपुव्वं ॥ वज्जंतेसु च·

उविह—मंगलतूरेसु पउरेसु ॥ ३ ॥ तो सव्वसंघसहिउ । ठवणायरियं ठवेत्तु पडिमपुरो ॥ देवे वंदइ सूरी । परिहरियनिरुद्धहयसुइवद्धो ॥ ४ ॥ संतिसुयदेवयाणं । करेइ उस्सग्गथुइपयाणं च ॥ सहिरन्नदाहिणकरो । सयलीकरणं तउ कुज्जा ॥ ५ ॥ ते सुद्धोभयपक्खा । दक्खा खेयण्णुया विहि· यरक्खा ॥ एहवणगारा उखिवंती । दिसासु सव्वासु सुद्धबलिं ॥ ६ ॥ तयणंतरं तु मुद्दिय—कलस· चउक्केण ते एहवंति जिणं ॥ पंचरयणोदएणं । कसायसलिलेण एहवयंति ॥ ७ ॥ चंदणजले· ण कुंकुम—जलकुंभेहिं च तित्थसलिलेण॥ सुद्धकलसेहिं पच्छा। गुरुणा अभिमंतिएहिं तहा ॥८॥ एहाणाणं सव्वाणंवि । जलधारापुप्फधूयगंधाई ॥ दायव्वमंतराले । जावंति कलसपच्छावो ॥ ९ ॥ एवं एहविए बिंबे । नाणकलाना समाचरेज्जा गुरू ॥ तो सरससुयंधेणं । लिंपेज्जा चंदणद्दवेण ॥ ॥ १० ॥ कुसुमाइं सुयंधाइं । आरोवेत्ता ठवेज्जा बिंबपुरो ॥ नंदावत्तयपट्टं । पूएज्जय चारुदव्वेहिं ॥ ॥ ११ ॥ चंदणछरुउजडेणं । वत्थेणं गयए य तं पट्टं ॥ अह पडिसरमारोवे । जिणबिंबे रिद्धिवि· धिजुयं ॥ १२ ॥ तो सरससुयंधाइं । फलाइं पुरउ ठवेज्ज बिंबस्स ॥ जंबीरबीजपूरा—इयाइं तो देज्जा गंधाइं ॥ १३ ॥ मुद्दामंतन्नासं । बिंबे हत्थंमि कंकणनिवेसं ॥ मंतेण धारणविहिं । करेज्ज

विंबस्स नो पुरत्तं ॥ १४ ॥ बहुविहपक्कन्नाणं । ठवणा वरवत्थुगंधपुडियाणं ॥ वरवंजणाण य तहा ।
जाइफलाणं च सविसेसं ॥ १५ ॥ सागिख्खूवरसोलग—खंडाईणं च रोसहीणं च ॥ संपुन्नबलीय
तहा । ठवणं पुरत्तं जिणिंदस्स ॥ १६ ॥ घयगुडदीवो सुकुमा—रियाजुत्तं चत्तजवारया दिसिसु ॥
विंबपुरत्तं ठवेज्जा । पूयाण बलिं तत्तं देज्जा ॥ १७ ॥ आरत्तियमंगलदीव—यं च उत्तारिऊण
जिणनाहं ॥ वंदेज्ज हि सासणदेव—याए उस्सग्गथुइदाणं ॥ १८ ॥ अह जिणपंचंगेसु । ठवे·
इ गुरुथिरीकरणमंतं ॥ वारा उ तिन्नि पंच व । सत्तव अच्चंतमपमत्तो ॥ १९ ॥ मयणहले आरो·
वइ । अहिवासणमंतनासमवि कुणइ ॥ छायइ य तयं बिंबं । सजियंव जहा फुरं होइ ॥ २० ॥
एवमहिवासियं तं । बिंबं ठाएज्ज सदसवत्थेण ॥ चंदणगरुप्फडेणं । तदुवरि पुप्फाइ विखिविज्जा ॥
॥ २१ ॥ हावेज्ज सत्तधन्नेण । तयणु जीवंत उभयपक्खाहिं ॥ नारीहिं चउहिं समलं—कियाहिं
जीवंतनाहाहिं ॥ २२ ॥ पम्हिपुन्नचत्तसुत्तेण । वेढणं चउगुणं च काऊणं ॥ उमिणणं कारेज्जा
। तुहाहिं हिरन्नदाणजुयं ॥ २३ ॥ तो वंदेज्जा देवे । पइट्ठदेवीए काउस्सग्गं ॥ दिज्ज थुईतीए
चिय । ठवेज्ज पुरत्तं य घयपत्तं ॥ २४ ॥ सोवन्नवट्टियाए । कुज्जा महुसकराहिं नरियाए ॥ कण·

गसल्लागाए बिंब—नयणुम्मीलणं लग्गे ॥ २५ ॥ सम्मं पइठमंतेण । अंगसंधीसु अक्खरन्नासं ॥
कुणमाणो एगमणो । सूरी वासे खिवेज्जा तहा ॥ २६ ॥ पुप्फक्खयंजलीहिं । तो गुरुणा घोसणा
ससंवेण ॥ थेज्जत्तं कायव्वा । मंगलसद्देहिं बिंबस्स ॥ २७ ॥ जह सिद्धिमेरुकुल—पव्वयाण पंच-
त्थिकायकालाणं ॥ इह सासया पइठा । सुपइठा होउ तह एसा ॥ २८ ॥ तह दीवसिंधुससहर-
दिणयरसुरवासवासखेत्ताणं ॥ इह सासया पइठा । सुपइठा होउ तह एसा ॥ २९ ॥ एवं सुह-
न्नावकए । अक्खयखेवे कयंमि बिंबस्स ॥ सविसेसं पुण पूया । किच्चा चिइवंदणा य तहा ॥ ३० ॥
मुहउग्घाडणसमणं—तरं च पूया य समणसंघस्स ॥ फासुयघयगुडगोरस—एंतयमाईहिं काय-
व्वा ॥ ३१ ॥ सोहणदिणे य सोहग्गं । मंतविन्नासपुव्वयमवस्सं ॥ मयणहलकंकणकर—यलाउ बिं-
बस्स अणवेज्जा ॥ ३२ ॥ जिणबिंबस्स य विसये । नियनियठाणेसु सव्वमुद्दाउ ॥ गुरुणा उवउ-
त्तेणं । पउंजियव्वाउ ता य इमा ॥ ३३ ॥ जिणमुद्द १ कलस २ परमेठि ३ । अंग ४ अंजलि ५
तहासणा ६ चक्का ७ ॥ सुरही ८ पवयण ९ गरुडा १० । सोहग्ग ११ पयंजली चेव ॥ ३४ ॥ जि-
णमुद्दाए चउकलस—ठवणं तह करेह थिरकरणं ॥ अहिवासमंतनसणं । आसणमुद्दाए अन्नेउ

॥ ३५ ॥ कलसाए कलसएहवणं । परमेठीए उ आहवणमंतं ॥ अंगाए समालजणं । अंजलिणा पुप्फरुहणाइ ॥ ३६ ॥ आसणयाए पट्टस्स । पूयणं अंगफुसणचक्काए ॥ सुरहिए अमयमुत्ती । पवयणमुद्दाए पमिबोहो ॥ ३७ ॥ गरुडाए दुठरक्का । सोहग्गाए य मंतसोहग्गं ॥ तह अंजलिए देसण—मुद्दाइं कुणह कुज्जाइं ॥ ३८ ॥ चोएइ एब कोइ । जह किर सामाईयंमि किं गुरुणो ॥ जुत्तो ठियस्स एसो । सावज्जो विहिसमारंजो ॥ ३९ ॥ कायवहचरणजंसा । तंमि जउ तस्स नियमउ हुंति ॥ जायई य अविस्सासो । गुरूवएसेसु सीसाणं ॥ ४० ॥ जन्नइ एब समाही । कहवि जइ होइ कोइ कायवहो ॥ तहवि हु गुरुजयणाउ । आयरणाउ य नो दुठो ॥ ४१ ॥ विहिवयणं च पमाणं । सुत्तुत्तं जेण ठवणा गुरुणा ॥ कज्जा जिणबिंबाणं । तं सविसयं हवइ करणे ॥ ४२ ॥ अन्नह निविसयत्तं । पावेइ तयं तु तेण सो जुत्तो ॥ तइया तह गुरुठवणे । बिंबस्स उ गउरवाइगुणा ॥ ४३ ॥ अन्नं च सुत्तविहिणा । संजवजयणाए बिंबठवणाए ॥ नो कायवहाइया । दोसा जिणजवणकहणेव ॥ ४४ ॥ जिणजवणबिंबपूया—इयं च न विणा गुरुं गिही मुणई ॥ न य तब न कायवहो । गुरुणो दोसो य न य वुत्तो ॥ ४५ ॥ अलमेब पसंगेणं । ठ·

विए एवं जिणस्स बिंबंमि ॥ अट्ठोत्तरकलससएण । मज्जिए पुण जहा विहवं ॥ ४६ ॥ पूयाइए-सु जत्तो । परमोपइदियहमेव कायव्वो ॥ एवं जयंताण लहुं । जायइ चारित्तपरिणामो ॥ ४७ ॥

अथ पूजाविधिमुपदर्शयन् श्लोकमेकमाचष्टे—

॥ मूलम् ॥—विधिना शुचिभूतेन । काले सत्कुसुमादिभिः ॥ स्तुतिस्तोत्रैश्च गंभीरैः । कर्तव्यं जिनपूजनं ॥ १ ॥ व्याख्या—विधिना विधानेनाशातनापरिहारेण मुखस्थगनलक्षणेन शुचिभूतेन द्रव्यभावशौचवतेत्यर्थः. काले संध्यात्रयलक्षणे सत्कुसुमादिभिः शोभनपुष्पादिभिः स्तुतिस्तोत्रैश्च लघुबृहद्भिः स्तवनैश्च गंभीरैर्गंभीरार्थैः कर्तव्यं विधेयं जिनपूजनं जिनार्चनमिति श्लोकसमासार्थः. ॥ १ ॥ तत्र विधिरागमविद्भिरेवमुक्तस्तद्यथा—वत्थेण बंधिऊणं । नासं अहवा जहा समाहीए ॥ वज्जेयव्वं तु तया । देहंमिवि कंडुयणमाई ॥ १ ॥ भिच्चावि सामिणो तिह । जत्तेण कुणंति जे भसणिभंगं ॥ हुंति फलभायणं ते । इयरेसिं किलेसमेत्तं तु ॥ २ ॥ भुवणगुरूण जिणाणं । विसेसओ एवमेव दट्ठव्वं ॥ ता एवं चिय पूया । एयाण बुहेहिं कायव्वा ॥ ३ ॥ इत्यादि. शुचिभूतत्वं पुनरेवमुक्तं—तत्थ सुइणा दुहावि हु । दव्वे न्हाएण सुद्धवत्थेण ॥ भावे उ अवत्थो

चिय । विसुद्धचित्तपहाणेण ॥ १ ॥ इत्यादि, कालस्त्वेवमभिहितस्तद्यथा—कालंमि कीरमाणं । किसिकम्मं बहुफलं जहा लोए ॥ इय सव्वा चिय किरिया । नियनियकालंमि विन्नेया ॥ १ ॥ सो पुण इह विन्नेओ । संझाओ तिन्नि ताव ओहेण ॥ वित्तिकिरियाविरुद्धो । अहवा जो जस्स जावइओ ॥ २ ॥ इत्यादि. सत्कुसुमादीनि पुनरेवं कथितानि, तद्यथा—वरगंधधूयसव्वो—सहेहिं उदगाइएहिं दव्वेहिं ॥ सुरहिविलेवणवरकुसुम—दामावलिदीवएहिं च ॥ १ ॥ सिद्धत्थयदहिअक्खय—गोरोयणमाइएहिं जहलाभं ॥ कंचणमोत्तियरयणाइ—दामएहिं च विविहेहिं ॥ २ ॥ पवरेहिं साहणेहिं । पायं भावोवि जायई पवरो ॥ न य अन्नो उवओगो । एएसिं सयाण लठ्ठयरो ॥ ३ ॥ इह लोयपरलोइया । कज्जाणं पारलोइयं अहियं ॥ तंपि य भावपहाणं । सोवि य इय कज्जगम्मोत्ति ॥ ४ ॥ ता नियविहवणुरूवं । विसिठ्ठपुप्फाइएहिं जिणपूया ॥ कायव्वा बुद्धिमया । तम्मि बहुमाणसारा य ॥ ५ ॥ इत्यादि. गंभीरार्थस्तुतिस्तोत्राणि पुनरेवं—थुइथोत्ता पुण नेया । गंभीरपयत्थविरइया जे उ ॥ सब्भूयगुणुक्कित्तण—रूवा खलु ते जिणाणं तु ॥ १ ॥ तेसिं अब्बाहिगमे । नियमेणं होइ कुसलपरिणामो ॥ सुंदरभावा तेसिं । इयरंमिवि रयणनाएण ॥ २ ॥ जरसमणा-

ईरयणा । अन्ना य गुणावि ते समेंति जहा ॥ कम्मजराईथुइमा—इयावि तह नावरयणाउं ॥
॥ ३ ॥ इति श्लोकनावार्थः ॥ १ ॥ अथ सा पूजा कतिविधेति दर्शयन्नाह—

॥ मूलम् ॥—चारुपुष्पामिषस्तोत्रै—स्त्रिविधा जिनपूजना ॥ पुष्पगंधादिनिश्चान्यै—रष्टधेयं
निगद्यते ॥ १ ॥ व्याख्या—चारुपुष्पामिषस्तोत्रैरिति, चारूणि प्रधानानि पुष्पाणि कुसुमानि, आ-
मिषानि नैवेद्यानि, स्तोत्राणि स्तवनानि, तैश्चारुपुष्पामिषस्तोत्रैस्त्रिविधा त्रिप्रकारा जिनपूजा जि-
नार्चना पुष्पगंधादिनिः कुसुमवासादिनिः, आदिशब्दाद्धूपदीपाक्षतादिग्रहः, चः समुच्चये, अन्यैरप-
रैराचार्यैरष्टधाष्टप्रकारेयमेषा निगद्यते कथ्यते इति श्लोकार्थः ॥ १ ॥ अथाष्टविधत्वमेवास्याः सदृ-
ष्टांतं श्लोकदशकेनाह—

॥ मूलम् ॥—शुनैः सुगंधिनिः पुष्पै—र्यः कुरुते जिनार्चनं ॥ स प्राप्नोति समं कीर्त्या । र-
त्नचंद्र इव श्रियः ॥ १ ॥ पुटपाकादिनिर्गंधै—र्येऽर्चयंति जिनेश्वरं ॥ लनंते तेऽचिरात्सिद्धिं । र-
त्नसुंदरवज्जनाः ॥ २ ॥ धूपं दहति यः सारं । नावसारं जिनाग्रतः ॥ स याति लब्धसर्वर्द्धि—र्न-
रकेसरिवच्छिवं ॥ ३ ॥ प्रदीपयति यो नक्त्या । प्रदीपं जिनमंदिरे ॥ स हि स्यादखिलश्रीणां । ना-

नुप्रत्न इव प्रभुः ॥ ४ ॥ योऽक्षतैरक्षतैः शुभ्रै—रर्हतां कुरुते बलिं ॥ कणसार इवात्यंतं । वर्धतेऽसौ कणश्रिया ॥ ५ ॥ जिनानामग्रतो दद्यात् । सुंदराणि फलानि यः ॥ फलवत्यः क्रियास्तस्य । भवं·ति फलसारवत् ॥ ६ ॥ सुगंधसर्पिषा यस्तु । करोति जिनमज्जनं ॥ सघृतभृतपात्राणि । स्थापयेद्वा तदग्रतः ॥ ७ ॥ स गोधन इवोदग्रां । भुक्त्वा भोगपरंपरां ॥ क्षीणनिःशेषकर्मांशः । प्रयाति परमां गतिं ॥ ८ ॥ यः स्नापयति बिंबानि । सुगंधवरवारिणा ॥ सदंभःपूर्णकुंभान् वा । ढौकयेद्यस्तदग्रतः ॥ ९ ॥ स प्राप्य सुंदरा लक्ष्मी । रससार इवेप्सिताः ॥ संपूर्णधर्मसंपत्त्या । ततो याति शिवालयं ॥ १० ॥ व्याख्या—शुभैः प्रशस्तैः सुगंधिभिः सुरभिभिः पुष्पैः कुसुमैर्यः कश्चिदनिर्दिष्टनामा कुरु·ते विधत्ते जिनार्चनं जिनपूजनं सोऽसौ प्राप्नोति लभते समं सह कीर्त्या ख्यात्या रत्नचंद्र इव र·त्नचंद्राभिधानराजपुत्रवत श्रियः, इति प्रथमश्लोकार्थः ॥ १ ॥ पुटपाकादिभिरनेकप्रकारप्रधानसुगं·धद्रव्याग्निपाकादिभिर्गंधैर्वासैर्ये केचनार्चयंति पूजयंति जिनेश्वरं, लभंते प्राप्नुवंति तेऽचिरात् स्तो·ककालेन सिद्धिं मुक्तिं रत्नसुंदरवत रत्नसुंदराख्यराजसूनुरिव जना लोका इति. द्वितीयश्लोकार्थः ॥ ॥ २ ॥ धूपं प्रतीतं दहत्युद्ग्राहयति यः कश्चित्सारं सारद्रव्यनिष्पन्नं प्रधानमित्यर्थः, भावसारमंत·क·

रणप्रधानं जिनाग्रतो जिनपुरतः सोऽसौ याति गच्छति लब्धसर्वर्द्धिः प्राप्ताशेषसमृद्धिर्नरकेसरिवत न रकेसरिनामनृपनंदन इव शिवं मोक्षमिति तृतीयश्लोकार्थः ॥ ३ ॥ प्रदीपयति प्रज्वालयति यः क· श्चिद्भक्त्या भावेन दीपं प्रदीपं जिनमंदिरे जिनगृहे सोऽसौ हि पूरणे स्याद्भवेदखिलश्रीणां समस्त· लक्ष्मीनां भानुप्रभ इव भानुप्रभाभिधाननृपात्मज इव प्रभुर्नायको भवेदिति चतुर्थश्लोकार्थः ॥४॥ यः कश्चिदक्षतैस्तंदुलैरक्षतैरखंडैः शुभ्रैर्विशदैरर्हतां जिनानां कुरुते विधत्ते बलिमुपहारं कणसार इव कणसाराख्यश्रेष्ठिपुत्रवदत्यंतमत्यर्थं वर्धते वृद्धिं यात्यसौ स कणश्रिया धान्यलक्ष्म्योपलक्षणत्वाच्छेष· श्रीभिरपीति पंचमश्लोकार्थः ॥ ५ ॥ जिनानामर्हतामग्रतः पुरतो दद्यात्प्रयच्छेत सुंदराणि प्रधानानि फलान्याम्रनालिकेरादीनि यः कश्चित, फलवत्यः सफलाः क्रिया वाणिज्यादिकर्माणि तस्य फलपू· जाकर्तुर्भवंति जायंते फलसारवत् फलसाराभिधानराजपुत्रस्येवेति षष्ठश्लोकार्थः ॥ ६ ॥ सुगंधसर्पि· षा सद्गंधनाशिकापेयघृतेन यः पुनः करोति विधत्ते जिनमज्जनं जिनस्नानं, सद्घृतभृतपात्राणि शो· भनघृतसंपूर्णस्थालानि स्थापयेद्वा न्यसेद्वा तदग्रतो जिनाग्रत इत्यर्थः, सोऽसौ गोवर्धन इव गोवर्ध· नाभिधानकुटुंबिक इवोदग्रामुदारां भुक्त्वा भूयोभोगपरंपरां शब्दादिविषयसुखमालिकां क्षीणनिःशे·

षकर्मांशः प्रक्षीनाखिलज्ञानावरणीयादिकर्मकलंकांशः प्रयाति गच्छति परमां प्रधानां गतिं सिद्धिगतिमित्यर्थः. इति सप्तमाष्टमश्लोकद्वयार्थः ॥ ७ ॥ ८ ॥ यः कश्चित्स्नापयत्यभिसिंचति बिंबानि प्रतिमाः सुगंधवरवारिणा सुरभिप्रवरनीरेण, सदंभःप्रवरकुंभान् वा प्रवरतरविमलजलभृतकलशान् वा ढोकयेत्स्थापयेत्तदग्रतो जिनबिंबाग्रतः सोऽसौ प्राप्य समासाद्य सुंदराः प्रधाना लक्ष्मीः श्रियो रससार इव रससाराभिधानराजनंदन इवेप्सिताः, संपूर्णधर्मसंपत्त्या परिपूर्णयतिधर्मप्राप्त्येत्यर्थः, ततस्तदनंतरं याति गच्छति शिवालयं निर्वाणनगरमिति नवमदशमश्लोकद्वयार्थः. ॥ ९ ॥ १० ॥ अथ प्रकरणकारसूचितपुष्पाद्यष्टविधपूजाफलप्रतिपादकरत्नचंद्रादिकथानकानि कथ्यंते, तानि पुनरमूनि, तद्यथा—

अस्ति समस्तसुश्रेष्ठ—वस्तुस्तोमविराजितं ॥ जितशत्रुपुरश्रीकं । चारु प्रासादसंपदा ॥ १ ॥
संपदाकुलशालीन—भूरिलोकसमाकुलं ॥ कुलक्रमागतानेक—सद्व्यवहारसुंदरं ॥ २ ॥ मध्यखंडे
क्षितौ ख्यातं । भूभालतिलकोपमं ॥ बंगाजनपदस्यांत—धनधान्यसमाकुलं ॥ ३ ॥ समस्तशस्तसं-
सार—सारभूतं महीतले ॥ अत्रैव भारते क्षेत्रे । पुरं विजयवर्धनं ॥ ४ ॥ चतुर्भिः कलापकं ॥ त-
त्रास्त्यनेकसंग्राम—शिरोनिर्व्यूढसाहसः ॥ साहसांकसमो राजा । नाम्ना च रत्नशेखरः ॥ ५ ॥ र-

त्नावली च तस्याग्र—महिषी विश्वविश्रुता ॥ संसारसुखसर्वस्वं । हरस्य ललिता यथा ॥ ६ ॥ त-
या सार्धं महीशस्य । कुर्वतः कामसेवनं ॥ संजातस्तनयः सारो । जववृक्षफलोपमः ॥ ७ ॥ समये
प्रतिष्ठितं नाम । रत्नचंद्र इति स्फुटं ॥ ततोऽसौ वर्धते विश्व—माह्लादयन् यथा शशी ॥ ८ ॥ का-
ले समर्पितो राज्ञा । कलाग्रहणहेतवे ॥ कलाचार्यस्य तेनापि । पाठितः सकलाः कलाः ॥ ९ ॥
ततो यौवनमारूढः । परिणीतनृपांगजः ॥ युवराजपदे पित्रा । प्रमोदेन प्रतिष्ठितः ॥ १० ॥ एकदा
चाश्ववाहिन्यां । निर्गतो हयहेषया ॥ पूरयन्नंबरं सर्वं । महाटव्यां विवेश सः ॥ ११ ॥ ततोऽप्यपहृ-
तोऽश्वेन । सुवेलगिरिगह्वरे ॥ नीत्वा मुक्त्वा ततो वाजी । जगामादर्शनं क्षणात् ॥ १२ ॥ कुमारो-
ऽपि पिपासार्त्तः । श्रांतो विस्मितमानसः ॥ पपौ निर्झरनिर्व्यूढं । शीतलं निर्मलं पयः ॥ १३ ॥ कं-
दमूलकृताहार । इतश्चेतश्च पर्यटन् ॥ ददर्शैकत्र शुभ्रोच्चं । सुंदरं जिनमंदिरं ॥ १४ ॥ प्रविष्टस्तत्र
सानंदो । रोमांचांचितविग्रहः ॥ सर्वतोऽपि क्षिपंश्चक्षुः । कौतुकाक्षिप्तमानसः ॥ १५ ॥ शांतं कांतं
शिवं सौम्यं । सुरूपं सुमनोहरं ॥ बिंबं युगादिदेवस्य । दृष्ट्वात्यर्थं मुमोद सः ॥ १६ ॥

ततश्च चिंतयामास । विस्मितो हर्षनिर्भरः ॥ यथा कोऽप्येष निःशेष—विश्ववंद्यो जगत्प्रभुः ॥

॥ १७ ॥ जगत्पूज्यो जगज्ज्येष्ठो । देवदेवो जगद्धितः ॥ तदहं पूजयाम्येनं । सत्पुष्पैर्भक्तियोगतः ॥ १८ ॥ विचिंत्यैवं सुगंधानि । गृहीत्वा कुसुमानि सः ॥ भक्त्या युगादितीर्थेशं । सप्रमोदमपूपुजत ॥ १९ ॥ ततः प्रणम्य निःक्रांतो । राजपुत्रो जिनालयात् ॥ बहिर्मंडपमागत्य । वेदिकायां निषण्णवान् ॥ २० ॥ सानंदो जिनबिंबास्य—न्यस्तदृष्टिरचिंतयत् ॥ धन्योऽहं पुण्यवानद्य । कृतार्थः कृतलक्षणः ॥ २१ ॥ येन देवाधिदेवोऽयं । मया दृष्टो महाप्रभुः ॥ पूज्योऽयं सर्वदेवानां । ध्येयोऽयं सर्वयोगिनां ॥ २२ ॥ वंद्योऽयं सर्वसाधूनां । त्राताऽयं सर्वदेहिनां ॥ हितोऽयं सर्वजीवानां । दाताऽयं सर्वसंपदां ॥ २३ ॥ इत्याद्यनेकधा हृष्टो । यावदास्ते स चिंतयन् ॥ तावदेकः समायातो । वृद्धस्तत्र नरेश्वरः ॥ २४ ॥ ततो वापीजलेनाशु । शुचिर्भूत्वा सितांशुकः ॥ गृहीत्वा शतपत्रादि । सुगंधकुसुमोत्करं ॥ २५ ॥ प्रविश्य जिनवेश्मांतः । पूजयित्वा जिनेश्वरं ॥ विधाय विधिवद्भक्त्या । विशुद्धं चैत्यवंदनं ॥ २६ ॥ दधानः सर्वतो देहे । प्रकटं पुलकोत्करं ॥ ततोऽसौ स्तोतुमारब्धः । संवेगातिशयं वहन् ॥ २७ ॥ तद्यथा—

जय त्वं जगदानंद । जय त्वं जगदीश्वर ॥ जय त्वं त्रिजगद्बंधो । जय त्वं त्रिजगत्प्रभो ॥

॥ २८ ॥ जय त्वं त्रिजगन्नेत्र । जय त्वं जगदर्चित ॥ जय त्वं त्रिजगन्नाथ । जय त्वं नाभिनंदन
॥ २९ ॥ नमस्ते केवलालोक—लोकालोकविलोकिने ॥ नमस्ते भुवनादित्य । भव्यांभोजविका-
सिने ॥ ३० ॥ नमस्ते सर्वतः सर्प—न्मोहध्वांतविनाशिने ॥ नमस्ते विश्वविख्यात—सर्वनीतिप्र-
काशिने ॥ ३१ ॥ नमस्ते सर्वकल्याण—कारिणे क्लेशवारिणे ॥ नमस्ते भक्तिमल्लोक—भवसंता-
पहारिणे ॥ ३२ ॥ रागो द्वेषश्च मोहश्च । त्रयोऽपि प्रहतास्त्वया ॥ अहं त्वेभिः सदाकालं । प्रहन्ये
संततं प्रभो ॥ ३३ ॥ हन्यमानश्च देवेश । त्वां शरण्यमुपाश्रितः ॥ ततस्तेभ्यो भयोद्भ्रांतं । रक्ष
रक्ष मुनीश मां ॥ ३४ ॥ चत्वारोऽपि त्वयात्यर्थं । कषायारातयो हताः ॥ अहं पुनरिमैः पापैः । प्र-
भो पीड्ये निरंतरं ॥ ३५ ॥ तदिदं मामिमानुच्चै—र्बाध्यमानान्महाप्रभो ॥ अचिंत्यशक्तिसंयुक्त ।
नाथ वारय वारय ॥ ३६ ॥ कर्माष्टकं त्वयात्यंतं । प्रलयं प्रापि लीलया ॥ नाथेऽपि त्वयि बद्धोऽह
—मष्टभिरपि कर्मभिः ॥ ३७ ॥ तदिदं बद्धमालोक्य । बद्धानां प्रविमोचक ॥ निःकर्मन् सर्वकर्म-
भ्यो । मां विमोचय मोचय ॥ ३८ ॥ लीलयापि त्वया तीर्णो । विस्तीर्णोऽपि महार्णवः ॥ अहं तु
तत्र मज्जामि । कर्मसंभारभारितः ॥ ३९ ॥ प्रसीद सांप्रतं स्वामिन् । मज्जंतं मां भवार्णवे ॥ स-

द्धर्मपोतमारोप्य । देव तारय तारय ॥ ४० ॥ ध्वस्तमिथ्यात्वनिद्रस्त्वं । त्वं निद्रासुप्रबोधक ॥ मि·
थ्यात्वनिद्रया सुप्तं । मां प्रबोधय बोधय ॥ ४१ ॥ किं बहुनांतरैः सर्वैः । शत्रुभिः सततं सदा ॥ ह·
न्यमानं जगत्त्रात—र्मामपालय पालय ॥ ४२ ॥ अनंतपरमानंद—युक्त मुक्तिसुखालय ॥ सुप्र·
सन्नं मनः कृत्वा । मां प्रापय शिवालये ॥ ४३ ॥ त्वं स्वामी त्वं च मे बंधु—स्त्वं मित्रं त्वं च मे
गुरुः ॥ त्राणं त्वमेव देवेश । भूयाज्जन्मनि जन्मनि ॥ ४४ ॥ आभवं भवसंभ्रांत—जंतुसंतानर·
क्षक ॥ भूयान्मे भूयसी भक्ति—स्त्वय्येव परमेश्वर ॥ ४५ ॥ तथा प्रसीद मे नाथ । शरणागतव·
त्सल ॥ यथाज्ञां तावकीं पूर्णा—मासंसारं करोम्यहं ॥ ४६ ॥ एवं स्तुत्वा जिनाधीशं । संवेगभर·
निर्भरः ॥ जिनालयाद्विनिःक्रम्य । निषण्णः सोऽपि मंडपे ॥ ४७ ॥ ततो गत्वा कुमारोऽपि । तं न·
नाम नतांगकः ॥ उपविश्य तदासन्ने । पप्रच्छेदं कृतांजलिः ॥४८॥ केनेदं कारितं तुंगं । सुंदरं जि·
नमंदिरं ॥ को वा देवाधिदेवोऽयं । कुतो वा त्वं समागतः ॥ ४९ ॥ गंतव्यं वा त्वया कुत्र । कुत्र
वावस्थितिस्तव ॥ स प्राह श्रूयतां वत्स । सावधानेन कथ्यते ॥ ५० ॥
वैताढ्यपर्वते रम्ये । पुरे गगनवल्लभे ॥ सूरप्रभाभिधस्तत्रा—भवन्मम पितामहः ॥ ५१ ॥ ते·

नेदं कारितं वत्स । जिनवेश्म मनोहरं ॥ युगादिदेवदेवोऽय—मृषभो जिनपुंगवः ॥ ५२ ॥ ऋा-
गह्याभि त्वहं तस्मा—त्पुराद्गगनवल्लभात् ॥ गंतव्यं तु न कुत्रापि । मया मर्तव्यमत्र हि ॥ ५३ ॥
यतः कल्ये समायातो । विद्याचारणसन्मुनिः ॥ केवलज्ञानविज्ञात—विश्वव्यापारविस्तरः ॥ ५४ ॥
स वंदित्वा मया पृष्टः । प्रमाणं निजकायुषः ॥ तेनोक्तं दिवसा भद्र । पंचैव तव जीवितं ॥ ५५ ॥
तत्त्यक्त्वा सर्वमारंभ—मुद्यच्छ स्वहितंप्रति ॥ कुरु पारत्रिकं कार्यं । धर्मे चित्तं निवेशय ॥ ५६ ॥
आकर्ण्येदं ततस्तूर्ण—महमत्र समागतः ॥ विधिनानशनं कृत्वा । मरिष्यामि गिराविह ॥ ५७ ॥
तत्त्वापि जिनो देवः । पूजनीयोऽस्तु सर्वदा ॥ धर्मस्तेन प्रणीतोऽस्तु । गुरवस्तु सुसाधवः ॥ ५८ ॥
तथा भो न त्वया जीवा । मारणीया निरागसः ॥ नैवालीकं वचो वाच्यं । नो कार्यान्यधनस्पृहा
॥ ५९ ॥ परदारा न भोक्तव्याः । कार्यो नातिपरिग्रहः ॥ मद्यं मांसं च द्यूतं च । दूरतः परिवर्ज-
येः ॥ ६० ॥ पापर्द्धिं मा कृथा वत्स । मा कृथा रात्रिभोजनं ॥ माश्नीयाः फलमज्ञातं । वेश्यासक्तिं
च मा कृथाः ॥ ६१ ॥ त्याज्यो दुर्जनसंसर्गः । कार्या सज्जनसंगतिः ॥ तदेष श्रावको धर्मः । सि-
द्धिसौख्यकरोऽस्तु ते ॥ ६२ ॥ तथैनं भो महासत्व । गृहाण विधिपूर्वकं ॥ मंत्रं पंचनमस्कार—

नामकं ज्ञवनाशकं ॥ ६३ ॥ यत्प्रज्ञावेण निःशेषं । वांछितं जायतंगिनां ॥ नश्यंति व्यापदः सर्वाः । संति सानुग्रहा ग्रहाः ॥ ६४ ॥ यतः—

धन्नाण मणोज्ञवणे । सद्भावहुमाणवट्टिनेहिल्लो ॥ मिछत्ततिमिरहरणो । वियरइ नवकारवर दीवो ॥ ६५ ॥ जाण मणवणनिकुंजे । रमइ नमोक्कारकेसरिकिसोरो ॥ ताणं अणिठदोघुट्ट—थट्टघमणा न नियमावि ॥ ६६ ॥ ता निबिमनिगडघडणा । गुत्ती ता वज्जपंजरनिरोहो ॥ न य जाव खड्डु जविज्ज । एस नमोक्कारवरमंतो ॥ ६७ ॥ दप्पिठदुठनिठुर—सुरुठदिठ्ठीवि ताव होइ परो ॥ नवकारमंतचिंतण—पुव्वं नालाविज्ज जाव ॥ ६८ ॥ मरणरणंगणसंगाम—गामग्गामनगरमाईणं ॥ एयं सुमरंताणं । ताणं संमाणणं च ज्ञवे ॥ ६९ ॥ तथा—जल्लमाणमणिप्पहपुंस—फारवरप्फणिवईफणाहिंतो ॥ पसरंतकिरणज्ञरभग्ग—ज्ञीमतिमिरंमि पायाल्ले ॥ ७० ॥ चित्ताणंतरघडमाण—माणसाणंदिइंदियब्बाणं ॥ विलसंति दाणवा किर । तं सुनमोक्कारफुरियलवो ॥ ७१ ॥ जुयलं ॥ जंपि य विसिठपयई—विज्जाविन्नाणविणयनयनिजणं ॥ अक्कलियपसरपसरंत—कंतजसज्ञरियज्ञुवणयलं ॥ ७२ ॥ अच्चंतणुरत्तकलत्त—पुत्तपामोक्खसयलसुहिसयणं ॥ आणापडिब्बणुब्बा—

हिद्दवगिहिकम्मकारिजणं ॥ ७३ ॥ अब्भिन्नलद्धिविद्दड्डु—सामिभोइत्तवियरणपहाणं ॥ रयामच्चाइ-
विसिद्ध—लोयपयई बहुमयं च ॥ ७४ ॥ जह चिंतियसंपज्जंत—सुंदरं दिन्नदुक्खहत्थमक्कं ॥ पावि-
ज्जइ मणुयत्तं । तंपि नमोक्कारफललेसो ॥ ७५ ॥ चउहिं कलावयं ॥ जंपि य सव्वंगपहाण—ल-
ड्डहचउसट्ठिसहसवणियाणं ॥ बत्तीससहस्समहि—प्पज्जावज्जासंतसामंतं ॥ ७६ ॥ सुरपुरसरिच्छछन्नव
इ—गामकोडीकडप्पदुप्पसरं ॥ सुरलोयसरिसपुरवर—बिसत्तरीलक्खसंखालं ॥ ७७ ॥ बहुसंखखेड-
कब्बड—मडंबदोणमुहबहुवसिमं ॥ दीसंतकंतसुंदर—संदणसंदोहदिन्नदिहं ॥ ७८ ॥ परचक्ककंपणा-
णप—दप्पपाइक्कचक्कसंकिन्नं ॥ पगलंतगंडमंडल—पयंडदोघुट्टथट्टिल्लं ॥ ७९ ॥ मणपवणजवण-
चंचल—खुरक्खयखोणितलतुरंगालं ॥ सोलसहस्सपरिसंख—रक्खकजक्खपरिक्खित्तं ॥ ८० ॥ नवनि-
हिचोद्दसरयण—प्पहावपाउब्भवंतसयललच्छं ॥ छक्खंडभरहखेत्ता—हिवत्तणं लब्भए भुवणे ॥८१॥
तंपि हु किर सद्धा-सलिलसेयपरिवट्टियस्स तस्सेव ॥ पंचनमोक्कारतरुस्स । कोवि फलविलसिय-
वियारो ॥ ८२ ॥ छहिं कुलयं ॥

जंपि य सियदेवंसुय-संतुयसुरसयणसुंदरुछंगे ॥ सिप्पिपुडंतो मोत्ता-हलंव उववज्जए तत्तो

॥ ८३ ॥ आजम्मं रम्मतणू । आजम्ममुदग्गजोव्वणावत्थो ॥ आजम्मं रोगजरा—रयसेयविवज्जिय-सरीरो ॥ ८४ ॥ आजम्मं एहारुवसट्ठि—मंसरुहिराइणाणुमलविमुक्को ॥ आजम्मं अमिलायंत—मल्लवरदेवदूसवरो ॥ ८५ ॥ उत्तत्तजच्चकंचण—तरुणदिवायरसमप्पहसरीसे ॥ पंचप्पहरयणाहरण—किरणकब्बुरियदिसियक्को ॥ ८६ ॥ अखंमगंमंमंमल—लुलंतकुंमलपयापयासिल्लो ॥ रमणीयरमण-अमरण—रमणीगणमणहरो किंच ॥ ८७ ॥ गहचक्कमेक्कवेलं । पाडेउं जूयलं भमाडेउं ॥ सय-लकुलाचलचक्कं । चालेउं तह य लीलाए ॥ ८८ ॥ माणसपमुहमहासर—सरियादहसायराणस-लिलाइं ॥ पलयपवणोव्व समकाल-मेव सत्तो विसोसेउं ॥ ८९ ॥ तेलोक्कपूरणत्थं । एक्कखणच्चिय महल्लतरुरूवो ॥ परमाणुमेत्तरूवोवि । तह य होउं लहु समत्थो ॥ ९० ॥ किं बहुणा संतंपि हु । असंतयं तह असंतमवि संतं ॥ चक्कं एक्कखणच्चि य । दरिसेउमलं करेउं वा ॥ ९१ ॥ नमिर-सुरविसरसिरमणि—महुअरमालाविच्छुरियपाउ ॥ जूअंगाइठपहिठ—सव्वमुठिंतपरिवारो ॥ ९२ ॥ चिं-ताणंतरसहसत्ति—संपमंताणुकूलविसयगणो ॥ अणवरयरुइरसुकम्म—विलासकरणेक्कदुल्ललिउ ॥ ॥ ९३ ॥ अणिमिसनयणसहस्सा—वलोयसमकाललद्धदव्वो ॥ समकालोदयसमुचिय—सयलसुह-

कम्मपयईस ॥ ७४ ॥ रिद्धिपबंधबंधुर–विमाणमालाहिवत्तणं सुइरं ॥ पावइ अखलियपसरं । सुरलोए किर सुरिंदोवि ॥ ७५ ॥ तंपि असेसं जाणसु । सम्मं सप्भावगगब्भविहियस्स ॥ पंचनमोकारारा–हणस्स लीलाइयलवोत्ति ॥ ७६ ॥ इत्यादि. स चायं पंचनमस्कारनामा महामंत्रः ' ॐ नमो अरिहंताणं ' इत्यादि.

ध्यातव्योऽयं त्वया भद्र । सन्मंत्रः शुचिना सदा ॥ येनेप्सितार्थसंसिद्धि—र्जायते ते निरंतरं ॥ ७७ ॥ मह्यमपि त्वया भद्र । म्रियमाणाय सादरं ॥ देयोऽयं निकटस्थेन । कर्णाभ्यर्णे स्फुटाक्षरं ॥ ७८ ॥ तथा भो मम विद्येते । द्वे विद्ये पाठसिद्धिके ॥ एकाकाशगमा नाम्ना । द्वितीया बहुरूपिणी ॥ ७९ ॥ तदेते द्वे वरे विद्ये । गृहाण मम तुष्टये ॥ स्थातव्यं च ममाभ्यर्णे । दिनानां पंचकं त्वया ॥ १०० ॥ ततस्तथेति तद्वाक्यं । कुमारः प्रतिपन्नवान् ॥ अथ भूयोऽप्युवाचेदं । सूरतेजाः कुमारकं ॥ १ ॥ स्वस्थाने संति मे भूरि–बांधवाः स्नेहनिर्भराः ॥ समायातोऽत्र तेनाह–मेकाक्येव मुमूर्षया ॥ २ ॥ अनाख्यायैव बंधूनां । समाध्यर्थं वराचले ॥ तदहो कुरु साहाय्य–मसहायस्य सांप्रतं ॥ ३ ॥ नमस्कारप्रदानेन । ममोत्पादय निर्वृतिं ॥ कुमारेणापि तद्वाक्यं । तथैव च प्र·

तिश्रुतं ॥ ४ ॥ ततो द्वावपि संविग्नौ । ततः स्थानात्समुत्थितौ ॥ गृहीत्वा चारुपुष्पाणि । पूजयित्वा जिनेश्वरं ॥ ५ ॥ विधाय विधिना सम्य—क्संपूर्णं चैत्यवंदनं ॥ कृत्वा च सुप्रणिधानं । निष्क्रांतौ जिनमंदिरात् ॥ ६ ॥ युग्मं ॥ गतौ दक्षिणदिग्भागे । तस्यैव जिनवेश्मनः ॥ स प्रमृज्य ततस्तत्र । सुविशालं शिलातलं ॥ ७ ॥ सूरतेजास्ततस्तस्मि—न्नुपविश्य सुधीरधीः ॥ विविधानशनं कृत्वा । वक्तुमेवं प्रचक्रमे ॥ ८ ॥ 'नमोत्थुणं अरिहंताणं भगवंताणं' इत्यादि. ते लोकपूयणिज्जे । जगप्पईवे जिणे जियारिगणे ॥ वंदामि जे अईए । अणाइकालेण सिद्धिगए ॥ ९ ॥ वंदामि संपयं जे । विहरंति महाविदेहवासम्मि ॥ वंदामि जे भविस्संति । एसु पन्नरसु खेत्तेसु ॥ १० ॥ वंदामि णिट्ठियट्ठे । अणाइकालेण जे गया मोक्खं ॥ तित्थयरसिद्धभेया—इएहिं भेएहिं सव्वेवि ॥ ११ ॥ वंदामि गणहरिंदे । देविंदनमंसिए महासत्ते ॥ तीयाणागयभेए । संपयकालेवि जे ते उ ॥ १२ ॥ वंदामि बारसंगी—समग्गसुयधारए महासत्ते ॥ तीयाणागयसपइ—भेयगए सव्वभावेण ॥ १३ ॥ वंदामि वंदणिज्जे । सदेवमणुयासुरस्स लोगस्स ॥ दसपुव्विणो अईए । अणागए वट्टमाणे अ ॥ १४ ॥ जे केइ जगप्पहाणे । आयरिए आयरियमहासत्ते ॥ चरणकरणप्पहाणे । आ-

णुओगधरे जहासत्तिं ॥ १५ ॥ तीयाणागयसंपइ—भेएणं जे जयंमि आयरिया ॥ ते सव्वेवि मह-
प्पा । वंदे परमाए भत्तिए ॥ १६ ॥ वंदामि वंदणिज्जे । अवज्जसंजमगुणुज्जुए धीरे ॥ सुयसाग-
रमगिलाए । अन्नाविंते भवन्नाए ॥ १७ ॥ भरहेवयविदेहे । नाणाइ समन्निया महासत्ता ॥ देहेव-
प्पम्मिबद्धा । अखंडियवयकलाविल्ला ॥ १८ ॥ अठारससीलंगाण—धारया सयलगुणगणाइन्ना ॥
जे केइ तीयणागय—संपइकालाणुगा मुणिओ ॥ १९ ॥ ते भगवंते तेल्लोक्क—पूयठाणंगए म-
हासत्ते ॥ मणसा वणसा काए—ण वंदिमो परमविणएणं ॥ २० ॥ तहा—

जिणसिद्धकेवलीणं । मणपज्जवनाणिओहिनाणीणं ॥ गणहरपत्तेयाणं । सयंसबुद्धाणनाणी-
णं ॥ २१ ॥ चोद्दसपुव्वीण तहा । दसपुव्वीण य तहन्नसूरीणं ॥ आगमववहारीणं । पुरओ भत्तिए
विणएणं ॥ २२ ॥ नाणंमि दंसणंमि य । चरणंमि तवंमि जेओ अइयारा ॥ तेहं आलोएमी ।
मणसा वयसा य काएण ॥ २३ ॥ काले विणए य तहा । बहुमाणुवहाण तह अ निन्हवणे ॥
जंमे वितहमणुचियं । तं निंदे तं च गरिहामि ॥ २४ ॥ वंजणअत्थे तह तदु—भए य तह सुय-
हराण किइकम्मे ॥ जं किंचि मया एत्थं । वितहायरियं तयं निंदे ॥ २५ ॥ संका कंखा वितिगि-

ह्वा । पसंस तह संथवो कुलिंगीए ॥ संमत्तस्सईयारे । जे उ कए निंदिमो ते उ ॥ २६ ॥ उ-
ववूहा जन्न कया । मुणीण तह दुब्बियाण थिरकरणं ॥ जिणधम्मे वच्छल्लं । बालगिलाणाइ विसयं
तु ॥ २७ ॥ भत्तीए जन्न कया । पभावणा पवयणंमि जइणंमि ॥ तिविहं तिविहेण य । तयं निं-
दामि इमाण पच्चक्खं ॥ २८ ॥ पाणिवहमुसावाए । अदत्तमेहुणपरिग्गहे चेव ॥ विरइए जं वितहं
। कयंति तं निंदिमो इण्हिं ॥ २९ ॥ इंदियकसायजोगे । परुच्च जं वितहसेवियं किंचि ॥ तं ए-
याणं पुरउ । तिविहेणं निंदिमो एस ॥ ३० ॥ बारसभेयंमि तवे । अइयारो बायरो य सुहुमो वा
॥ तं एयाणं पुरउ । तिविहं तिविहेण निंदामि ॥ ३१ ॥ खामेमि सव्वे जीवे । सव्वे जीवा खमंतु
मे ॥ मेत्ति मे सव्वभूएसु । वेरं मज्झं न केणइ ॥ ३२ ॥ पेच्छंतु जिणे सव्वे । सिद्धा यवि लोयपूइ-
या सव्वे ॥ पुरउ भगवंताणं । तुम्हाणमिणं तु सव्वंपि ॥ ३३ ॥ पाणवहं सुहुमेयर—तसथावरगो-
यरं तु तिविहेणं ॥ मणसा वयसा तणुणा । कयकारियअणुमइहिं तु ॥ ३४ ॥ पच्चक्खामि इयाणिं
। जावज्जीवाए सव्वभावेण ॥ तह कोहलोहमायाइ—भेयउ अलियवयणंपि ॥ ३५ ॥ सच्चित्तमी-
सअचित्त—गोयरं गामनयररन्नेसु ॥ परकीयादत्तंपि हु । तिविहं तिविहेण वोसरिमो ॥ ३६ ॥ दे-

वीहिं माणुसीहिं । तिरिक्खजोणीहिं मेहुणं सव्वं ॥ धम्मोवगरणवज्जं । परिग्गहं वोसिरेऽवज्जं ॥ ॥ ३७ ॥ सव्वं असणं पाणं । खाइमं तह साइमं च तिविहेणं ॥ तुम्ह पुरउ इयाणिं । वोसिरिमो जावजीवाए ॥ ३८ ॥

इत्थं विज्ञावयंश्चेतः—संशुद्ध्या शुद्धभावनाः ॥ स्मरन् पंचनमस्कारं । जक्त्या संविग्नमानसः ॥ ॥ ३९ ॥ प्रतिजागर्यमाणश्च । रत्नचंडेण सादरं ॥ सत्वेषु समतां बिभ्र—ज्जीवित्वा दिनपंचकं ॥ ॥ ४० ॥ अंते समाधिना मृत्वा । जातः कल्पे स पंचमे ॥ इंद्रसामानिको देवो । दीर्घायुश्च महर्द्धिकः ॥ ४१ ॥ त्रिभिर्विशेषकं ॥ अथासौ रत्नचंद्रोऽपि । तं निर्याम्य नजश्चरं ॥ उदीचीं दिशमाश्रित्य । चलितः पर्वतात्ततः ॥ ४२ ॥ गछता च कुमारेण । दृष्टमेकत्र सुंदरं ॥ काननं नागवल्ल्यादि—नानामंडपसंकुलं ॥ ४३ ॥ तस्य मध्ये च शुभ्रोच्चः । प्रासादः सुमनोहरः ॥ आरूढः कुमरस्तत्र । सानंदो गतसाध्वसः ॥ ४४ ॥ तत्रापश्यत्सुरूपाढ्यं । सुंदरं कन्यकाद्वयं ॥ पृष्टे च ते कुमारेण । के युवां किमुनामिके ॥ ४५ ॥ एकाकिन्यौ किमित्यत्र । तिष्टतः कथ्यतां मम ॥ तत्रैका वक्तुमारब्धा । कंपमानांगयष्टिका ॥ ४६ ॥ श्रूयतां जो महासत्व । संक्षेपात्तव कथ्यते ॥ वैताढ्ये

दक्षिणश्रेण्यां । पुरे गगनवल्लभे ॥ ४७ ॥ हेमचंद्राभिधानोऽस्ति । विद्याधरमहाप्रभुः ॥ अहं तु पु-
त्रिका तस्य । नाम्ना मदनसुंदरी ॥ ४८ ॥ मत्पित्रा चान्यदा पृष्टः । सिद्धपुत्रो विचक्षणः ॥ यथा-
स्या मम सत्पुत्र्याः । को भर्ता भविता वद ॥ ४९ ॥ ततस्तेन समादिष्टो । रत्नशेखरनंदनः ॥ र-
त्नचंद्र इति ख्यातः । कुमारो भूमिगोचरः ॥ ५० ॥ ततोऽहं पुष्णती तत्र । सत्कलाः सकला अ-
पि ॥ संतिष्ठामि निजे गेहे । सखीचक्रसमन्विता ॥ ५१ ॥

अन्यदा भानुवेगस्य । पुत्रेणाहं विलोकिता ॥ भानुप्रभाभिधानेन । कामांधेन दुरात्मना ॥
॥ ५२ ॥ ततः संहृत्य मामत्र । प्रासादे स विमुक्तवान् ॥ स्वयं पुनर्गतः पापो । विद्यासाधनहेतवे
॥ ५३ ॥ तथेयं या द्वितीयात्र । कन्यका कनकछविः ॥ पुत्री चंपाधिराजस्य । नाम्ना तु रत्नमेख-
ला ॥ ५४ ॥ एषापि तेन पापेन । ततो हृत्वा दुरात्मना ॥ मुक्ता ममांतिके कामं । कामपीमित-
चेतसा ॥ ५५ ॥ तदेष ते मया सर्वः । स्ववृत्तांतो निवेदितः ॥ सांप्रतं श्रोतुमिच्छामि । गोत्रं नाम
च तावकं ॥ ५६ ॥ कथयानुग्रहं कृत्वा । कुरुष्व मम निर्वृतिं ॥ कुमारोऽपि स्ववृत्तांतं । तस्यै सर्वं
न्यवेदयत ॥ ५७ ॥ श्रुत्वेदमाहतुः कन्ये । समानंदितमानसे ॥ अहो नौ कीदृशं पश्य । सत्क-

व्याणमुपस्थितं ॥ ५८ ॥ यस्मादमृतवृष्ट्याभं । संजातं तव दर्शनं ॥ नूनमरण्यवासोऽपि । स्वर्गावाससमोऽजनि ॥ ५९ ॥ तन्नाथालं विलंबेन । शीघ्रं परिणयस्व नौ ॥ यावन्नायाति मूढात्मा । पापोऽसौ खेचरोऽधमः ॥ ६० ॥ कुमारोऽपि हि ते कन्ये । संक्षेपात्परिणीतवान् ॥ ततस्तिष्ठति सानंद—स्तत्र यावत्क्षणांतरं ॥ ६१ ॥ तावद्भानुप्रभो वेगा—दाजगाम तदंतिकं ॥ विलोक्य कुमरं तत्र । कोपाविष्टोऽब्रवीदिदं ॥ ६२ ॥ रे रे शस्त्रं गृहाण त्वं । यद्यस्ति तव पौरुषं ॥ एषोऽहं मारयामि त्वां । रटंतं विस्वरैः स्वरैः ॥ ६३ ॥ एवमाक्रोशयन्नुच्चै—रागतः कुमरांतिकं ॥ मुक्तः खड्गप्रहारश्च । कुमारस्य यथाबलं ॥ ६४ ॥ कुमारेणापि वंचित्वा । खड्गघातं तकं जवात् ॥ प्रहतः खड्गमादाय । स दुष्टः खेचरोऽधमः ॥ ६५ ॥ प्रापितः पंचतामाशु । रंजितं भार्ययोर्मनः ॥ ततो भार्ये गृहीत्वासौ । ततः स्थानाद्विनिर्गतः ॥ ६६ ॥ स्तोकांतरं गतो याव—त्तावदस्तं गतो रविः ॥ गूढद्वारां गृहाकारां । दृष्ट्वासौ वंशजालिकां ॥ ६७ ॥ प्रिये प्रवेशयामास । तत्र सानंदमानसः ॥ स्वयं तु खड्गमादाय । द्वारदेशे व्यवस्थितः ॥ ६८ ॥ गता रात्रिः क्रमेणाथ । यावदालोकते प्रिये ॥ तावत्ते वीक्षते नैव । तस्मिन् वंशकुडंगके ॥ ६९ ॥ ततोऽसौ चिंतयामास । विस्मयाकुलमानसः ॥

क्व गते ते कथं चापि । केन नीते मम प्रिये ॥ ७० ॥

एवं चिंतातुरो यावत् । स तिष्ठति कुमारकः ॥ तावदेकं सुरं कांतं । संपश्यति पुरः स्थितं ॥ ॥ ७१ ॥ देवः प्राह कुमार त्वं । किं जानासि न वेति मां ॥ न वेति कुमरो ब्रूते । सुरः प्राह निशम्यतां ॥ ७२ ॥ सोऽहं विद्याधरो भद्र । यस्तु निर्यामितस्त्वया ॥ मृत्वाहं पंचमे कल्पे । शक्रतुल्यः सुरोऽजनि ॥ ७३ ॥ तदहो मा कृथाः खेदं । त्वदीये यद्गते प्रिये ॥ अचिरादेव ते ताभ्यां । सार्धं संगो भविष्यति ॥ ७४ ॥ चिंतारत्नमिदं सर्वं । चिंतितार्थप्रदायकं ॥ गृहाण कुरु मे तुष्टिं । कुमारोऽपि तथाकरोत ॥ ७५ ॥ सुरः प्रोवाच भूयोऽपि । कुमर त्वं व्रजाधुना ॥ वैताढ्यपर्वते रम्ये । पुरे गगनवल्लभे ॥ ७६ ॥ स्थातव्यं च त्वया तत्र । हेमचंद्रस्य मंदिरे ॥ तिष्ठतस्तत्र ते सर्वं । संपत्स्यंते समीहितं ॥ ७७ ॥ तथा भद्र त्वया यत्नः । कार्यो धर्मे जिनोदिते ॥ धर्म एवांगिनां येन । सर्वकल्याणकारकः ॥ ७८ ॥ यतः—धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्धनं । धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ॥ कांताराच्च महाभयाच्च सततं धर्मः परित्रायते । धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥ ७९ ॥ यन्नागा मदभिन्नगंडकरटास्तिष्ठंति निद्रालसा । द्वारे

हेमविभूषिताश्च तुरगा हेषंति यद्दर्पिताः ॥ वीणावेणुमृदंगशंखपणवैः सुप्तश्च यद्बोध्यते । तत्सर्वं सु·
रलोकसौख्यसदृशं धर्मस्य विस्फुर्जितं ॥ ८० ॥ एवमुक्त्वा गतो देवः । क्षणादेव सुरालये ॥ ततो
गतः कुमारोऽपि । पुरे गगनवल्लभे ॥ ८१ ॥ मा मेऽवज्ञा भवेत्तत्र । नूनं श्वशुरमंदिरे ॥ रूपं म·
दनमंजर्या । विधाय तद्गृहे गतः ॥ ८२ ॥ पिता कंठग्रहं कृत्वा । रुरोद जननी तथा ॥ हा वत्से
क्व गतासि त्वं । केनानीतासि सांप्रतं ॥ ८३ ॥ तयापि कथितं सर्वं । येन नीता च यत्र च ॥
आनीता रत्नचूडेन । रत्नशेखरसूनुना ॥ ८४ ॥ क्वासौ क्वासौ महाभाग—स्तैः ससंभ्रममूचिरे ॥
तव संकल्पितो भर्ता । जामाता पुनरावयोः ॥ ८५ ॥ कन्यका प्राह मां द्वारि । मुक्त्वा तेन ति·
रोदधे ॥ यत्संबंधिगृहे संतो । न विशंति यतस्ततः ॥ ८६ ॥
ततश्च हेमचूडेन । वायुवेगास्तुरंगमाः ॥ वरवेगा महाप्राणा । योधाश्चापि समंततः ॥ ८७ ॥
संप्रेषिताः प्रयत्नेन । कुमारान्वेषणाकृते ॥ गत्वागता न तैर्दृष्टो । रत्नशेखरनंदनः ॥ ८८ ॥ सखेदः
पार्थिवो जातः । साशंका हेमसुंदरी ॥ अहो गृहागतो दूरी—भूतो जामातृकः कथं ॥ ८९ ॥ य·
द्यसावुपरोधेन । नागच्छति गृहे स्वयं ॥ किमर्थं च करे कृत्वा । नानीतः पुत्रिके त्वया ॥ ९० ॥

क्व गते ते कथं चापि । केन नीते मम प्रिये ॥ ७० ॥

एवं चिंतातुरो यावत् । स तिष्ठति कुमारकः ॥ तावदेकं सुरं कांतं । संपश्यति पुरः स्थितं ॥ ॥ ७१ ॥ देवः प्राह कुमार त्वं । किं जानासि न वेति मां ॥ न वेति कुमरो ब्रूते । सुरः प्राह नि· शम्यतां ॥ ७२ ॥ सोऽहं विद्याधरो भद्र । यस्तु निर्यामितस्त्वया ॥ मृत्वाहं पंचमे कल्पे । शक्र· तुल्यः सुरोऽजनि ॥ ७३ ॥ तदहो मा कृथाः खेदं । त्वदीये यद्गते प्रिये ॥ अचिरादेव ते ताभ्यां । सार्धं संगो भविष्यति ॥ ७४ ॥ चिंतारत्नमिदं सर्व । चिंतितार्थप्रदायकं ॥ गृहाण कुरु मे तुष्टिं । कुमारोऽपि तथाकरोत ॥ ७५ ॥ सुरः प्रोवाच भूयोऽपि । कुमर त्वं व्रजाधुना ॥ वैताढ्यपर्वते रम्ये । पुरे गगनवल्लभे ॥ ७६ ॥ स्थातव्यं च त्वया तत्र । हेमचंद्रस्य मंदिरे ॥ तिष्ठतस्तत्र ते सर्व । सं· पत्स्यंते समीहितं ॥ ७७ ॥ तथा भद्र त्वया यत्नः । कार्यो धर्मे जिनोदिते ॥ धर्म एवांगिनां ये· न । सर्वकल्याणकारकः ॥ ७८ ॥ यतः—धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्धनं । धर्मेणैव भवंति निर्मलयशोविद्यार्थसंपत्तयः ॥ कांताराच्च महाभयाच्च सततं धर्मः परित्रायते ॥ धर्मः सम्यगु· पासितो भवति हि स्वर्गापवर्गप्रदः ॥ ७९ ॥ यन्नागा मदभिन्नगंडकरटास्तिष्ठंति निद्रालसा । द्वारे

हेमविभूषिताश्च तुरगा हेषंति यद्दर्पिताः ॥ वीणावेणुमृदंगशंखपणवैः सुस्वश्च यद्घोष्यते । तत्सर्वं सु-
रलोकसौख्यसदृशं धर्मस्य विस्फुर्जितं ॥ ८० ॥ एवमुक्त्वा गतो देवः । क्षणादेव सुरालये ॥ ततो
गतः कुमारोऽपि । पुरे गगनवल्लभे ॥ ८१ ॥ मा मेऽवज्ञा भवेत्तत्र । नूनं श्वशुरमंदिरे ॥ रूपं म-
दनमंजर्या । विधाय तद्गृहे गतः ॥ ८२ ॥ पिता कंठग्रहं कृत्वा । रुरोद जननी तथा ॥ हा वत्से
क्व गतासि त्वं । केनानीतासि सांप्रतं ॥ ८३ ॥ तयापि कथितं सर्वं । येन नीता च यत्र च ॥
आनीता रत्नचंडेण । रत्नशेखरसूनुना ॥ ८४ ॥ क्वासौ क्वासौ महाभाग—स्तैः ससंभ्रममूचिरे ॥
तव संकल्पितो भर्ता । जामाता पुनरावयोः ॥ ८५ ॥ कन्यका प्राह मां द्वारि । मुक्त्वा तेन ति-
रोदधे ॥ यत्संबंधिगृहे संतो । न विशंति यतस्ततः ॥ ८६ ॥
ततश्च हेमचंडेण । वायुवेगास्तुरंगमाः ॥ वरवेगा महाप्राणा । योधाश्चापि समंततः ॥ ८७ ॥
संप्रेषिताः प्रयत्नेन । कुमारान्वेषणाकृते ॥ गत्वागता न तैर्दृष्टो । रत्नशेखरनंदनः ॥ ८८ ॥ सखेदः
पार्थिवो जातः । साशंका हेमसुंदरी ॥ अहो गृहागतो दूरी—भूतो जामातृकः कथं ॥ ८९ ॥ य-
द्यसावुपरोधेन । नागच्छति गृहे स्वयं ॥ किमर्थं च करे कृत्वा । नानीतः पुत्रिके त्वया ॥ ९० ॥

त्वं हि तस्य मया दत्ता । विवाहश्चात्र वत्सरे ॥ भविष्यत्यंतरा कर्म ! यदि ते नो विबाधकं ॥९१॥
प्रेषितः पुरुषस्तेन । लेखहस्तो महारथः ॥ बंगाजनपदे गत्वा । पुरे विजयवर्धने ॥ ९२ ॥ रत्नशे-
खरनृपाय । गत्वा लेखमथार्पयत् ॥ भणितोऽनेन नृपोऽसौ । विनम्य विधिपूर्वकं ॥ ९३ ॥ हेमचं-
द्रनरेंद्रस्य । सुता मदनमंजरी ॥ रत्नचंडाय सा दत्ता । युष्मभ्यं यदि रोचते ॥ ९४ ॥ श्रुत्वेदं स-
विषादोऽसौ । तस्मै प्रत्युत्तरं ददौ ॥ अश्वारूढश्च पुत्रो मे । नीतः केनापि वैरिणा ॥ ९५ ॥ आ-
श्वीयं पृष्ठतो लग्नं । पादातं च समुद्धतं ॥ तदद्यापि च नायाति । सखेदा वयमास्महे ॥ ९६ ॥ प्र-
तिलेखं समादाय । गच्छ त्वं निजमंदिरे ॥ सति धर्मेणि चिंत्यंते । धर्माः किं कथ्यतेऽधुना ॥९७॥
एतत् श्रुत्वा समायातः । स्वस्थाने लेखवाहकः ॥ मुखेन कथितं किंचि—ल्लेखोऽपि च समर्पितः ॥
॥ ९८ ॥ अहो संसारवैचित्र्य—मुत्रयत्राप्यनिर्वृतिः ॥ हेमचंद्रो विचिंत्यैवं । मनसा मौनमाश्रितः
॥ ९९ ॥ श्यामाकारा कुरूपा च । जाता मदनमंजरी ॥ किमेतदिति सोद्वेगा । संपन्ना हेमसुंदरी
॥ २०० ॥ कदाचन कृशा स्थूला । गौरी तन्वी कदाचन ॥ नानारूपधरा दृष्टा । सिद्धयोगेव यो-
गिनी ॥ १ ॥ विस्मिता जननी तस्या । जनकोऽपि च विस्मितः ॥ एकांते भणिता ताभ्यां । किं

त्वं मदनमंजरी ॥२॥ तयोक्तं कथयिष्यामि । सर्वं हि समथागतं ॥ या काचिद्येन संजाता । ना·
नारूपविधायिका ॥ ३ ॥ तस्मिन्नेव दिने नक्त—मदृश्यांजनयोगतः ॥ जनोक्तं शृण्वती भ्रांता ।
प्रतिवेश्म पुरेऽखिले ॥ ४ ॥ एकस्मिंश्च गृहे ब्रूते । वृद्धा विद्याधरी वचः ॥ सुतां संक्षेपतो वत्से ।
सामग्रीं प्रगुणां कुरु ॥ ५ ॥ प्रज्ञप्ती मम पुत्रेण । मेघनादेन साधिता ॥ यात्रा युगादिदेवस्य ।
महाटव्यां प्रवर्तिता ॥ ६ ॥ आनिन्ये कन्यके तत्र । खेचरी भूमिगोचरी ॥ गीतनृत्यकलाजाल—
कुशला रूपशालिनी ॥ ७ ॥ नेपथ्यं भोजनं भोगा । भव्यास्तेषां कृते मया ॥ नेतव्याः पुत्रसंदे·
शा—त्तद्याने प्रगुणीभव ॥ ८ ॥ ततस्तया यथादिष्टं । समस्तं प्रगुणीकृतं ॥ ततश्चचाल सानंदा—
द्धीघ्रं गगनवर्त्मना ॥ ९ ॥ तदनु कौतुकाक्षिप्ता । चेले मदनमंजरी ॥ पश्यंती च महीं रम्यां । सं·
प्राप्ता जिनमंदिरे ॥ १० ॥ बहुविद्याधराकीर्णे । नानाविद्याधरीभृते ॥ कर्पूरागुरुसंदोह—गंधद्रव्यै·
र्मनोहरे ॥ ११ ॥ युग्मं ॥ दृष्टं युगादिदेवस्य । बिंबं जनमनोहरं ॥ विधाय सहजं रूपं । रत्नचंद्रे·
ण तत्क्षणात् ॥ १२ ॥ रोमांचांचितगात्रेण । सुगंधां सुमनोहरां ॥ गृहीत्वा मालतीमालां । पूजितः
परमेश्वरः ॥ १३ ॥ परमात्मा जगन्नाथः । पुत्रीयितजगत्त्रयः ॥ ऋषभो भवकांतार—सार्थवाहो

निरंजनः ॥ १४ ॥ त्रिभिर्विशेषकं ॥

चिरं चालोकि पूजादि । निर्निमेषेण चक्षुषा ॥ तनूकृतो भवांभोधिः । संजाता चित्तनिर्वृतिः ॥ १५ ॥ भूयोभूयस्ततः पश्यन् । स्निग्धदृष्ट्या जिनाननं ॥ प्रेक्षामंडपमागत्य । निषण्णो वरविष्टरे ॥ १६ ॥ अत्रांतरे सशृंगारा । सर्वलोकमनोहरा ॥ अष्टादशाब्ददेशीया । नर्तिता रत्नमेखला ॥ ॥ १७ ॥ आक्षिप्तश्च जनः सर्वः । शिरांसि च धुनापितः ॥ अहो नृत्यकला काचि—दपूर्वात्र वि- लोकिता ॥ १८ ॥ ततः प्रनर्तिता हाव—भावसारं ससंभ्रमं ॥ हेमचंद्रनरेंद्रस्य । सुता मदनमंजरी ॥ १९ ॥ तयापि रंजितो लोको । गुणग्राही विनिर्मितः ॥ गता सा नृत्यपर्यंते । तत्रस्थपितुरंति- के ॥ २० ॥ हेमचंद्रनरेंद्रेण । स्नेहसारं ससंभ्रमं ॥ संतोषामृततृप्तेन । पृष्टा मदनमंजरी ॥ २१ ॥ वत्से कथय मे सर्वं । विस्मयो मम वर्तते ॥ क्व नीता केन चानीता । त्वया किं वान्वभूयत ॥ ॥ २२ ॥ तयापि मूलतः सर्वं । यथावृत्तं निवेदितं ॥ मद्गृहे च त्वदाकारा । त्वदाह्वाना च कन्य- का ॥ २३ ॥ क्षणे क्षणेऽन्यथाकारा । नटीवाश्चर्यकारिणी ॥ सा का कथय मे पुत्री । यदि त्वं म- दनमंजरी ॥ २४ ॥ तयोक्तं न विजानेऽहं । तात तत्वं शरीरिणां ॥ भूरिधूर्तसमाकीर्णा । नाना-

कारा वसुंधरा ॥ २५ ॥ दत्तव्यं मम तातेन । यदात्मा परिणायितः ॥ गुरूणां हि प्रमोदाय । रिं·
भदुश्चेष्टितं मम ॥ २६ ॥ राजाह मर्षितं पुत्रि । ते भर्ता कुत्र सांप्रतं ॥ अत्रांतरे स्वभावस्थो । र·
त्नचंद्रस्तयेङ्गितः ॥ २७ ॥ तत्समीपे स्थिता रत्न—मेखला मुदितानना ॥ दृष्टा मदनमंजर्या । त·
तः पित्रे निवेदितं ॥ २८ ॥ तेनापि स समाहूतः । समायातस्तदंतिके ॥ पृष्टश्च भो महासत्व । र·
त्नचंद्रः कुतो भवान् ॥ २९ ॥ स च प्राह सुवेलाख्य—पर्वतात्तु परिभ्रमन् ॥ प्रयोजनवशादत्र ।
संप्राप्तो जिनमंदिरे ॥ ३० ॥ ततो गतस्तमादाय । हेमचंद्रो निजे पुरे ॥ सकलत्रो धृतस्तत्र । गुरु·
गौरवयोगतः ॥ ३१ ॥ हेमचंद्रनरेंद्रेण । पृष्टा मदनमंजरी ॥ ब्रूहि त्वं यदि जानासि । विस्मयो म·
म वर्तते ॥ ३२ ॥ नानारूपधरः कोऽयं । त्वद्रूपेण च मद्गृहे ॥ स्थित्वा गतो न वार्तापि । कथि·
ता तेन गच्छता ॥ ३३ ॥ साचख्यौ ज्ञातवृत्तांता । स्वपित्रे भर्तृचेष्टितं ॥ यथावज्ज्ञाभियानेन । द·
र्शितर्द्धिर्निजा तव ॥ ३४ ॥ ततो रंजितचित्तेन । हेमचंद्रेण जल्पितं ॥ अहो वीर्यमहो लब्धि—
र्भूमिगोचरचारिणः ॥ ३५ ॥ भूमिगोचर इत्येषा । अनास्था नैव संगता ॥ विद्याधरोऽयमित्येष ।
बहुमानोऽस्तु संगतः ॥ ३६ ॥ ततोऽसौ द्विगुणस्नेहः । संपश्यति वधूवरं ॥ स्वसुतातो विशेषेण ।

वल्लभां रत्नमेखलां ॥ ३७ ॥ मेघनादेन सानंदं । नृत्यंती रत्नमेखला ॥ दृष्टा मनःप्रविष्टा च । हृत्वा नीता च पर्वते ॥ ३८ ॥ वसंतसुंदराह्वाने । झरन्निर्झरसंकुले ॥ नानावृक्षसमाकीर्णे । गुहाकूटसमाकुले ॥ ३९ ॥ ततः संजातखेदेन । हेमचंद्रेण सादरं ॥ स्मृता विद्या तया सर्वः । वृत्तांतोऽस्य निवेदितः ॥ ४० ॥ स्थाने स्थाने ततस्तूर्णं । सामर्षो रत्नचंद्रकः ॥ निषेध्य गच्छतः सर्वान् । विद्याधरमहाभटान् ॥ ४१ ॥ एकाकी खड्गमादाय । वार्यमाणोऽपि खेचरैः ॥ चचाल विकटैः पादैः । खड्गसत्वसमन्वितः ॥ ४२ ॥ वसंतसुंदरे प्राप्तो । गिरौ दृष्टश्च खेचरः ॥ मेघनादो रुदंती च । सशोका रत्नमेखला ॥ ४३ ॥ समाकृष्य ततः खड्गं । रे रे भव पुरो मम ॥ प्रजल्पन् मेघनादस्य । तूर्णमभ्यर्णमागतः ॥ ४४ ॥ लग्नं ततस्तयोर्युद्धं । मत्तद्विरदयोरिव ॥ परस्परं महाघोर—मतीवानिष्टचित्तयोः ॥ ४५ ॥ जित्वा क्षणेन तं कृत्वा । प्रहारशतजर्जरं ॥ गृहीतमायुधं तस्य । कुमारेण बलादपि ॥ ४६ ॥ ततः संरोहिणीयोगा—त्प्रहारास्तस्य तत्क्षणं ॥ संरोहिताः कुमारेण । खेचरः प्रगुणोऽभवत ॥ ४७ ॥ ततस्तस्मै स्वसा स्वीया । मेघनादेन सादरं ॥ तत्रैवानीय संक्षेपा—द्दत्ता कनकमंजरी ॥ ४८ ॥

कारितं च तया सार्धं । पाणिग्रहणमंगलं ॥ कुमाररत्नचंद्रस्य । खेचरेण प्रमोदतः ॥ ४९ ॥
दत्तं च मेघनादेन । धनदेवेन पुष्कलं ॥ धनं कनकमंजर्या । लक्षशः कोटिशोऽपि वा ॥ ५० ॥
ददौ च रत्नवस्त्रादि । कुमारायापि खेचरः ॥ ततो गतो निजे गेहे । तामादाय कुमारकः ॥ ५१ ॥
सस्नेहं दृश्यमानोऽसौ । हेमचंद्रेण भूभुजा ॥ आस्ते तत्र प्रमोदेन । कांतात्रयसमन्वितः ॥ ५२ ॥
रत्नचंद्रकुमारेण । विनम्य भणितो नृपः ॥ सांप्रतं तात गच्छामि । पश्यामि पितरौ निजौ ॥ ५३ ॥
हेमचंद्रनरेंद्रेण । विमानं प्रगुणीकृतं ॥ भृतं च भूरिरत्नानां । मुक्तानां वरवाससां ॥ ५४ ॥ युष्मा-
भिर्यद्दत्ता मे । ऊढा मदनमंजरी ॥ तत्तात मर्षणीयं मे । संतो हि नतवत्सलाः ॥ ५५ ॥ कां-
ताभिः सहितस्तत्र । विद्याधरगणान्वितः ॥ रत्नचंद्रः समारूढो । विमानं चलितं ततः ॥ ५६ ॥ क्ष-
णादेव च संप्राप्तं । पुरे विजयवर्धने ॥ रत्नशेखरभूपस्य । तत्रापि वरमंदिरे ॥ ५७ ॥ अवतीर्णः
कृतातिथ्यो । रत्नशेखरभूभुजा ॥ विद्याधरजनः सर्वः । कुमारेण विसर्जितः ॥५८॥ युग्मं पितुः पाद-
ग्रहं कृत्वा । प्रणतो मातृपादयोः ॥ लब्धाशी राजवृद्धानां । यथायोगं ननाम सः ॥ ५९ ॥ वध्वो-
ऽपि च यथाज्येष्टं । प्रणेमुर्गुरुपादयोः ॥ दत्ताशिषश्च ताः श्वश्र्वा । निषेदुः पादयोः पुरः ॥ ६० ॥

रत्नचंद्रकुमारेण । मातापित्रोः सविस्तरः ॥ कथितो निजवृत्तांतो । यावदत्र समागतः ॥ ६१ ॥ ततो राजाब्रवीदेवं । नास्त्यसाध्यं सुकर्मणां ॥ विपदोऽपि हि पुत्रस्य । संपदो विधिना कृताः ॥६२॥ कालेन गछता जाताः । पुत्रा जनमनोहराः ॥ कुमारस्य कृतार्थोऽस्मि । मुदितो मेदिनीपतिः ॥६३॥ ततो दत्वा निजं राज्यं । रत्नचंद्राय धीरधीः ॥ धर्मस्थाने धनं भूरि । विनियोज्य विधानतः ॥६४॥ दमघोषमुनींद्राणां । समीपे व्रतमुज्ज्वलं ॥ विधाय विधिना धीरो । जगाम त्रिदशालयं ॥ ६५ ॥ युग्मं ॥ रत्नचंद्रनरेंद्रोऽपि । पालयामास हेलया ॥ स्वराज्यं नामिताशेष—भूपालकृतसन्नतिः ॥६६॥ साधिताशेषदुर्दांतं । पालिताखिलधार्मिकं ॥ कोषागारादिसंपूर्णं । सुरंजितजगज्जनं ॥ ६७ ॥ समुल्लसद्यशोराशि—धवलीकृतभूतलं ॥ एकातपत्रमुत्खात—कंटकं मेदिनीतलं ॥ ६८ ॥ त्रिभिर्विशेषकं ॥ कांतकांतासुखासक्तो । धर्मार्थकृतसेवनः ॥ सर्वलोककृतानंदो । कालं नयति भूपतिः ॥६९॥ एकदा च समागत्य । पुरुषेण ससंभ्रमं ॥ विज्ञप्तोऽसौ यथा देव । दयासुंदरनामके ॥ ७० ॥ त्वउद्याने समायाता । दमघोषमुनीश्वराः ॥ प्राशुके भूमिभागे च । तस्थुः शिष्यगणान्विताः ॥७१॥ युग्मं ॥ तत् श्रुत्वा रंजितो राजा । दत्वास्मै पारितोषिकं ॥ पुरुषं प्रेषयामास । चतुरंगबलान्वितः ॥

॥ ७२ ॥ स्वयं चचाल जात्याश्व—खुरोत्क्षुसमहीतलः ॥ दमघोषमुनींद्राणां । वंदनाय धराधिपः ॥
॥ ७३ ॥ गत्वा प्रदक्षिणापूर्वं । वंदित्वा भक्तियोगतः ॥ नातिदूरे न चासन्ने । स निषण्णः कृतांज-
लिः ॥ ७४ ॥ त्रिभिर्विशेषकं ॥

प्रारब्धा दमघोषेण । सूरिणा धर्मदेशना ॥ आदौ धर्मस्य सम्यक्त्वं । तस्य शुद्धिविधायकं ॥
॥ ७५ ॥ चैत्यवंदनमाख्यातं । तच्च पूजापुरस्सरं ॥ पूजा च मुखकोषादि—विधानेन महाफला ॥
॥ ७६ ॥ युग्मं ॥ परिणामोऽपि पूजायाः । समीहितफलप्रदः ॥ विधानं विधिना दत्ते । किं किं ना-
त्र शरीरिणां ॥ ७७ ॥ यतः—चैत्यपूजनतः सम्यक् । शुभो भावः प्रजायते ॥ तस्मात्कर्मक्षयः सर्व
। ततः कल्याणमश्नुते ॥ ७८ ॥ एष एव जगत्सारः । शुभो भावः प्रकीर्तितः ॥ एष एव जगत्त्रा-
ण—मेष एव च बांधवः ॥ ७९ ॥ एष एव भवावर्ते । पततामवलंबनं ॥ एष एव भवाटव्या—म-
टतां मार्गदर्शकः ॥ ८० ॥ एष एव भिषक्कल्पः । सर्वव्याधिनिषूदनः ॥ एष एव गदोच्छेद—करणे
परमौषधं ॥ ८१ ॥ एष एव महामंत्रः । परमानंदकारणं ॥ एष एव परं तत्वं । संमतं तत्ववेदिनां ॥
॥ ८२ ॥ एष एव कुमानुष्य—दुःखविच्छेददायकः ॥ एष एव कुदेवत्व—मनःसंतापनाशकः ॥८३॥

एष एव महामोह—वृक्षोच्छेदकुठारकः ॥ एष एव महानिद्रा—द्रावणप्रतिबोधकः ॥ ८४ ॥ एष एव गुरुक्रोध—वह्निविध्यापने जलं ॥ एष एव महामान—पर्वतोद्दलने पविः ॥ ८५ ॥ एष मायाकुरं-ग्याश्च । दहने दवसन्निभः ॥ एष लोभसमुद्रस्य । शोषणे वडवानलः ॥ ८६ ॥ मत्वेदं शुद्धभावेन । कर्तव्यं जिनपूजनं ॥ ततः पूर्णविधानेन । विशुद्धं चैत्यवंदनं ॥ ८७ ॥ परमेष्टिनमस्कारो । ध्यातव्यस्तदनंतरं ॥ एकसंध्यं द्विसंध्यं वा । त्रिसंध्यं वा विधानतः ॥ ८८ ॥ अष्टावष्टाधिकं वापि । शतं वारान् जपेदमुं ॥ एकचित्तेन भावेन । प्रत्यहं विजनस्थितः ॥ ८९ ॥ ॐनमोऽर्हत इत्यादि । स्वाहांतं पदमुच्चरन् ॥ मुंचन् पदे पदे पुष्पं । सर्वदुःखैर्विमुच्यते ॥ ९० ॥ अंगानंगप्रविष्टं हि । श्रुतं व्याप्य व्यवस्थितः ॥ एष एव महातत्वं । कथितस्तत्ववेदिभिः ॥ ९१ ॥ शेषश्रुतं परित्यज्य । मरणे समुपस्थिते ॥ एष एव बुधैर्ध्येयः । कर्मनिर्मूलनाकृते ॥ ९२ ॥ यदि भक्तिर्नमस्कारे । शक्तिः संसारलंघने ॥ अभक्तिश्चेन्नमस्कारे । न शक्तिर्भवलंघने ॥ ९३ ॥ ऐहिकानि फलान्यस्य । प्रसिद्धानि पदे पदे ॥ कियंति तव कथ्यंते । जानाति यदि केवली ॥ ९४ ॥ किंचात्र ये महापापा । निर्भाग्याः पुरुषाधमाः ॥ न पठंते नमस्कारं । न चापि बहु मन्वते ॥ ९५ ॥ य एव भा-

विकल्याणाः । पुण्यभाजो नरोत्तमाः ॥ त एव हि नमस्कारं । पठंति विहितादरं ॥ ९६ ॥ किं
रिभाषितेनात्र । राजंस्तत्वं निशामय ॥ नमस्कारे मनो यस्य । भवाब्धिस्तस्य गोष्पदं ॥ ९७ ॥
तदेतदस्य सामर्थ्यं । संक्षेपेण निदर्शितं ॥ विशेषेण पुनः कोऽस्य । गुणान् वर्णयितुं क्षमः ॥
॥ ९८ ॥ एतत् श्रुत्वा जनः सर्वो । जिनपूजाकृतादरः ॥ पंचमंगलपाठे च । प्रवृत्तो विधिपूर्वकं ॥
॥ ९९ ॥ अथ स्वकर्द्धितुष्टेन । रत्नचंडेण भूभुजा ॥ समयं प्राप्य संपृष्टा । दमघोषमुनीश्वराः ॥
॥ ३०० ॥ भगवन् किं मया पूर्व—जन्मन्यासेवितं शुभं ॥ येनेदृक्षा महाभोगा । भूपत्वे समुप-
स्थिताः ॥ १ ॥ अथोचुरवधिज्ञान—विज्ञातभवविस्तराः ॥ सजलांभोदनादेन । नर्तयंतो मयूरका-
न् ॥ २ ॥ प्रभवो दमघोषाख्याः । सर्वसत्वहितावहाः ॥ पुरे राजगृहे राज—न्नासीस्त्वं पुष्पशेखरः
॥ ३ ॥ मालाकारो महारंभः । स्वभावेनैव भद्रकः ॥ एकदा च समायातः । पुष्पाण्यादाय मंदिरे
॥ ४ ॥ जैने जनसमाकीर्णे । जातस्नात्रमहोत्सवं ॥ दृष्ट्वा जैनेश्वरं बिंबं । भक्तिरुल्लसिता तव ॥
॥५॥ युग्मं ॥ सुगंधपंचवर्णानां । पुष्पाणां भक्तियोगतः ॥ माला स्वयं समादाय । पूजितो जिन-
नायकः ॥ ६ ॥ संजाता परमा श्रद्धा । संसारः प्रतलीकृतः ॥ बद्धं परभवायुष्कं । भोगसारं तदा

त्वया ॥ ७ ॥ मृत्वा चेह समायातो । रत्नशेखरमंदिरे ॥ यत्पूजोपार्जितं पुण्य—मुदीर्णमिह तेऽधुना ॥ ८ ॥ इतो देवगतिं गत्वा । भूत्वा च नृपनंदनः ॥ विधाय निर्मलां दीक्षां । गंता त्वं शाश्वते पदे ॥ ९ ॥ श्रुत्वेदं रंजितो राजा । धर्मेऽत्यंतं स्थिरोऽभवत ॥ नत्वा सूरिं गतो गेहे । श्रावकत्वमपालयत् ॥ १० ॥ इति पुष्पपूजाकथानकं समाप्तं ॥ श्रीरस्तु ॥

पुष्पपूजाफलं प्रोक्तं । स्वर्गमोक्षप्रसाधकं ॥ सांप्रतं गंधपूजायाः । फलं शृणुत कथ्यते ॥ १ ॥ समस्ति सर्वदेशानां । सारभूतो महीतले ॥ बंगाजनपदो नाम्ना । पदं निःशेषसंपदां ॥ २ ॥ रत्नादिखनिभिर्यत्र । क्षरंतीभिर्वरं वसु ॥ जनर्द्धिहेतुभूताभि—र्यथार्था सा वसुंधरा ॥ ३ ॥ बंगाजनपदे तस्मिन् । नगरं रत्नसंचयं ॥ निवासः सर्वरत्नानां । रम्यं जनमनोहरं ॥ ४ ॥ रराज यत्सदाकालं । सदं तैर्मत्तवारणैः ॥ सद्गृहैश्च समुत्तुंगैः । सदं तैर्मत्तवारणैः ॥ ५ ॥ द्विरदेषु मदो यत्र । धातूनां सोपसर्गता ॥ निपातनं च शब्देषु । कुचेषु करपीडनं ॥ ६ ॥ द्विजिह्वता भुजंगेषु । पराचिंता च योगिनां ॥ वनितोदरेषु तुच्छत्व—मोष्ठेष्वधरसंभवः ॥ ७ ॥ बभूव तस्य देशस्य । नगरस्य च शासिता ॥ राजा सर्वजनानंदो । नाम्ना कनकसुंदरः ॥ ८ ॥ अचिंत्यशक्तिसंयुक्तो । गुरुतेजा म-

हाङ्गजः ॥ विक्रमाक्रांतनिःशेष—महीपालनतक्रमः ॥ ९ ॥ सद्वृत्तेन कुलं यस्य । यशोभिः शी-
लमुज्ज्वलं ॥ शरदभ्रनिभैः कांतै—र्गुणै रूपं च पप्रथे ॥ १० ॥ तस्याजनि जनी देव—पादपं-
कजभृंगिका ॥ निर्धौतस्वर्णवर्णाङ्गा । रत्नमालेति विश्रुता ॥ ११ ॥ सर्वातिशायिशब्दादि—विष-
यास्वादनिष्ठयोः ॥ याति कालः सुखेनैव । निबिडस्नेहयोस्तयोः ॥ १२ ॥ अन्यदा सुंदराकारः ।
शुभस्वप्नेन सूचितः ॥ जातस्तयोर्जनानंदी । तनयो रत्नसुंदरः ॥ १३ ॥ द्वासप्ततिकलावेदी । संजा-
तः स्वल्पवासरैः ॥ मृता माता कुमारस्य । पिता स्नेहेन पश्यति ॥ १४ ॥ सपत्न्यो मातरः सर्वाः ।
प्रतिकूलाः समत्सराः ॥ परिवारोऽप्युदासीनः । सर्वोऽपि कुमरंप्रति ॥ १५ ॥

अन्यदा देशपर्यंते । कनककेतुर्भूमिपः ॥ स्वर्णसुंदरभूपस्य । न सेवां प्रतिपद्यते ॥ १६ ॥
आज्ञाभंगे समुत्पन्ने । दूतवचनफूत्कृतः ॥ स्वर्णसुंदरभूपस्य । दिदीपे कोपपावकः ॥ १७ ॥ स च-
चाल महाद्वेषा—च्चतुरंगबलान्वितः ॥ गत्वा च तं विनिर्जित्य । वलितः सत्वरैः पदैः ॥ १८ ॥ कु-
मारोऽपि पराभूति—दुःखदुःखितमानसः ॥ निशीथे नक्तमेकाकी । सखड्गोऽलक्षितो जनैः ॥१९॥
उत्तरायणसंक्रांतौ । मंदतेजाः शनैः शनैः ॥ सुवृत्तः कनकच्छायः । सवितेव चचाल सः ॥ २० ॥

युग्मं ॥ भिक्षाभोगी गतस्नानो । रुक्षदेहो महीशयः ॥ यत्याचारधरो धीरः । परं नियमवर्जितः ॥
॥ २१ ॥ विधिरेवोन्नतिं नीत्वा । निपातयति देहिनं ॥ एकजन्मनि जीवानां । दर्शयंति द्विजन्मतां
॥ २२ ॥ अन्यस्मिंश्च दिने सुप्तो । दृष्टोऽयं रत्नमालया ॥ वटस्याधो महाटव्या—मेकाकी रत्नसुंद-
रः ॥ २३ ॥ स्पृष्टः पादतले मात्रा । प्रबुद्धश्च ससंभ्रमः ॥ गाढं कंठग्रहं कृत्वा । मुक्तकंठं रुरोद सा
॥ २४ ॥ कथं पुत्र महाटव्या—मेकाकी त्वं समागतः ॥ वृत्तांतः कथितस्तेन । पराभूतिसमुद्भवः
॥ २५ ॥ भोजितो भोजनं भव्यं । पायितो निर्मलं जलं ॥ विलिप्ताशेषगात्रश्च । चंदनेन सुगंधि-
ना ॥ २६ ॥ कर्पूरपूरसन्मिश्रो । दत्तस्तांबूलबीटकः ॥ स्वस्थावस्थः सुखासीनः । कुमारः स्वस्थचेत-
नः ॥ २७ ॥ पप्रच्छ कुशलं मातुः । कुतस्तेऽत्र समागमः ॥ प्रोवाच वत्स जाताहं । मृत्वा नाम्ना सु-
लोचना ॥ २८ ॥ यक्षिणी जगति ख्याता । श्रीमंतीह समागता ॥ भवद्दर्शनसंभ्रांता । संप्राप्ता च
तवांतिकं ॥ २९ ॥ युग्मं ॥ स नीतश्च तया तूर्णं । विधाय करकुड्मले ॥ पुरे पुरिमतालाख्ये ।
उत्तराशाशिरोमणौ ॥ ३० ॥ निधानानि समस्तानि । करस्थानीव पश्यति ॥ अनेनांजितनेत्रो हि
। पुरुषो मेदिनीतले ॥ ३१ ॥ तदिदं दृष्टसामर्थ्यं । करस्थं कुरु पुत्रक ॥ भूयोऽपि व्यसने वत्स ।

स्मर्तव्याहं विशेषतः ॥ ३२ ॥ युग्मं ॥
इत्युक्त्वा सा गता देवी । निजस्थानं सुलोचना ॥ दूरादेव कुमारेण । दृष्टमेकं सरोवरं ॥ ॥ ३३ ॥ गत्वा तत्रांजिते नेत्रे । भ्रांतः पाल्यां समंततः ॥ दृष्टानि च निधानानि । संजातो हृदि निश्चयः ॥ ३४ ॥ ततश्च तत्सरो दृष्टं । पद्मखंडविराजितं ॥ स्फटिकाकाशशुभ्राभिः । शिलाभिर्बद्धभित्तिकं ॥ ३५ ॥ नानारत्नशिलासार्थो—चितसोपानपंक्तिकं ॥ कलकूजितविभ्रांत—शकुंतगणसंकुलं ॥ ३६ ॥ शुभ्रादभ्रपयःपूर्णं । कल्लोलालिविराजितं ॥ घनपल्लवसच्छायं । लतामंडपमंडितं ॥ ॥ ३७ ॥ त्रिभिर्विशेषकं ॥ प्रविश्यांतःकृतस्नानो । लोचनक्षालितांजनः ॥ पयः पीत्वा समुत्तीर्णः । स्वर्णसुंदरनंदनः ॥ ३८ ॥ सरोवरसमासन्ने । उद्याने गुणसुंदरे ॥ शिष्यसंघसमायुक्ताः । सूरयो मतिसागराः ॥ ३९ ॥ सागरादपि गंभीरा । मेरोरपि गरीयसः ॥ पूर्णाः परमरूपेण । क्षेपयंतो रुचा विधुं ॥ ४० ॥ नानातिशयसंपन्नाः । सर्वसत्वहितावहाः ॥ धर्मध्यानसमारूढा । रागद्वेषविवर्जिताः ॥ ॥ ४१ ॥ त्यक्तत्रिदंडसंचाराः । कषायकषणोद्यताः ॥ ज्ञानदर्शनचारित्र—रत्नत्रयविराजिताः ॥४२॥ हृषीकाणां विजेतारो । जीवानां जननीसमाः ॥ भयस्थानैर्विनिर्मुक्ता । मदाष्टकविवर्जिताः ॥ ४३ ॥

प्राशुके विपुले शुद्धे । भूतले जंतुवर्जिते ॥ उपविष्टास्तनुभाया—भासिताखिलदिङ्मुखाः ॥ ४४॥ सितवस्त्राः स्वदंतांशु—शुभ्रिताखिलदिङ्मुखाः ॥ साधुसमूहमध्यस्था । मध्यस्थाः सोममूर्तयः ॥ ॥ ४५ ॥ सजलमेघनादेन । कुर्वाणा धर्मदेशनां ॥ भव्यपद्मप्रबंधानां । बोधने नवभास्कराः ॥ ॥ ४६ ॥ षड्भिः कुलकं ॥ प्रणिपत्य कुमारेण । पृष्टा धर्मं मुनीश्वराः ॥ ततस्ते वक्तुमारब्धाः । परोपकृतिचंचवः ॥ ४७ ॥ अहिंसैव परो हेतु—र्धर्मस्योक्तो जिनेश्वरैः ॥ शेषस्तु परिवारोऽस्य । सत्यवादादिरिष्यते ॥ ४८ ॥ यां यां जीवाः प्रपद्यंते । गतिं कर्मवशानुगाः ॥ तत्र तत्र प्रकुर्वंति । रतिं हिंसानिबंधने ॥ ४९ ॥ यद्येको वसुधां दद्या—दन्यो दद्याच्च जीवितं ॥ विहाय वसुधां भीतो । जीवो गृह्णाति जीवितं ॥ ५० ॥ किमत्र बहुनोक्तेन । स्वसंवेद्यमिदं नृणां ॥ यथा स्वं जीवितं कांतं । सर्वेषां प्राणिनां तथा ॥ ५१ ॥ तस्मादेवंविधं मूढा । जीवितं ये शरीरिणां ॥ हरंति रौद्रकर्माणः । पापं किं किं न तैः कृतं ॥ ५२ ॥ जीवानां जीवितं हृत्वा । कर्मभारगुरूकृताः ॥ पतंति नरके जीवा । अयःपिंडो यथा जले ॥ ५३ ॥ मधु श्रवंति ये वाचा । हृदये विषदारुणाः ॥ कायेन पापकर्माणि । कुर्वते ते नराधमाः ॥ ५४ ॥

शिष्टाचारविनिर्मुक्ता । यथाकामविचारिणः ॥ ते भ्रमंति दुरात्मान—स्तिर्यग्गर्भपरंपरां ॥५५॥
विषयेभ्यो जनाः सौख्यं । कीदृशं नाम जायते ॥ यत्र प्रत्युत दुःखाना—मुपर्युपरि संततिः ॥५६॥
किंपाकफलकल्पेभ्यो । विषयेभ्यः पराङ्मुखाः ॥ ये नरास्तान्नमस्यामि । त्रिसंध्यं शुद्धचेतसा ॥
॥ ५७ ॥ हा कष्टं वंचितो लोको । दीर्घकालं विसंस्थुलैः ॥ विषयैर्विषमासंगै—र्विषवन्मारणात्मकैः
॥ ५८ ॥ स्वर्गेऽपि मोहिताः संतो । हिताहितपराङ्मुखाः ॥ च्युत्वा गर्भगृहे भूयो । विण्मूत्रकृत-
लेपने ॥ ५९ ॥ वसंत्यतीवबीभत्से । दुर्गंधेऽत्यंतदुस्सहे ॥ चर्मजालकसंछन्नाः । पित्तश्लेष्मादिमध्य-
गाः ॥ ६० ॥ जनन्याहारनिष्पंदं । लिहंतो नाभिकाच्युतं ॥ पिंडीकृतसमस्तांगा । दुःखसंभारपीडि-
ताः ॥ ६१ ॥ त्रिभिर्विशेषकं ॥ गर्भाद्विनिर्गताः संतो । नियमाचारवर्जिताः ॥ जीवघातरता धर्मे ।
विषीदंति पदे पदे ॥ ६२ ॥ तथा चात्रानृतं वाक्यं । वर्जनीयं प्रयत्नतः ॥ हिंसायाः कारणं तद्धि
। सा च संसारकारणं ॥ ६३ ॥ स्तेयं च दूरतस्त्याज्यं । परस्त्री मातृसन्निभा ॥ इच्छापरिमाणं च
। कर्तव्यं सुविवेकिना ॥ ६४ ॥ भक्तं च भोजनत्यागः । सदाचारप्रवर्तनं ॥ मर्यादावर्तनं चैव । ध-
र्मोऽयं सिद्धिसाधनः ॥ ६५ ॥ श्रुत्वेदं सूरिसद्वाक्यं । संविग्नो रत्नसुंदरः ॥ पप्रछ प्रणतिं कृत्वा ।

व्यतीतं भवमात्मनः ॥ ६६ ॥ चतुर्ज्ञानोपगूढात्मा । विनयेनोपसेदुषे ॥ रत्नसुंदरभूपाय । जगाद मतिसागरः ॥ ६७ ॥ कुमार शृणु संक्षेपा—त्पूर्वजन्मविचेष्टितं ॥ न हि निःकारणं कोऽपि । वेत्ति जंतुः सुखासुखं ॥ ६८ ॥

मगधेषु मागधग्रामे । माधवः कुलपुत्रकः ॥ भवानभवद्भार्या च । माधवी बद्धमुष्टिका ॥६९॥ पापर्द्धौ मधुसूदननामा च । माधवस्य सहोदरः ॥ मधुसूदनी तद्भार्या । धर्मकर्मपरायणा ॥ ७० ॥ एवं च रतः प्रायः । स्वभावेनैव माधवः ॥ माधवी च महालोभा । न दत्ते कस्य किंचन ॥ ७१ ॥ अ- सरति संसारो । जीवघातरतस्य ते ॥ कटुकानि प्रजल्पंत्या । माधव्या भिक्षुकानपि ॥ ७२ ॥ कुलीनेति वंध्येति । दुर्मुखेति च निंदिता ॥ सर्वभिक्षुकसार्थेन । कालं नयति माधवी ॥ ७३ ॥ अन्यदा च महाटव्यां । माधवो मृगयांगतः ॥ दृष्टैका हरिणी तेन । मृगशावसमन्विता ॥ ७४ ॥ गत्वातिवेगतो हस्ते । गृहीतो हरिणीसुतः ॥ भीतभीता मृगी नष्टा । पश्यंती पुत्रकं निजं ॥७५॥ बध्ध्वा वल्लीवितानेन । शावं तं लोललोचनं ॥ धावितो मृगयूथस्य । वधायाधिज्यकार्मुकः ॥७६॥ अथासौ दैवयोगेन । कंदमूलफलार्थिना ॥ अटवीमटता दृष्ट—स्तापसेन मृगीसुतः ॥ ७७ ॥ मो-

चितो बंधनात्तेन । करुणाकृष्टचेतसा ॥ गत्वा च मिलितो मातु—र्मोदते कांतकानने ॥ ७८ ॥
दूरं दूरतरं नीतो । मृगयूथेन माधवः ॥ सिंहनादं ततः श्रुत्वा । माधवेन पलायितं ॥ ७९ ॥ न·
श्यता तेन दृष्टा च । मृगी प्रसवधर्मिणी ॥ अपत्यस्नेहसंभार—तंतुसंदब्धमानसा ॥ ८० ॥ इतश्चे·
तश्च निक्षिप्त—चलच्चकितलोचना ॥ लिहंती जिह्वया पुत्रान् । महामोहपरायणा ॥ ८१ ॥ युग्मं ॥
मृगश्च तत्समीपस्थः । कंडूययन्मृगीतनूं ॥ अहो कामस्य माहात्म्यं । पशूनामपि दुर्जयं ॥ ८२ ॥
वनात्तृणानि भक्ष्याणि । वनाच्च विमलं जलं ॥ मृगमृग्योस्तथाप्युच्चैः । प्रेमाजन्म निरंतरं ॥ ८३ ॥
सिंहनादभयं मुक्त्वा । पुनः संजातपौरुषः ॥ आकृष्टशरस्तरसा । धावितस्तज्जिघांसया ॥ ८४ ॥ ए·
कतो हरिणी नष्टा । ह्यन्यतो मृगपोतकाः ॥ मृगश्चाप्यन्यतो नष्टो । वियुक्तं तत्कुटुंबकं ॥ ८५ ॥
मृगस्य मार्गतो लग्नो । मारयामीति चिंतयन् ॥ धावमानोऽपतद्भूमौ । स्खलितो विषमस्थले ॥८६॥
लब्ध्वांतरं कुरंगोऽपि । नश्यन्नुच्चैर्भयातुरः ॥ वटस्याधो मुनिं दृष्ट्वा । तत्समीपमुपागतः ॥ ८७ ॥
रक्ष रक्ष महाभाग । कुरु त्राणं दयानिधे ॥ इत्युक्त्वा च मृगो नत्वा । साधवे शरणं गतः ॥८८॥
माधवोऽपि समुत्थाय । लग्नः सारंगपृष्ठतः ॥ साधोः पादांतिकं प्राप्तः । साधुनैवं प्रजल्पितः ॥ ८९ ॥

परप्राणप्रहाणेन । निजप्राणप्रधारणं ॥ न तत्संतः प्रशंसंति । शरं संहर माधव ॥ ९० ॥ कोदंडं विगुणं कृत्वा । शरं संहृत्य सत्वरं ॥ नमस्कृत्य मुनेः पादौ । निषण्णः सोऽपि भूतले ॥ ९१ ॥ पृष्टश्च स मुनिस्तेन । भाषते किमयं मृगः ॥ मुंचन्नश्रूणि शोकार्त्तः । साधुः प्राह निशामय ॥ ९२ ॥ त्यक्तं जन्मवनं तृणांकुरवती मातेव मुक्ता स्थली । विश्रंभस्थितिहेतवो न गणिता बंधूपमाः पादपाः ॥ बालापत्यवियोगदुःखविधुरा मुक्ता मृगी वल्लभा । धावंतः पदवीं तथाप्यकरुणा व्याधा न मुंचंति मे ॥ ९३ ॥ मामेवं कथयत्येष । स्वदुःखं निजया गिरा ॥ यतो मातृसमः प्रोक्तः । साधुवर्गः शरीरिणां ॥ ९४ ॥ तवापि युज्यते नैव । कर्तुं कर्म सुनिर्घृणं ॥ परं मारयता येन । भवत्यात्मापि घातितः ॥ ९५ ॥ क्रियंते यानि कर्माणि । रागद्वेषविसंस्थुलैः ॥ तेषां फलविपाकं हि । जानाति यदि केवली ॥ ९६ ॥ यतः—हन्मीति जन्मजनितं सुकृतं निहंति । शस्त्रग्रहिभवसंभवमेव धर्मं ॥ शस्त्राभिघातसमये शतजन्मजातं । सर्वं निहंति सुकृतं सति जीवघाते ॥ ९७ ॥ आत्मैव घातितस्तेन । परं घ्नता न संशयः ॥ यतो हन्यादसौ हंता । लभते शतशो वधं ॥ ९८ ॥ शरासनं शराः सर्वे । माधवेन द्विधा कृताः ॥ श्रुत्वा धर्मं दयासारं । मुनिमुखाद्विनिर्गतं ॥ ९९ ॥

संसारांबुधिमग्नेन । यानपात्रसमो मया ॥ संप्राप्तस्त्वं च तारयेऽहं । पारं धर्मप्रभावतः ॥ १०० ॥
जीवघातान्निवृत्तोऽहं । यावज्जीवं तवाग्रतः ॥ निशि भक्तं सुरापानं । मांसमद्मि न सर्वदा ॥ १ ॥
भद्रकत्वं समापन्नो । देवभक्तिपरायणः ॥ गुरुपूजारतो नित्यं । कालं नयति माधवः ॥ २ ॥ अ-
न्यदा च समायातः । सुगंधपुटिको नरः ॥ प्रयोजनवशात्कोऽपि । गंधको माधवांतिकं ॥ ३ ॥ प्र-
दत्तो रूपकस्तस्मै । गंधान् जग्राह माधवः ॥ भावसारं स्वहस्तेन । तेन तैरर्चितो जिनः ॥ ४ ॥ पु-
ण्यानुबंधि यत्पुण्यं । गंधपूजां प्रकुर्वता ॥ निर्वर्तितं तदा काले । उदयस्तस्य सांप्रतं ॥ ५ ॥ ततो
दानरतो मृत्वा । मध्यमगुणयोगतः ॥ जातस्त्वं सुंदराकारः । स्वर्णसुंदरनंदनः ॥ ६ ॥ एतत् श्रुत्वा
कुमारोऽपि । रोमांचांचितविग्रहः ॥ सानंदः सूरिपादांते । श्रावकत्वं प्रपन्नवान् ॥ ७ ॥ सर्वज्ञो देव-
ता मह्यं । गुरवस्तु सुसाधवः ॥ सर्वज्ञोक्तो दयासारो । धर्मो धर्मधिया मम ॥ ८ ॥ अस्तं गते दि-
वानाथे । न करोमि भुजिक्रियां ॥ करोमि स्मरणेनापि । त्रिसंध्यं चैत्यवंदनं ॥ ९ ॥ सूरिणा भ-
णितं भद्र । प्रतिपत्तिर्न दुष्करा ॥ गृहीतपालना गुर्वी । सैव सर्वसुखावहा ॥ १० ॥ तत्र यत्ना प-
रा कार्या । सत्यवाचो मेधाधिया ॥ प्रतिपद्य ये न कुर्वंति । ते नूनमधमाधमाः ॥ ११ ॥ तथा त्वं

प्रतलीभूत—चतुर्गतिगमागमः ॥ सर्वसौख्यखनिर्जातो । गंधपूजाप्रभावतः ॥ १२ ॥

अत्रैव नगरे राज्यं । भोगा जनमनोहराः ॥ पर्यंते निर्मला दीक्षा । ततस्ते सिद्धिसंगमः ॥ ॥ १३ ॥ वियोजितः सवित्र्या य—न्माधवेन सता त्वया ॥ कुरंगीतनयस्तेन । वियुक्तस्त्वं सहांबया ॥ १४ ॥ नित्यं धर्मेण वर्धस्व । किमन्यद् ब्रूमहे वयं ॥ वर्तमानेन योगेन । यास्यामोऽतो वयं प्रगे ॥ १५ ॥ विहृताः सूरयोऽन्यत्र । मुदितो रत्नसुंदरः ॥ सद्धर्मरत्नलाभेन । संतुष्टो निजमानसे ॥ १६ ॥ अन्यस्मिंश्च दिने नक्तं । भिक्षाकार्येण निर्गतः ॥ भ्रमन् गृहाद्गृहं चैष । संप्राप्तश्चैकमंदिरे ॥ १७ ॥ विशाले स्वल्पमानुष्ये । व्याधिगृहीतनायके ॥ पुष्पतांबूलकर्पूर—पूर्णसज्जितभाजने ॥ १८ ॥ युग्मं ॥ निर्गतैकाबला भिक्षा—मादाय करकुड्मले ॥ दत्ता तया गृहीता च । भणिता तेन सा यथा ॥ १९ ॥ करोमि भोजनं भद्रे । नयाम्यत्रैव शर्वरीं ॥ प्रभातेऽहं गमिष्यामि । यदि वः प्रतिभासते ॥ २० ॥ तयापि दर्शितं तस्य । शून्यमेकं कुटीरकं ॥ भुक्तः सुप्तश्च तत्रैव । शृणोत्येवंविधं वचः ॥ २१ ॥ पाहि पाहि पयः पापे । म्रियेऽहं तृषयाधुना ॥ ततस्तया विषं क्षिप्त्वा । स पयः पायितो रुषा ॥ २२ ॥ समागतो विटः कोऽपि । कृता प्रगुणता तया ॥ कियानपि

गतः कालो । विषयासक्तयोस्तयोः ॥ २३ ॥ विटेन भणिता किं न । गृहस्वामी प्रजल्पति ॥ सु-
खसंवेदनादद्य । लब्धनिद्रो भविष्यति ॥ २४ ॥ तेनोक्तं महतीर्वाराः । पयःपानं न याचते ॥ श्र-
तिनिद्रापितो भद्र । सोऽपि चेतसि शंकितः ॥ २५ ॥ स्वल्पस्नेहो विषण्णश्च । कामक्रीडापराङ्मु-
खः ॥ तांबूलांतर्विषं दत्वा । तया सोऽपि निपातितः ॥ २६ ॥ कुटीरकात्समाहूया—नीतः कार्पटि-
कस्तया ॥ भणितश्च गृहाणेदं । मुखमूले कलेवरं ॥ २७ ॥ स्वयं च पादयोर्लग्ना । नीतं तद् गृह-
पृष्ठतः ॥ प्रक्षिप्तं विजले कूपे । व्यतीता जारसंकथा ॥ २८ ॥ कचवरेण चाछाद्य । समागत्य नि-
जे गृहे ॥ सुप्ता निराकुला याव—त्ताम्रचूडेन वासितं ॥ २९ ॥ भूयोऽपि च समुत्थाय । गता त-
स्मिन् कुटीरके ॥ स्वप्रपंचाप्रकाशार्थं । सदर्पं जल्पितं तया ॥ ३० ॥ मुहूर्तमेकमत्रैव । स्थेयं त्रि-
दाचर त्वया ॥ विसर्जितेन गंतव्यं । प्रपन्नं तेन तद्वचः ॥ ३१ ॥ मुक्तकेशा निरानंदा । दुःखसं-
भारभारिता ॥ सशोकेव कृताक्रंदा । सदुःखेव रुरोद सा ॥ ३२ ॥ मिलितो हेलया लोको । दृष्ट्वा
तां दुःखदुःखितां ॥ रुदंतीं भर्तृनामानि । समुच्चार्य पुनः पुनः ॥ ३३ ॥ पृष्टा च तेन किं भद्रे ।
रोदितव्ये निबंधनं ॥ न ददाति वचस्तेषां । रुदत्येव हि केवलं ॥ ३४ ॥ हा नाथ दुःखिनां मु-

त्त्वा—ऽशरणां मां कृपास्पदां ॥ गच्छन्नपि न विज्ञातो । हृदयस्थोऽपि सर्वदा ॥ ३५ ॥ हा विधे ते कृपा नास्ति । किं कृतं मूढ वैशसं ॥ यत्प्रियोऽपहृतश्चित्ता—द्दक्षिनाहं कुतोऽधुना ॥ ३६ ॥ किं गुणान् वर्णयाम्यस्य । किं सौभाग्यं मनोरमं ॥ किं रूपं किं मतिं त्यागं । किं भोगं विस्मयावहं ॥ ॥ ३७ ॥ मांसलौ परिघाकारौ । करौ कनककोमलौ ॥ मदंगसंगमं त्यक्त्वा । कथमेतौ करिष्यतः ॥ ३८ ॥ ज्वलज्ज्वालावलीसंगं । पश्यतां भयकारणं ॥ अहो कर्मवशाज्जीवै—र्जीवद्भिः किं न दृश्यते ॥ ३९ ॥ उद्वसितमिवाभाति । जनलक्षसमाकुलं ॥ कांतारसदृशं कांतं । पुरं नाथ त्वया विना ॥ ४० ॥ त्वया त्यक्तापि नो त्यक्षे । भवंतं चुंबकोपलं ॥ मम चित्तायसं यस्मा—त्त्वमाकर्षसि दूरतः ॥ ४१ ॥ नीतिरेषा जने रूढा । धर्मोऽयं मनुनेरितः ॥ मृतमप्यनुगच्छंति । भर्तारं कुलकन्यकाः ॥ ४२ ॥ एवंविधसमुल्लाप—संजातकरुणैर्जनैः ॥ भणितार्हिर्न कर्तव्या । यदेषैव भवस्थितिः ॥ ४३ ॥ एतत् श्रुत्वा जनोल्लापं । बहिर्दर्शितशोकया ॥ लोकानां रंजनाहेतो । रुदंत्या भणितं तया ॥ ४४ ॥ यदि मे स्वजना यूयं । सुहृदो वाथ वत्सलाः ॥ संपादयत सर्वेऽपि । मामकीनमिदं वचः ॥ ४५ ॥ कुरुतैकां चितां गुर्वीं । सारकाष्ठविनिर्मितां ॥ निर्वापयामि येनेदं । दुःखद-

गंधं शरीरकं ॥ ४६ ॥ प्रविशामि शिरस्यस्य । दत्वा बाहूपधानकं ॥ परलोकगतस्यापि । नावाम्युत्सं·
गशायिनी ॥ ४७ ॥ श्रुत्वेदं विस्मितो लोकः । शिरोधूननपूर्वकं ॥ अहो महासती धन्या । जगा·
देदं परस्परं ॥ ४८ ॥ पतिभक्तं गुणे सक्तं । शीलाभरणभूषितं ॥ एवंविधं कलत्रं हि । नाल्पपु·
ण्यैरवाप्यते ॥ ४९ ॥ सा धृता बंधुभिर्गेहे । नीतं भर्तृकलेवरं ॥ विधाय तस्य संस्कारं । यथास्थानं
गता जनाः ॥ ५० ॥ रोरेदमपि संदृष्टं । मदीयं वैशसं त्वया ॥ न कार्यः स्त्रीषु विश्वास । उपदे
शोऽयमुत्तमः ॥ ५१ ॥ कुमारस्तत्तथा दृष्ट्वा । चिंतयामास मानसे ॥ पुस्तकानि पठंतोऽपि । स्त्रीच
रित्रं न जानते ॥ ५२ ॥ प्रथमं मारितो भर्ता । पश्चाज्जारोऽपि घातितः ॥ ततोऽपि रंजितो लो·
कः । स्वयं जाता महासती ॥ ५३ ॥ अलब्धांतःप्रवेशाय । कूटकपटवेश्मने ॥ संसारतरुबीजाय ।
स्त्रीवृत्ताय नमोनमः ॥ ५४ ॥ सर्पिण्येव महाभीति—कारिण्या वक्रचर्यया ॥ यज्जीव्यते तदाश्चर्यं
। समीपस्थितयानया ॥ ५५ ॥ अयशोजननावासो—ऽपकीर्तेः कुलमंदिरं ॥ दुर्गतौ गछतां पुंसां
। समा सोपानपंक्तिका ॥ ५६ ॥ सर्वाभ्याख्यानशस्यानां । क्षेत्रं दुःकर्मणां खनिः ॥ सत्यशौचबहि·
र्भूता । महासाहसकारिणी ॥ ५७ ॥ युग्मं ॥

लालिताः पालिताः पुत्राः । परपुत्रीप्रतारिताः ॥ तृणायापि न मन्यंते । मातरं पितरं गुरुं ॥ ॥ ५८ ॥ बंधुभिश्चित्तविश्लेषं । कुर्वंति कारयंति च ॥ क्लेशं विनापि कार्येण । कष्टंकष्टाः खलु स्त्रियः ॥ ५९ ॥ अकंदराः स्त्रियो व्याघ्रो । विना भोज्यं विसूचिकाः ॥ संचरंत्यः स्वपादाभ्यां । नार्यो ह्यार्यभयंकराः ॥ ६० ॥ शृंखलारहितो बंधो । मालिन्यं कर्दमं विना ॥ महासाहसशस्यानां । वनितावनिसन्निभा ॥ ६१ ॥ यथैव राजहंसेन । भ्रमरेण समं तथा ॥ पद्मिनी कुरुते संगं । निर्विवेका हि योषितः ॥ ६२ ॥ कुलीनेति विशुद्धेति । स्त्रीविश्रंभो न संगतः ॥ यतोऽमला दीपशिखा । कुरुते मलिनं गृहं ॥ ६३ ॥ एवं खेदसमापन्नः । कुमारो रत्नसुंदरः ॥ यक्षागारं समायातो । बहुकार्पटिकाकुलं ॥ ६४ ॥ भुक्त्वोदनं पयः पीत्वा । निरारंभो निराकुलः ॥ वेदिकैकां समाक्रम्य । निषण्णः क्षितिपांगजः ॥ ६५ ॥ नानादेशसमायाता । नानानेपथ्यधारिणः ॥ क्रोधिनो बहुरूपाश्च । नानाभाषाविचक्षणाः ॥ ६६ ॥ मदीयः सुंदरो देशो । मदीयः सुंदरो नृपः ॥ भव्यो भोज्यविधिस्तत्र । देशाचारोऽपि सुंदरः ॥ ६७ ॥ इत्यादि निष्फलं फल्गु । विवदंतः परस्परं ॥ दृष्टाः पृष्टाः कुमारेण । कौतुकाकुलचेतसा ॥ ६८ ॥ त्रिभिर्विशेषकं ॥

भो भो भिक्षाचरा नूनं । नानादेशविचारिणः ॥ किं दृष्टं किंचिदाश्चर्यं । कुत्रापि जगतीतले ॥ ६९ ॥ एकेनोक्तं मया दृष्टो । ह्यटता चैकपत्तने ॥ एकाक्ष एकपादश्च । विहस्तो विकृताकृतिः ॥ ७० ॥ तृणाहारो नरः कोऽपि । स्थानासनविवर्जितः ॥ न पुमान्न पशुः पूर्णो । नृपशुः प्रथितो जने ॥ ७१ ॥ ततो विस्मयमापन्नो । लग्नोऽहं तस्य मार्गतः ॥ कर्तुं तस्योपचारं च । प्रयछामि तृणादिकं ॥ ७२ ॥ अन्यदा गतचिंतोऽसौ । नरपशुरभाषत ॥ किमर्थं क्रियते भद्र । मम सेवा त्वया वद ॥ ७३ ॥ विस्मयो मे महाभाग । तव वृत्तांतवेदने ॥ किं त्वमेवंविधो जातः । पश्चाद्वा केनचित्कृतः ॥ ७४ ॥ तेनाभाणि समस्त्यत्र । विप्रो विश्वंभराभिधः ॥ आहिताग्निश्चतुर्वेदी । तत्पुत्रोऽहं जनार्दनः ॥ ७५ ॥ समिधानयनायाथ । पित्राहं प्रेषितो वने ॥ गछन् गतो महाटव्यां । दिग्मोहेन च मोहितः ॥ ७६ ॥ तत्राश्रमपदं दृष्टं । नानावृक्षसमाकुलं ॥ विहंगविततारावं । मृगयूथनिषेवितं ॥ ७७ ॥ गतोऽहं तत्र च दृष्टा । सहकारतरोरधः ॥ कुरंगकेसरानाम्नी । तापसी नवयौवना ॥ ७८ ॥ संभ्रमादंसतः स्रस्तं । वल्कलं करपल्लवैः ॥ आनयंती निजस्थाने । मधुरं भणिता मया ॥ ७९ ॥ अहं ब्रह्मसुतो भद्रे । आहिताग्निर्जनार्दनः ॥ दिग्मोहादिहायातः । का त्वं कस्या

यमाश्रमः ॥ ८० ॥ तस्या रूपं वयो वर्णं । विभ्रमं वीक्ष्य विस्मितः ॥ सर्वसीमंतिनीसीमा । वेधसे-
यं विनिर्मिता ॥ ८१ ॥ एतस्यां मन्मनो याति । धत्ते लज्जां कुलक्रमः ॥ एषापि सानुरागेव । ल-
क्ष्यते किं ममोचितं ॥ ८२ ॥ क्वेदं कर्म द्विजन्मनो मम हहा वैखानसी तापसी । रूपं रंजितलो-
कलोचनमहो चित्तस्य मे विक्रिया ॥ वेदार्थस्मृतिगोचराः क्व च गिरः क्वेयं मनोदुर्लता । चेत-
श्चिंतनमेव ते यदि परं धन्यः करं धास्यति ॥ ८३ ॥ लज्जे दूरतरं याहि । गच्छ गच्छ कुलक्रम ॥
शौच व्रज त्वमन्यत्र । अकालोऽयं भवादृशां ॥ ८४ ॥ कुरंगकेसरा त्राण—मत्राणस्य ममाधुना ॥
ततो मया समारब्धा । तया सार्धं रतक्रिया ॥ ८५ ॥ अत्रांतरे समायातः । शृंगवैरो वनांतरात् ॥
एतद् दृष्ट्वातिरुष्टेन । शापो दत्तस्तपस्विना ॥ ८६ ॥ हस्तपादशिरोभिश्च । लोष्टकल्पेन हि त्वया ॥
भ्रमितव्यं महाटव्या—मेष ते पापनिग्रहः ॥ ८७ ॥ सादरं पादलग्नेन । क्षामितोऽसौ मया मुनिः ॥
शेषतापसलोकैश्च । दृष्टांतेन प्रबोधितः ॥ ८८ ॥ किं वराकः करोत्येष । सद्विवेकविवर्जितः ॥ श-
क्रादयोऽपि नो शक्ताः । कर्तुमिंद्रियनिग्रहं ॥ ८९ ॥ कार्याकार्यं न जानंति । जीवा मन्मथपीडि-
ताः ॥ अपदेऽपि प्रवर्तंते । यतोऽवाचि विचक्षणैः ॥ ९० ॥ किमु कुवलयनेत्राः संति नो नाक-

नार्य—स्त्रिदशपतिरहल्यां तापसीं यत् सिषेवे ॥ हृदयतृणकुटीरे दीप्यमाने स्मराग्ना—वुचितमनु·
चितं वा वेत्ति कः पंडितोऽपि ॥ ९१ ॥ जराजीर्णः कायः श्रुतिविरहितं कर्णयुगलं । बलभ्रष्टा दृ·
ष्टिः पलितकलितं मस्तकमिदं ॥ तथाप्युच्चैर्बाणान् किरति सततं कामहतको । हहा कष्टं कष्टं कथ·
यत कथं मुक्तिरमुतः ॥ ९२ ॥ ततः किंचित्सतोषेण । शृंगवैरतपस्विना ॥ अर्धीकृत्य निजं शाप—
महमेवंविधः कृतः ॥ ९३ ॥ कुरंगकेसरा शप्ता । जाता नारी शिलामयी ॥ गौतमस्य पदे स्पृष्टे ।
पापे पापात्प्रमोक्ष्यसे ॥ ९४ ॥ यद् दृष्टं तन्मयादिष्ट—मन्यो ब्रूते मयापि च ॥ यद् दृष्टं तत शृ·
ण्वंतु । भवंतो विहितादराः ॥ ९५ ॥

उत्तरस्यां दिशि श्रेष्टं । समस्ति भुवि विश्रुतं ॥ पुरं पंचपुरं नाम । मेदिनीमुखमंडनं ॥९६॥
तत्र राजा महामल्लो । रणनिर्व्यूढसाहसः ॥ संपूर्णो भूरिकोशेन । चतुरंगबलान्वितः ॥ ९७ ॥ ते·
न धन्येन धर्माय । ज्ञानसत्रं प्रवर्तितं ॥ अध्यापको धृतस्तत्र । सविप्रश्छात्रपाठकः ॥ ९८ ॥ श·
तानि पंच छात्राणां । पेठुस्तत्र निरंतरं ॥ भोजनाछादनं तेषां । प्रदत्ते मेदिनीपतिः ॥ ९९ ॥ रा·
जपुत्रोऽपि पाठार्थं । गतस्तत्र सकौतुकः ॥ अध्यापककृतानुज्ञः । प्रारब्धः पठितुं कलाः ॥ २०० ॥

अथान्यस्मिन् दिने तस्य । पठतो गुरुसन्निधौ ॥ प्रछन्नैर्ज्ञायते तत्व—मिदं वाक्यमुपागतं ॥ १ ॥
गृहीतं तत्वबुध्या च । तद्वाक्यं नृपसूनुना ॥ अध्यापककरस्तत्र । गात्राणां सर्वदाप्ययं ॥ २ ॥ श-
तानि पंच पूलाना—मानेतव्यानि बाह्यतः ॥ विचारो नैव कर्तव्यो । गुरुवाक्यमिदं यतः ॥ ३ ॥
अध्यापकगृहे नास्ति । गात्राः किंचिच्चतुष्पदं ॥ एतां चरति कश्चारिं । ब्रूत मे कौतुकं महत् ॥४॥
कुमारो भणितश्छात्रै—र्न वयं तत्तिकारकाः ॥ त्वमिव परगेहेषु । किंत्वादिष्टविधायकाः ॥ ५ ॥ कु-
मारेणान्यदा रात्रौ । प्रछन्नेन निरीक्षितं ॥ अध्यापकजनी दृष्टा । गछंती गृहपृष्ठतः ॥ ६ ॥ विधाय
करजापं सा । कृत्वा प्रश्रवणं भुवि ॥ तस्योपरि लुठित्वा च । जाता सपदि रासभी ॥ ७ ॥ द्रुत-
मेव तया सर्वं । भक्षितास्तृणपूलकाः ॥ भूयोऽपि सहजा जाता । कुमारेण विलोकिता ॥ ८ ॥
कथितं शेषछात्राणां । यथेयं नैव भद्रिका ॥ आत्मा प्रत्यहमेतस्या । रक्षणीयः प्रयत्नतः ॥ ९ ॥
विकाले तृणपूलांश्च । लातुं छात्राः समागताः ॥ अरण्यां लब्धलक्षत्वाद् । गृहीत्वा पुनरागताः ॥
॥ १० ॥ अनभिज्ञः कुमारस्तु । भ्रमन् प्राप्तो महाटवीं ॥ क्षुत्क्षामकुक्षिना दृष्टो । राक्षसेन दुरात्मना
॥ ११ ॥ भणितस्तेन रे पृष्ठे । मामारोपय सत्वरं ॥ आरोपितः कुमारेण । पूर्वामनु चचाल सः ॥

॥ १२ ॥ महासरः समायातं । पुरतो गच्छतोस्तयोः ॥ कुमारः प्राह भो भद्र । सांप्रतं गम्यते कथं
॥ १३ ॥ तेनोक्तं जलमध्येन । गच्छ त्वं हि निराकुलः ॥ चित्ते भयं न कर्तव्यं । जानुदघ्नं जलं
यतः ॥ १४ ॥ कुमारो गंतुमारब्धः । प्रोवाचेदं निशाचरः ॥ पुरतो दृश्यते गर्ता । वामतो याहि
किंचन ॥ १५ ॥ स्तोकांतरं गते भूयो । जजल्प निशिसंचरः ॥ पंकश्च कंटकाश्चाग्रे । दक्षिणेनाथ
गम्यतां ॥ १६ ॥ शनैः शनैः समुत्तीर्य । सरसः स्थलमागतौ ॥ लग्नश्च हेलया गंतुं । कुमारो भी-
तमानसः ॥ १७ ॥ रक्षःपादतलं दृष्ट्वा । नवनीतादपि कोमलं ॥ पृष्टोऽसौ च कुमारेण । कथं ते
पादयोस्तलं ॥ १८ ॥ सुखस्पर्शं मनोहारि । हृद्यं कमलकोमलं ॥ स प्राह क्षालनं कृत्वा । याव-
न्नोपरतं जलं ॥ १९ ॥ तावद्भूमौ न मुंचामि । ममैष दृढनिश्चयः ॥ पुनः पृष्टः कुमारेण । राक्षसो
हृष्टचेतसा ॥ २० ॥ त्रिभिर्विशेषकं ॥ गर्तादिकं विजानाति । जलमध्ये कथं भवान् ॥ तेनोक्तं
न हि गच्छामि । भास्कराभिमुखं सदा ॥ २१ ॥ एवं क्रमेण गच्छंतौ । प्रश्नोत्तरपुरस्सरं ॥ शतशाखं
महाकायं । वटमेकमुपागतौ ॥ २२ ॥ उत्तीर्णः पृष्ठतो रक्षः । कृतं चरणधावनं ॥ प्राचींप्रति कुमा-
रोऽपि । प्रणष्टः सत्वरैः पदैः ॥ २३ ॥ राक्षसः क्रमशः पादौ । क्षालयित्वा जले गते ॥ धावितः प-

श्चिमैः पादैः—र्दृष्टिं रक्षन् दिवाकरात् ॥ २४ ॥ कुमारोऽपि गतो दूरं । प्रविष्टः शून्यपत्तने ॥ तत्रापि च मठे शून्ये । संप्राप्तश्च निशाचरः ॥ २५ ॥ रक्षसोक्तं समागच्छ । नागच्छामि तवांतिकं ॥ यद्यर्थी च तदागच्छ । त्वमेव हि ममांतिकं ॥ २६ ॥ तेनोक्तं त्र न शक्नोमि । समागंतुं तवांतिकं ॥ किमर्थं कथितं तेन । रहस्यं रक्षसापि च ॥ २७ ॥ येयं बलानके व्यक्ता । करोटी दृश्यते त्वया ॥ योगिनो मंत्रसिद्धस्य । सास्माकं दुरतिक्रमा ॥ २८ ॥ इदं तत्वं परिज्ञाय । गृहीता कुमरेण सा ॥ राक्षसाभिमुखं सोऽथ । गतो नष्टो निशाचरः ॥ २९ ॥ यैः पदैः स समायात—स्तैरेव चलितो द्रुतं ॥ कृतांजलिर्जगादेदं । राजपुत्रं निशाचरः ॥ ३० ॥

सौभाग्यसुंदरं नाम । रत्नमेतत्करे कुरु ॥ अनेन कंठलग्नेन । स्त्रीप्रियस्त्वं भविष्यसि ॥३१॥ त्रयाणामपि सिंधूनां । सारभूता मनोहरा ॥ मुक्तावली त्वया ग्राह्या । मदनुग्रहकाम्यया ॥ ३२ ॥ प्रयोजने समुत्पन्ने । स्मर्तव्योऽहं सदा त्वया ॥ संकोचो नैव कर्तव्यो । यतोऽहं तव किंकरः ॥३३॥ शृण्वन्नित्यादिवृत्तांतान् । कार्पटिकैः प्रजल्पितान् ॥ नीत्वा रात्रिं मठे तत्र । प्रगेऽसौ रत्नसुंदरः ॥ ॥ ३४ ॥ सविस्मयस्ततः स्थानात् । पुरिमतालपुरे गतः ॥ अत्रांतरे मृतस्तत्र । निस्संतानो नरेश्व-

रः ॥ ३५ ॥ युग्मं ॥ अभिषिक्तानि दिव्यानि । मंत्रिभिर्मंडलेश्वरैः ॥ हयेन हेषितं तत्र । शब्दितं गंधहस्तिना ॥ ३६ ॥ अभिषेकः कृतो लक्ष्म्या । वीजिते चारुचामरे ॥ शिरस्यस्य स्थितं छत्रं । स्वत एव महीयसः ॥ ३७ ॥ युग्मं ॥ गंधवारणमारूढः । प्रविष्टो नगरे नृपः ॥ सिंहासने निषण्णस्य । मंत्रिभिर्मण्डलेश्वरैः ॥ ३८ ॥ श्रेष्ठिभिः सार्थवाहैश्च । स्वीकृतं तस्य शासनं ॥ कृतेत्यखिलकर्तव्यो । विज्ञप्तो मंत्रिणा नृपः ॥ ३९ ॥ युग्मं ॥ यथा राज्यं तथा कन्यां । रत्नमालामिमां वरां ॥ स्वीकुरु लक्षणोपेतां । कांतकांचनसन्निभां ॥ ४० ॥ विमृश्य वेधसा चेयं । मन्ये युष्मत्कृते कृता ॥ इत्युक्तो नरनाथोऽसौ । कन्यां तां परिणीतवान् ॥ ४१ ॥ युग्मं ॥ एकातपत्रमत्रस्तः । पालयामास हेलया ॥ गुणानुरक्तनिःशेष—लोकमुध्धृतकंटकं ॥ ४२ ॥ संपूर्णभूरिभांडारं । चतुरंगबलान्वितं ॥ राज्यं भूमिपतिरेष । रत्नसुंदरसंज्ञकः ॥ ४३ ॥ महामल्लनरेंद्रस्य । मुक्तमालाभिधा सुता ॥ स्वयंवरा समायाता । मुदा तेन विवाहिता ॥ ४४ ॥ नानाविधनिधानानि । दूरं पश्यति पार्थिवः ॥ दिव्यांजनप्रभावेण । पूर्वपुण्यानुयोगतः ॥ ४५ ॥ नानापुराकरग्राम—पत्तनेषु समंततः ॥ मंदिरैर्मंदराकारै—र्मंडिता तेन मेदिनी ॥ ४६ ॥ कारिताश्च जिनेंद्राणां । तदंतः प्रतिमाः पराः ॥ तद्व्ययनी-

र्म·
का
१६

वीद्रव्यार्थी । ग्रामारामादि चिंतितं ॥ ४७ ॥ कल्याणकानि यात्राश्च । रथनिष्क्रमणादिकं ॥ साधु·
साधर्मिकाणां च । सत्कारं कुर्वता सदा ॥ ४८ ॥ प्रभावना कृता गुर्वी । शासनस्याखिले जने ॥
सम्यक्त्वं निर्मलं जातं । सिद्धिः करतले कृता ॥ ४९ ॥ युग्मं ॥ चत्वारोऽस्य सुता जाता । जात·
रूपसमप्रभाः ॥ भुक्ता निरुपमा भोगा । मानुष्यं सफलीकृतं ॥ ५० ॥ विहरंतः समायाताः । सूर·
यः श्रुतसागराः ॥ शांतिसागरसूरीणां । शिष्याः सर्वत्र विश्रुताः ॥ ५१ ॥ लतासुंदरउद्याने । स्थि·
ताः साधुजनोचिते ॥ प्राशुके वसुधादेशे । त्रसजीवविवर्जिते ॥ ५२ ॥ रत्नसुंदरभूपालो । वंदना·
र्थं समागतः ॥ वंदित्वा विधिना सूरिं । निषण्णो धरणीतले ॥ ५३ ॥ गंभीरमेघनादेन । प्रारब्धा
धर्मदेशना ॥ संवेगजननी हृद्या । भवनिर्वेदकारिणी ॥ ५४ ॥ श्रुत्वा च देशनां राजा । ह्यभिषि·
च्य निजे पदे ॥ रत्नशेखरनामानं । रत्नमालातनूद्भवं ॥ ५५ ॥ विस्मापयन् जनं सर्वं । त्यागभो·
गादिभिर्गुणैः ॥ श्रुतसागरसूरीणां । समीपं प्राप्य भूपतिः ॥ ५६ ॥ तृणवच्च परित्यज्य । वस्त्रा नर·
णभूषणं ॥ मुदा जग्राह प्रव्रज्यां । सर्वकर्मनिषूदनीं ॥ ५७ ॥ त्रिभिर्विशेषकं ॥ स्वीकृतोऽभिग्रह·
स्तेन । कर्मनिर्मूलनाकृते ॥ आजन्म हि मया षष्ठा—द्धोक्तव्यं कारणं विना ॥ ५८ ॥ तदपि नी·

रसं रूक्षं । विरसं स्नेहवर्जितं ॥ एषणादिविशुद्धं च । दोषमुक्तं समंततः ॥ ५९ ॥ युग्मं ॥ तस्यै· वाथ गुरोः पार्श्वे । सदा संविग्नमानसः ॥ पठिताशेषसूत्रार्थो । गीतार्थो गुरुनालयः ॥ ६० ॥ मो· क्षमार्गाहितस्वांतः । संप्राप्तपरमोदय· ॥ संयमैकरतो धीरः । सम्यग्दर्शननिर्मलः ॥ ६१ ॥ सम्यग्ज्ञा· नातियुक्तात्मा । सम्यक्चारित्रतत्परः ॥ अनुप्रेक्षाभिरात्मानं । भावयन्ननिशं मुदा ॥ ६१ ॥ संयम· स्योपकारासु । धर्मानुगुणभूमिषु ॥ मुनिभिर्विमलाचारैः । सहितासु निरंतरं ॥ ६२ ॥ विहरन् सर्व· जीवानां । दयावांश्च पिता यथा ॥ बाह्येन च सहांतःस्थं । वर्धयन् संततं तपः ॥ ६३ ॥ आवासतां महर्षीनां । परिप्राप्तः प्रशांतधीः ॥ दमश्रिया परिष्वक्तः । परिशुद्धसुदर्शनः ॥ ६४ ॥ उच्चैरुच्चैर्गु· णस्थान—सोपानारोहणाहतः ॥ सबाह्याभ्यंतरोदग्र—ग्रंथग्रंथिविवर्जितः ॥ ६५ ॥ श्रुतेन सकलं पश्यन् । कृत्याकृत्यं महामुनिः ॥ महासंवरसंपन्नः । सातयन् कर्मसंहतिं ॥ ६६ ॥ प्राणधारणमात्रार्थं । भुंजानः सूत्रदेशितं ॥ धर्मार्थं धारयन् प्राणान् । धर्मं मोक्षार्थमर्जयन् ॥ ६७ ॥ आनंदं भव्यलो· कानां । कुर्वन्नुत्तमदर्शनः ॥ चरितेनोपमाभूतो । यथोक्तश्च तपस्विनां ॥ ६८ ॥ चिरं विहृत्य मे· दिन्यां । तपसा क्षीणविग्रहः ॥ गुरुणा समनुज्ञात—श्चकारानशनक्रियां ॥ ६९ ॥ कुलकं ॥ चतु·

धर्हारसंहारां । देहसंहारहेतवे ॥ मासमानां महासत्वः । संनिषण्णः शिलातले ॥ ३० ॥ विधाया राधनां वीरो । निर्धूयौदारिकां तनूं ॥ पंचमीं गतिमापन्नो । यत्र यांति निराश्रवाः ॥ ३१ ॥ मत्वेदं सर्वदा सद्भिः । कार्यो धर्मे समुद्यमः ॥ सुलभाऽमलभा येन । मुक्तिरामा भवेत्करे ॥ ३२ ॥ यः करोति जिनेंद्राणां । सगंधैः पादपूजनं ॥ लभते सर्वतो लक्ष्मीं । यथासौ रत्नसुंदरः ॥ ३३ ॥ इति गंधपूजाकथानकं समाप्तं ॥ श्रीरस्तु ॥

गंधपूजाफलं प्रोक्तं । स्वर्गमोक्षफलप्रदं ॥ भावसारस्य धूपस्य । फलं संप्रति भण्यते ॥ १ ॥ समस्ति भारते वर्षे । निवासः सर्वसंपदां ॥ साधुसाधर्मिकाकीर्णो । देशो देशशिरोमणिः ॥ २ ॥ काशीजनपदो नाम । पुरी तत्र मनोरमा ॥ वाणारसी जने रूढा । धनधान्यसमाकुला ॥ ३ ॥ तत्रारिमत्तमातंग—कुंभनिर्भेदकेसरी ॥ साहसांकसमः शूरो । नरेंद्रो नरवाहनः ॥ ४ ॥ तत्रास्ति शंखचूडाख्यो । विप्रो भार्या च दुर्गिला ॥ दुर्भगा दुर्मुखा दुष्टा । निर्दया बद्धमुष्टिका ॥ ५ ॥ वर्जिता शंखचूडेन । दुर्गदौर्भाग्यपीडिता ॥ कामभोगपरित्यक्ता । कालं नयति दुःखिता ॥ ६ ॥ युग्मं ॥ शंखचूडलघुभ्राता । मधुसुंदरसंज्ञितः ॥ दानधर्मरता तस्य । गेहिनी मधुसुंदरी ॥ ७ ॥ एवं

सरति संसारे। मासक्षपणपारणे ॥ तपस्वी तपसा क्षीणो। दुर्गिलागृहमागतः ॥ ८ ॥ दृष्ट्वा साधुं सदाचार—मसदाचारया तया ॥ प्रयुक्तं कर्कशं वाक्यं। दुष्टं दुर्गतिकारणं ॥ ९ ॥ किं नास्ति कोऽप्युपायस्ते। मुंड निर्वाहकारणं ॥ सुखाय चाश्रितो येन। ह्युपायः परपीडकः ॥ १० ॥ श्रुत्वैतत्साधुदेहस्थो। गुणग्राही महोदरः ॥ यक्षस्तां वक्तुमारेभे। रुष्टः कर्कशया गिरा ॥ ११ ॥ यदि पापे न ते श्रद्धा। दातव्यं वा न विद्यते ॥ निषेधस्ते तदा श्रेया—न्नो कर्कशप्रजल्पितं ॥ १२ ॥ दौर्भाग्योपरि दौर्भाग्यं। दुर्गिले ते भविष्यति ॥ गंडांतःस्फोटिकातुल्यं। दुर्गतिं च गमिष्यति ॥ ॥ १३ ॥ एवमुक्त्वा गतः साधु—र्द्वितीयक्षपणे स्थितः ॥ भिक्षामटति नान्यत्र। विमुच्य प्रथमं गृहं ॥ १४ ॥ साप्युत्कटमहामोह—वेदोदयविवर्तिनी ॥ येन तेन समासक्ता। परं सर्वेण वर्जिता ॥ ॥ १५ ॥ न शीलं यमहीनत्वा—न्न कामा दुर्भगत्वतः ॥ न धर्मो वासनासाध्यः। स च तस्या न विद्यते ॥ १६ ॥ अन्यदा मिलितः कोऽपि। दुर्भगः कुलपुत्रकः ॥ तेनापि दूरतस्त्यक्ता। दौर्भाग्यप्रचुरत्वतः ॥ १७ ॥

अन्यदा च मृतो भर्ता। जाता रंभा निर्गला ॥ शिक्षिता मधुसुंदर्या। ततो जज्ञे समत्सरा

॥ १८ ॥ रुष्टया च विषं दत्वा । मारिता मधुसुंदरी ॥ जणितश्च सशृंगारं । तद्भर्ता मधुसुंदरः ॥
॥ १९ ॥ अमृतेनेव सिच्येते । नेत्रे दृष्टे त्वयि मम ॥ प्रतिपद्यस्व मां जार्यां । सफलां कुरु याचनां ॥ २० ॥ श्रुत्वेदं स्तंजिते तस्य । श्रोतसी कंपितं शिरः ॥ सोऽवग्जूयो न वक्तव्यं । त्वयेदृक्कं ममाग्रतः ॥ २१ ॥ ततो वैलक्ष्यमापन्ना । विदित्वा तस्य निश्चयं ॥ आत्मानमवटे क्षिप्त्वा । मृता सा दुर्गतिं गता ॥ २२ ॥ निघ्नंति निजजर्तारं । स्वं पुत्रं मारयंति च ॥ आत्मानमपि निघ्नंति । जीवा विरतिवर्जिताः ॥ २३ ॥ शंखचूडस्य जीवोऽपि । मध्यमगुणयोगतः ॥ मृत्वा वणिक्सुतो जातः । शुद्धबुद्धिर्गुणाश्रयः ॥ २४ ॥ रत्नचंद्रकृताजिख्यः । सदाचारपरायणः ॥ सद्बुद्धिश्च गुणाधारो । धार्मिको धर्मवत्प्रियः ॥ २५ ॥ दुर्गिलापि शुनीजावा—दुध्धृत्याजनि पुत्रिका ॥ वणिजो वसुदत्तस्य । नाम तस्या वसुंधरा ॥ २६ ॥ गृहीता रत्नचंद्रेण । कथंचिद्दैवयोगतः ॥ अहो धातुरकौशल्यं । विषममृते योजितं ॥ २७ ॥ दौर्जाग्यं पृष्टतो लग्नं । समायातं पुराकृतं ॥ अहो पृष्टिं न मुंचंति । कृतकर्माणि देहिनां ॥ २८ ॥ दृष्टा दहति नेत्राणि । स्पृष्टा करतलद्वयं ॥ जुक्ता दहति सर्वांगं । सुखदा दूरतः स्थिता ॥ २९ ॥ दुर्गृहावासदुःखेन । दग्धदेहस्य सर्वदा ॥ वणिजो रत्नचंद्र-

स्य । वव्रजुर्न्हूरिवासराः ॥ ३० ॥ गृहाणि कुकलत्रेण । दुःपुत्रेण कुलानि च ॥ धनं कुव्यवहारेण । नूनं नश्यति देहिनां ॥ ३१ ॥ कृणवंचनया वर्षं । दिनं भुक्ते कुभोजने ॥ कुभार्यया हतं जन्मं । हतो राजा कुमंत्रिभिः ॥ ३२ ॥ फलपुष्पकृते गेहा—न्निर्गतो नष्टमानसः ॥ दृष्टाश्च पुरलोकानां । कुर्वतो धर्मदेशनां ॥ ३३ ॥ परोपकरणे निष्टाः । करुणामृतसागराः ॥ गुणरत्नधरा धीरा । दमसारमुनीश्वराः ॥ ३४ ॥ युग्मं ॥ यथा जीवाः प्रबुध्यंते । विमुच्यंते च कर्मभिः ॥ संक्लिष्यंते यथा चैते । नरकं याति यथा तथा ॥ ३५ ॥ रत्नचंद्रोऽपि वंदित्वा । निषण्णः शुद्धभूतले ॥ धर्मं श्रोतुं समारब्धो । दुःखदुःखितमानसः ॥ ३६ ॥ यथा जिनाग्रतो धूपं । कर्पूरागुरुमिश्रितं ॥ भावतो यो दहत्युच्चै—स्तस्य श्रीः सर्वतोमुखी ॥ ३७ ॥ इत्यादिकथिते धर्मे । सूरिणातिप्रबंधतः ॥ तेनावसरमासाद्य । सूरिं नत्वा च भावतः ॥ ३८ ॥ प्रपन्नो रत्नचंद्रेण । सर्वज्ञो हृदि देवता ॥ सर्वज्ञभणितो धर्मो । गुरवस्तु सुसाधवः ॥ ३९ ॥ विरती रात्रिभोज्यस्य । मधुमद्यनिवर्तनं ॥ नवनीतस्य मांसस्य । मैथुनस्य विवर्जनं ॥ ४० ॥ दमसारं गुरुं नत्वा । रत्नचंद्रो निजे गृहे ॥ गतः करोति यत्नेन । प्रपन्नगुणपालनं ॥ ४१ ॥ ब्रह्मचर्यव्रतं श्रुत्वा । चुकोपास्मै वसुंधरा ॥ निभालयति छिद्रा-

णि । पापा मारणहेतवे ॥ ४२ ॥ अन्यदा मिलिता तस्या । वत्साख्या परिव्राजिका ॥ सन्मान्य सा ततोऽयाचि । तया चूर्णं क्षयंकरं ॥ ४३ ॥ वत्सयापि च तद्दत्त—मुपचारगृहीतया ॥ ततो व-त्सा महापापा । साशंका स्वमठे गता ॥ ४४ ॥ वसुंधरापि तन्मिश्र्य । भोजनेन दिने दिने ॥ ददाति रत्नचंद्रस्य । चूर्णं मारणहेतवे ॥ ४५ ॥ कालेन गछता जातः । क्षीणांगश्चूर्णदोषतः ॥ न शक्नोति समुछातुं । तत एवमचिंतयत ॥ ४६ ॥ को गुणोऽनेन देहेन । निर्गुणेनाहतेन मे ॥ चतुर्भेदस्य संहार—माहारस्य करोम्यहं ॥ ४७ ॥ विचिंत्यैवं ततो धर्मे । धनं दत्वा यथोचितं ॥ पूजयित्वा जिनाधीशं । सुगंधकुसुमादिभिः ॥ ४८ ॥ कर्पूरागुरुसन्मिश्रं । धूपं दग्ध्वा तदग्रतः ॥ रोमांचांचितसर्वांगो । बध्ध्वायुष्कं सुरेष्वयं ॥ ४९ ॥ विधायानशनं मृत्वा । देवभूयं गतिं गतः ॥ सौधर्मे देवसौख्यानि । भुक्त्वा चायुःक्षये च्युतः ॥ ५० ॥ त्रिभिर्विशेषकं ॥

बंगाजनपदे रम्य—रंगशालामहापुरि ॥ राजलक्षणसंपन्नो । राजा च रणकेसरी ॥ ५१ ॥ नरकांता प्रिया तस्य । सर्वदापि मनःप्रिया ॥ रणकेसरिभूपस्य । सर्वकार्येषु संमता ॥ ५२ ॥ तस्याः कुक्षौ समुत्पन्नः । शुभस्वप्नेन सूचितः ॥ समये स्थापितं नाम । पुत्रस्य नरकेसरी ॥ ५३ ॥ समये

चाप्रयत्नेन । ग्राहितः सकलाः कलाः ॥ यौवने च समारूढो । व्यूढोरस्को महाभुजः ॥ ५४ ॥ प्र-
जाऽवनकृते धात्रा । निर्मितः सारपुद्गलैः ॥ क्षात्रो धर्म इवाभाति । सुंदराकृतिविग्रहः ॥ ५५ ॥ म-
लयसुंदराभिख्यो । वयस्योऽस्य सतां वरः ॥ हृदयमिव कुमारस्य । द्वितीयं वेधसा कृतं ॥ ५६ ॥ हे-
मपुरादथायातो । मेघनादो नृपांगजः ॥ धृतो दिनानि तत्रैव । कियंति नरकांतया ॥ ५७ ॥ प्र-
णम्य भणिता तेन । नरकांता कृतादरं ॥ मातर्मातुलसंदिष्टं । कथयामि तवाग्रतः ॥ ५८ ॥ मातु
लेन समादिष्टं । कुमारेण ममांतिके ॥ दिनानि कतिचिन्नून—मागंतव्यं यथा तथा ॥ ५९ ॥
अदर्शने दृढं प्रेम । नश्यत्येव शरीरिणां ॥ कालेन गच्छता वत्स । यथा हस्तपुटाज्जलं ॥ ६० ॥ भ-
णितो मातृपितृभ्यां । भवंतं मातुलो दृढं ॥ समाह्वयति तद्वत्स । विलंबं गच्छ मा कुरु ॥ ६१ ॥ म-
लयसुंदराढ्येन । मेघनादेन संयुतः ॥ प्रधानं रथमारुह्य । गतो हेमपुरंप्रति ॥ ६२ ॥ कतिभिश्च
दिनैस्तत्र । संप्राप्तो हेमपत्तने ॥ हेमसुंदरभूपेन । सानंदमवलोकितः ॥ ६३ ॥ तत्रैव तिष्ठतस्तस्य ।
बहुमानपुरस्सरं ॥ नानाविधविनोदेन । क्रीडतो यांति वासराः ॥ ६४ ॥ अन्यदा च महीपीठे । म-
धुर्मन्मथबांधवः ॥ जनितानेकधानंदो । जजृंभे जगतीतले ॥ ६५ ॥ मधुचंद्रसखः कामः । कदर्थि-

तज्जगत्त्रयः ॥ तेजो बहुतरं प्राप । हविषेव हुताशनः ॥ ६६ ॥ केवलोऽपि बली कामो । दुर्जयः सर्वदेहिनां ॥ किं पुनर्जनितोन्मादो । मधुचंद्रकृतसन्निधिः ॥ ६७ ॥ चलद्भिः पल्लवैर्यत्र । मलयानिलकंपितैः ॥ मधुराजागमे तुष्टा । नृत्यंतीव महीरुहाः ॥ ६८ ॥ गंधलुब्धालिशब्देन । वृक्षकक्षेषु सर्पता ॥ संगीतमिव कुर्वंति । तरवो मुदिताशयाः ॥ ६९ ॥ कोकिलानां निनादेन । स्त्रीमानग्रंथिभेदिना ॥ सितकुसुमैर्हसंतीव । वसंते वनराजयः ॥ ७० ॥ पुष्पकालेऽपि वक्त्रत्वं । श्यामत्वं यत्र का भवेत् ॥ फलाशा किंशुकस्तेन । मुक्तः पत्रैरनागतं ॥ ७१ ॥ पुष्पितान् फलितान् दृष्ट्वा । सर्वतोऽपि वनस्पतीन् ॥ संजाता इति कालास्या । दुर्जना इव किंशुकाः ॥ ७२ ॥ किंशुकं पुष्पितं दृष्ट्वा । देशांतरगतैरपि ॥ स्मर्यंते वल्लभाश्चित्ते । नवरंगविराजिताः ॥ ७३ ॥ निर्झरांभांसि मध्याभिः । शाखाभिर्यत्र शाखिनः ॥ जलांजलिं प्रयच्छंति । पथिकानां गतायुषां ॥ ७४ ॥ किंशुकैर्नवरंगाढ्यै—र्मदनफलहस्तका ॥ वसंतललना यत्र । रेजे नववधूरिव ॥ ७५ ॥ कोमलैर्गीतवादित्रै—र्मज्जनैश्च मनोहरैः ॥ स्वच्छचंदनवस्त्रैश्च । शृंगारैर्वरयोषितां ॥ ७६ ॥ कलकोकिलनादेन । दोलांदोलेन लीलया ॥ जलयंत्रैर्विचित्रैश्च । देवालयमहोत्सवैः ॥ ७७ ॥

पाम्लागंधमाघ्राय । श्रुत्वा कोकिलकूजितं ॥ कांतैकशरणो यत्र । क्रियते कामिनीजनः ॥
॥ ७८ ॥ रम्यहर्म्यतलस्थेन । कुमारेण विलोकितः ॥ विनिर्यन्न राजमार्गेण । सुनेपथ्योऽबलाजनः
॥ ७९ ॥ मेघनादः कुमारेण । पृष्टः कोऽयं महोत्सवः ॥ येनैष पिंडितो याति । स्त्रीजनो मम क-
थ्यतां ॥ ८० ॥ तेनाख्याणि कुमाराद्य । कामदेवमहोत्सवः ॥ वर्तते सर्वलोकानां । मनःक्षोभवि-
धायकः ॥ ८१ ॥ तत्रायं स्त्रीजनः सर्वो । वस्त्राभरणभूषितः ॥ गृहीतपुष्पधूपादिः । कामाराधनहेत-
वे ॥ ८२ ॥ चलितो गम्यते तत्र । यदि तेऽस्ति कुतूहलं ॥ प्रतिपन्नं कुमारेण । गतास्तत्र त्रयोऽ-
पि ते ॥ ८३ ॥ युग्मं ॥ नत्वा ते कामदेवाय । शेषामादाय शीर्षतः ॥ परिभ्रमितुमारब्धा । उद्या-
ने कामसुंदरे ॥ ८४ ॥ नवयौवनमारूढा । सखेदा शून्यमानसा ॥ दृष्टैका कन्यका कांता । सह-
कारतरोरधः ॥ ८५ ॥ एकाकिनी सशोका च । सर्वावयवसुंदरी ॥ तनूदरी विशालाक्षी । लावण्या-
मृतदीर्घिका ॥ ८६ ॥ बकुलामोदनिःश्वासा । पक्वबिंबसमाधरा ॥ मुक्तपद्मालया देवी । पद्मेव वन-
मागता ॥ ८७ ॥ भूरिसंभ्रमसंजात—निःश्वासोत्कंपितस्तनी ॥ लावण्येनैव लिंपंती । समस्तां का-
ननावनिं ॥ ८८ ॥ पुष्पोपहारं कुर्वाणा । दृष्टिक्षेपैर्मुहुर्मुहुः ॥ निःश्वासाकृष्टमत्तालि—कुलव्याकु-

सौकुमार्यादिवोदारा—च्छ्लाघ्यतां यांती निर्जरं ॥ यौवनेन कृताश्लेषा । सी·
लिताननां ॥ ८९ ॥ सौकुमार्यादिवोदारा—च्छ्लाघ्यतां यांती निर्जरं ॥ कृतैषा वेधसा कर्तु-
मा निःशेषयोषितां ॥ ९० ॥ गृहीत्वेवाखिलस्त्रीणां । लावण्यं जगदद्भुतं ॥
मद्भुतं सार्वलौकिकं ॥ ९१ ॥ कुलकं ॥

हतश्चोन्मूलितालान—स्तंभो मदजलाविलः ॥ पट्टहस्ती नरेंद्रस्य । क्रोधांधीकृतलोचनः ॥
॥ ९२ ॥ त्रोटयित्वा च वस्त्रादि । विधूयाधोरणं तथा ॥ पातयित्वा महीपीठे । मारयित्वातिरोषतः
॥ ९३ ॥ मत्तो गुलगुलाराव—पूरिताखिलदिङ्मुखः ॥ भंजन्नापणवेश्मानि । समुध्धृतकरः करी ॥
॥ ९४ ॥ विलोक्य जनसंचारं । श्रुत्वा तूर्यस्य निःस्वनं ॥ कामसुंदरमुद्यान—मनुवव्राज वेगतः ॥
॥ ९५ ॥ चतुर्भिः कलापकं ॥ तुरंगमगतैः पुंभि—र्धावद्भिश्च पुरस्थितैः ॥ हस्त्यागच्छति भो लो·
का । यात यात दिशोदिशं ॥ ९६ ॥ एतत् श्रुत्वा जनः सर्वः । प्राणानादाय सत्वरं ॥ कोऽपि का·
पि गतो यस्मा—ज्जीवानां जीवितं प्रियं ॥ ९७ ॥ सापि बाला भयोद्भ्रांता । प्रविष्टा वंशगह्वरे ॥
वेपमानसमस्तांगा । लतेव पवनाहता ॥ ९८ ॥ मेघनादो गतः क्वापि । नष्टो मलयसुंदरः ॥ ए·
काकी पर्यटन् प्राप्तः । कुमारो नरकेसरी ॥ ९९ ॥ यत्र सा भयसंत्रस्ता । हरिणीलोललोचना ॥

वंशगह्वरमध्यस्था । संलीनास्ते कुमारिका ॥ १०० ॥ युग्मं ॥ विलोकिता कुमारेण । कुमारोऽपि त·
या दृशा ॥ दृष्टः सानंदया जाल—स्तयोर्दृष्टिसमागमः ॥ १ ॥ तद्वचनात्कुमारोऽपि । प्रविष्टो वंश·
गह्वरे ॥ ससंभ्रमा सशृंगारा । संप्रवृत्ता मिथः कथा ॥ २ ॥ क्षणांतरेण विश्वस्ता । धृताभिमुखलो·
चना ॥ आविःकृतानुरागा च । पृष्टा सा तेन भामिनी ॥ ३ ॥ त्वं कस्यासि सुता बाले । सशोका
केन हेतुना ॥ एकाकिनी कथं जाता । यूथभ्रष्टा यथा मृगी ॥४॥ किंवा भजंति ते नाम । वर्णाः
पूर्णमनोरथे ॥ अदृष्टेऽपि सतां प्रीति—र्जायते सज्जने जने ॥ ५ ॥ तस्मै सा कथयामास । सा·
श्रुगद्गदया गिरा ॥ दधत्यात्यंतमाधुर्यं । चेतश्चोरणलक्षया ॥ ६ ॥ उदन्वता परिक्षिप्तः । सारश्री·
खंडमंडितः ॥ मरिचोद्भ्रांतहारीतो । मलयोऽस्ति महीधरः ॥ ७ ॥ पुरं मलयसारं हि । तत्र सुरपुर·
प्रभं ॥ मलयकेतुर्नृपाल—स्तत्पालयति हेलया ॥ ८ ॥ लीलयैव धराभार—धरणोध्धुरकंधरः ॥
सर्वावरोधनारीणां । मुख्या लक्ष्मीरिवोत्तमा ॥ ९ ॥ सर्वांगसुंदराकारा । नाम्ना मलयसुंदरी ॥ प्रति·
बिंबमिव स्त्रीणां । वेधसा सा विनिर्मिता ॥ १० ॥ युग्मं ॥ तदंगतः समुत्पन्ना । नाम्नाहं जयसुंदरी
॥ तत्रैव समये सिद्धाः । पितुर्व्युद्भितपार्थिवाः ॥ ११ ॥

अन्यदा प्रश्नितस्तेन । मां समुद्दिश्य केवली ॥ भगवन् जयसुंदर्याः । कोऽत्र भर्ता भविष्यति ॥ १२ ॥ स प्राह भुवनानंदी । रणकेसरिनंदनः ॥ उदारचरितो वीरो । नाम्ना च नरकेसरी ॥ १३ ॥ राकाचंद्र इवाशेष—शुभशुभ्रकलालयः ॥ रूपातिशयसंपन्नः । सोऽस्या भर्ता भविष्यति ॥ १४ ॥ युग्मं ॥ ततः सुखेन तिष्ठंत्या । गतः कालः कियानपि ॥ अथ हर्म्यतले सुप्ता । योगावर्तकयोगिना ॥ १५ ॥ सहसैव समानीता । मंत्रेणाकृष्य सत्वरं ॥ श्मशानेऽतिमहारौद्रे । भूतप्रेतसमाकुले ॥ १६ ॥ युग्मं ॥ तत्र भूमिगृहे मुक्त्वा । मां गतोऽसौ दुराशयः ॥ योगिन्यपि गता क्वापि । या मुक्ता मम रक्षिका ॥ १७ ॥ विजनं वीक्ष्य नष्टाहं । श्रुत्वा बहुजनारवं ॥ शनैः शनैः समायाता । प्रविष्टा काममंदिरे ॥ १८ ॥ प्रणम्य मदनं द्वारि । निर्गता शून्यमानसा ॥ क्षणमेकं स्थिता याव—त्सहकारतरोरधः ॥ १९ ॥ विषमध्येऽमृताकारं । तावद्दृष्टं तवाननं ॥ ततो हस्तिभयाद्भीता । द्रुतमत्र समागता ॥ २० ॥ कथितो यस्त्वया पृष्टः । स्ववृत्तांतो मयाखिलः ॥ सांप्रतं श्रोतुमिच्छामि । त्वदीयमपि मूलतः ॥ २१ ॥ कुमारेणापि निःशेषो । मातृपितृपुरादिकः ॥ कथितो निजवृत्तांतः । सानंदाजनि कन्यका ॥ २२ ॥ अहोऽनुकूलमाचीर्णं । योगावर्तकयोगिना ॥ कारि-

तोऽतर्कितो येन । त्वया सह समागमः ॥ २३ ॥ आपदः संपदश्चैव । समीपस्थाः शरीरिणां ॥ आ·
पदपि च येनैषा । मे जाता संपदुत्तमा ॥ २४ ॥ कुमार कुरु मे पाणि—ग्रहणं कामकानने ॥ इ·
हैव किं विचारेण । दीर्घसूत्री विनश्यति ॥ २५ ॥ हुताशं साक्षिणं कृत्वा । गांधर्वेन विवाहिता ॥
भुक्ता सर्वांगसंस्पर्शं । जाता सर्वांगनिर्वृतिः ॥ २६ ॥ उपहत्य जनं कंचि—त्कंचिद्भंक्त्वा ल·
तागृहान् ॥ इतस्ततः परिभ्रम्य । मोटयित्वाऽवनीरुहः ॥ २७ ॥ तुरंगिभिः समानीतो । वेणुग्राहैः
कदर्थितः ॥ आधोरणवशं जातो । यातो पुरवरे गजः ॥ २८ ॥ युग्मं ॥ यथास्थानं गतो लोको ।
विजनं कामकाननं ॥ सुवसं दुर्वसं धत्ते । दुर्वसं सुवसं सुधीः ॥ २९ ॥ यतः—अघटितघटितानि
घटयति । सुघटितघटितानि जर्जरीकुरुते ॥ विधिरेव तानि घटयति । यानि पुमान्नैव चिंतयति ॥
॥ ३० ॥ द्वीपादन्यस्मादपि । मध्यादपि जलनिधेर्दिशोऽप्यंतात् ॥ आनीय झटिति घटयति । वि·
धिरभिमतमभिमुखीभूतः ॥ ३१ ॥ गह्वराच्च कुमारोऽपि । खड्गहस्तो विनिर्गतः ॥ पश्चान्निर्गता कां·
ता । सत्कांता जयसुंदरी ॥ ३२ ॥ पतिसंपर्कसंजातां । बिभ्राणा वपुषः श्रियं ॥ कंकणं च विवाहा·
ख्यं । दधती वामपाणिना ॥ ३३ ॥ शिरस्याहितसत्पुष्पा । कर्णविन्यस्तपल्लवा ॥ वनश्रीरिव चैतस्य

। पृष्ठौ लग्ना चकास्ति सा ॥ ३४ ॥ अत्रांतरे समायातः । क्रोधांधीकृतलोचनः ॥ कंपयन् कर्त्तिकां रौद्रां । योगावर्तकयोगिकः ॥ ३५ ॥ आः पापे वंचयित्वा मां । कथमत्र समागता ॥ पिबत्यतोऽद्य ते कोष्णं । शोणितं मम कार्त्तिका ॥ ३६ ॥ कुमारेणापि निस्त्रिंशः । कोशादाकृष्य लीलया ॥ कृतः करे करैर्ज्ञानो—दुर्दर्शश्चर्मचक्षुषां ॥ ३७ ॥ एवंविधं न ते युक्तं । वक्तुं च योगिनः सतः ॥ न जल्पंत्यपराधेऽपि । संतश्च कर्कशां गिरं ॥ ३८ ॥ रे पाप प्रथमं तावत् । पिबामि तव शोणितं ॥ पश्चादस्याः करिष्यामि । नवखंडं शरीरकं ॥ ३९ ॥ इत्युक्त्वा धावितो योगी । वेगतः कुमरंप्रति ॥ वाहिता कर्त्तिका तेन । वंचिता कुमरेण सा ॥ ४० ॥ हतश्च दक्षिणे बाहौ । कुमारेणापि योगिकः ॥ दृढमुष्टिप्रहारेण । पतिता कर्त्तिका भुवि ॥ ४१ ॥ भूयोऽपि मुष्टिना पृष्ठौ । प्रहतः पतितो भुवि ॥ विलक्षोऽलब्धलक्षश्च । निरूपयन् दिशो दिशः ॥ ४२ ॥ योग्युक्तोऽथ कुमारेण । प्रोत्तिष्ठ कुरु पौरुषं ॥ पतिता न विराजंते । रणभूमौ महौजसः ॥ ४३ ॥ भणितश्चलचित्तेन । योगिना नरकेसरी ॥ यदहं वच्मि तत्कार्यं । कृतं पौरुषकर्मणा ॥ ४४ ॥ अस्ति मे गारुडं दिव्यं । त्रसेतरविषापहं ॥ द्वितीयमंजनं श्रेष्ठं । तिरोधाननिबंधनं ॥ ४५ ॥ गृहाणैतद् द्वयं येन । जायते मम नि·

वृतिः ॥ प्रतिपन्नं कुमारेण । गृहीतं विधिपूर्वकं ॥ ४६ ॥ सुता मलयकेतोश्च । लक्षणोपेतविग्रहा ॥ सुसाकृष्य मयानीता । चंडिकाबलिहेतवे ॥ ४७ ॥ पूर्वसेवा कृता ताव—दुत्तरा चावतिष्टते ॥ तत्र कन्याबलिं दत्वा । साधयिष्यामि यक्षिणीं ॥ ४८ ॥ स्थितमेतद्यथा चैषा । प्राप्नोति पितृमंदिरे ॥ तथा त्वया च कर्तव्यं । नूयो नवतु दर्शनं ॥ ४९ ॥ गतो योगी कुमारोऽपि । कामदेवगृहे गतः ॥ दृष्टोऽसौ मेघनादेन । पृष्टश्च क्वोषितो नवान् ॥ ५० ॥

तेनापि कथितं सर्वं । यथा वृत्तं तथाखिलं ॥ विहस्य नणितं तेन । तुष्टस्ते मित्र मन्मथः ॥ ५१ ॥ मुहूर्तमेकमत्रैव । स्थातव्यं स्थिरबुद्धिना ॥ प्रतिपन्नं कुमारेण । मेघनादो गतो गृहे ॥ ५२ ॥ प्रोक्तः सर्वोऽपि वृत्तांतः । प्रहृष्टो हेमसुंदरः ॥ चलितः सर्वसामग्र्या । संप्राप्तः काममंदिरे ॥ ५३ ॥ गंधवारणमारोप्य । सशृंगारं वधूवरं ॥ प्रविवेश पुरं राजा । कृतशोनं समंततः ॥ ५४ ॥ संपादितेतिकर्तव्यः । स्वयं राज्ञा च सत्कृतः ॥ वस्त्रैश्च नूषणाद्यैश्च । कालं नयति नूपनूः ॥ ५५ ॥ अन्यदा ज्ञातवृत्तांतो । मलयकेतुर्नूमिपः ॥ तुतोष हृदये बाढं । माता मलयसुंदरी ॥ ५६ ॥ प्रोक्तो मलयसुंदर्या । मलयकेतुर्नूमिपः ॥ शोननं यदि जामाता । सहायात्यत्र वत्सया ॥ ५७ ॥ प्रिये

खेदो न कर्तव्यः । करोमि तव वांछितं ॥ इत्युक्त्वा प्रेषिता भृत्याः । सोपदा हेमपत्तने ॥ ५८ ॥ तेऽपि हेमपुरं प्राप्य । प्रतीहारनिवेदिताः ॥ सोपायना निरुत्सेकाः । सभामंडपमागताः ॥ ५९ ॥ अष्टादशशरं हारं । हरहाससमप्रभं ॥ सारश्रीखंडखंडानि । विमुच्य पुरतो नताः ॥ ६० ॥ युग्मं ॥ निषण्णा दर्शितस्थाने । दृष्टाः सानंदया दृशा ॥ पृष्टाश्च क्षेमं सर्वत्र । मलयकेतुभूभुजः ॥६१॥ क्षेमे च कथिते प्रोक्ताः । किमागमनकारणं ॥ ततस्तैरर्पितो लेखः । संदिष्टं कथितं गिरा ॥ ६२ ॥ मलयकेतुभूपेन । भूयोभूयः कृतादरं ॥ संदिष्टं च तथा कार्यं । कुमारो नरकेसरी ॥ ६३ ॥ यथा शीघ्रं समायाति । मलये सह वत्सया ॥ एष संदेशकः स्वामिन् । लेखार्थोऽप्ययमेव च ॥ ६४ ॥ युग्मं ॥ ततः संभूषिता राज्ञा । वस्त्राभरणभूषणैः ॥ प्रतिप्राभृतहस्ताश्च । ते शुभेऽह्नि विसर्जिताः ॥ ६५ ॥ ससहायः कुमारोऽपि । समये सह कांतया ॥ गछंस्तत्र नृपेणोक्तः । पंथानः संतु ते शिवाः ॥ ६६ ॥

द्रोणीभिर्जलमुत्तीर्य । गतास्ते स्तोकवासरैः ॥ समागात्सन्मुखं तत्र । मलयकेतुर्भूपतिः ॥६७॥ प्रवेशितो मुदा तेन । कृत्वा पुरमहोत्सवं ॥ श्वश्रूश्वशुरमानम्य । कुमारो नरकेसरी ॥ ६८ ॥ निष

सः प्रश्नितो राज्ञा । सर्वत्र कुशलं तव ॥ पृष्टव्यमेतदेवेह । चले यौवनजीविते ॥ ६९ ॥ युग्मं ॥
प्रणम्य पितृपादेभ्यः । सस्नेहं जयसुंदरी ॥ मातुः पादग्रहं कृत्वा । तदंके निषसाद सा ॥ ७० ॥
सानंदा सविषादा च । जगौ मलयसुंदरी ॥ वत्से संक्षेपतः सर्व—मामूलाच्चरितं निजं ॥ ७१ ॥
निवेदय यथा वृत्तं । कौतुकं मम वर्तते ॥ तथापि कथितं सर्वं । यथावृत्तं तथादितः ॥ ७२ ॥ यु-
ग्मं ॥ एतत् श्रुत्वा जगादेदं । माता मलयसुंदरी ॥ यत्र दृष्टो विवाहस्ते । सखेदं तेन मानसं ॥
॥ ७३ ॥ सुपात्रवरलाभेन । मुमुदे च मनो मम ॥ इत्युक्त्वा विरता राज्ञी । प्रमोदभरमेदुरा ॥
॥ ७४ ॥ कृताशेषोपचारस्य । राज्ञा मलयकेतुना ॥ पुत्रादभ्यधिकं तत्र । दृश्यमानस्य सर्वदा ॥
॥ ७५ ॥ वव्रजुर्वासरास्तस्य । सुखितस्य प्रमोदतः ॥ मनोवांछितवस्तूनां । तत्क्षणादेव योगतः ॥
॥ ७६ ॥ मृगनाभिसमुत्पन्न—जात्येन मृगनाभिना ॥ वासिता शेषदिक्चक्रः । सत्पुष्पकृतशेखरः
॥ ७७ ॥ कर्पूरपूरसन्मिश्र—सारश्रीखंडचर्चितः ॥ मृगनाभेः कर्दमेन । कपोले कृतमंडनः ॥७८ ॥
स्थार्द्रकर्पूरहारेण । विराजितशिरोवरः ॥ हारिहीरकसंकीर्ण—श्रवणासक्तकुंडलः ॥ ७९ ॥ निःश्वा-
सोह्यमहामूल्य—सद्वस्त्रावृतविग्रहः ॥ तांबूलबीटकाशून्य—करः कृतकुतूहलः ॥ ८० ॥ ललाटपट्ट-

विन्यस्त—तिलकेन विराजितः ॥ आरामोद्यानरम्येषु । काननेषु वनेषु च ॥ ८१ ॥ सरसीषु तडागेषु । निर्झरेषु नदीषु च ॥ लतामंडपगुल्मेषु । द्राक्षामंडपभूमिषु ॥ ८२ ॥ निकुंजेषु मनोज्ञेषु । नानापुष्पसुगंधिषु ॥ नागवल्लीमनोज्ञेषु । सोऽक्रीडत्सह कांतया ॥ ८३ ॥ कुलकं ॥ अनंगप्रसरं तस्य । क्रीडतः कामभूमिषु ॥ संपूर्णाशेषकामस्य । मासैरपि दिनायितं ॥ ८४ ॥ प्रिये स्थानं प्रमोदानां । मलयो हि मया श्रुतः ॥ तेनादृष्टेन नो किंचि—न्मया दृष्टं कुतूहलं ॥ ८४ ॥ तयापि कथितं मातु—र्मात्रा नृपे निवेदितं ॥ तेनापि कारिता सर्वा । सामग्री यानहेतवे ॥ ८५ ॥ विशिष्टखाद्यभोज्यानि । यदन्यदपि सुंदरं ॥ तदुपयोगि योग्यं च । तत्सर्वं प्रगुणीकृतं ॥ ८६ ॥ सनृपः सकलत्रश्च । बहुलोकगणान्वितः ॥ कुमारो नगमारूढः । कैलाशमिव शंकरः ॥ ८७ ॥ तत्र तालवने रम्ये । चंदनामोदसुंदरे ॥ एलागंधभृतघ्राणे । करनिर्झरहारिणी ॥ ८८ ॥ कृतो वासः कुमारेण । दृष्टैका हारहारिणि ॥ श्रवणासक्तवज्रेंद्र—कुंडलोद्योतितानना ॥ ८९ ॥ अष्टादशाब्ददेशीया । कांतकार्तस्वरप्रभा ॥ समुत्तीर्य नभोमार्गा—द्दक्षिणां दिशमाश्रिता ॥ ९० ॥ त्रिभिर्विशेषकं ॥ कैषा कैषेति जल्पंतो । धाविताः पृष्टतो जनाः ॥ सापि दुर्जनमैत्रीव । क्षणादेव न दृश्यते ॥

॥ ९१ ॥ तथैव वलितो लोको । न च सिद्धं प्रयोजनं ॥ कुमारश्चिंतयामास । नूनमेतत्कुतूहलं ॥
॥ ९२ ॥ भुक्त्वा विश्रम्य सर्वत्र । विलोकितकुतूहलः ॥ भूयोऽप्यावासमागम्य । सुष्वाप नृपनंदनः
॥ ९३ ॥ निशीथे खङ्गमादाय । निर्गतोऽलक्षितो जनैः ॥ एकाक्येव महासत्व—श्चचाल नरके·
सरी ॥ ९४ ॥ दक्षिणां दिशमाश्रित्य । परिसर्पन्नितस्ततः ॥ गतो नैरृतकोणस्थां । वनराजिविरा·
जितां ॥ ९५ ॥ चंद्रसूर्यकरागम्यां । रौद्रामतिबिभीषणां ॥ कृतांतवदनाकारां । गुहां भीममुखाभिधां
॥ ९६ ॥ मंत्रसाधकसाक्षेप—हुंकारवचनैस्तथा ॥ पुष्पधूपादिगंधैश्च । ससत्वेति विनिश्चितां ॥९७॥
त्रिभिर्विशेषकं ॥ प्रधानपद्मरागेण । तमःस्तोमविघातिना ॥ प्रकाशितगुहाद्वारा । दृष्टो विद्याधरीसु·
तः ॥ ९८ ॥ कुमारेणापि संजात—विस्मयेन विलोकितः ॥ कोऽयं युवा गुहामध्या—त्केसरीव
विनिर्गतः ॥ ९९ ॥ नितांतसुकुमारांगो । महौजा नव्ययौवनः ॥ अत्यंतकृशसर्वांग—स्तपःकारी
सुसाधुवत् ॥ २०० ॥ युग्मं ॥

संभ्रांतं कुमरं दृष्ट्वा । समागत्य कृतादरः ॥ पप्रच्छ स्वागतं भ्रातः । कुतस्तेऽत्र समागमः ॥ १ ॥
कुमरेण कथितं किंचि—त्किंचित्तेन निवेदितं ॥ एवं परस्परालापै—स्तयोस्तत्रावतिष्ठतोः ॥ २ ॥

कामसंरोहिणी नाम । तरुणी तत्र चागता ॥ दृष्टेति जातसंकेत—कुमारेण निरीक्षिता ॥ ३ ॥
सीमंतके च विन्यस्त—पद्मरागमणित्विषा ॥ सर्वतोऽपि विसारिण्या । नाशयंती निशातमः ॥ ४ ॥
त्रिभिर्विशेषकं ॥ ततो विद्याधरः प्राह । कुमार कुरु मे वचः ॥ पिबेदं सुंदरं दुग्धं । हृद्यं मदुपरो
धतः ॥ ५ ॥ विद्याकल्पो महाभाग । अर्धरात्रे तृतीयके ॥ पीयतेऽनन्यगव्यस्य । पयःसंपुटकत्रयं ॥
॥ ६ ॥ अतिथिस्त्वं समुत्तिष्ठ । त्वयेदं सह पीयते ॥ कुमारः प्राह भुंक्ष्व त्वं । रुचिर्मे नास्ति सांप्र-
तं ॥ ७ ॥ गत्वैकांते ततः सोऽपि । पयः पीत्वा समागतः ॥ निषण्णः कुमरस्यांते । बभाणेदं स्फुटा-
क्षरैः ॥ ८ ॥ प्रभाते बिल्वलक्षेण । तर्पणीयो हुताशनः ॥ यदि सत्वं तदा सिद्धि—र्निःसत्वस्य वृ-
था श्रमः ॥ ९ ॥ नररत्नमिवाभाति । भवांश्च परमाकृतिः ॥ समस्ति मे मनोवांछा । परं वक्तुं न
शक्यते ॥ १० ॥ प्रहराष्टं महाभाग । प्रभाते यदि स्थीयते ॥ ममांतिके तदा सर्वं । सिद्धं मन्या-
महे वयं ॥ ११ ॥ किमेभिश्चंचलैः प्राणैः । कर्तव्यं कुरु वांछितं ॥ प्रातरेव भवत्पार्श्वे । मां जानी-
हि समागतं ॥ १२ ॥ इत्युक्त्वाथ कुमारोऽपि । क्षणं सुप्त्वा निजाश्रये ॥ तल्पमुत्संचकाराशु । मि-
त्रार्थकरणोद्यतः ॥ १३ ॥

मलयसुंदरस्याथ । मेघनादस्य च स्वयं ॥ रहस्यं हृदि निक्षिप्य । गतोऽसावसिना सह ॥
॥ १४ ॥ आत्मा संदर्शितस्तेन । खेचरस्य गुहामुखे ॥ निषण्णः कुमरस्तत्र । खेचरार्पितविष्टरे ॥
॥ १५ ॥ यत्कर्तव्यं च तद्ब्रूहि । सर्वत्र प्रगुणा वयं ॥ जुहोमि श्रीफलैरभिं । मंत्रजापपुरस्सरं ॥१६॥
विघ्नान् सर्वान् निराकुर्व—स्तिष्ठ त्वं सावधानकः ॥ निर्भीतः साहसोपेत—स्त्वदायत्ता हि सिद्धयः
॥ १७ ॥ लिखितं खेचरेणापि । रक्तचंदनमंडलं ॥ तदेकदेशे लिखिता । देवताबहुरूपिणी ॥१८॥
सारकाष्ठभृते कुंडे । ज्वलज्ज्वालासमाकुले ॥ होमं कर्तुं समारब्धः । श्रीफलैर्मंत्रपूर्वकं ॥ १९ ॥
अत्रांतरे समाधूत—धूलीतृणमहीरुहः ॥ वातो वातुं समारब्ध—श्चकंपे मेदिनीतलं ॥ २० ॥ घ-
नो गर्जितुमारब्धो । विद्युत्झंपाभिरुल्लिता ॥ न किंचित्तमसा तत्र । दृश्यते पुरतः स्थितं ॥ २१ ॥
शोणशोणितधाराभि—र्वर्षत्याशु घनाघनः ॥ उड्डीय जीवितं याति । शिवानां फेत्कृतारवैः ॥२२॥
घूकघूत्कृतशब्देन । गुहामु प्रतिसर्पता ॥ कर्णाभ्यर्णागतं नैव । श्रूयते जनजल्पितं ॥ २३ ॥ मु-
क्तकेशा विवस्त्राश्च । करोल्लालितकर्त्तिकाः ॥ ज्वाला मुखेन मुंचंत्यो । योगिन्योऽनृत्यनंबरे ॥२४॥
स चासनसमासीनो । यावदास्ते नृपांगजः ॥ खेचरोऽपि च निर्भीको—ऽप्रजुहवज्जातवेदसं ॥२५॥

तयोः सत्वं समालोक्य । प्रशांता च बिभीषिका ॥ अत्रांतरे समायातः । क्षेत्रपालो महाबलः ॥
॥ २६ ॥ तयोः सत्वपरीक्षार्थं । मलयागस्य नायकः ॥ क्षेत्रपालो महासत्व—द्दोभितानेकसाधकः
॥ २७ ॥ युग्मं ॥ भो मानव किमर्थं ते । करे खड्गो विलोक्यते ॥ मंत्रजापकरः कोऽयं । देवी
का लिखिता भुवि ॥ २८ ॥ मलये मां विमुच्यान्यं । देवं च ध्यायतस्तव ॥ का वैदग्धी कुतः सि-
द्धिः । कुतस्ते जीवितं वद ॥ २९ ॥ कुमारोऽवग् न ते युक्तं । वक्तुमीदृग्वचः सुर ॥ राकाचंद्रः
सुधां सूते । न कदाचिद्दवानलं ॥ ३० ॥ विद्यासाधनकल्पोऽयं । यदन्या देवता कृता ॥ मलयः
कस्य संबंधी । वीरभोग्या वसुंधरा ॥ ३१ ॥ श्रुत्वेदं स कुमारस्य । सदर्पं कर्कशं वचः ॥ सावेशो
विहितावज्ञो । जगादेदं महाबलः ॥ ३२ ॥ पाप ते नाशयाम्यद्य । पौरुषं पुरुषाधम ॥ न हि सा-
म्येन शाम्यंति । दुर्जना दुष्टचेतसः ॥ ३३ ॥

विधाय विकृताकारं । वेतालाकृतिमात्मनः ॥ ततो वर्धितुमारब्धो । दरकारी तनूभृतां ॥ ३४ ॥
दक्षिणस्यां नरं कंचि—त्खड्गव्यग्रकरं वहन् ॥ कापालिकं तु वामायां । क्रंदंतं करुणैः स्वरैः ॥३५॥
तयोः कर्त्तिकयोत्कृत्य । खादन् मांसानि शोणितं ॥ पिबन् हसंश्च हास्येन । नृत्यन्नुच्चैश्च विस्वरं ॥

॥ ३६ ॥ सौवीरांजनभृंगालि—महिषांगसमप्रभः ॥ कालतुल्योग्रदंष्ट्रालः । कामगंडो भयंकरः ॥
॥ ३७ ॥ सूर्पकर्णो विरूपाक्ष—स्तुबचिर्पटनासिकः ॥ रक्ताक्षः कपिलकेशो । वृश्चिकैः कृतशेखरः
॥ ३८ ॥ तत्कालोत्कृतरक्तार्द्र—चर्मावृतकटीतटः ॥ कटीभागे वहन् भीमं । महाकायं महोरगं ॥
॥ ३९ ॥ विसर्पत्स्फारफूत्कार—भुजंगकृतकंकणः ॥ कगवाशक्तबीभत्स—नृमुंडकृतकंठिकः ॥ ४० ॥
नररक्तवसापूर्ण—कपालन्यस्तलोचनः ॥ मुखमुक्तज्वलज्ज्वालः । भीमा सर्वभयंकृतां ॥ ४१ ॥ र-
क्ताभ्यस्तां करासक्तां । कृतांतरसनासमां ॥ करालां कर्त्तिकां तीक्ष्णां । संलिहन् लोलजीह्वया ॥
॥ ४२ ॥ सूर्पाकारनखः क्षुद्रः । क्रमेलकशिरोधरः ॥ दीर्घदंतुरदंतश्च । करकंपितकर्त्तिकः ॥ ४३ ॥
विधाय विकृतं रूप—मूर्ध्वं गत्वा नभस्तले ॥ हसन्नट्टट्टहासेन । नृत्यत्युध्धुरकंधरः ॥ ४४ ॥ कुल-
कं ॥ हेलयासौ चचालाथ । मंत्रसाधकसन्मुखं ॥ कुमारः खड्गमादाय । तयोरंतःस्थितोऽवदत् ॥
॥ ४५ ॥ कस्त्वं भो केन कार्येण । गम्यते सत्वरैः पदैः ॥ निर्निमित्तं किमित्येवं । हस्यते विस्वरैः
स्वरैः ॥ ४६ ॥ स प्राह साधकस्यास्य । मांसरक्तपिपासया ॥ गम्यते हस्यते चेष्टा । एतस्यैव दुरा-
त्मनः ॥ ४७ ॥ सुरासुरनराभ्यर्च्यं । विमुच्य मां महाबलं ॥ का चैषा हस्यते क्षुद्रा । लिखिता भुवि

देवता ॥ ४८ ॥ कुमारः प्राह कल्पोऽयं । कोपस्तव निरर्थकः ॥ भिन्नोष्टसंपुटाः संतो । न हसंति महास्वरैः ॥ ४९ ॥ विद्यासाधकपुंसस्तु । दुर्लभे मांसशोणिते ॥ देवयोनेर्दुराशेयं । तव चेतसि वर्तते ॥ ५० ॥ वेतालोऽपि जगादेदं । कुमारं पुरतः स्थितं ॥ मुंच मार्गं व्रज स्थानं । यदि ते जीवनस्पृहा ॥ ५१ ॥ कुमारः प्राह—

अद्य श्वो वा ध्रुवो मृत्यु—र्मित्रार्थं यद्यसौ भवेत् ॥ तदा मे किं न पर्याप्तं । मरणान्न बिभेम्यहं ॥ ५२ ॥ अर्थाः प्राणाश्च ये यांति । गुरुदेवप्रयोजने ॥ त एवात्र प्रशस्यंते । शेषाः संक्लेशहेतवः ॥ ५३ ॥ कोऽपि केनाप्युपायेन । जीवो जीवति भूतले ॥ देवयोने न युक्तं ते । विघ्नं कर्तुं निरर्थकं ॥ ५४ ॥ मलयेऽस्मिन्नहं स्वामी । गर्वोऽप्येष न संगतः ॥ किं न श्रुतं त्वया वाक्यं । वीरभोग्या वसुंधरा ॥ ५५ ॥ महाबलः प्रोवाच—रे भित्र प्रथमं ताव—द्भवतो मांसशोणिते ॥ भक्षयामि पिबाम्युच्चैः । पश्चादस्य दुरात्मनः ॥ ५६ ॥ इत्युक्त्वा धावितो वेगा—द्वेतालः कुमरंप्रति ॥ वाहिता कर्त्तिका तेन । कुमारेणापि वंचिता ॥ ५७ ॥ खड्गमादाय तेनापि । प्रहतो दक्षिणे करे ॥ वेतालः पतिता तस्य । कराद्भुवि च कर्त्तिका ॥ ५८ ॥ विलक्षो वीक्षयामास । दिक्चक्रं शू-

न्यया दृशा ॥ भक्तो नृपोऽपि भो भद्र । करे कुरु निजायुधं ॥ ५९ ॥ निरायुधेषु दीनेषु । पति·
तेषु नतेषु च ॥ प्रहारं न प्रकुर्वंति । संतः सन्मार्गगामिनः ॥ ६० ॥ तथा भो काविमौ किसौ ।
वामदक्षिणकक्षयोः ॥ नरौ निर्घृण यावेवं । पीडयसि निरंतरं ॥ ६१ ॥ भूतो महाबलः प्राह । श्रू·
यतां कथयामि ते ॥ कपालकुंभनामा च । वामतो मंत्रसाधकः ॥ ६२ ॥ यमुनो दक्षिणेनास्य ।
पुमानुत्तरसाधकः ॥ अत्रैवाविधिना विद्यां । साधयंतौ विलोकितौ ॥ ६३ ॥ युग्मं ॥ अवस्थामीदृ·
शीं नीता—वन्येषां शिक्षणाकृते ॥ दुर्मेधसोऽल्पसत्वाश्च । खेद्यंतेऽत्र यतोऽनिशं ॥ ६४ ॥ त्वत्सा·
हससमाकृष्ट—चेता वच्मि वचो हितं ॥ ब्रूहि यत्ते प्रयच्छामि । ह्यमोघं देवदर्शनं ॥ ६५ ॥ कुमा
रः प्रोवाच—देवयोने न मे कार्यं । केनाप्यस्तीह वस्तुना ॥ कूजंतौ करुणं मुंच । कक्षागतनरा·
विमौ ॥ ६६ ॥ मुक्तावधमृतौ तेन । तौ नरौ लोललोचनौ ॥ भणितौ च कुमारेण । यात भद्रौ
युवां गृहं ॥ ६७ ॥ भूयोऽपि निकटीभूय । वेतालेन प्रजल्पितः ॥ यदहं वच्मि तत्कार्यं । भवता
परहितैषिणा ॥ ६८ ॥ नितांतं यद्यपि त्यागी । महाविनयसंगतः ॥ वीर्यवानुत्तमैश्वर्यो । भवान् गु·
णविभूषितः ॥ ६९ ॥ मद्दर्शनं तथाप्येत—त्तव मा भूदनर्थकं ॥ याचेऽहं तेन कार्येण । भवंतं प्र·

हणंप्रति ॥ ७० ॥ युग्मं ॥ एकया दशया कस्य । कालो गछति देहिनः ॥ विपदोऽनंतरा संपत् ।
संपदोऽनंतरा विपत् ॥ ७१ ॥ मुद्रारत्नं गृहाणेदं । वरवज्रैर्विराजितं ॥ एतेन ह्यंगुलिस्थेन । दुर्जयो·
ऽसि महाहवे ॥ ७२ ॥ सुगंधगंधगव्यूत—व्यापी ज्वरहरः पटः ॥ धूपसाराभिधानोऽयं । कुमार क्रि·
यतां करे ॥ ७३ ॥ प्रतिपन्नं कुमारेण । क्षेत्रपालप्रजल्पितं ॥ सिद्धा च कामदेवस्य । विद्याथ बहु·
रूपिणी ॥ ७४ ॥ कुमारकामदेवाभ्यां । कृतपूजो महाबलः ॥ जगामादर्शनं तुष्टः । कामदेवोऽप्य·
भाषत ॥ ७५ ॥ तव संपर्कतः सिद्धा । विद्या मे बहुरूपिणी ॥ भवंत्यचिंत्यमाहात्म्याः । संतः क·
ल्पद्रुमोपमाः ॥ ७६ ॥ कामसंरोहिणी याभी । विद्या चाकाशगामिनी ॥ सोपचारं द्वयं दत्तं । कु·
माराय खगामिना ॥ ७७ ॥ कृतस्तत्रैव वीवाहो । धनं चानाय्य कोटिशः ॥ कर्पूरागुरुश्रीखंड—खं·
मानां राशयः कृताः ॥ ७८ ॥ समग्रं यं पुरोभूय । जगादेदं नभश्चरः ॥ कुमारावितथं विद्धि । व·
च्म्यहं यत्तवाग्रतः ॥ ७९ ॥ एते वयमिमे चार्था । यदन्यदपि मामकं ॥ प्राणा अपि त्वदीया मे ।
यथायोगं नियुज्यतां ॥ ८० ॥ विहितं केन सौरभ्यं । पुष्पाणां केन वा कृतं ॥ माधुर्यमीक्षुयष्टीनां
। लीला च वरहस्तिनां ॥ ८१ ॥ उपकर्तुं प्रियं वक्तुं । कर्तुं स्नेहमकृत्रिमं ॥ स्वजनानां स्वभावोऽ·

यं । केनेंदुः शिशिरीकृतः ॥ ८२ ॥ इत्यादिभिर्वरैर्वाक्यैः । श्लाघयित्वा कुमारकं ॥ सानंदेन तत· स्तेन । विमानं प्रविकुर्वितं ॥ ८३ ॥ सकंकणप्रियायुक्तः । कुमारो नवकंकणः ॥ कामदेवविमाने· न । प्रातरेव समागतः ॥ ८४ ॥ स्वावासं सर्वलोकेन । वीक्षितः स्फारचक्षुषा ॥ भृत्यैर्मित्रैः कलत्रै· श्च । सानंदमवलोकितः ॥ ८५ ॥ युग्मं ॥

पुंजीकृत्य धनं धान्यं । कामदेवो विसर्जितः ॥ कांतयोश्च कुमारेण । कृता ज्येष्ठकनिष्ठता ॥ ॥ ८६ ॥ प्रदोषे कृतकर्तव्यः । काले सुप्तो निराकुलः ॥ निशीथे खड्गमादाय । जने सुप्ते विनिर्ग· तः ॥ ८७ ॥ दक्षिणां दिशमाश्रित्य । चलितो नरकेसरी ॥ शनैः शनैरसौ गछन् । गतो दूरतरं ध्रुवं ॥ ८८ ॥ शृणोति मधुरं गीतं । कर्णपीयूषसन्निभं ॥ तरुण्यास्यसमुद्भूतं । सप्ततंत्रीस्वरानुगं ॥ ॥ ८९ ॥ चचाल स्वरमार्गेण । मंदंमंदं नृपांगजः ॥ स्तोकांतरं गतेनाथ । ददृशे देवमंदिरं ॥९०॥ श्रीखंडसारगंधेन । घ्राणघ्राणकरं परं ॥ जात्यश्रीखंडकाष्टेन । सर्वतोऽपि विनिर्मितं ॥ ९१ ॥ रम्य· स्तंभसमाकीर्णं । शांतिनाथजगद्गुरोः ॥ शांतकांतकृतानंद—बिंबेन तु विराजितं ॥ ९२ ॥ पद्मरा· गमयोत्तुंग—कलशेन नभःस्पृशा ॥ वातोध्धूतध्वजैः शुभ्रैः । समाकारितसज्जनं ॥ ९३ ॥ चतु·

र्गिः कलापकं ॥ निरुद्धपदसंचारः । प्रविश्य जिनमंदिरे ॥ दृष्टैका कन्यका तेन । गायंती वीणया
जिनं ॥ ९४ ॥ गीतगर्भं जिनं स्तौति । वादयति च वल्लकीं ॥ तंत्रीस्वरस्य गीतस्य । विशेषो नैव
लक्ष्यते ॥ ९५ ॥ नमस्ते शांतिनाथाय । जगच्छांतिविधायिने ॥ शांताकाराय शांताय । सुवर्णस-
दृशद्युते ॥ ९६ ॥ नमस्ते देवदेवाय । लोकालोकविलोकिने ॥ गुणैरतीतलोकाय । दुर्लक्ष्याय म-
हात्मने ॥ ९७ ॥ त्रिलोककृतपूजाय । नष्टमोहमहारये ॥ वाणीगोचरतातीत—गुणसंघातधारिणे
॥ ९८ ॥ शरण्य शरणायातां । पाहि मां परमेश्वर ॥ मनोवांछितसंप्राप्त्या । सफलेयं तव स्तुतिः
॥ ९९ ॥ एवं जिनमभिस्तुत्य । मुक्त्वा कोणे च वल्लकीं ॥ निर्गत्य मंडपद्वारि । वेदिकैकामशि-
श्रियत् ॥ ३०० ॥ कुमारोऽपि प्रविश्यांतः । प्रणम्य जिननायकं ॥ वेदिकैकां समासीनः । केसरीव
शिलातलं ॥ १ ॥ ततः ससंभ्रमा बाला । वेदिकातो भुवि स्थिता ॥ भणिता च कुमारेण । भद्रे
का त्वं किमागता ॥ २ ॥ शून्ये जिनगृहे नक्तं । कुतो वा कस्य वा सुता ॥ स्त्रीलक्षणयुक्तापि ।
सशोका केन हेतुना ॥ ३ ॥ युग्मं ॥ दृष्टपूर्वेव मे भासि । भवती तालवने ध्रुवं ॥ आश्वासयितु-
मारब्धे । मया व्याकुलमानसे ॥ ४ ॥

तयोक्तं सत्यमेवेदं । नान्यथा तव दर्शनं ॥ भवंतं दूरतो दृष्ट्वा । चलिता दक्षिणामभि ॥५॥
ततः सा रोदितुं लग्ना । कुमारेण निवारिता ॥ स्वस्थीभूय क्षणादेवं । प्रोवाच सरलाशया ॥ ६ ॥
महाभाग महामेघ—विद्याधरतनूद्भवा ॥ सुवदनाकुक्षिजा चाहं । नाम्ना च सरलप्रभा ॥ ७ ॥ म-
त्पित्रा शैशवे पृष्टः । सिद्धपुत्रो यशःप्रभः ॥ को भर्ता भद्र भाव्यस्या—स्तेनापीदं प्रजल्पितं ॥८॥
समस्तविश्वविख्यात—स्त्यागी भोगी महाबलः ॥ रणकेसरिजो भावी । भर्तास्या नरकेसरी ॥९॥
सांप्रतं चाहमन्यत्र । पित्रा दातुं समीहिता ॥ निर्विण्णा जीवितस्याहं । मरणार्थमिहागता ॥ १० ॥
प्रणम्य भक्तितः कांतं । शांतं शांतिकरं जिनं ॥ आरुह्य शिखरे मुक्तो । मयात्मा घातहेतवे ॥११॥
परं पश्यामि तत्पस्थ—मात्मानं पापकारिणी ॥ भणिता नभसो वाणी । पुत्रि पूर्णा मनोरथाः ॥
॥ १२ ॥ प्रभाते ह्यर्धरात्रे ते । प्रियेण सह संगमः ॥ संभवी भावि कल्याणे । मागमोऽन्यत्र कुत्र-
चित् ॥ १३ ॥ ततोऽहं जिननाथस्य । शांतिदेवस्य पूजनं ॥ संगीतकं च कुर्वाणा । स्थितात्रैव
जिनालये ॥ १४ ॥ अद्य त्वतर्कितो जात—स्त्वया सह समागमः ॥ अरण्यं वसितं जातं । संजा
ता चित्तनिर्वृतिः ॥ १५ ॥ कथितं यत्त्वया पृष्टं । रहस्यं सकलं मया ॥ सांप्रतं श्रोतुमिच्छामि । त्व-

दीयमपि मूलतः ॥ १६ ॥ कस्त्वं कस्याथवा पुत्रः । किमेकाकी समागतः ॥ नामाक्षराणि वः का-
नि । श्रवंति श्रवणामृतं ॥ १७ ॥ कुमारेणापि निःशेषं । मूलतश्चरितं निजं ॥ कथितं नाम पर्यंतं
। सानंदा सरलप्रज्ञा ॥ १८ ॥ नाथ त्वां प्रार्थये ह्येवं । पाणिग्रहं कुरुष्व मे ॥ अत्रैव भवने भव्ये
। देवतादृष्टिगोचरे ॥ १९ ॥ जीवने मरणे त्राण—मेष मे कुलदेवता ॥ विश्वविश्वंभरो बंधुः । प्र-
थितामितकीर्तिकः ॥ २० ॥ प्रतिपन्नं कुमारेण । संक्षेपेण विवाहिता ॥ पूजितो वंदितो भक्त्या ।
श्रीशांतिः षोडशो जिनः ॥ २१ ॥ वेदिकायां निषण्णेन । कुमारेण समंततः ॥ छत्रफणा विफणा-
श्चैव । नानारूपा भुजंगमाः ॥ २२ ॥ विशंतः परितो दृष्टाः । स्वल्पसत्वभयंकराः ॥ फूत्कारस्फारनि-
र्घोष—भृतावनिनभस्तलाः ॥ २३ ॥ परितः स्तंभमूलानि । स्तंभाग्राणि समंततः ॥ वेष्टयित्वा स्थि-
ता रात्रौ । गंधलुब्धाः सरीसृपाः ॥ २४ ॥ भित्तिर्विशेषकं ॥ वेदिकासु विशालासु । चित्रपुत्तलि-
कासु च ॥ सिंहशार्दूलमातंग—पुत्तलेषु ललंबिरे ॥ २५ ॥ बहिरंतश्च सर्वत्र । विसर्पद्भिर्भुजंगमैः
॥ भवनं शांतिनाथस्य । भुजंगैरिव निर्मितं ॥ २६ ॥ नरकेसरिणा पृष्टा । कौतुकाकृष्टचेतसा ॥ प्रि-
ये किमिदमाभाति । यदि जानासि तद्वद ॥ २७ ॥ सा प्राह गंधलोभेन । दिवारात्रौ निरंतरं ॥ न

च मुंचंत्यमी प्रायो । जैनसद्म निरंतरं ॥ २८ ॥
अन्यदा क्षेत्रपालेन । दुर्मुखो नाम सेवकः ॥ महाबलेन संदिष्टो । रे दुर्मुख त्वया सदा ॥
॥ २९ ॥ दिवा देयो न सर्पाणां । प्रवेशो जैनमंदिरे ॥ रात्रौ च निर्विषाः कार्याः । प्रविशंतु य-
दृच्छया ॥ ३० ॥ एवं तस्याः प्रजल्पंत्या । मातापितरावागतौ ॥ प्रणतौ देवदेवस्य । दृष्टं द्वंद्वं तयो-
स्तथा ॥ ३१ ॥ निविष्टौ वेदिकापृष्टे । कुमारेण नमस्कृतौ ॥ सकंकणपरा पित्रोः । प्रणता सरलप्र-
भा ॥ ३२ ॥ कुमाराकृतिमालोक्य । विलोक्य दुहितुर्मुखं ॥ समसंयोगसंतुष्टौ । पितरौ रंजितौतरां
॥ ३३ ॥ दुर्नयोऽप्येष ते वत्से । सुनयोऽजनि वेधसा ॥ न गंगा सागरं मुक्त्वा । पतत्यल्पजला-
शये ॥ ३४ ॥ कृत्वा विवाहकार्याणि । स्वहस्तेन समर्पिता ॥ आवत्वाजन्म संयोगो । गंगासागर-
योरिव ॥ ३५ ॥ इत्यभिधाय वेगेन । गतोऽसौ सत्वरं गृहे ॥ प्रातरेव कुमारोऽपि । समेतो नव-
कांतया ॥ ३६ ॥ नवकंकणकः प्राप्तः । स्वावासं सारसाहसः ॥ भृत्यमित्रकलत्राणां । कथिताखिल-
संकथः ॥ ३७ ॥ सावशेषां निशां नीत्वा । नानालापैर्नृपांगजः ॥ कृतप्रत्यूषकर्तव्यो । रेमे मल-
यभूमिषु ॥ ३८ ॥ पंचषानि दिनान्यत्र । नीत्वा विगतकौतुकः ॥ उत्ततार गिरेस्तूर्णं । तत्कूटादिव

केसरी ॥ ३९ ॥ मलयकेतुभूपस्य । पुरं प्राप्तो मनोहरं ॥ भूभुजा कृतसन्मानो । श्वश्र्वा च कृतसत्कृतिः ॥ ४० ॥ अहानि कतिचित्स्थित्वा । युक्तो मलयकेतुना ॥ वरं विमानमारुह्य । नभसा सपरिच्छदः ॥ ४१ ॥ संप्राप्तश्च क्षणादेव । कुमारो हेमपत्तने ॥ अतर्कितः समुत्तीर्णो । हेमसुंदरमंदिरे ॥ ४२ ॥ युग्मं ॥ किमेतदिति लोकेन । विस्मितेन विलोकितः ॥ सस्नेहं सादरं स्निग्धं । गौरवेण कुमारकः ॥ ४३ ॥ समासन्नोपविष्टश्च । पृष्टो राज्ञा सकौतुकं ॥ कथं भूमिचरो भूत्वा । भवांश्चाजनि खेचरः ॥ ४४ ॥ लक्ष्मीसरस्वतीकल्पे । के इमे वरबालिके ॥ परस्परविरुद्धे च । भवतोंतिकमाश्रिते ॥ ४५ ॥ कथितं मेघनादेन । नरकेसरिचेष्टितं ॥ राज्ञाचिंति यतो नास्ति । दुर्लभं शुभकर्मणां ॥ ४६ ॥

अत्रांतरे समायातं । प्रधानपुरुषद्वयं ॥ प्रविष्टं च सभामध्ये । प्रतिहारनिवेदितं ॥ ४७ ॥ हेमसुंदरराजेंद्रं । नत्वा तेन समर्पितः ॥ पितुर्लेखः कुमारस्य । स्वयं तेनापि वाचितः ॥ ४८ ॥ यथा—स्वस्तिश्रीरंगशालापुरीतो राजा रणकेसरी नरकांतादेवीसमन्वितस्तत्रस्थं वत्सं नरकेसरिणं सस्नेहं सादरं समाश्लिष्य भुजाभ्यां समादिशति, यत्किं विस्मृता वयं कुमारस्य? येनाद्यापि विलंब्य-

ते, कतिपयदिनमध्ये शीघ्रमागंतव्यमिति. कुमारेण भणितमवगतो लेखार्थः. अथ किं कुशली मे
तातः? निर्व्याकुला च पुत्रवत्सलांबा? तावूचतुः—मातुर्व्यामिलिते दृष्टी। रुदंत्याः प्रतिवासरं ॥
तवादर्शनदुःखार्त्तः। पिता कष्टेन जीवति ॥ ४९ ॥ भवद्दर्शनलिप्सूनां। गुरूणां काप्यनिर्वृतिः ॥
युक्तायुक्तविचारे च। भवानेवात्र पंडितः ॥ ५० ॥ प्रयाणेच्छुकुमारेण। मातुलास्यं निरीक्षितं ॥
तेनापि भणितं वत्स। गम्यते न विलंब्यते ॥ ५१ ॥ चतुरंगबलोपेतः। कुमारमनु मातुलः ॥
निजपुत्रीं समादाय। कुमारार्थं सुदर्शनां ॥ ५२ ॥ चलितस्तरसा रम्यां। रंगशालां महापुरीं ॥ प्रा·
प्तः कतिपयैरेव। वासरैर्हेमसुंदरः ॥ ५३ ॥ युग्मं ॥ बहिरेव कृतावासो। विवेशांतः स्वयं नृपः ॥
निवेदितं विशांपत्यु—र्देव्या च सह मंत्रिभिः ॥ ५४ ॥ अस्ति मे दुहिता कांता। वरप्राप्ता सुद·
र्शना ॥ अत्रैव सा समानीता। प्रीत्या कुमरहेतवे ॥ ५५ ॥ यदि वः संमतं चेदं। तदा लग्नं नि·
रूप्यतां ॥ अत्रांतरे समायातो। गणकः स्वत एव हि ॥ ५६ ॥ स्वप्रयोजनमुद्दिश्य। सुप्रसन्नः सु
वेषभृत् ॥ कृतानुज्ञो नरेंद्रेण। निषण्णो दर्शितासने ॥ ५७ ॥ युग्मं ॥ रिक्ते रिक्तं विजानीयात्।
पूर्णे पूर्णं समादिशेत् ॥ तांबूलफलपुष्पादि—कृतपूजो महीभुजा ॥ ५८ ॥ पृष्टो लग्नं विवाहस्य।

केसरी ॥ ३९ ॥ मलयकेतुभूपस्य । पुरं प्राप्तो मनोहरं ॥ भूभुजा कृतसन्मानो । श्वश्रवा च कृतस-
त्कृतिः ॥ ४० ॥ अहानि कतिचित्स्थित्वा । युक्तो मलयकेतुना ॥ वरं विमानमारुह्य । नभसा स-
परिछदः ॥ ४१ ॥ संप्राप्तश्च क्षणादेव । कुमारो हेमपत्तने ॥ अतर्कितः समुत्तीर्णो । हेमसुंदरमंदिरे
॥ ४२ ॥ युग्मं ॥ किमेतदिति लोकेन । विस्मितेन विलोकितः ॥ सस्नेहं सादरं स्निग्धं । गौरवे-
ण कुमारकः ॥ ४३ ॥ समासन्नोपविष्टश्च । पृष्टो राज्ञा सकौतुकं ॥ कथं भूमिचरो भूत्वा । भवांश्चा-
जनि खेचरः ॥ ४४ ॥ लक्ष्मीसरस्वतीकल्पे । के इमे वरबालिके ॥ परस्परविरुद्धे च । भवतोंति-
कमाश्रिते ॥ ४५ ॥ कथितं मेघनादेन । नरकेसरिचेष्टितं ॥ राज्ञाचिंति यतो नास्ति । दुर्लभं शु-
भकर्मणां ॥ ४६ ॥

अत्रांतरे समायातं । प्रधानपुरुषद्वयं ॥ प्रविष्टं च सभामध्ये । प्रतिहारनिवेदितं ॥ ४७ ॥ हे-
मसुंदरराजेंद्रं । नत्वा तेन समर्पितः ॥ पितुर्लेखः कुमारस्य । स्वयं तेनापि वाचितः ॥ ४८ ॥ य-
था—स्वस्तिश्रीरंगशालापुरीतो राजा रणकेसरी नरकांतादेवीसमन्वितस्तत्रस्थं वत्सं नरकेसरिणं स-
स्नेहं सादरं समाश्लिष्य भुजाभ्यां समादिशति, यत्किं विस्मृता वयं कुमारस्य? येनाद्यापि विलंब्य-

ते, कतिपयदिनमध्ये शीघ्रमागंतव्यमिति. कुमारेण भणितमवगतो लेखार्थः. अथ किं कुशली मे तातः? निर्व्याकुला च पुत्रवत्सलांबा? तावूचतुः—मातुर्व्यामिलिते दृष्टी। रुदंत्याः प्रतिवासरं ॥ तवादर्शनदुःखार्त्तः। पिता कष्टेन जीवति ॥ ४९ ॥ भवद्दर्शनलिप्सूनां। गुरूणां काप्यनिर्वृतिः ॥ युक्तायुक्तविचारे च। भवानेवात्र पंडितः ॥ ५० ॥ प्रयाणेच्छुकुमारेण। मातुलास्यं निरीक्षितं ॥ तेनापि भणितं वत्स। गम्यते न विलंब्यते ॥ ५१ ॥ चतुरंगबलोपेतः। कुमारमनु मातुलः ॥ निजपुत्रीं समादाय। कुमारार्थं सुदर्शनां ॥ ५२ ॥ चलितस्तरसा रम्यां। रंगशालां महापुरीं ॥ प्राप्तः कतिपयैरेव। वासरैर्हेमसुंदरः ॥ ५३ ॥ युग्मं ॥ बहिरेव कृतावासो। विवेशांतः स्वयं नृपः ॥ निवेदितं विशांपत्यु—र्देव्या च सह मंत्रिभिः ॥ ५४ ॥ अस्ति मे दुहिता कांता। वरप्राप्ता सुदर्शना ॥ अत्रैव सा समानीता। प्रीत्या कुमरहेतवे ॥ ५५ ॥ यदि वः संमतं चेदं। तदा लग्नं निरूप्यतां ॥ अत्रांतरे समायातो। गणकः स्वत एव हि ॥ ५६ ॥ स्वप्रयोजनमुद्दिश्य। सुप्रसन्नः सुवेषभृत् ॥ कृतानुज्ञो नरेंद्रेण। निषण्णो दर्शितासने ॥ ५७ ॥ युग्मं ॥ रिक्ते रिक्तं विजानीयात्। पूर्णे पूर्णं समादिशेत् ॥ तांबूलफलपुष्पादि—कृतपूजो महीभुजा ॥ ५८ ॥ पृष्टो लग्नं विवाहस्य।

तेन शीघ्रं निवेदितं ॥ अथवा कृतपुण्यानां । चिंतितं निकटस्थितं ॥ ५९ ॥ युग्मं ॥ प्रारब्धा सर्व-
सामग्री । संप्राप्तो लग्नवासरः ॥ वृत्तं महाप्रमोदेन । पाणिग्रहणमंगलं ॥ ६० ॥ सामंतामात्यपौरा-
दि—पर्यालोचपुरस्सरं ॥ निवेशितो निजे राज्ये । कुमारो नरकेसरी ॥ ६१ ॥ प्रशस्तेऽह्नि शुभे
चंद्रे । मुहूर्ते कार्यसाधके ॥ मंदंमंदं सुखस्पर्शे । पृष्टतो वाति मारुते ॥ ६२ ॥ कृतर्द्धिशोभां सर्वत्र
। तोरणध्वजराजितां ॥ वरमंचसमाकीर्णां । नृत्यत्पण्यांगनाकुलां ॥ ६३ ॥ शुभ्रादभ्रमनोहारि—चि-
त्रप्रासादतोरणां ॥ विद्वज्जनसमाकीर्णां । द्विपवाजिरवाकुलां ॥ ६४ ॥ नानासंव्यवहाराभि—राप-
णालीभिराकुलां ॥ विवेश रंगशालां सो—ऽलकामिव धनेश्वरः ॥ ६५ ॥ चतुर्भिः कलापकं ॥ स-
भासन्ननिषण्णस्य । जनैः परिवृतस्य च ॥ सुप्रसन्नदृशा लोकं । पश्यतो मेदिनीपतेः ॥ ६६ ॥ तदा
कुलक्रमायात—नाथदर्शनलालसाः ॥ गृहीत्वार्घं फलैः पुष्पैः । पत्रैरन्यैश्च कल्पितं ॥ ६७ ॥ वीणा-
वेणुविमिश्रेण । शंखनादानुगामिना ॥ महता तूर्यनादेन । पूरिताखिलदिङ्मुखाः ॥ ६८ ॥ सर्वे
पौराः समागत्य । आशीर्वादपुरस्सरं ॥ यथाविध्यर्चयामासु—स्तस्य पादौ मुदाकुलाः ॥ ६९ ॥ च-
तुर्भिः कलापकं ॥ विसर्जिता नरेंद्रेण । ते सन्मानपुरस्सरं ॥ स्वं स्वं च निलयं जग्मु—स्तद्गुणो-

क्तिभृताननाः ॥ ७० ॥
अथ तद्भवनं स्त्रीभिः । कौतुकाकुलबुद्धिभिः ॥ कृतनानाविभूषाभिः । परितः परिपूरितं ॥
॥ ७१ ॥ गवाक्षाभिमुखाः काश्चि—त्त्वराविस्रस्तवाससः ॥ अन्योन्यघट्टनोछिन्न—मुक्ताहारादिभूष·
णाः ॥ ७२ ॥ पीनस्तनकृतान्योन्य—पीडनाश्चलकुंडलाः ॥ मंजुमंजीरशब्देन । वाचालचरणद्वयाः
॥ ७३ ॥ किं न तृप्तासि दुस्तृप्ते । पार्श्वतो भव दुर्भगे ॥ विवदंत्यश्चेत्यादीनि । वचांस्यंबुरुहाननाः
॥ ७४ ॥ मुक्त्वा व्यापारजातानि । तमैक्षंत पुरांगनाः ॥ स्वरूपमेतन्नारीणां । यतस्ताः कौतुकाकुलाः
॥ ७५ ॥ चतुर्भिः कलापकं ॥ एका ब्रूते वरो भर्ता । परा ब्रूते वरांगना ॥ अन्योन्यमपि श्रेष्ठं ।
वदतीह मुहुर्मुहुः ॥ ७६ ॥ प्रतिहारनरेणाथ । मंदंमंदं विसर्जितः ॥ पुरनारीजनः सर्वो । गतो नि·
जनिजालयं ॥ ७७ ॥ संतोषामृतमग्नाना—मन्योन्यं प्रीतियोगतः ॥ ददतां भुंजतां चैव । गतः
कालः कियानपि ॥ ७८ ॥ रणकेसरिणा दीक्षा । प्रपन्ना जिनशासने ॥ संतोषसारसूरीणां । समी-
पे भक्तियोगतः ॥ ७९ ॥ सर्वजीवाभयं दत्वा । शीलमासेव्य निर्मलं ॥ तपश्च दुश्चरं तप्त्वा । वि-
भाव्य वरभावनाः ॥ ८० ॥ अंते चाराधनां कृत्वा । मृत्वानशनपूर्वकं ॥ औदारिकीं तनुं त्यक्त्वा ।

स्वर्गं जग्राह वैक्रियां ॥ ७१ ॥ युग्मं ॥ देवलोकात्समागत्य । भूत्वा च नृपनंदनः ॥ विधाय निर्मलां दीक्षां । संप्राप्य वरकेवलं ॥ ७२ ॥ त्यक्त्वा सर्वशरीराणि । अनंतज्ञानदर्शनः ॥ अनंतवीर्यसंपन्नः । सिद्धौ सिद्धो भविष्यति ॥ ७३ ॥ युग्मं ॥ हेमसुंदरभूपोऽपि । नरकेसरिभूभुजा ॥ सादरं ध्रियमाणोऽपि । जगाम निजपत्तने ॥ ७४ ॥ रणकेसरिणः पुत्रो—ऽप्युत्खानप्रतिरोपितान् ॥ मुद्रारत्नप्रभावेण । कुर्वन् सर्वमहीभुजः ॥ ७५ ॥ प्रधानधूपगंधेन । वासिताखिलदिङ्मुखः ॥ बंभ्रमीति गजारूढो । धूपसारपटावृतः ॥ ७६ ॥ युग्मं ॥ जन्मांतरसमाचीर्ण—पूर्णपुण्यानुभावतः ॥ सर्वं संपद्यते पुंसां । देवानामिव चिंतितं ॥ ७७ ॥

इत्येवं सर्वलोकस्य । कृतचित्तचमत्कृतिः ॥ बुभुजे राज्यसौख्यानि । स्वेछया वनितासखः ॥ ॥ ७८ ॥ क्वचिद्विमानयानेन । क्वचिन्मत्तगजं गतः ॥ क्वचिज्जात्याश्वमारूढः । क्वचित्स्यंदनवाहनः ॥ ७९ ॥ नंदनादिषु रम्येषु । काननेषु वनेषु च ॥ रमते रम्यकांताभिः । सहितो नरकेसरी ॥ ॥ ८० ॥ युग्मं ॥ क्वचिदहश्यरूपेण । क्वचिद् दृश्येन संचरन् ॥ विज्ञातजनसंलापः । साहसांक इवापरः ॥ ८१ ॥ पटहारवतो नित्यं । ज्वरं तुदन् शरीरिणां ॥ प्रजा रक्षन् विपक्षेभ्यो । यथार्थः क्-

त्रियोऽभवत् ॥ ९२ ॥ युग्मं ॥ संपन्नोचितसंतानः । सर्वलोकमनःप्रियः ॥ एकातपत्रमत्रस्तो । रा·ज्यं भुंक्ते निराकुलः ॥ ९३ ॥ अन्यदा च समासीनः । सभामंडपविस्तरे ॥ अमात्यमंत्रिसामंत—भटलक्षसमाकुले ॥ ९४ ॥ काननाच्च समागत्य । नरेण भणितो नृपः ॥ दिष्ट्या त्वं वर्धसे देव । तवोद्याने मनोरमे ॥ ९५ ॥ संतोषसागरा नाम । सूरयः श्रुतसागराः ॥ नानातिशयसंपन्ना । बहु·शिष्याः समागताः ॥ ९६ ॥ त्रिभिर्विशेषकं ॥ तत् श्रुत्वा रंजितो राजा । दत्वास्मै पारितोषिकं ॥ चचाल पादचारेण । वंदनार्थं बलान्वितः ॥ ९७ ॥ गत्वा प्रदक्षिणीकृत्य । वंदित्वा भक्तियोगतः ॥ उचितासनमासीनो । धर्मं शुश्राव पार्थिवः ॥ ९८ ॥ संप्राप्यात्रसरं राजा । पप्रच्छ निजसंशयं ॥ क·थं मे वर्धते लक्ष्मीः । कथमाज्ञाकरो जनः ॥ ९९ ॥ निजगृहोपविष्टस्या—कृतदंभस्य मे सदा ॥ समानीतोपदश्चापि । कथं नेमुर्धराधिपाः ॥ ४०० ॥ कथं मे वल्लभोऽत्यंतं । सुहृन्मलयसुंदरः ॥ स·विशेषमभीष्टा मे । केन वा जयसुंदरी ॥ १ ॥ अवधिज्ञानविज्ञात—पूर्वजन्मपरंपरः ॥ राजानं प्र·त्युवाचेदं । सूरिः संतोषसागरः ॥ २ ॥ इतस्तृतीयपर्याये । वाराणस्यां द्विजात्मजः ॥ शंखचूडाभि·धो भव्यो—ऽभवद्भार्या च दुर्गिला ॥ ३ ॥

मधुसुंदरनामा ते । भ्राता भक्तिपरायणः ॥ मधुसुंदरी तद्भार्या । धर्मकर्मपरायणा ॥ ४ ॥ शं-
खचूडो द्विजो मृत्वा । जातो वणिक्सुतस्ततः ॥ भार्याकार्मणदोषेण । धर्मकर्मपरायणः ॥ ५ ॥ स-
र्वज्ञपुरतः शुद्ध—भावसारं पुनः पुनः ॥ कर्पूरागुरुसन्मिश्र—सारश्रीखंडसंयुतः ॥ ६ ॥ धूपो द-
ग्धो विधानेन । मृत्वा देवगतिं गतः ॥ ततश्च्युत्वेह संजातो । नरकांतोदरे सुतः ॥ ७ ॥ तेन पु-
ण्येन ते सर्व—मनुकूलं धनादिकं ॥ भ्राता भ्रांत्वेह संसारे । जातो मलयसुंदरः ॥ ८ ॥ मधुसुंद-
री तद्भार्या । जाता च जयसुंदरी ॥ द्वयोरपि परा प्रीति—स्त्वांप्रति प्रतिवासरं ॥ ९ ॥ एतावत्तु त-
वाप्युच्चै—रासीत्प्रेम निरंतरं ॥ पूर्वजन्मानुभावेन । स्नेहाधिक्यं महीपते ॥ १० ॥ भूयोऽप्युवाच भू-
पोऽथ । पर्यंतो मम कीदृशः ॥ पुण्यानुबंधिपुण्येन । राजन् समवलोकितः ॥ ११ ॥ आदौ मध्येऽ-
वसाने च । शुभं विद्धि त्वमात्मनः ॥ जातिस्मरणविज्ञान—निजपूर्वभवो नृपः ॥ १२ ॥ गृहे ग-
त्वा समालोच्या—मात्यमंत्रिपुरस्तदा ॥ जयसुंदरीसुतं राज्ये—ऽभिषिच्य जयशेखरं ॥ १३ ॥ स-
प्तक्षेत्र्यां धनं दत्वा । कृत्वा यात्रामहोत्सवं ॥ दीनानाथांधपंगुभ्यो । दत्वा दानं यदृच्छया ॥ १४ ॥
सहस्रवाहिशिबिकां । समारुह्य विनिर्गतः ॥ संतोषसागराचार्य—समीपे निर्मलं व्रतं ॥ १५ ॥ ज-

ग्राह तृणवत्त्यक्त्वा । स्वं राज्यं मेदिनीपतिः ॥ शिक्षाद्वयानुसारेण । कृत्वानुष्ठानमुत्तमं ॥ १६ ॥
केवलं शीलमासेव्य । समभावव्यवस्थितः ॥ कृतसंलेखनो धीरो । धर्मारामरतः सदा ॥ १७ ॥ सं-
प्राप्य केवलं ज्ञानं । लोकालोकप्रकाशकं ॥ सर्वाहारनिरोधेन । विधायानशनक्रियां ॥ १८ ॥ शु-
क्लध्यानेन निर्दग्ध—सर्वकर्मेंधनो मुनिः ॥ चतुर्गतिविनिर्मुक्तः । पंचमीं गतिमाश्रितः ॥ १९ ॥ कु-
लकं ॥ इति धूपपूजाकथानकं परिसमाप्तं ॥

धूपपूजाफलं प्रोक्तं । दृष्टांतेन सविस्तरं ॥ दीपपूजाफलं वच्मि । संप्रत्यवसरागतं ॥ १ ॥ स-
मस्ति सकलद्वीप—मध्यस्थश्च स्वशोभया ॥ द्वीपानामुपरीवोच्चै—र्जंबूद्वीपो व्यवस्थितः ॥ २ ॥ त-
त्रापि भारते क्षेत्रे । षड्भिः खंडैर्विराजिते ॥ समस्ति मध्यमं खंडं । धर्मधाम गुणाश्रयं ॥ ३ ॥ मग-
धाजनपदस्तत्र । जिनमंदिरराजितः ॥ गुणग्राही गुणाधारो । धर्मवान् धार्मिकप्रियः ॥ ४ ॥ परदो-
षग्रहे मूको । जात्यंधो दोषदर्शने ॥ सुशीलो वृद्धसेवी च । नरवर्गो विराजते ॥ ५ ॥ युग्मं ॥
नार्यो यत्र स्वसौंदर्यै—र्ह्रेपयंति सुरस्त्रियः ॥ पुष्पेषोः साधनीभूतै—र्विभ्रमैरपि केवलैः ॥ ६ ॥ वि-
काररहिता लक्ष्मी—र्यौवनं विनयान्वितं ॥ श्रुतं प्रशमसंयुक्तं । शौर्यं क्षांत्या विभूषितं ॥ ७ ॥ त्या-

र्थः परोपकाराय । दक्षता धर्मकर्मणि ॥ प्रयत्नपरता नित्यं । व्रतशीलादिरक्षणे ॥ ८ ॥ स्वगुणाविः-कृतौ लज्जा । सौहार्दं कारणं विना ॥ एते गुणा विलोक्यंते । यस्मिन्निवसतां सतां ॥ ९ ॥ त्रिभिर्विशेषकं ॥ अस्त्यैश्वर्यवतां धाम । तत्र भानुमती पुरी ॥ भानवीया प्रभा यत्र । पताकाभिर्नि-षिध्यते ॥ १० ॥ रत्नभित्तिषु संक्रांत—संचरज्जनमूर्तिभिः ॥ सजीवानीव लक्ष्यंते । चित्राणि गृ-हभित्तिषु ॥ ११ ॥ प्रसर्पत्तारतेजोभि—र्हाटकामलसारकैः । राजमार्गा विराजंते । यत्र सर्वज्ञमं-दिरैः ॥ १२ ॥ संचारदीपिका यस्यां । भवंत्याभरणप्रभाः ॥ प्रियवेश्मप्रयातीनां । रजन्यां रम्ययो-षितां ॥ १३ ॥ तस्यामजनि राजेंद्रो । भानुमान् भुवनप्रियः ॥ यस्य वक्त्रे स्थिता वाणी । लक्ष्मीः खड्गे व्यवस्थिता ॥ १४ ॥ सन्नप्यन्यायशब्दो यो । लुप्तो येन बलात् क्षितौ ॥ इतीव नैव यत्रासी-दन्यायो न्यायशालिनि ॥ १५ ॥

अथ तस्य प्रजेशस्य । प्रजाक्षेमविधायिनः ॥ बभूव भूरिशृंगारा । भानुश्रीरिति गेहिनी ॥ ॥ १६ ॥ नीत्या लक्ष्म्या च भूपालो । नैवारमत केवलं ॥ भानुश्रियापि सार्धं स । रेमे राजा य-थाक्षणं ॥ १७ ॥ अजायत महादेव्याः । पुत्रो भानुप्रभाभिधः ॥ निजतेजःश्रिया येन । भानुमा

नंपि निर्जितः ॥ १८ ॥ दुःसहेन प्रतापेन । रूपेण यशसा श्रिया ॥ शेषैरपि गुणैः सर्वै—स्तेना-
तिशयितः पिता ॥ १९ ॥ द्वासप्ततिकलानां यः । परं पारमुपागतः ॥ धामामलगुणानां च । र-
त्नानामिव सागरः ॥ २० ॥ चलत्वाज्जीवितव्यस्य । तथा सोपक्रमत्वतः ॥ भानुश्रीः सर्पसंदष्टा ।
जगामान्यभवांतरं ॥ २१ ॥ तत्पदे स्थापिता चान्या । देवी हारप्रभाभिधा ॥ तद्गुणैर्विस्मृता तस्य
। भानुश्रीः सा हृदि स्थिता ॥ २२ ॥ यद्ब्रूते तत्करोत्येव । यत्कृतं तत्कृतं तया ॥ अविचारो नृप-
स्तत्र । यथा गमडुरिको नरः ॥ २३ ॥ यौवनं पल्लवस्तस्याः । सौभाग्यं कुसुमोद्यमः ॥ सूरनामा गु
णाधारः । सत्पुत्रः फलसन्निभः ॥ २४ ॥ भानुप्रभं विलोक्यासौ । विधत्ते हृदि मत्सरं ॥ यावदेष
कुतस्ताव—द्राज्यं तत्तस्य जायते ॥ २५ ॥ अवज्ञादुःखदावाग्नि—दग्धदेहापमानतः ॥ यदेष दूर-
तो याति । म्रियते वा तदा सुखं ॥ २६ ॥ अन्यदा भणितो वत्स । हिताहं तव सर्वदा ॥ भानु-
श्रीरिव द्रष्टव्या । कथनीयं प्रयोजनं ॥ २७ ॥ वस्त्राभरणतांबूल—भक्ष्यभोज्यविलेपनं ॥ पुष्पाणि
च विचित्राणि । संपादयति कस्तव ॥ २८ ॥ कर्म संपादयत्यंब । नान्यः कोऽपि मतिर्मम ॥ किं न
दत्ते पिता पुत्र । नेति तेन प्रजल्पितं ॥ २९ ॥ प्रोक्तं चतुर्गुणं कृत्वा । चित्तोत्तारकृते तया ॥ रा-

ह्रस्तेनापि रुष्टेन । सर्वं चेतसि धारितं ॥ ३० ॥ द्वितीयेऽह्नि प्रभातेऽपि । सवयस्यः समागतः ॥ सभासिंहासनारूढे । राज्ञि राजसुतस्ततः ॥ ३१ ॥ प्रणतः पादयोर्भक्त्या । रूक्षदृष्ट्यावलोकितः ॥ निषसादोचितस्थाने । भणितश्च महीभुजा ॥ ३२ ॥ केन जीवसि रे डिंग । स प्राह निजकर्मणा ॥ राजाह मुंच मे गेहं । फलं भुंक्ष्व स्वकर्मणां ॥ ३३ ॥ श्रुत्वेदं कर्कशं वाक्यं । सभामध्येऽपमानितः ॥ प्रणम्य च पितुः पादौ । सभामध्याद्विनिर्गतः ॥ ३४ ॥ द्वे वाससी च मुद्रां च । गृहीत्वा निर्गतो गृहात् ॥ गत्वाभिमानतो भुंक्ते । योजनानां चतुष्टयं ॥ ३५ ॥ निजाश्रुस्नेहसन्मिश्रं । मानव्यंजनसंयुतं ॥ भुक्तं नदीतटे तेन । भिक्षयाहृतभोजनं ॥ ३६ ॥ वज्रेणेवापमानेना—मानेन व्याहतो हृदि ॥ पपात श्रांतसर्वांगः । सहकारतरोरधः ॥ ३७ ॥

अत्रांतरे समायाता । स्त्री भानुश्रीसमप्रभा ॥ भानुप्रभस्य सुप्तस्य । पादप्रक्षालनोद्यता ॥३८॥ प्रबुद्धोऽसौ करस्पर्शा—दुत्थितश्च ससंभ्रमः ॥ मातरं च पुरो भूत्वा । प्रोवाच विहितांजलिः ॥३९॥ मातः कुतः समायाता । देवभूयं गतिं गता ॥ अतर्कितसुधासार—समानप्रियदर्शने ॥ ४० ॥ ततः शोकभराक्रांत—कंठयोत्कंठया तया ॥ कृत्वा कुमारमुत्संगे । सदुःखं रुदितं तदा ॥ ४१ ॥ कथं

प्राणप्रियो भूत्वा । निजपितुस्त्वमीदृशीं ॥ अवस्थां प्रापितो धात्रा । धिग्विमातृविचेष्टितं ॥ ४२ ॥
कुमारेणापि निःशेषो । वृत्तांतः कथितो निजः ॥ तयोक्तं नैव ते खेदः । कर्तुं युक्तो मनागपि ॥
॥ ४३ ॥ आपदः संपदश्चैव । समीपस्थाः शरीरिणां ॥ अस्तोदयौ दिनस्यांतः । सूर्यचंद्रमसोरिव ॥
॥ ४४ ॥ अस्ति भानुमती नाम । मे भगिनी सहोदरी ॥ कलिंगविषये पुर्यां । जगर्यां जनवत्स-
ला ॥ ४५ ॥ तत्रस्थेन त्वया वत्स । नेतव्या विषमा दशा ॥ पश्चादहं करिष्यामि । सर्वं यदुचितं
तव ॥ ४६ ॥ इत्युक्त्वा तत्क्षणादेव । पुर्यां नीतो निजांगजः ॥ नीत्वा समर्पितो नक्तं । भानुमत्या
विशेषतः ॥ ४७ ॥ चिंतामणिमणिं दत्वा । समाघ्राय च मूर्धनि ॥ ध्यातव्या व्यसने वत्से—त्येव-
मुक्त्वा तिरोदधे ॥ ४८ ॥ भानुमत्यपि सत्प्रीत्या । पश्यंती कुमरंप्रति ॥ करोति शेषकार्याणि । स-
तां स्नेहः सदा समः ॥ ४९ ॥ अथ विज्ञाय तत्रस्थं । भानुप्रभकुमारकं ॥ हारप्रभा दृढं चित्ते । दू-
ना चैवं व्यचिंतयत ॥ ५० ॥ अहो पुण्यैः स्वकैरेव । जीवत्येष कुमारकः ॥ निखातं हृदि मे शल्यं
। नितरां न समुध्धृतं ॥ ५१ ॥ यदा तदापकाराय । जीवन्नेष न सुंदरः ॥ सर्वदापि भयस्थानं । व-
र्धमानः सुनिश्चितं ॥ ५२ ॥ प्रेषिता घातकास्तत्र । विषदा गूढचारिणः ॥ चूर्णयोगकराश्चान्ये । यो-

गिकापालिकादयः ॥ ५३ ॥ भानुप्रभकुमारस्य । मरणं यः कुरुते नरः ॥ तस्य लक्षं पुनर्लक्षं । ददामीत्यभिधाय च ॥ ५४ ॥ समायाताः पुरि सर्वे । मारणोपायतत्पराः ॥ अलक्षिताश्च लोकेन । पापा भ्रेमुरितस्ततः ॥ ५५ ॥ भानुश्रीः पुनरायाता । कुशलान्वेषणाय च ॥ कृता रक्षा शरीरस्य । निहता दुष्टचेतसः ॥ ५६ ॥ गता भूयोऽपि भानुश्रीः । स्वस्थानं हृष्टमानसा ॥ नानाक्रीडनकैः क्रीळन् । कुमारस्तत्र तिष्ठति ॥ ५७ ॥

अथैकदा कुमारौ तौ । भानुप्रभमणिप्रभौ ॥ जात्याश्वयोः समारूढौ । चलितौ बलवेष्टितौ ॥ ॥ ५८ ॥ दूरं गत्वा निवृत्तेषु । शेषवाजिषु सत्वरं ॥ सुदूरं गंतुमारब्धो । भानुप्रभतुरंगमः ॥ ५९ ॥ वल्गां करद्वयेनोच्चै—राकर्षति यथा यथा ॥ तथा तथा च गृह्णाति । वेगं दुष्टतुरंगमः ॥ ६० ॥ प्रवेशितो महाटव्यां । मुक्ता वल्गा स्थितो हयः ॥ समुत्तीर्णः कुमारोऽपि । वाजी पंचत्वमागतः ॥ ॥ ६१ ॥ बुभुक्षितस्तृषार्त्तश्च । परिभ्राम्यन्नितस्ततः ॥ कंदमूलकृताहारः । पीत्वा च सुमलं जलं ॥ ॥ ६२ ॥ सखेदः श्रांतसर्वांगो । विश्राम्य च तरोरधः ॥ शृणोत्यतीवदीनानि । वचांसि रुदितानि च ॥ ६३ ॥ युग्मं ॥ भानुश्रीकुक्षिसंभूत । भानुप्रभ महाप्रभो ॥ मुंच मे मंदभाग्याया । हृदयं मा

मरिष्यसि ॥ ६४ ॥ त्वं भर्ता मे समादिष्टो । मुनिना दिव्यचक्षुषा ॥ यशःप्रभेण तस्यापि । वचनं किं वृथा भवेत् ॥ ६५ ॥ अहो निर्मानुषा पृथ्वी । नूनं वीरविवर्जिता ॥ अन्यथा पापपाखंडी । कथं मां मारयत्ययं ॥ ६६ ॥ एवमुक्त्वा भयभ्रांता । मुक्तकंठं रुरोद सा ॥ हृदयान्यपि दीर्यंते । यत् श्रुत्वानार्द्रचेतसां ॥ ६७ ॥ भो भो भीरु न भेतव्यं । मा रोदी लोललोचने ॥ यमजिह्वासमो यावत् । खड्गो मे दक्षिणे करे ॥ ६८ ॥ इति जल्पंस्तदंतेऽसौ । खड्गव्यग्रकरो गतः ॥ इदं निशम्य कोपांधः । कापाली भैरवाभिधः ॥ ६९ ॥ धावितः खड्गमादाय । रुष्टो भानुप्रभंप्रति ॥ पर्यंतो जीवितव्यस्य । स्मर रे पितरौ निजौ ॥ ७० ॥ रे पाप पापबुद्धिस्ते । केन दत्तेयमीदृशी ॥ इत्युक्त्वा वाहितः खड्गो । भैरवेण भयंकरः ॥ ७१ ॥ विभिर्विशेषकं ॥ लब्धलक्षेण दक्षेण । कुमारेणापि वंचितः ॥ गृहीत्वा पादयोस्तूर्णं । मस्तकोपरि धूनितः ॥ ७२ ॥ भैरवेण भयादूचे । तुष्टोऽहं त्वं च मुंच मां ॥ गृहाणेमां महाविद्यां । शक्रसंमोहकारिणीं ॥ ७३ ॥ इमां चानेकरूपाणां । तत्क्षणं करणक्षमां ॥ विद्यां गृहाण येनाहं । कृतकृत्यो भवाम्यलं ॥ ७४ ॥ मुक्तो भूमौ कुमारेण । क्षामितोऽविनयं निजं ॥ भणितश्चेदृशं कर्म । कर्तुं तव न संगतं ॥ ७५ ॥ स प्राहानुग्रहं कृत्वा । वि·

याचेदं गृहाण मे ॥ दत्वा यज्ञुरुदक्षिणां । योगशुद्धिं करोम्यहं ॥ ७६ ॥ अकार्ये च प्रवृत्तोऽहं । त्वया नूनं निवारितः ॥ तेन त्वं मे गुरुर्जातः । प्रार्थनां मावजीगण ॥ ७७ ॥ उपरोधगृहीतेन । गृहीतं तेन तद् द्वयं ॥ गतो भैरवकापाली । पृष्टा तेनाथ कन्यका ॥ ७८ ॥ का त्वं वा तनया कस्य । संप्राप्ता व्यसनं कथं ॥ भानुप्रभकुमारस्य । नाम किं वा स्मृतं त्वया ॥ ७९ ॥ तयोक्तं पुत्रिका श्रीम—त्सिंहलाधिपभूपतेः ॥ संजाता कनकश्रीतो । नाम्ना कनकसुंदरी ॥ ८० ॥ गीतनृत्यविनोदेन । रजन्याः प्रहरे गते ॥ रम्ये हर्म्यतले सुप्ता—त्रानीताहं कपालिना ॥ ८१ ॥ विद्यासिद्धिकृते पापो । मां मारयितुमुद्यतः ॥ भानुप्रभश्च मे भर्ता । कथितो मुनिना पुरा ॥ ८२ ॥ कुमारेणापि तुष्टेन । तया पृष्टेन मूलतः ॥ नामांतो निजवृत्तांतः । संक्षेपेण निवेदितः ॥ ८३ ॥ एहि सुंदरि कांतारा—त्तारयामि महाभयात् ॥ इत्युक्त्वा चलितः पूर्वां । सापि तत्पृष्ठतः स्थिता ॥ ॥ ८४ ॥ क्षणांतरेण सा ब्रूते । प्रियात्यंतं पिपासिता ॥ व्यक्तं वक्तुं न शक्नोमि । तृषा शुष्यति तालुकं ॥ ८५ ॥ आमलकफलं दत्वा । समाश्वास्य पुनः पुनः ॥ नीता स्तोकांतरं तेन । बुभुक्षिता पिपासिता ॥ ८६ ॥ अत्रांतरे महाभोगं । सीतवातेन सूचितं ॥ हंससारसचक्रादि—कूजितेन

प्रकाशितं ॥ ७७ ॥ अखंडवनखंडेन । शश्वच्छ्यामायमानया ॥ अदभ्रशुभ्रया पाल्या । परितः परि·
वेष्टितं ॥ ७८ ॥ लावण्यजलसंपूर्णं । भूरमण्या मनोहरं ॥ नाभिह्रदमिवाभाति । वृत्तं गंभीरमुज्ज्व·
लं ॥ ७९ ॥ दिशावधूकुमारीणां । मुखालोकनहेतवे ॥ वेधसा निर्मितं मन्ये । विशालमिव दर्पणं
॥ ८० ॥ देवनद्याः पयःपूर—रसातलप्रवेशने ॥ द्वारमिव शशांकस्य । ज्योत्स्नेव भुवमागता ॥८१॥
ग्रहनक्षत्रयुक्तेन । नक्तमंतः प्रसर्पता ॥ स्वच्छताप्रार्थनाहेतो—र्व्योम्नेव कृतसेवनं ॥ ८२ ॥ रक्ताशो·
कसमुद्भूत—पल्लवैः प्रतिबिंबितैः ॥ मांसखंडधिया धाव—न्मुग्धमीनैर्विराजितं ॥ ८३ ॥ तटस्थज·
लसंक्रांत—पूगीफलमहीरुहैः ॥ चलद्भिर्वातसंपर्का—त्सर्पैरिव भयंकरं ॥ ८४ ॥ स्फाटिकाभ्रदभ्रा·
भि—र्निश्छिद्राभिः समंततः ॥ निर्मलाभिर्विशालाभिः । शिलाभिर्बद्धभित्तिकं ॥ ८५ ॥ भित्तिरु·
परि दुर्लक्ष—संधिबंधैः सुनिर्मलैः ॥ निबद्धवेदिकं शुभ्र—चंद्रकांतशिलातलैः ॥ ८६ ॥ वेदिका·
लग्नखर्जूर—नालिकेराम्रकेतकैः ॥ पुंनागहिंगुहिंताल—तालपूगैर्विराजितं ॥ ८७ ॥ सुगंधगंधि·
भिः सार्द्रै—र्बकुलै राजचंपकैः ॥ धूलीधाराकदंबैश्च । सर्वतः परिवेष्टितं ॥ ८८ ॥ प्रधाननागवल्ली·
नां । द्राक्षाणां च मनोहरैः ॥ आर्द्रैश्च सरसैः पत्रै—र्मंडितं वरमंडपैः ॥ ८९ ॥ नानानारंगजंबी·

र—दाडिमैर्बीजपूरकैः ॥ वेदिकासन्नसद्वृक्ष—कक्षेण कृतवेष्टनं ॥ १०० ॥ तरंगभंगरंगद्भिः । पयोभिः कृतविस्मयं ॥ तारासरःसमाख्यातं । तारया येन कारितं ॥ १ ॥ तरंगबाहुभिर्दूरा—त्पक्षिणां विरुतेन च ॥ शब्दयंतमिवानेकान् । स्नानपानकृते जनान् ॥ २ ॥ कुलकं ॥

अवगाह्य तत्सरस्तास्यां । स्वशीलमिव निर्मलं ॥ पयः पीतं कृतं स्नान—मुत्तीर्य सरसस्ततः ॥ ॥ ३ ॥ कंदमूलैः फलैश्चैव । द्राक्षाद्यैः सुमनोहरैः ॥ स्मृत्वांतर्गुरुदेवांश्च । विहिता भोजनक्रिया ॥ ॥ ४ ॥ श्रांता लतागृहस्यांतः । स्थिता कनकसुंदरी ॥ कुमारः खड्गमादाय । दुष्टसंरक्षणाकृते ॥५॥ निषण्णो द्वारि निक्षिप्त—लोचनो दिक्षु पश्यति ॥ सरःपालीसमासन्नं । नागवल्लीविराजितं ॥ ६ ॥ वृक्षवृंदैः समाकीर्ण—मुद्यानं नंदनोपमं ॥ आलवालपयःपान—प्रहृष्टमृगयूथकं ॥ ७ ॥ त्रिभिर्विशेषकं ॥ तस्यांतर्वरपुष्पाणि । चिन्वती कोमलैः करैः ॥ दृष्टैका कन्यका तेन । पारिजाततरोरधः ॥ ८ ॥ सारंगयूथमध्यस्था । चंद्रवक्त्रा मृगेक्षणा ॥ तप्तस्वर्णवर्णाङ्गा । यौवनारंभवर्तिनी ॥ ९ ॥ सर्वसीमंतिनीसीमा । शशांकस्येव कौमुदी ॥ शर्वाणी शंकरस्येव । शंकरा प्रियदर्शना ॥ १० ॥ त्रिभिर्विशेषकं ॥ ग्रामं पुरं दिशं स्थानं । यावदेषा प्रबुध्यते ॥ प्रक्ष्यामि पुरो भूय । तावदेनां मृ-

गेक्षणां ॥ ११ ॥ चलितः खड्गमादाय । भानुप्रभः सकौतुकः ॥ समीपमागते तस्मिन् । मृगयूथं पलायितं ॥ १२ ॥ सांगभंगं सनिःश्वासं । संभ्रमभ्रांतलोचनं ॥ सापि कंपितुमारब्धा । लतेव पवनाहता ॥ १३ ॥ भानुमतो नरेंद्रस्य । पुत्रोऽहं भूमिगोचरः ॥ दिङ्मोहमोहितो मूढो । बंभ्रमीति मृगेक्षणे ॥ १४ ॥ का त्वं कस्याथवा पुत्री । कानि नामाक्षराणि ते ॥ एकाकिन्या कथं सुभ्रु । शून्यारण्यमलंकृतं ॥ १५ ॥ मनःप्रमोदकारीदं । सरः केनेह खानितं ॥ केन वा कारितं चेद—मुद्यानं नंदनोपमं ॥ १६ ॥ उद्यानांतर्महानेष । प्रासादः केन कारितः ॥ समस्ति निकटे किंचि—द्गोकुलं ग्राम एव वा ॥ १७ ॥ अदत्त्वैवोत्तरं बाला । मार्गतो वलितेक्षणा ॥ जृंभारंभं प्रकुर्वाणा । गता प्रासादसन्मुखी ॥ १८ ॥ स विलक्षः कुमारोऽपि । चिंतयामास मानसे ॥ अहो अलौकिकी कन्या । लोकाचारविवर्जिता ॥ १९ ॥ स्वयमेव समागत्य । पुरतो भूय प्रश्निता ॥ अदर्शितार्थिभावेन । सान्वयाख्यानपूर्वकं ॥ २० ॥ तथापि कथितं नैव । किंचिदप्यनया मम ॥ अहो मयार्थिना नून—मात्मायं मे लघूकृतः ॥ २१ ॥ सखेदश्च निरुत्साह—स्तैरेव चलितः पदैः ॥ लतागृहेऽथ नो सापि । दृष्टा कनकसुंदरी ॥ २२ ॥ निभालयितुमारब्धः । स विलक्ष इतस्ततः ॥ विलो-

किता नदीतीरे । तरुण्याः पदपद्धतिः ॥ २३ ॥ गतः स्तोकांतरं याव—त्पदलक्ष्यो नृपांगजः ॥ दृष्टा लतागृहस्यांत—श्वतस्रो राजकन्यकाः ॥ २४ ॥ द्वारस्थारक्षिका चैका । खड्गहस्ता निरीक्षिता ॥ विकोशासिकरा कांता । मृगाक्षी नवयौवना ॥ २५ ॥ नन्वेका सैव लोलाक्षी । यदर्थं बंभ्रमीम्यहं ॥ पृछामि किं विकल्पेन । प्रविष्टश्च लतागृहे ॥ २६ ॥ ज्ञानुप्रश्नेण सा पृष्टा । किं त्वं कनकसुंदरी ॥ सापि तां रक्षिकां दृष्ट्वा । रुदत्येव न जल्पति ॥ २७ ॥ रक्षिकापि विमुच्यासिं । समारूढमनोज्ञ-वा ॥ प्रोवाच कुमरं वाक्यं । वेपमानांगयष्टिका ॥ २८ ॥ संकाससिंहसूराणां । पुत्रिका धरणीभुजां ॥ सुंदरी मदना तारा । तिस्रस्तरललोचनाः ॥ २९ ॥ एषा च पुनरत्रैव । सुखमुप्ता लतागृहे ॥ र-तिश्रद्धाभिधानेन । भ्रात्रा मेऽक्षत्रकारिणा ॥ ३० ॥ आनीतास्ता गतः सोऽपि । वैताढ्ये निजका-र्यतः ॥ इमां विवाहसामग्रीं । संपूर्णां किं न पश्यसि ॥ ३१ ॥ युग्मं ॥ करग्रहं कुमारीणां । कुरु त्वमग्निसाक्षिकं ॥ विधेहि धीर विश्रब्धं । पंचमीं मां चतसृणां ॥ ३२ ॥ सर्वासां संमतं ज्ञात्वा । कु-मारेण विवाहिताः ॥ संक्षेपेण कृतं सर्वं । पाणिग्रहणमंगलं ॥ ३३ ॥

अत्रांतरे समायात—स्तत्र वेगान्नभश्चरः ॥ लतागृहाद्विनिर्गछ—न्निबद्धनवकंकणः ॥ ३४ ॥

नव्यविवाहवेषश्च । सरोषं तेन वीक्षितः ॥ प्रश्निता भगिनी कोऽयं । निर्गतः पुरुषाधमः ॥ ३५ ॥
युग्मं ॥ हे भ्रातरार्यपुत्रोऽयं । भानुमन्नृपनंदनः ॥ विश्वविश्वंभराभार—धरणोध्धुरकंधरः ॥ ३६ ॥
रे पापे केन ते दत्तो । येनाजन्यार्यपुत्रकः ॥ अथैनं प्रथमं ताव—न्मारयामि नराधमं ॥ ३७ ॥
पश्चादेनां महापापां । भगिनीरूपवैरिणीं ॥ यया कामांधया सत्या । वंचितः स्वसहोदरः ॥ ३८ ॥
रे पाप जार दुर्जात । दुराचार नराधम ॥ केनैताः कन्यका दत्ता—स्त्वया येन विवाहिताः ॥३९॥
एताः स्वार्थे मयानीताः । सामग्री सकला कृता ॥ त्वया तु दुर्जनेनैवं । छिद्रं लब्ध्वा विवाहिताः
॥ ४० ॥ शस्त्रं गृहाण कालस्ते । क्रुद्धो मूढाधुना ध्रुवं ॥ अद्यैव पाप ते मूर्ध्नि । सद्यः पततु पा-
तकं ॥ ४१ ॥ भानुप्रभकुमारोऽपि । दुर्वचःशरशल्यितः ॥ केसरीव निराशंको । दुढौके तस्य सन्मु-
खः ॥ ४२ ॥ खेचरेणापि निस्त्रिंशो । वाहितः कुमरंप्रति ॥ मुहूर्तं मूर्छितस्तेन । स्थितो भूपाल-
नंदनः ॥ ४३ ॥ भूयोऽपि लब्धचैतन्यः । खड्गमादाय धावितः ॥ तीक्ष्णखड्गप्रहारेण । प्रहतो द-
क्षिणे करे ॥ ४४ ॥ मुमोच दक्षिणं बाहुं । खड्गेन सह खेचरः ॥ स्मृता विलक्षवक्त्रेण । तेन वि-
द्या समागता ॥ ४५ ॥ वद वत्स च मे कार्यं । चिंतिताहं समागता ॥ दुराचारं दुराशं मे । मात-

मरिय वैरिणं ॥ ४६ ॥ विधाय विकृतं रूपं । संवर्ध्य च नभस्तले ॥ भुजपंजरमध्यस्थं । कृत्वा च नृपनंदनं ॥ ४७ ॥ गत्वोर्ध्वं नभसा सापि । चलिता दक्षिणां दिशं ॥ समुद्रे प्रक्षिपाम्येन—मिति बुद्ध्या कदाशया ॥ ४८ ॥ हता खड्गप्रहारेण । मूर्ध्नि भानुप्रभेण सा ॥ मुक्त्वा खिन्ना कुमारं च । गता विद्या यथागतं ॥ ४९ ॥ कुमारोऽपि नभोमार्गा—त्पतितो निम्नगाजले ॥ ततार तारबाहुभ्यां । नदीमदीनमानसः ॥ ५० ॥ विश्रम्य च नदीतीरे । कंदमूलकृताशनः ॥ अजानानो दिशां भागं । स चचालैकया दिशा ॥ ५१ ॥

स्तोकांतरं गतेनाथ । ददृशे वंशजालिका ॥ द्वारदेशसमासीना । स्त्री दृष्टा गतयौवना ॥ ॥ ५२ ॥ निरुद्धपदसंचारा । त्रस्तमुग्धमृगेक्षणा ॥ दृष्टैका कन्यका मध्ये । लावण्यामृतसारणी ॥ ॥ ५३ ॥ उपसृत्य कुमारेण । प्रणम्येदं प्रजल्पितं ॥ का त्वं च केन कार्येण । दृश्यसे भयविह्वला ॥ ५४ ॥ केयं मध्यस्थिता कन्या । कः प्रदेशोऽयमुच्यतां ॥ न जानेऽहं महाभागे । तेन पृच्छामि कथ्यतां ॥ ५५ ॥ अथ वृद्धा प्राह—इतो योजनमात्रेण । वत्साविषयभूषणा ॥ सुवत्सास्ति पुरी तत्र । नरेंद्रश्चंद्रशेखरः ॥ ५६ ॥ चंद्रलेखा महादेवी । रूपसौभाग्यभाजनं ॥ सर्वाणी शंकरस्येव ।

शशांकस्येव कौमुदी ॥ ५७ ॥ उपयाचितशतैस्तस्या । एकैवाजनि कन्यका ॥ सम्मता मातृपित्रोः सा । भ्रातॄणां नेत्रकौमुदी ॥ ५८ ॥ दानसन्मानसत्कारैः । पूजयित्वा महाजनं ॥ सूरश्रीरिति नामास्याः । समये संप्रतिष्ठितं ॥ ५९ ॥ पित्रा पृष्टः प्रहृष्टेन । समाहूय सगौरवं ॥ नैमित्तिकः शुभारंभः । ख्यातः सत्यप्रभावकः ॥ ६० ॥ नैमित्तिक शरीरेऽस्या । लक्षणानि निवेदय ॥ निरूप्य भणितं तेन । राजपुत्रीशरीरकं ॥ ६१ ॥ राजन् कल्याणमालेयं । चतूराज्यनिबंधना ॥ जन्मग्रहबलं श्रेष्ठं । लक्षणानि शुभानि च ॥ ६२ ॥ कल्याणभाजनं भव्यः । शुभग्रहनिरीक्षितः ॥ धन्यः कोऽपि युवा योऽस्याः । करिष्यति करग्रहं ॥ ६३ ॥ विसर्जितः शुभारंभ—श्चंद्रशेखरभूभुजा ॥ चंद्रलेखा समाहूता । तस्याः सर्वं निवेदितं ॥ ६४ ॥ विस्तृतं सर्वराज्येषु । शुभारंभप्रजल्पितं ॥ देशे देशे पुरे ग्रामे । तैलबिंदुर्यथा जले ॥ ६५ ॥ विषयराज्यलोभेन । राजानस्तां ययाचिरे ॥ न निषेधं न वा दानं । कुरुते चंडशेखरः ॥ ६६ ॥ केरलाधिपसूरस्य । राज्ञो दूतः समागतः ॥ नृपं प्रणम्य दूतेन । सदर्पं जल्पितं वचः ॥ ६७ ॥

सूराय तनुजां दत्वा । सुखं भुंक्ष्व महीपते ॥ कृतं कालविलंबेन । युद्धसज्जो भवाथवा ॥६८॥

अज्ञस्तव नृपो दूत । जानानपि न कोविदः ॥ न्यायेन लभ्यते कन्या । तत्रापि गुणसंपदा ॥६९॥
अर्धचंद्रं गले दत्वा । दूतो निष्काशितो पुरात् ॥ गत्वा तेनापि सूराय । सविशेषं निवेदितं ॥
॥ ७० ॥ श्रुत्वा दूतवचः सूरो । दिदीपे क्रोधवह्निना ॥ विधाय सर्वसामग्रीं । चचालोध्धुरकंधरः ॥
॥ ७१ ॥ अचिरादेव संप्राप्तः । सुवत्सां सूरपार्थिवः ॥ चंद्रशेखरभूपोऽपि । नोपसर्पति मानतः ॥
॥ ७२ ॥ बहिः स्थातुं न शक्नोति । योध्धुमल्पबलो यतः ॥ दग्धतृणेंधनो मानी । विनाशितजलाशयः ॥ ७३ ॥ जलेंधनतृणादीनां । प्रभूतकृतसंग्रहः ॥ पूर्वव्युच्छिन्नभूपाल—संधानकरणोद्यतः
॥ ७४ ॥ मध्यस्थकूपवाप्यादि—संशोधितजलाशयः ॥ शूरसामंतमंत्र्यादि—सार्धं रक्षितगोपुरः ॥
॥ ७५ ॥ प्राकारशिखरासक्त—शिलाशतसमाकुलां ॥ यंत्रस्थगोलपाषाण—पातनीलारिपौरुषां ॥
॥ ७६ ॥ प्राकारासन्नविस्तीर्ण—खातिकांभःसमाकुलां ॥ जात्याश्वहेषिताराव—भृतांबररसातलां ॥
॥ ७७ ॥ निरुद्धजनसंचारां । दुःप्रवेशविनिर्गमां ॥ सुवत्सां नगरीं कृत्वा । प्रतस्थे चंद्रशेखरः ॥७८॥
कुलकं ॥ सूरोऽपि पर्वताकारै—र्मदमत्तमतंगजैः ॥ प्राकारपाननायाग्र । सन्नद्धः सपरिच्छदः ॥७९॥
सुवत्सा वेष्टिता तेन । परितो मत्तवारणैः ॥ वाजिभिः स्यंदनैः सौरैः । पादातैर्गुरुविक्रमैः ॥ ८० ॥

सूरश्रियं समादाय । दासदासीसमन्विता ॥ उपयाचितदानार्थं । पूर्वमेव त्वहं गता ॥ ८१ ॥ दूर-
स्थभैरवीगेहे । कृतस्तत्रैव जागरः ॥ प्रभाते चलिता यावद् । दृश्यते नार्कमंडलं ॥ ८२ ॥ हृदया-
न्यपि दीर्यंते । शिवानां फारफेत्कृतैः ॥ वचो न श्रूयते तत्र । घूकानां घोरघूत्कृतैः ॥ ८३ ॥ न
प्राकारो न वेश्मानि । न च देवकुलानि च ॥ दृश्यंते हेतुना केन । किं वा मे मतिविभ्रमः ॥
॥ ८४ ॥ चिरं निरीक्ष्य सत्रासं । कुंतलेन प्रजल्पितं ॥ भद्रे नगररोधोऽयं । लक्ष्यते शत्रुणा कृतः
॥ ८५ ॥ सूरश्रियं समादाय । गम्यते न विलंब्यते ॥ तथैव कृतमस्माभि—रहमत्र समागता ॥
॥ ८६ ॥ शेषः परिजनः सर्वः । कोऽपि क्वापि विसर्जितः ॥ कंचुकी कुंतलो वृद्धो । जटाभारधरः
कृतः ॥ ८७ ॥ दासीकुक्षीसमुद्भूतौ । दासौ कपिलकेरलौ ॥ अव्यक्तलिंगिनौ जातौ । परानीके
विचेरतुः ॥ ८८ ॥ सर्वत्र तत्र तौ भ्रांत्वा । ज्ञात्वा वार्तां च शात्रवीं ॥ दिने दिने समागत्य । क-
थयामासतुर्मम ॥ ८९ ॥

एवं करोति सा याव—त्स्ववृत्तांतनिवेदनं ॥ भानुप्रभकुमारस्य । पुरतः प्रीतमानसा ॥ ९० ॥
तावत्तूर्णपदैर्धावन् । श्वाससंपूरिताननः ॥ वृद्धांतिके समायातः । कंचुकी कुंतलाभिधः ॥ ९१ ॥ सु-

ग्मं ॥ व्याकुलो दृश्यसे भद्र । केन कार्येण कथ्यतां ॥ तेनापि भणितं भद्रे । संक्षेपेण निशम्य-
तां ॥ ९२ ॥ अद्य दासीसुतौ दृष्टौ । केरलाधिपमंत्रिणा ॥ पृष्टौ च कौ भवंतौ च । कस्याद्देशादि-
हागतौ ॥ ९३ ॥ अशक्तावुत्तरं दातुं । क्षोभितौ लोललोचनौ ॥ नियम्य सुदृढं रज्ज्वा । कशादं-
डैः समाहतौ ॥ ९४ ॥ समर्पितौ नरेंद्रस्य । तेनापि च कदर्थितौ ॥ पृष्टौ रे कथ्यतां कुत्र । चंद्र-
शेखरकन्यका ॥ ९५ ॥ तच्छुद्धिं यदि जानीथः । स्वर्णकोटिं ददाम्यहं ॥ अन्यथा मारयाम्येव ।
युवामत्र न संशयः ॥ ९६ ॥ विस्मृतस्वामिसन्मानै—र्जीवितार्थोपलोभितैः ॥ कुमारी कथिता त-
स्मै । स्वाभिज्ञानपुरस्सरं ॥ ९७ ॥ इत एति महीनाथः । सूरः सबलवाहनः ॥ श्रुत्वेदं मूर्छिता वृ-
द्धा । पतिता मेदिनीतले ॥ ९८ ॥ क्रंदंती निर्गता मध्या—त्सूरश्रीः संभ्रमाकुला ॥ माभैषीरंब
निस्त्रिंशो । यावन्मे दक्षिणे करे ॥ ९९ ॥ इत्युक्त्वा पतितः शक्र—सैन्ये कुमरकेसरी ॥ पराजि-
तं च तत्तेन । सूरः स्वयमुपागतः ॥ १०० ॥ युग्मं ॥ सोऽपि खड्गप्रहारेण । प्रहतः पतितो भुवि ॥
वलितं च भयाक्रांतं । कृतकोलाहलं बलं ॥ १ ॥ कुमारेण स्मृता विद्या । शत्रुसंमोहकारिणी ॥
कापालिकेन या दत्ता । सुप्तं तयाखिलं बलं ॥ २ ॥ कुमारस्योपचारेण । सूरः स्वास्थ्यमुपागतः ॥

प्रतिविद्याप्रदानेन । बलं च प्रगुणीकृतं ॥ ३ ॥ चंडशेखरनृपोऽपि । बहिरेव समागतः ॥ कृता परस्परं मैत्री । सहैव पुरमागताः ॥ ४ ॥ चंद्रशेखरभूपेन । सूरश्री राज्यसंपदा ॥ भानुप्रभकुमाराय । दत्ता प्रीतिपुरस्सरं ॥ ५ ॥ सूरेणापि कुमारस्य । दुहिता केरलाभिधा ॥ प्रार्थनापूर्वकं दत्वा । विस्तरेण विवाहिता ॥ ६ ॥

अत्रांतरे समायाता । विद्युत्सेना नभश्चरी ॥ चतस्रोऽपि समादाय । पंचमी मुक्तकंचुका ॥
॥ ७ ॥ भणितं च कुमारेण । युष्माकं क्षेम वर्तते ॥ विद्युत्सेनाह सोद्वेगं । क्षेमाक्षेमं च वर्तते ॥
॥ ८ ॥ मनःसमुद्रराकेंदु—रद्य त्वं येन वीक्षितः ॥ महोदयसमारूढ—स्तेन नः क्षेम वर्तते ॥९॥
विद्यामुक्तश्च भ्राता स । कन्यकानां वधोद्यतः ॥ यन्मारितो मयाऽक्षेम । तेन नाथ निगद्यते ॥
॥ १० ॥ प्रयोजनप्रियः प्रायो । जनोऽयं न जनप्रियः ॥ पत्युः प्रयोजने येन । भगिन्या भ्राता निपातितः ॥ ११ ॥ भानुप्रभवचो लब्ध्वा । तया दत्तो जलांजलिः ॥ गृहीतः कंचुकः पृष्टौ । पतितश्च सहोदरः ॥ १२ ॥ लतागृहे समूढानां । कन्यकानां चतसृणां ॥ पितरो मिलितास्तत्र । सूरेण सममागताः ॥ १३ ॥ दृष्ट्वा दुहितरस्ताभि—र्वृत्तांतः कथितो निजः ॥ तेन सत्पात्रयोगेन । नंनं·

दुः सुतरां नृपाः ॥ १४ ॥ सूरेणापि निजं राज्य—मपुत्रेण समर्पितं ॥ भानुप्रभकुमारस्य । चतु-
रंगबलान्वितं ॥ १५ ॥ निःसंतानो गतानंदः । सूरः संहृतविस्तरः ॥ न केवलं तपस्तेपे । शिश्रिये
च तपोवनं ॥ १६ ॥ गीतनृत्यविनोदेन । रजन्याः प्रहरे गते ॥ सुप्तो हर्म्यतले रम्ये । तल्पे स-
र्वांगकोमले ॥ १७ ॥ प्रभाते च प्रबुद्धोऽसौ । प्रासादशिखरस्थितं ॥ पश्यन्नात्मानमत्रस्तः । किमे-
तदिति विस्मितः ॥ १८ ॥ न तत्सौधतलं रम्यं । न तल्पं तूलकोमलं ॥ सुवत्सा नगरी नैषा । न
कांताः कमलेक्षणाः ॥ १९ ॥ एवं तर्कपरो याव—दास्ते भानुमदंगजः ॥ तावत्तारा समायाता ।
देवता तत्र वासिनी ॥ २० ॥ मानः का त्वं वने शून्ये । प्रासादः केन कारितः ॥ उद्यानं च कृतं
केन । कस्य कीर्तिसरोवरं ॥ २१ ॥ केनेदं कारितं रम्यं । मंदिरं मदनद्विषः ॥ चराचरजगद्बंधो—
र्नाभेयस्य महात्मनः ॥ २२ ॥ सापि वक्तुं समारेभे । बाष्पांभोभृतलोचना ॥ ताराहं वनदेवीह ।
प्रासादोऽयं मया कृतः ॥ २३ ॥ सरश्च जलसंपूर्णं । कल्लोलालिविराजितं ॥ युगादिजिननाथस्य ।
मंदिरं च मया कृतं ॥ २४ ॥ आरामोऽपि मयाकारि । नानावनविराजितः ॥ पूजार्थं पूजनीयस्य ।
वृषभस्य जगद्गुरोः ॥ २५ ॥ भणितं च कुमारेण । यतस्त्वं वनदेवता ॥ स्वछंदचारिणां कार्यं ।

किमेतैर्विस्मयो मम ॥ २६ ॥ तयाभाणि महाभाग । संक्षेपात् शृणु कारणं ॥ अंगाजनपदस्यांतः । श्रीविलासपुरं पुरं ॥ २७ ॥ श्रीविलासो नृपस्तत्र । मंदिरं सर्वसंपदां ॥ कामश्रीर्गेहिनी तस्य । रूपलावण्यशालिनी ॥ २८ ॥ शतोपयाचितैर्जाता । अहमेकैव कन्यका ॥ तस्याः प्रतिष्टितं नाम । जयश्रीरिति सुंदरं ॥ २९ ॥ अवंतिवर्धनेनाहं । कलिंगाधिपसूनुना ॥ परिणीता प्रमोदेन । व्रजंति मम वासराः ॥ ३० ॥ संभूतो मेऽन्यदा गर्भो । मृतश्चावंतिवर्धनः ॥ कीर्तिधर्माभिधस्तस्य । भागिनेयः प्रतिष्टितः ॥ ३१ ॥

अन्यदा च सशंकेन । पृष्टो नैमित्तिकः स्वयं ॥ स्थिरं मे भद्र किं राज्यं । चलं वेति निगद्यतां ॥ ३२ ॥ जयश्रीकुक्षिसंभूतां । कन्यां यः परिणेष्यति ॥ स एतद्भोक्ष्यते राज्यं । निश्छद्म यदि जल्प्यते ॥ ३३ ॥ नैमित्तिक गृहं याहि । हृदि धार्यमिदं त्वया ॥ एकांते भणितस्तेन । दृढधर्मा स्वमातुलः ॥ ३४ ॥ जयश्रियं गृहीत्वा त्वं । नयामि त्वां पितुर्गृहे ॥ इत्युक्त्वा गच्छ कांतारे । व्यापाद्यागच्छ सत्वरं ॥ ३५ ॥ प्रतिपद्य वचस्तस्य । एकाकी च मया समं ॥ रथमारुह्य वेगेन । कांतारमिदमागतः ॥ ३६ ॥ ततो रथात्समुत्तीर्य । निवेद्य नृपशासनं ॥ कटीतटात्समाकृष्य । तेन ती·

दणासिधेनुका ॥ ३७ ॥ तीव्रार्ककरसंपर्क—दुर्दर्शामसिपुत्रिकां ॥ दृष्ट्वाहं कंपितुं लग्ना । लतेव प·
वनाहता ॥ ३८ ॥ भीतायाः पतितो गर्भो । भूतलेऽजनि पुत्रिका ॥ हताहं च मृतात्रैव । संजाता
वनदेवता ॥ ३९ ॥ दारिकां मारयन् सोऽपि । वनदेव्या निपातितः ॥ पापानां निपतत्येव । पाप·
मत्रैव जन्मनि ॥ ४० ॥ स्त्रीहत्यां भ्रूणहत्यां च । कृत्वासौ जावतोऽधमः ॥ महापापभराक्रांतो । मृ·
त्वा च दुर्गतिं गतः ॥ ४१ ॥ स्त्रीहत्यां हि महापाप—महानर्थनिबंधनं ॥ महापापाः प्रकुर्वंति । दु·
र्गदुर्गतिगामिनः ॥ ४२ ॥ अनाचारे मतिर्यस्य । जन्मद्वयं निहंति सः ॥ दुर्गतिः परलोकेऽस्य ।
लोके चेह विडंबना ॥ ४३ ॥ पुत्रिकापि मया पुत्र । महामोहेन पालिता ॥ सांप्रतं च वरप्राप्तौ ।
चिंता मे हृदये स्थिता ॥ ४४ ॥ मानुषी तु न देवेषु । मनुष्येषु न रूपवान् ॥ वरोऽस्या विद्यते
योग्यः । सचिंतं तेन मे मनः ॥ ४५ ॥ वरचिंताकुला याव—त्तिष्ठामि प्रतिवासरं ॥ तावदन्यदिने
दृष्टा । तत्पासीनातिदुःखिता ॥ ४६ ॥ एकाकिन्येव जल्पंती । रुदंती च पुनः पुनः ॥ शून्यचित्ता
ह्यधोवक्त्रा । भ्रष्टमंत्रेव योगिनी ॥ ४७ ॥ युग्मं ॥ अहो मे निर्घृणं कर्म । कृतमज्ञानदोषतः ॥ न
दत्तमुत्तरं तस्य । सस्नेहं पृच्छ्यमानया ॥ ४८ ॥ लज्जानुरोधतो नैष । युवा संभाषितो मया ॥ दू·

रस्या सांप्रतं लज्जा । दुःखं निपतितं मम ॥ ४९ ॥ क्व यामि कुत्र तिष्ठामि । परित्राणं कुतो भ-
वेत् ॥ मनो मेऽपहृतं तेन । कायस्तिष्ठति केवलः ॥ ५० ॥ वने जाता वने भुक्ता । वने वृद्धिमु-
पागता ॥ कुतोऽस्या ईदृशो भावः । प्रादुर्भूतो ह्यशिक्षितः ॥ ५१ ॥ ससंभ्रमं समागत्य । मया पृ-
ष्टा पुनः पुनः ॥ बाधते किं शरीरे ते । रुद्यते किं पुनः पुनः ॥ ५२ ॥ एवमापृच्छ्यमानापि । रु-
दत्येव हि केवलं ॥ नाचष्टे कारणं किंचि—त्ततोऽहं मौनमाश्रिता ॥ ५३ ॥ सामान्येन मया ज्ञा-
तं । दृष्टः कोऽपि युवानया ॥ निर्निमित्ता न जायंते । भावाः कामसमुद्भवाः ॥ ५४ ॥ वत्से चिं-
ता न कर्तव्या । चिंतेयं मम सांप्रतं ॥ तथा तथा करिष्यामि । सुखितासि यथा यथा ॥ ५५ ॥
ततश्चेदं समाकर्ण्य । निपत्य मम पादयोः ॥ स्नाता भुक्ता प्रतीता च । रेमे च हरिणैः सह ॥५६॥
इतश्चेतो गवेषंत्या । ग्रामेऽरण्ये जले स्थले ॥ न दृष्टो न श्रुतः क्वापि । विफलो मे परिश्रमः ॥
॥ ५७ ॥ अद्य सुप्तो मया दृष्टो । वत्सायां पुरि मंदिरे ॥ चंद्रशेखरराजस्य । तल्पेऽस्याश्च मनो-
हरः ॥ ५८ ॥ गते यामे च यामिन्याः । सुप्ते परिजनेऽखिले ॥ दत्वापस्वापिनीं विद्या—मानीतो-
ऽसि मयाधुना ॥ ५९ ॥ वत्स खेदो न कर्तव्यो । ह्यवज्ञातोऽहमेतया ॥ अज्ञानमथवा लज्जा ।

द्वयमत्रापराध्यति ॥ ६० ॥ सर्वदैव सलज्जेयं । दोषादोषं गुणागुणं ॥ नैव जानात्यतस्तुभ्यं । ना-
नया दत्तमुत्तरं ॥ ६१ ॥ शरदभ्रसमानानि । मनांसीह मनस्विनां ॥ बहिरुष्णानि कार्येण । मध्ये
शीतानि सर्वदा ॥ ६२ ॥ कन्यकैणामुखी नाम । प्राणेभ्योऽपि मम प्रिया ॥ सा तुभ्यं दीयते वत्स
। वाक्यं मे मा वृथा कृथाः ॥ ६३ ॥ अत्रांतरे समायाता । सुतारा नाम देवता ॥ दृष्ट्वा भानुप्र-
भं पुत्रं । रुद्धकंठं रुरोद सा ॥ ६४ ॥ कृत्वोत्संगे समाघ्राय । पुत्रं मूर्ध्नि मुहुर्मुहुः ॥ सुतारोवाच हे
वत्स । कुशलं ते शरीरके ॥ ६५ ॥ सर्वत्र कुशलं मात—र्मा कार्षीर्दुःखितं मनः ॥ सुखदुःखानि
सर्वेषां । समीपस्थानि देहिनां ॥ ६६ ॥ आतिथ्येयं समासाद्य । ताराता ह्युचितं ततः ॥ सौजन्य-
वर्धितानंदा । सुतारा मुमुदेतरां ॥ ६७ ॥ परस्परं समालापो । जातस्तारासुतारयोः ॥ कृता विवाह-
सामग्री । मिलिता वनदेवताः ॥ ६८ ॥ भानुप्रभकुमारेण । प्रशस्ते तिथिवासरे ॥ एणामुखी वि-
धानेन । परिणीता मुदा तदा ॥ ६९ ॥ कोटिशः स्वर्णरत्नानि । वरवस्त्राणि कोटिशः ॥ दत्तानि
वनदेवीभिः । सर्वं हि महतां महत् ॥ ७० ॥ ततो गताश्च सर्वे ते । मिलित्वा जिनमंदिरे ॥ पू-
जा कृता विधानेन । विधाय जिनवंदनं ॥ ७१ ॥ भानुप्रभः पुरोभूय । प्रमोदभरनिर्भरः ॥ युगा-

दिधर्मकर्तारं । तुष्टुवे तुष्टमानसः ॥ ७२ ॥

युगादिजिन योगीश । योगिगम्य निरंजन ॥ रागद्वेषमहामोह—मुक्तमूर्ते नमोऽस्तु ते ॥ ॥ ७३ ॥ अद्यैव सफलं जन्म । यौवनं जीवितं च मे ॥ शांता कांता शिवा सौम्या । यन्मूर्तिस्ते· ऽवलोकिता ॥ ७४ ॥ एवं देवं नमस्कृत्य । युगादिजिननायकं ॥ मंडपस्थे ततस्तस्मिन् । देव्यः प्रे· क्षां प्रचक्रिरे ॥ ७५ ॥ प्रगीतं किन्नरैर्गीतं । वादितं व्यंतरैः सुरैः ॥ प्रनृत्तं वनदेवीभि—र्हावभाव· पुरस्सरं ॥ ७६ ॥ प्रणम्य परमात्मानं । दत्वा नीवीं विलक्षिकां ॥ स्वस्थानं च गताः सर्वे । प्रमोद· भरनिर्भराः ॥ ७७ ॥ माता विसर्जिता स्थाने । वनदेव्योऽपि तथैव च ॥ स्वयं तारानिरोधेन । त· त्रैवासांचकार सः ॥ ७८ ॥ तारासरःसमुद्भूत—पयःपालीष्वनारतं ॥ वनेषु वनखंडेषु । ह्युद्याना· रामभूमिषु ॥ ७९ ॥ तारा जिनगृहे भक्त्या । नृत्यत्येणामुखी सदा ॥ वीणां च वादयत्येष । सु· ग्रामस्वरमूर्छनं ॥ ८० ॥ एणामुख्या समं तस्य । क्रीडतो यांति वासराः ॥ क्षणात्सौख्यं क्षणाद्दुः· खं । करोति विधिरंगिनां ॥ ८१ ॥ नक्तं स्वकांतया सार्धं । सुप्तः शुश्राव सुस्वरं ॥ वीणावेणुमृदंगा· नां । गीतं च श्रुतिकोमलं ॥ ८२ ॥ कांते कोऽयं जनो धन्यो । जिनस्याग्रे मनोरमां ॥ प्रेक्षां कु·

रोति पुण्यात्मा । सावोचत् श्रूयतां प्रिय ॥ ८३ ॥ सरःपालीनिकुंजेषु । सिद्धविद्या नरेश्वराः ॥ अ-
ष्टाह्निकां महापूजां । चक्रुरत्र कृतादराः ॥ ८४ ॥ गम्यते दृश्यते पूजा । कीदृग्विद्याधरो जनः ॥
कीदृशं वादितं तस्य । गीतं नृत्यं च कीदृशं ॥ ८५ ॥ तयोक्तं कांतकायस्त्वं । एकाकी भूमिगो-
चरः ॥ मानर्थः कोऽपि जायेत । तेन यानं न संगतं ॥ ८६ ॥ हितेयं संगतं ब्रूते । संतस्तन्मृग-
लोचना ॥ न जगाम स्थितोऽत्रैव । नीतिमान् कमलाशयः ॥ ८७ ॥

इतश्च कीर्तिधर्मेण । नक्तं स्वप्नोऽवलोकितः ॥ सिंहासनादहं भ्रष्टः । पतितो मेदिनीतले ॥
॥ ८८ ॥ स्वयं शंकितचित्तेन । गणकाय निवेदितं ॥ तेनापि भणितं शीघ्रं । व्रतभंगो भविष्य-
ति ॥ ८९ ॥ स्वप्नो न संगतो भाति । न स्यादस्यानृतं वचः ॥ दृढधर्मोऽपि नायाति । नेदं क-
व्यापकारणं ॥ ९० ॥ आप्तनराः समाहूताः । शिक्षयित्वा विसर्जिताः ॥ शालाद्व्यां द्रुतं यात ।
दृढधर्मगवेषणां ॥ ९१ ॥ कृत्वा सर्वत्र भूयोऽपि । समागछत सत्वरं ॥ न जाने तस्य किं वृत्तं ।
साशंकं मम मानसं ॥ ९२ ॥ युग्मं ॥ गतास्ते तत्र सर्वत्र । कृता तस्य गवेषणा ॥ न दृष्टो दृष्ट-
मेकत्र । निर्मांसमस्थिपंजरं ॥ ९३ ॥ तारासरःसमासन्ने । कांतकांतासमन्वितः ॥ दृष्टश्चैको युवा

कोऽपि । कामदेव इवापरः ॥ ९४ ॥ निषेदुषः पतत्यस्य । नभसः सिंहविष्टरं ॥ शिरोपरि धृतं या-
ति । छत्रमस्य नरं विना ॥ ९५ ॥ सव्येतरविभागे च । लुलतो वरचामरे ॥ नरं विनापि तस्यैते
। जीवद्भिः किं न दृश्यते ॥ ९६ ॥ अत्रांतरे समायाता । योषैका कांतदर्शना ॥ कृतानि मंगला-
न्यस्य । सर्वाण्यपि तयांजसा ॥ ९७ ॥ प्रणम्य भणिता तेन । मुंच मामंब सांप्रतं ॥ तयोक्तं की-
र्तिधर्मस्य । राज्ये त्वमभिषिच्यसे ॥ ९८ ॥ इतश्च पंचमेऽह्नि त्वं । निश्चलीकुरु मानसं ॥ मात्व-
रिष्या गरिष्टत्व—मित्युक्त्वा सा तिरोदधे ॥ ९९ ॥ युग्मं ॥ वयमप्येतदाकर्ण्य । भीतभीता द्रुतं
द्रुतं ॥ युष्मत्समीपमायाता । पानभोजनवर्जिताः ॥ ३०० ॥ कथितं स्वामिने सर्वं । यथा दृष्टं य-
था श्रुतं ॥ आसन्नं व्यसनं देव । ह्युपायः कोऽपि चिंत्यतां ॥ १ ॥ कीर्तिधर्मोऽपि तत् श्रुत्वा । च-
तुरंगबलान्वितः ॥ नगरान्निर्गतः क्रोधा—द्गतः शालाटवींप्रति ॥ २ ॥ दिवा रात्रौ च वेगेन । ह्य-
स्खलितप्रयाणकैः ॥ तारासरःसमासन्ने । ताराारामे कृतस्थितिः ॥ ३ ॥ आरामे च कृतावासं । कीर्ति-
धर्मं विलोक्य सः ॥ चचाल समरापेक्षी । सिंहो गजघटां यथा ॥ ४ ॥ रे रे गृह्णीत शस्त्राणि ।
प्रगुणीभव सांप्रतं ॥ सुप्तमत्तप्रमत्तेषु । न प्रहारं करोम्यहं ॥ ५ ॥ एकाकिनं तकं दृष्ट्वा । निर्भीकाः

स्थिरमानसाः ॥ शरं कृत्वा समायाताः । प्रवृत्तो दारुणो रणः ॥ ६ ॥ रथस्थेषु गजस्थेषु । वाजि-
स्थेषु पदातिषु ॥ पतत्सु सत्सु सर्वत्र । संकीर्णाजनि मेदिनी ॥ ७ ॥ गजस्कंधात्समाकृष्टो । गृध्रे
णेव भुजंगमः ॥ न ज्ञायते गतः क्वापि । कीर्तिधर्मो नराधिपः ॥ ८ ॥ दत्वावस्वापिनीं निद्रां ।
शायितं सकलं बलं ॥ त्र्यस्तं गते रवौ रात्रौ । यथा पद्मवनं तथा ॥ ९ ॥ तारा समागता दृष्टं ।
ज्ञानुप्रज्ञविचेष्टितं ॥ प्रतिविद्याविधानेन । नष्टनिद्रं समुत्थितं ॥ १० ॥ कीर्तिधर्मं न पश्यंति । येन
सार्धं समागताः ॥ तारया कथितं सर्वं । तेभ्यस्तस्य च चेष्टितं ॥ ११ ॥

ततो विरक्तचित्तैस्तैः । प्रधानैः प्रतिपादितं ॥ ज्ञानुप्रज्ञकुमारोऽयं । तस्य स्थाने निवेश्यतां ॥
॥ १२ ॥ तारया भणितं भद्राः । कुरुध्वं स्वसमीहितं ॥ कृतस्य करणं नास्ति । कालक्षेपो न सं-
गतः ॥ १३ ॥ श्रीविलासपुरे नीतो । राजामात्यपुरस्सरैः ॥ कीर्तिधर्मपदे राज्ये । स्थापितो वरमंग-
लैः ॥ १३ ॥ राज्ये स्वचिंतका मुक्ता—श्चंद्रशेखरसूरयोः ॥ सर्वाः कन्याः परिणीताः । समानीता
निजांतिके ॥ १४ ॥ त्रिराज्याधिपतिर्जात । उत्खातप्रतिरोपितान् ॥ कुर्वन्नशेषभूपालान् । गमया-
मास वासरान् ॥ १५ ॥ पितृसत्काः समायाता । एकदा पुरुषा वराः ॥ मंत्रिभिः प्रेषिताः संतो ।

भानुप्रजन्नृपांतिके ॥ १६ ॥ कुशलं तस्य तातस्य । चारुकीर्तेर्महौजसः ॥ कुशलं यशसा ताव—न्न प्राणैः क्षणभंगुरैः ॥ १७ ॥ श्रुत्वेदं शोकसंभार—भ्रांतचेता महीपतिः ॥ न विवेद सुखं दुःखं । जीवितं मरणं तथा ॥ १८ ॥ मूर्छांते लब्धचैतन्यः । प्रश्नयामास सादरं ॥ सुखमास्ते सदाकालं । कालश्रीः श्रीरिवापरा ॥ १९ ॥ पुरे राज्ये धने धान्ये । भांडागारे च रोधने ॥ सिंहविक्रमराजस्य । वर्तते कुशलं ननु ॥ २० ॥ पुरुषाः प्राहुः—नानुकूलाः प्रजास्तस्य । नृपा न वशवर्तिनः ॥ प्रतापः सुसहस्तस्य । घनछन्नरवेरिव ॥ २१ ॥ तस्करास्तरलायंते । हन्यंते प्रांतभूमयः ॥ किं बहुना विचारेण । सर्वं राज्यं विसंस्थुलं ॥ २२ ॥ तदधिष्ठीयतां शीघ्र—मागत्य पैतृकं पदं ॥ प्रजाश्चिरंतनं पाहि । मूलनाशो न संगत· ॥ २३ ॥ श्रियोऽपि ता न शस्यंते । दृश्यंते या न सज्जनैः ॥ तत् श्रुत्वामर्षितश्चित्ते । शरविद्धोव केसरी ॥ २४ ॥ जघान भूतलं मुष्ट्या । खड्गे दृष्टिं ददौ च सः ॥ देवो वा दानवो वापि । खेचरो भूमिगोचरः ॥ २५ ॥ यः करोति पराभूतिं । सिंहविक्रमभूभुजः ॥ किं तस्य विस्मृतो मृत्युः । कुबुद्धिर्वा विजृंभिता ॥ २६ ॥ युग्मं ॥

दूरस्थोऽपि समासन्नः । किं नाहमवलोकितः ॥ निश्चक्राम धराधीशो । लग्ने गणकसूचिते ॥

॥ २७ ॥ प्रतापः पप्रथे तस्य । मेघमुक्तरवेरिव ॥ चचाल चतुरंगेण । बलेन भृतभूतलः ॥ २८ ॥
स्वत एव समागत्य । राजभिः परिवारितः ॥ शालाटव्यां समागत्य । तारया कृतगौरवः ॥ २९ ॥
ताराभरःसमासन्ने । आवासं कृतवान् स च ॥ चतुर्वर्णसमाकीर्णं । नानावेश्मसमाकुलं ॥ ३० ॥
विशालशालसंबद्धं । खातिकापरिवेष्टितं ॥ विचित्रचित्रसंपन्न—चतुर्गोपुरराजितं ॥ ३१ ॥ पुरं ता-
रापुरं नाम । स्वल्पकालेन कारितं ॥ दत्तं युगादिदेवस्य । साराम पुण्यहेतवे ॥ ३२ ॥ चतुर्भिः क-
लापकं ॥ भानुप्रभनरेंद्रेण । ताम्रशासनलेखितं ॥ समर्पितं च संघाय । जिनपूजनकृते पुरं ॥३३॥
अन्यदा भणिता तारा । मातर्गच्छामि सांप्रतं ॥ करसंपुटमादाय । तयापीदं प्रजल्पितं ॥ ३४ ॥ स-
म्यगेणामुखी राजन् । द्रष्टव्या स्निग्धया दृशा ॥ त्वमस्याः सर्वकार्येषु । हर्ता कर्ता च संपदं ॥३५॥
चचाल स्वप्रतापेन । समाक्रांतमहीतलः ॥ पश्चिमां दिशमाश्रित्य । प्रभाते सविता यथा ॥ ३६ ॥
आगच्छंतं समाकर्ण्य । भानुप्रभनराधिपं ॥ सिंहविक्रमराजेन । मत्सरेण पलायितं ॥ ३७ ॥ बहिरा-
वासितो राजा । समये च प्रवेशितः ॥ कृतर्द्धिशोभं नगरं । मंचमालाविराजितं ॥ ३८ ॥ सोत्कंठा-
श्च प्रजाः सर्वा । दर्शनार्थं समागताः ॥ अहो रूपमहो रूप—महो कांतिर्मनोहरा ॥ ३९ ॥ सक

लानि कलत्राणि । अहो तुल्यः समागमः ॥ अनुकूलो विधिः पुंसां । किं किं यन्न करोत्यहो ॥
॥ ४० ॥ इत्येवं सर्वलोकेन । श्लाघ्यमानः पदे पदे ॥ विवेश मंदिरं पैत्र्यं । राजमानो नृपश्रिया
॥ ४१ ॥ पूजयित्वा यथायोग्यं । लोकः सर्वो विसर्जितः ॥ स्थितः सिंहासने राजा । प्रधानपरिवा·
रितः ॥ ४२ ॥ यदर्थं वयमायाता । यश्च मे हृदि वर्तते ॥ शूरो विक्रमभूपालः । स किं नो नात्र
दृश्यते ॥ ४३ ॥ मंत्रिणोक्तं च किं तेन । मत्सरहतबुद्धिना ॥ नाऽधन्यश्च जनो येन । देवदर्श·
नमर्हति ॥ ४४ ॥ महेंद्रमातुलेनापि । राज्यश्रीरिव दुर्लभा ॥ राज्यश्रीकन्यका दत्ता । विस्तरेण
विवाहिता ॥ ४५ ॥ गुणानुरक्तनिःशेष—लोकमुध्धृतकंटकं ॥ प्रणताशेषसामंतं । विनमन्मंत्रिमंडलं
॥ ४६ ॥ पालयतोऽप्रयासेन । रम्यं राज्यचतुष्टयं ॥ कामभोगान् यथाकामं । भुंजानस्यानुवासरं ॥
॥ ४७ ॥ संसारसुखसंदोह—मग्नमूर्तेर्महात्मनः ॥ संजातयोग्यपुत्रस्य । गतः कालः कियानपि ॥
॥ ४८ ॥ त्रिभिर्विशेषकं ॥

अन्यदा भुवनालोक—केवल्यत्र समागतः ॥ वंदनार्थं गतो राजा । प्रभूतैर्नागरैः सह ॥४९॥
केवली कथयामास । धर्मं दुर्गतिनाशनं ॥ हितश्च सर्वजीवानां । सर्वजंतुसुखावहं ॥ ५० ॥ अथ

प्रस्तावमासाद्य । भानुप्रभनृपोऽवदत् ॥ पूर्वजन्मनि लोकेश । किं मया सुकृतं कृतं ॥ ५१ ॥ येने-
दृक्षा महाभोगा । रम्यं राज्यचतुष्टयं ॥ कांताः कांताः सुपुत्राश्च । श्रियः सर्वमनोहराः ॥ ५२ ॥
युग्मं ॥ केवल्युवाच भो राजन् । संक्षेपात् शृणु कारणं ॥ शुभाशुभपदार्थानां । पुण्यपापे निबंध-
नं ॥ ५३ ॥ समस्तीह कलिंगेषु । सुखावासं महापुरं ॥ धाराख्या निर्धना नारी । तत्रोवास निर-
न्वया ॥ ५४ ॥ नानाकोलसमाकीर्ण—कुटीरकनिवासिनी ॥ कुवासाछादना नित्यं । कुकर्मशतका-
रिणी ॥ ५५ ॥ युग्मं ॥ तैलकर्षं समादाय । सापणाद्वलिता सती ॥ विवेश मंदिरं जैनं । राजह-
स्तिभयाकुला ॥ ५६ ॥ अहो महति संसारे । जीवद्भिः किं न दृश्यते ॥ यद् दृष्टोऽदृष्टपूर्वोऽयं ।
देवदेवो जिनेश्वरः ॥ ५७ ॥ शांतः सौम्यः सदाकारः । प्रदीपोद्योतिताननः ॥ गतरागो गतद्वेषो ।
गतमोहो निरंजनः ॥ ५८ ॥ युग्मं ॥ अस्यैव पुरतो भाति । प्रदीप इति मे मतिः ॥ इत्यालोच्य
तया दत्तः । प्रदीपः स्नेहपूरितः ॥ ५९ ॥ अन्वमोदि चिरं कालं । रोमांचांचितगात्रया ॥ बद्धं प-
रभवायुष्कं । भोगसारं तदा तया ॥ ६० ॥ युग्मं ॥ मृत्वा कालेन संजातो । भानुश्रीपरमोदरे ॥
भानुप्रभ इति ख्यातः । स च त्वं मेदिनीपते ॥ ६१ ॥ श्रुत्वेदं भुवनालोक—भाषितं मेदिनीप-

तिः ॥ सद्यः संजातवैराग्यो । निजजातिस्मरोऽभवत् ॥ ६२ ॥ ततश्च भणितस्तेन । भुवनालोक-
केवली ॥ यद्यस्ति योग्यता स्वामिं-स्तदा दीक्षा प्रदीयतां ॥ ६३ ॥ केवल्युवाच भूपेश । महदेत-
त्प्रयोजनं ॥ संगतं सर्वजीवानां । विशेषेण भवादृशां ॥ ६४ ॥ व्रतमेतन्महापुण्यै—स्तीर्थनाथैः
स्वयं कृतं ॥ चक्रवर्तिभिराचीर्णं । बलदेवैर्निषेवितं ॥ ६५ ॥ परं सम्यक्समालोच्य । ह्यंगीकारोऽ-
स्य संगतः ॥ सुकुमारशरीरस्त्वं । कष्टमत्र पदे पदे ॥ ६६ ॥ तथाहि—

यदिदं प्रव्रजनं नाम साक्षाद्बाहुभ्यां तरणमेतत्स्वयंभूरमणस्य, प्रतिश्रोतोगमनमेतद्गंगायाः, च-
र्वणमेतल्लोहमययवानां, भरणमेतत्सूक्ष्मपवनेन कंबलमुत्कोथ्याः, भेदनमेतच्छिरसा सुरगिरेः, मान-
ग्रहणमेतत्कुशाग्रेण नीरधेः, नयनमेतदबिंदुपातं धावतो योजनशतं तैलपूर्णपात्र्याः, ताडनमेतत्स-
व्यापसव्यभ्रमणशीलाष्टचक्रवर्तिविवरणगामिना शिलीमुखेन वामलोचने पुत्रिकायाः, भ्रमणमेतद-
नपेक्षितपादपातं निशातकरवालधारायामिति, यतोऽत्र परिषोढव्याः परीषहाः, निराकर्तव्या दैत्याद्यु-
पसर्गाः, विधातव्या समस्तपापयोगनिर्वृत्तिः, वोढव्यो यावत्कथं सुरगिरिगुरुरष्टादशशीलांगसहस्रभा-
रः, वर्तितव्यः सकलकालमात्मा माधुकर्या वर्तनया, निष्टप्तव्यो विकृष्टतपोभिर्देहः, सात्मीभावतां ने-

तव्यः सप्तदशभेदभिन्नः संयमः, समुन्मूलयितव्या रागादयः, निरोधव्यो हार्दतमःप्रसरः, किं बहुना? निहंतव्योऽप्रमत्तचित्तैर्मोहमहावेताल इति, मृदुशयनाहारलालितं पालितं तावकं शरीरकं, अपर्यालोचितकारितकारिता हि महतेऽनर्थायेति. राजाह—भगवन्नंगीकृतं सर्वं । कष्टजातं मयाधुना ॥ विधायानुग्रहं देहि । शीघ्रं भागवतं व्रतं ॥ ६६ ॥ वंदित्वा भुवनालोकं । ततः स्वगृहमागतः ॥ प्रोक्तः सर्वोऽपि वृत्तांतः । प्रधानानां महीभुजां ॥ ६७ ॥ राजश्रीसंभवं पुत्रं । विजयं विश्वविश्रुतं ॥ स्वराज्ये स्थापयामास । भानुप्रभनरेश्वरः ॥ ६८ ॥ सूरश्रीसंभवं सूरं । केरलाकुक्षिसंभवं ॥ सूरसेनाभिधं पुत्रं । कलाकौशलशालिनं ॥ ६९ ॥ एणाचंद्राभिधं पुत्र—मेणामुख्याः समुद्भवं ॥ तयो मातामहे राज्ये । ह्यभिषिच्य विसर्जिताः ॥ ७० ॥ अन्यदपि यथायोग्यं । धर्मकर्म विधाय सः ॥ निष्क्रांतो भुवनालोक—केवलिनः पदांतिके ॥ ७१ ॥ त्रिभिर्विशेषकं ॥ आगमाधिगमाज्जातो । गीतार्थो गतमत्सरः ॥ विजहार महीपीठे । भानुप्रभमहामुनिः ॥ ७२ ॥ प्रशमामृततृप्तात्मा । क्षमालंकृतविग्रहः ॥ निर्ममो निरहंकारो । गतरागो जितेंद्रियः ॥ ७३ ॥ सर्वजीवाभयं दत्वा । तपस्तप्त्वा सुदुस्तरं ॥ परिपाल्यामलं शीलं । विभाव्य वरभावनाः ॥ ७४ ॥ विशुद्धसंयमस्थानो । हत्वा

घातिचतुष्टयं ॥ उत्पाद्य केवलज्ञानं । जगाम परमं पदं ॥ ७५ ॥ युग्मं ॥ सर्वज्ञपुरतो दत्तो । दीपो भावपुरस्सरं ॥ लोकद्वयेऽपि संसूते । सत्कल्याणपरंपरां ॥ ७६ ॥ इति दीपपूजाफलं समाप्तं ॥

दीपपूजाफलं प्रोक्तं । लोकद्वयसुखावहं ॥ संप्रत्यक्षतपूजायाः । श्रूयतां कथ्यते फलं ॥ १ ॥ पंचालविषयस्यांतः । पुरं कांपिल्यसंज्ञितं ॥ तत्रासीन्निषधो नाम । राजा सर्वजनप्रियः ॥ २ ॥ तारप्रभाभिधः श्रेष्ठी । पुरकार्यविचिंतकः ॥ समग्रनैगमग्राम—ग्रामणी राजसंमतः ॥ ३ ॥ तारप्रभा प्रिया तस्य । शशांकस्येव रोहिणी ॥ स्त्रीजनोचितनिःशेष—कलाकौशलशालिनी ॥ ४ ॥ तारप्रभस्तया सार्धं । भुंक्ते विषयजं सुखं ॥ चिंतानंतरनिःशेष—पूर्यमाणमनोरथः ॥ ५ ॥ अन्यदा पश्चिमे यामे । यामिन्यास्तल्पशायिनी ॥ स्वप्ने शुभमिदं स्वप्नं । तारप्रभा समैक्षत ॥ ६ ॥ यथा मे सर्वतो गेह—माकीर्णं कणराशिभिः ॥ कोष्ठागाराणि सर्वाणि । कणैः पूर्णानि भांत्यलं ॥ ७ ॥ प्रबुद्धा च समुत्थाय । गत्वा भर्तृसमीपके ॥ यथा दृष्टं तथा सर्वं । तुष्टा तस्मै न्यवेदयत् ॥ ८ ॥ तेनाभाणि प्रिये श्रेष्ठः । पुत्रस्तव भविष्यति ॥ सर्वलक्षणसंपूर्णो । वृद्धिकृत्सर्वसंपदां ॥ ९ ॥ सत्यं भवतु ते वाक्य—मित्युक्त्वा हृष्टमानसा ॥ जगाम निजकस्थाने । दधौ गर्भं यथासुखं ॥ १० ॥

गतेषु त्रिषु मासेषु । तस्याजनि च दोहदः ॥ यथा तंडुलदानेन । लोकं सुस्थीकरोम्यहं ॥ ११ ॥
पृष्टया च तयाचष्ट । श्रेष्टिनः स विशेषतः ॥ तेनापि पूरितस्तूर्णं । तुष्टा तारप्रजाजनि ॥ १२ ॥ ग-
र्नाधानत आरभ्यः । श्रेष्टिनः संपदा सह ॥ सर्वतोऽपि प्रवर्धते । कणा गर्नानुन्नावतः ॥ १३ ॥
चिंतानंतरनिःशेष—पूर्यमाणसुदोहदा ॥ सुखं सुखेन सा गर्न—मुवाह मुदितानना ॥ १४ ॥
मासानां नवकेऽतीते । सार्धं सप्तदशाधिके ॥ सासूत सुंदरं पुत्रं । सर्वलक्षणसंयुतं ॥ १५ ॥ का-
रितं च ततः पित्रा । महर्ध्या बंधुन्निः सह ॥ सर्वलोककृतानंदं । वर्धापनकमुच्चकैः ॥ १६ ॥ समये
च कृतं तस्य । नाम स्वप्नानुसारतः ॥ कणसार इति ख्यातं । महामहपुरस्सरं ॥ १७ ॥ अथासौ व-
र्धते बालो । धात्रीपंचकलालितः ॥ सार्धं कलाकलापेन । पुष्णानो वपुषः श्रियं ॥ १८ ॥ काले-
न यौवनं प्राप्तः । कामिनीजनमोदकं ॥ श्रेष्टिपुत्रीं सुताराख्यां । परिणिन्ये च कन्यकां ॥ १९ ॥
भुंजानस्य यथाकामं । कामन्नोगांस्तया सह ॥ गच्छंति प्रीतचित्तस्य । कणसारस्य वासराः ॥ २० ॥
अथान्यदा समं मित्रै—र्नानाक्रीडापरायणः ॥ कणसारो ललन् वीथ्यां । ददृशे राजकन्यया ॥
॥ २१ ॥ कामवेश्मनि गच्छंत्या । सुदर्शनाख्यया तदा ॥ आलोकितश्च सस्नेहं । सादरं स्निग्धचक्षु

षा ॥ २२ ॥ युग्मं ॥ विद्धा च कामदेवेन । ततः सा निशितैः शरैः ॥ संततं तं प्रपश्यंती । चिं·
तयंती च तद्गुणान् ॥ २३ ॥ कायेनैव न चित्तेन । गता सा काममंदिरं ॥ संपूज्य कामदेवस्य ।
प्रतिमामद्भुताकृतिं ॥ २४ ॥ कणसारस्य रूपेण । मोहिता वलिता क्षणात् ॥ कामग्रहगृहीतासा
—वगद्राजमंदिरे ॥ २५ ॥ त्रिभिर्विशेषकं ॥

सुप्ता सुंदरपर्यंके । न च प्राप सुखासिकं ॥ ददृशे च तथावस्था । धात्र्या पृष्टा च सा यथा
॥ २६ ॥ बाधते किमु ते वत्से । सदुःखा येन दृश्यसे ॥ वारंवारं तयाप्येवं । सादरं पृच्छ्यमानया
॥ २७ ॥ प्रोक्तः सर्वोऽपि वृत्तांतः । कणसारेक्षणादिकः ॥ तदंब त्वं कुरु यत्नं । यथा मे स्यादभी·
प्सितं ॥ २८ ॥ युग्मं ॥ धात्र्या च तत्क्षणादेव । तस्या मातुर्निवेदितं ॥ तयापि नरनाथस्य । ते·
नोचे नातिचार्विदं ॥ २९ ॥ यद्राजपुत्रिकायास्तु । संबंधो वणिजा सह ॥ तथाप्येवं करिष्यामि ।
मत्सुता लभतां धृतिं ॥ ३० ॥ ततस्तारप्रभश्रेष्ठी । समाहूतो महीभुजा ॥ वृत्तांतं सर्वमाख्याय ।
सादरं भणितो यथा ॥ ३१ ॥ दत्तेयं कणसारस्य । मया पुत्री सुदर्शना ॥ निर्विचारमिदं कार्यं ।
कालक्षेपं विना कुरु ॥ ३२ ॥ देव एव विजानाति । किमत्र ब्रूमहे वयं ॥ इत्युक्त्वा नृपतेर्वाक्यं ।

वृत्तं तयोः प्रमोदेन ।
श्रेष्टिना प्रत्यपद्यत ॥ ३३ ॥ शोभने तिथिनक्षत्रे । महर्ध्या विहितोत्सवं ॥ कोशश्च द्रव्यसंपूर्णः ।
पाणिग्रहणमंगलं ॥ ३४ ॥ दत्ताश्च नृभुजा तस्मै । वाजिनः स्यंदना गजाः ॥
प्रासादाश्च मनोहराः ॥ ३५ ॥ संयुक्तो युक्तकारकः
अथासौ कणसारोऽपि । विलसन् राजलीलया ॥ सुदर्शनाख्यताराख्या— कालं नयति नीति
॥ ३६ ॥ राज्ञा च राजलोकैश्च । दृश्यमानः सगौरवं ॥ कुर्वन् बंधुजनानंदं । यथौ
मान् ॥ ३७ ॥ युग्मं ॥ अन्यदा च निजे राज्ये । नृपतिस्तत्तिकारकं ॥ कणसारं व्यवस्थाप्य । शि
विजययात्रया ॥ ३८ ॥ कणसारोऽपि तद्राज्यं । संपालयति नीतितः ॥ दुष्टानां निग्रहं कुर्वन् । सर्वाण्यपि निरुत्सेको ।
ष्टानां पालनं तथा ॥ ३९ ॥ एवं च राजलोकानां । संमतो रंजितप्रजः ॥ गवाक्षगतया द
राज्यकार्याणि चिंतयन् ॥ ४० ॥ राज्ञोऽस्य वल्लभादेव्या । चंद्रकांताभिधानया ॥ अहो रू
ष्टो । नेत्रानंदविधायकः ॥ ४१ ॥ युग्मं ॥ ततः सा चिंतयामास । तद्गुणाक्षिप्तमानसा ॥ वा
पमहो रूप—महो कांतिरहो गतिः ॥ ४२ ॥ अहो देहस्य लावण्य—महो मधुरता गिरां ॥
तीयां श्रूयते कामो । मन्ये कामोऽयमेव हि ॥ ४३ ॥ तदत्र यद्ययं कामी । गत्वा कामं न काम्य

ते ॥ तदेदं यौवनं रूपं । नरजन्म च निष्फलं ॥ ४४ ॥ विचिंत्यैवं तया दासी । प्रेषिता तस्य सन्निधौ ॥ पृष्टा तेन यथा भद्रे । निवेदय प्रयोजनं ॥ ४५ ॥ तयोक्तं चंद्रकांताया । देव्याः शरीरकारणं ॥ तदेहि सत्वरं देवी । प्रतिजागर्यतामिति ॥ ४६ ॥ श्रुत्वेदं कणसारोऽपि । चंद्रकांतांतिकं गतः ॥ प्रणम्य भणितं तेन । किमंब बाधते तव ॥ ४७ ॥ तयापि प्रकटं चैव । हावभावपुरस्सरं ॥ उक्तः समंथरैर्नेत्रैः । सर्वांगं वीक्ष्य लीलया ॥ ४८ ॥ यथेदं मामकं देहं । संतप्तं कामवह्निना ॥ स्वांगसंगजलप्लावै—स्त्वं निर्वापय सांप्रतं ॥ ४९ ॥ मदीयां प्रार्थनामेनां । सर्वथा माकृथा वृथा ॥ म्रियेऽहमन्यथा नाथ । त्वद्विरहाग्निपीडिता ॥ ५० ॥ श्रुत्वेदं कणसारोऽपि । ब्रूते खेदवशं गतः ॥ मामाख्याणि च यन्निंद्यं । मातरेवंविधं वचः ॥ ५१ ॥ यन्मनसापि नो चिंत्यं । लोकद्वयविरोधकं ॥ तत्कथं त्वयका पापं । वचसा प्रकटीकृतं ॥ ५२ ॥ प्राणत्यागेऽपि नो कर्म । करिष्याम्यहमीदृशं ॥ तदंब मुंच गच्छामि । किं वृथा बहुजल्पितैः ॥ ५३ ॥ एवमुक्त्वा गतस्तूर्णं । कणसारो निजाश्रयं ॥ सापि तंप्रति सावेशा । जाता मत्सरिणी दृढं ॥ ५४ ॥

अथ कालेन दिग्यात्रां । कृत्वायातो नराधिपः ॥ प्रविष्टश्च पुरे तुष्टः । क्रमाच्च निजमंदिरे ॥

॥ ५५ ॥ ततो राज्ञे प्रणामार्थं । पौरलोकः समागतः ॥ तेनापि च यथायोगं । स सन्मान्य विसर्जितः ॥ ५६ ॥ पृष्टाश्च निजका लोका । अमात्याद्या नियोगिकाः ॥ यथा नो अत्र सर्वत्र । युष्माकं क्षेम वर्तते ॥ ५७ ॥ कणसारकुमारो वा । युष्मानाश्रित्य कीदृशः ॥ प्रजासु वापि कीदृक्षः । श्रुत्वेदं तैः प्रजल्पितं ॥ ५८ ॥ देव देवप्रसादेन । क्षेमः सर्वत्र वर्तते ॥ कणसारस्तु निःशेष—गुणरत्नमहोदधिः ॥ ५९ ॥ येन चिंतयता राज्यं । दुष्टलोकं निगृह्णता ॥ रक्षता शिष्टलोकं च । गुणग्राही जनः कृतः ॥ ६० ॥ एवं पृष्ट्वा च दृष्ट्वा च । कृत्वापि च यथोचितं ॥ विसर्ज्य च निजं लोकं । राजेंद्रोंतःपुरं ययौ ॥ ६१ ॥ यावच्च पश्यति तत्र । चंद्रकांतावलोकिता ॥ विमनस्का विदीर्णांगी । भूमौ विन्यस्तदृष्टिका ॥ ६२ ॥ महामन्युभराक्रांता । सखेदा दुःखनिर्भरा ॥ ध्यायंती किंचिदव्यक्तं । भ्रष्टमंत्रेव योगिनी ॥ ६३ ॥ युग्मं ॥ ततः सा प्रश्निता राज्ञा । किमर्थं दुःखिता प्रिये ॥ तवाज्ञा खंडिता केन । सखेदा केन दृश्यसे ॥ ६४ ॥ सा प्राह किमहं राजन् । कथयामि तवाग्रतः ॥ कथितं यत्तु नो कोऽपि । श्रद्धातुमपि शक्ष्यति ॥ ६५ ॥ राजाह किं तवानेन । यदि कथ्यं भणस्व मे ॥ तथा तथा करिष्यामि । यथा ते जायते धृतिः ॥ ६६ ॥ सा प्राह देव

योऽयं ते । जामाता राज्यचिंतकः ॥ तेनाहं प्रार्थिता बाढं । विषयासेवनंप्रति ॥ ६७ ॥ विदारिता च पापेन । दारुणं नखकोटिभिः ॥ कष्टेन रक्षितं शीलं । ब्रवीमि किमतःपरं ॥ ६८ ॥ श्रुत्वेदं तत्क्षणादेव । निष्क्रांतोंतःपुरान्नृपः ॥ कणसारं समाहूय । तेन निर्भर्त्सितो यथा ॥ ६९ ॥ रेरे दुष्ट दुराचार । महापापाधमाधम ॥ किमन्या निष्टिता मूढ । रूपवत्यः कुलस्त्रियः ॥ ७० ॥ महारानपि येन त्वं । नैवं त्यजसि मूढधीः ॥ तद्गच्छ गच्छ मे दृष्टि—मार्गादपि पुरादपि ॥ ७१ ॥ देशोऽपि मामकस्त्याज्यः । को द्रक्ष्यति मुखं तव ॥ नामापि श्रूयते नैव । यत्र तत्र व्रजाधुना ॥ ७२ ॥ प्रसाद इति संजल्प्य । कणसारोऽपि सत्वरं ॥ प्रणम्य भूभुजः पादा—वपमानभरेरितः ॥ ७३ ॥ समुच्चाय ततः स्थाना—देकाक्येव विषादवान् ॥ अनाख्यायैव बंधूना—मुत्तराभिमुखं ययौ ॥ ७४ ॥ युग्मं ॥ पूर्वं मित्रसमो भूत्वा । पश्चाच्छत्रुसमोऽजनि ॥ नरेंद्रः कणसारस्य । राज्ञां मैत्री स्थिरा न हि ॥ ॥ ७५ ॥ यतः—काके शौचं द्यूतकारे च सत्यं । सर्पे क्षांतिः स्त्रीषु कामोपशांतिः ॥ क्लीवे धैर्यं मद्यपे तत्वचिंता । राज्ञां मैत्री केन दृष्टा श्रुता वा ॥ ७६ ॥ नानानगनदीकीर्णं । नानाग्रामपुराकुलं ॥ परिभ्राम्यन्महीपीठं । स संप्रापोत्तरापथं ॥ ७७ ॥

तत्रास्ति शालिपुराख्यो । ग्रामो भूरिजिनालयः ॥ बहिस्तस्य वटस्याधः । श्रांतत्वान्निषसाद सः
॥ ७८ ॥ दृष्टश्च तत्र वास्तव्य—धान्यसारकुटुंबिना ॥ पृष्टश्च सादरं गत्वा । यथा कस्मादिहागतः
॥ ७९ ॥ गंतव्यं भवता कुत्र । किंवा नाम कुलं च ते ॥ तेनाभाणि महाभाग । बृहतीयं कथा
मम ॥ ८० ॥ युग्मं ॥ कथं वा कथ्यते भद्र । स्वयमेव जनाग्रतः ॥ स्थानभ्रष्टेन सत्पुंसा । कुलशी-
लादिकं निजं ॥ ८१ ॥ किंच—लहुइंति लहुं पुरिसं । मेरुसमाणंपि दो अकज्जाइं ॥ अप्पपसं-
सा परनिंद—णा य पयमंपि किज्जंता ॥ ८२ ॥ श्रुत्वेदं धान्यसारोऽपि । मनस्येवं व्यचिंतयत् ॥
अहो वरकुलोत्पन्नः । कोऽप्ययं सुपुमानिति ॥ ८३ ॥ तेनायं पृच्छ्यमानोऽपि । नाख्याति निजकां
कथां ॥ आकृत्यैवास्य मन्येऽयं । भूतपूर्वमहोदयः ॥ ८४ ॥ यतः—यत्राकृतिर्गुणास्तत्र । गुणिनः
संपदो ध्रुवं ॥ श्रीमत्याज्ञां परां प्राहु—स्ततो राज्यं महोदयः ॥ ८५ ॥ लक्षणानि च दृश्यंते ।
यादृशान्यस्य विग्रहे ॥ तैरस्य निश्चितं भावि । भूरिवैभवमुत्तमं ॥ ८६ ॥ विचिंत्यैवं करे कृत्वा—
नीतस्तेन निजे गृहे ॥ कृत्वा स्नानादिकं सर्वं । भोजितश्च सगौरवं ॥ ८७ ॥ दत्ता शालिप्रभा क-
न्या । शुभेऽह्नि परिणायितः ॥ समर्पितं गृहं चैकं । चारुकुप्येन संयुतं ॥ ८८ ॥ दत्तं तस्मै तथा

चैकं । शालिक्षेत्रं मनोहरं ॥ रोपिताः शालयस्तत्र । जाता भूरिफलप्रदाः ॥ ७९ ॥ लघुक्षेत्रेऽपि भूयांसो । जायंते तस्य शालयः ॥ पुण्यानि फलदानीह । व्यवसायो न देहिनां ॥ ८० ॥ एवं च सर्वधान्यानि । जायंते तस्य कर्षणे ॥ सर्वलोकातिशायीनि । प्रतिवर्षं यथोत्तरं ॥ ८१ ॥ नानाधान्यभृताः पाल्याः । प्रभूतास्तेन कारिताः ॥ धान्यविक्रयतो जातं । द्रविणं चातिपुष्कलं ॥८२॥ तथा गावो महिष्यश्च । बलीबर्दास्तुरंगमाः ॥ उष्ट्रा गंत्रीविशेषाश्च । प्रभूतास्तस्य जज्ञिरे ॥८३॥ द्रव्यं कलांतरेणैष । धान्यं वृद्ध्या ददात्यलं ॥ यथेष्टं सर्वलोकेभ्यो । ग्रामे ग्रामे पुरे पुरे ॥ ८४ ॥ स्तोकेनापि च कालेन । विस्तृतो भूरिसंपदा ॥ औदार्यादिगुणग्रामैः । परां ख्यातिमवाप च ॥ ॥ ८५ ॥ देशे च तत्र सर्वत्र । ग्रामे ग्रामे पुरे पुरे ॥ तेनानेके महापल्या । धान्यपूर्णा निवेशिताः ॥ ८६ ॥ एवं च तत्र सर्वत्र । देशे ग्रामपुरादिषु ॥ राजभिः सर्वलोकैश्च । मान्यमानस्य सादरं ॥ ८७ ॥ शालिप्रज्ञासमेतस्य । भुंजानस्यार्थसंपदः ॥ श्रीमतः कणसारस्य । गतः कालः कियानपि ॥ ८८ ॥

अथान्यदा च पांचाल—देशेऽजनि सुदारुणं ॥ दुर्भिक्षं बहुकालीनं । जातोऽत्यंतकणक्षयः

॥ ९९ ॥ मूल्येनापि यदा धान्यं । लोकैस्तत्र न लभ्यते ॥ ततोऽसौ निषधो राजा । सचिंतोऽजनि मानसे ॥ १०० ॥ अहो भूरिधनोपेतः । कोषोऽयं मेऽस्ति पुष्कलः ॥ परं धान्यं ममापीह । कोष्ठागारेषु निष्ठितं ॥ १ ॥ ततः सर्वे समाहूता । नागरा मंत्रिणस्तथा ॥ उक्ताश्च ते यथा भो भो । सांप्रतं किमु कुर्महे ॥ २ ॥ मूल्यमस्ति न धान्यानि । क्षुधया म्रियते जनः ॥ तदत्र चिंत्यतां कश्चि—दुपायो येन जीव्यते ॥ ३ ॥ अत्रांतरे गुणश्रेष्ठः । श्रेष्ठी तारभभोऽवदत ॥ अहो राजन्नहं किंचि—दाख्यामि यन्मया श्रुतं ॥ ४ ॥ श्रूयते कणसाराख्य । उत्तरापथमंडले ॥ ग्रामे च धान्यपूराख्ये । प्रभूतकणसंग्रही ॥ ५ ॥ यद्यसौ मामकः पुत्र—स्तत्कणा अपि मामकाः ॥ अथान्यः कोऽपि तन्नामा । तदा तन्नात्रसंशयः ॥ ६ ॥ राजाह यदि ते पुत्रो । नासावत्र समेष्यति ॥ यतो निष्कासितो देशा—न्निर्भर्त्स्य स मया पुरा ॥ ७ ॥ श्रेष्ठ्याह सत्यमेवेदं । यद्देवेन प्रभाषितं ॥ तथापि प्रेष्यते कश्चि—ल्लेखहस्तो निजो भटः ॥ ८ ॥ श्राव्यते च स वृत्तांतः । सर्वकणक्रयादिकः ॥ आकर्ण्य श्रेष्ठिनो वाक्यं । भूभुजापि तथा कृतं ॥ ९ ॥ गतश्च स पुमांस्तत्र । लेखस्तस्मै समर्पितः ॥ उद्घोट्य वाचितो लेख—स्तदर्थश्चावधारितः ॥ १० ॥ लिखित्वा कणसारोऽपि । प्र-

तिलेखं सविस्तरं ॥ समर्प्य प्रेषयामास । तं भटं त्वरितैः पदैः ॥ ११ ॥ तेनापि शीघ्रमागत्य । रा·
ज्ञो लेखः समर्पितः ॥ वाचयामास लेखं तं । स्वयमेवाथ भूपतिः ॥ १२ ॥ यथा देशांतरस्थोऽपि ।
तातायं तावको जनः ॥ कणा अपि मदीया ये । ते सर्वेऽपि च तावकाः ॥ १३ ॥ गृह्यंतां च य·
थाकामं । निस्तार्यतां जनोऽखिलः ॥ ततस्तारचन्द्रादीनां । संमतेन महीभुजा ॥ १४ ॥ बहवः प्रे·
षिता उष्ट्रा । धान्यानयनहेतवे ॥ ते पत्तनं गतास्तत्र । कणसारस्य सन्निधौ ॥ १५ ॥ युग्मं ॥
भृत्वा तेनापि धान्येन । प्रेषिताः शीघ्रमेव हि ॥ तथान्ये उष्ट्रसंघाता । बहुधान्यभृता निजाः ॥
॥ १६ ॥ भूयोभूयोऽपि भूयांसः । प्रेषितास्तेन भूभुजे ॥ पांचालेषु ततः सौस्थ्यं । कणसारकणैर·
भूत् ॥ १७ ॥ युग्मं ॥ जीविताशा च संजाता । लोकानां तदनंतरं ॥ ततस्तुष्टेन भूपेन । पौरलो·
कैः समन्विताः ॥ १८ ॥ प्रेषिता मंत्रिसामंता—स्तस्यानयनहेतवे ॥ प्राप्तास्ते कणसारोऽपि । तान्
सन्मान्य यथोचितं ॥ १९ ॥ स्वकीयं सर्वमादाय । कांपिल्यपुरमागतः ॥ भूभुजापि महर्ध्यासौ ।
पुरमध्ये प्रवेशितः ॥ २० ॥ त्रिभिर्विशेषकं ॥

दत्ता पूर्वस्थितिः सर्वा । साधिका क्ष्मामितस्तथा ॥ श्रेष्ठितारचन्द्राद्यांश्च । बंधून् पुरजनांस्तथा

॥ २१ ॥ प्रणनाम यथायोगं । सन्मानं च चकार सः ॥ मिलिता च सुताराख्या । सुदर्शना च सत्प्रिया ॥ २२ ॥ युग्मं ॥ ततः शालिभद्रा चक्रे । प्रणामं सादरं तयोः ॥ ततो भार्यात्रयोपेतो । भुंजानो भोगसंपदं ॥ २३ ॥ वल्लभो भूभुजोऽत्यर्थं । लोकानां च विशेषतः ॥ शशीव बंधुलोकानां । कुर्वाणो नयनोत्सवं ॥ २४ ॥ महासौख्यार्णवे मग्नो । गमयतिस्म वासरान् ॥ भुक्त्वा भोगांश्चिरं तेन । जाताः पुत्रा मनोहराः ॥ २५ ॥ त्रिभिर्विशेषकं ॥ ततश्च भुक्तभोगत्वा—द्धर्मे चित्तं ददात्यसौ ॥ अन्यदा मेघनादाख्या । मेघनादसमप्रभाः ॥ २६ ॥ संसारसागरोत्तार—सेतवो भव्यदेहिनां ॥ चतुर्ज्ञानसुविज्ञात—समस्तभवविस्तराः ॥ २७ ॥ भवकांतारनिस्तार—सार्थवाहसमा नृणां ॥ लतागुल्ममहोद्याने । स्थाने मुनिजनोचिते ॥ २८ ॥ समागत्य स्थितास्तत्र । सूरयो धर्मदेशकाः ॥ वंदनार्थं गतो राजा । लोकाश्च बहवस्तथा ॥ २९ ॥ चतुर्भिः कलापकं ॥ प्रारब्धा देशना रम्या । भव्यबोधप्रदायिनी ॥ मेघनादध्वनिनोच्चै—र्मेघनादमुनीश्वरैः ॥ ३० ॥ भो भो भव्याः शृणुत विशदं मामकं वाक्यमेतत् । कर्णं दत्वा विगतविकथं द्वेषरागव्यपेतं ॥ संसाराब्धेस्तरणतरिकाकल्पमासोपदिष्टं । यत्कल्याणं त्विह परभवे तिष्ठतां गच्छतां च ॥ ३१ ॥ नास्तिकैर्नैव भाव्यं च।

भवद्वीभवल्लीरुभिः ॥ नास्तिक्यं परमो दोष । आस्तिक्यं परमो गुणः ॥ ३२ ॥ तथाहि—अनेकभवपरंपराकोटाकोटीभिः कथंचिन्मानुष्यं जन्म लब्ध्वापि नास्तिकदोषदूषितो नास्तिको युक्त्यागमबाधितमेवं वक्ति, नास्ति परलोकः, न विद्यते कुशलाकुशलकर्मणः फलं, न संभवति खल्वयमात्मा, नोपपद्यते सर्वज्ञः, न घटते तदुपदिष्टो मोक्षमार्गः, ततोऽसावतत्वाभिनिविष्टचित्तो हिनस्ति प्राणिनः, भाषतेऽलीकं, समादत्ते परधनं, रमते परदारेषु, गृह्णात्यपरिमितपरिग्रहं, भुंक्ते रजन्यां, खादति मांसं, पिबति सुरां, न गृह्णाति सदुपदेशं, प्रकाशयति कुमार्गं, निंदति वंदनीयान, वदति परावर्तवादं, आचरति समस्तपातकानि, ततो बध्वा निबिडं कर्मजालं पतत्येष जीवो नरकेषु, तत्र च पतितः पच्यते कुंभीपाकेन, छिद्यते क्रकचपाटनेन, आरोह्यते वज्रकंटकाकुलासु शाल्मलीषु, पाय्यते संदंशकैर्मुखं विधृत्य कलकलायमानं तप्तं त्रपु, भक्ष्यते निजमांसानि, भुज्यतेऽत्यंततप्तभ्राष्ट्रेषु, तार्यते पूयवसारुधिरक्लेदमूत्रांत्रकलुषां वैतरिणीं नदीं, भिद्यतेऽसिपत्रवनेषु स्वपापभरप्रेरितैः परमाधार्मिकासुरैः, तथा समस्ताशुभपुद्गलराशिभक्षणेऽपि नोपशाम्यति बुभुक्षा, निःशेषजलधिपानेऽपि नापगच्छति पिपासा, अभिभूयते सीतवेदनया, कदर्थ्यते तापातिरेकेण. ततश्चायं जीवो गाढतापा·

नुगतो हा तात! हा मातः! हा भ्रातः! इत्यादि विरसमाक्रंदति, न चास्य तत्र गात्रत्रायकः कश्चिद्विद्यते. कथंचिदुत्तीर्णोऽपि नरकाद्वाध्यते तिर्यक्षु वर्तमानः, कथं? वाह्यते भारं, कुट्यते लकुटादिभिः, भिद्यंते कर्णपुच्छादयः, खाद्यते कृमिजालकैः, सहते बुभुक्षां, म्रियते पिपासया, तुद्यते नानाकारयातनाभिरिति. ततः कथंचिदवाप्तमनुष्यभावोऽप्येष जीवः पीड्यत एव दुःखैः, कथं? तदुच्यते—क्लेशयंत्येनं रोगव्रताः, जर्जरयति जरा, दोदूयंते इष्टवियोगानिष्टसंप्रयोगाः, विसंस्थुलयंति धनहरणानि, आकुलयंति स्वजनमरणानि, विधुरयंति व्यसनानि. तथा कथंचिल्लब्धविबुधजन्माप्येष जीवो ग्रस्यत एव नानाविधदुःखवेदनाभिः, तथाहि—आज्ञाप्यते विवशः शक्रादिभिः, खिद्यते परोत्कर्षदर्शनेन, जीर्यंते प्राग्भवकृतप्रमादफलदर्शनेन, दंदह्यतेऽस्वाधीनामरसुंदरीप्रार्थनेन, शल्यते तन्निदानचिंतनेन, निंद्यते महर्द्धिकदेववृंदेन, विलपत्यात्मनश्च्यवनदर्शनेन, आक्रंदति गाढं प्रत्यासन्नमरणदर्शनेन, पतति समस्ताशुचिनिधाने स्त्रीतिरश्चीगर्भकलिमले इति.

चातुर्गतिकसंसारे । नास्ति सौख्यं शरीरिणां ॥ कर्मक्लेशप्रहाणोत्थां । विमुच्य पंचमीं गतिं ॥ ॥ ३३ ॥ सा च विशुद्धधर्मेण । स च सर्वज्ञभाषितः ॥ पूर्वापराविसंवादी । दयासारः क्षमान्वितः

॥ ३४ ॥ स च विधूननं धत्ते । दत्ते च प्रशमं परं ॥ पुष्णाति च परं श्रेयः । मुष्णाति कुमतेर्मतिं ॥ ३५ ॥ स्वर्गापवर्गसंसर्ग—साधकः पापबाधकः ॥ सर्वसौख्यकरः सत्यो । धर्मः सर्वज्ञभाषितः ॥ ॥ ३६ ॥ द्वात्रिंशता सहस्राणां । महाबलमहीभृतां ॥ षोडशयक्षसहस्रैः । सर्वदा कृतसन्निधिः ॥३७॥ चतुःषष्ट्या सहस्राणां । कांताकांतकुचोष्मणा ॥ शीतकालेऽपि निःशीतः । शेते चक्री निराकुलः ॥ ३८ ॥ युग्मं ॥ यद्भुंक्ते भारतं वर्ष—मुध्धृताखिलकंटकं ॥ विचचार गजारूढ—श्छत्रछन्नदिगंतरः ॥ ३९ ॥ जीव नंद चिरं देव । देहि दृष्टिं मदानने ॥ इत्यादिमागधोद्गीत—गीर्निर्गीतगुणांतरः ॥ ४० ॥ भोगान्भोगान् यथा शक्र—श्चक्री भुंक्ते निराकुलः ॥ तदेतदर्हदुक्तस्य । दयाधर्मस्य जृंभितं ॥ ४१ ॥ किंबहुनात्र संसारे । यदन्यदपि सुंदरं ॥ दृश्यते वस्तु तत्सर्वं । दयाधर्मस्य सत्फलं ॥ ४२ ॥ तदस्य श्रवणे यत्नो । नित्यं कार्यो हितैषिणा ॥ शृण्वन्नेव हि जानाति । पुण्यापुण्यं हिताहितं ॥ ४३ ॥ श्रुत्वेदं रंजितो राजा । सम्यक्त्वं प्रतिपन्नवान् ॥ लोकोऽपि च यथायोग्यं । प्रपन्नो धर्ममार्हतं ॥ ४४ ॥ अथ कणसारः प्राह—

किमकारि मया पुण्यं । भगवन्न पूर्वजन्मनि ॥ अदाता अदाता येन । संजाता मम मंदिरे ॥

॥ ४५ ॥ कणसारवचः श्रुत्वा । मेघनादैः प्रजल्पितं ॥ भो श्रेष्ठिन् शृणु संक्षेपा—दक्तताद्गतकारणं
॥ ४६ ॥ पांचालेषु महाग्रामो । पामरैश्च कृतास्पदः ॥ सुखनिः सर्वशस्यानां । सुसीमो जनविश्रुतः
॥ ४७ ॥ तस्मिन्नाजन्मदारिद्र्यो । निस्सहायो निरन्वयः ॥ पामरः पिंगलो नाम । कुटीरककृताश्रयः
॥ ४८ ॥ कुकर्मकरणासक्तः । कुचेलः कष्टभोजनः ॥ नित्यं परमुखप्रेक्षी । मुनिवत्कुक्षिसंबलः ॥
॥ ४९ ॥ अन्यदा वेतने लब्ध्वा । शालितंदुलसेतिकां ॥ आनीय च घटे क्षिप्त्वा । घटद्वारं नि·
यंत्रितं ॥ ५० ॥ विक्रणीया मयाप्येषा । सविशेषप्रयोजने ॥ गतोऽसौ जिनदत्तस्य । गृहे कर्मचि·
कीर्षया ॥ ५१ ॥ अग्रे कूरं समर्प्यायं । प्रेषितो जिनमंदिरे ॥ सत्पुष्पपूजितं शांतं । सदाभरणभू·
षितं ॥ ५२ ॥ दृष्टं श्रीशांतिनाथस्य । बिंबं जनमनोहरं ॥ तदग्रे विलिखन् दृष्टो । मंगलान्यष्ट तं·
दुलैः ॥ ५३ ॥ अखंडास्फुटितैः सारै—र्भक्तितो जिनदत्तकः ॥ पृष्टश्च पिंगलेनैष । किमेतदिति
कथ्यतां ॥ ५४ ॥ त्रिभिर्विशेषकं ॥ कथितं ज्ञानतत्वोऽसौ । गृहादानीय तंदुलान् ॥ लिलेख मंग·
लान्यष्टौ । भूरिभावसमन्वितः ॥ ५५ ॥ अहो मे तंदुला धन्या । यैरयं पूजितो जिनः ॥ एवं वि·
शुद्धभावेन । भावतश्चानुमोदिताः ॥ ५६ ॥ बद्धं परभवायुष्कं । भोगसारं ततो गृहे ॥ कदन्नाहा·

रयोगेन । जाता गाढविसूचिका ॥ ५७ ॥ ततो मृत्वा समुत्पन्न—स्त्वं ताराचंद्रनंदनः ॥ महर्ध्यां ते कृतं नाम । कणसार इति स्फुटं ॥ ५८ ॥ जिनाग्रे तंदुला दत्ता । भावतश्चानुमोदिताः ॥ कणसार कणास्तेन । तव वृद्धिमुपागताः ॥ ५९ ॥ श्रुत्वेदं कणसारेण । स्मृता जातिश्चिरंतनी ॥ भगवन्न· पारसंसार—भयभीतस्त्वदंतिके ॥ ६० ॥ व्रतं च लातुमिच्छामि । यद्यस्ति मम योग्यता ॥ व्रतादा· नमयोग्यानां । यतोऽनर्थाय वर्तते ॥ ६१ ॥ सूरिणा भाणि भो श्रेष्ठिन् । योग्यस्त्वं धर्मकर्मणां ॥ अविघ्नं भवतो भूयात् । संयमाध्वनि गच्छतः ॥ ६२ ॥ सप्तक्षेत्र्यां धनं दत्वा । कृत्वा पूजां जिनाल· ये ॥ महीनाथमनुज्ञाप्य । बंदिमोक्षं विधाय च ॥ ६३ ॥ धनसारं पदे कृत्वा । सुताराकुक्षिसंभवं ॥ इष्टमित्रजनं सर्वं । संभाष्यादरपूर्वकं ॥ ६४ ॥ दीनानाथजनं सर्व—मर्थिनं दुःस्थमानसं ॥ सुस्थं कृत्वा यथाशक्त्या । आहारादिप्रदानतः ॥ ६५ ॥ तृणवत्सर्वं परित्यज्य । बहिरंतः परिग्रहं ॥ मेघ· नादांतिके श्रेष्टी । प्रपेदे सर्वसंयमं ॥ ६६ ॥ चतुर्भिः कलापकं ॥

श्रेष्टिनः कणसारस्य । काप्यपूर्वा महार्थता ॥ स्ववित्तं कोटिशो दत्तं । स्फटाटोपो न दर्शितः ॥ ६७ ॥ गर्जित्वा बहुदूरमुन्नतिभृतो मुंचंति वार्यंबुदा । भद्रस्यापि गजस्य दानसमये संभाव्यते दु·

र्मदः ॥ पुष्पार्मंबरदर्शनेन ददति प्रायः फलानि द्रुमा । नोत्सेको न मदो न कालहरणं दानप्रवृत्तौ सतां ॥ ६७ ॥ सम्यग्ज्ञानविवेकनिर्मलधियः कुर्वंत्यहो दुष्करं । यन्मुंचंत्युपभोगभांज्यपि धनान्येकांततो निःस्पृहाः ॥ न प्राप्तानि पुरा न संप्रति पुनः प्राप्तुं दृढः प्रत्ययो । वांछामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ ६९ ॥ मासकल्पावसाने तु । जग्मुरन्यत्र सूरयः ॥ कणसारानगारोऽपि । जगाम गुरुभिः सह ॥ ७० ॥ क्षमादिब्रह्मपर्यंतं । विधाय वरसंयमं ॥ षष्ठाष्टमतपः कृत्वा । पठित्वा च बहु श्रुतं ॥ ७१ ॥ संसारक्लेशनाशाय । विधायानशनं तथा ॥ वैजयंते सुरो जात । एकजन्मा महामुनिः ॥ ७२ ॥ युग्मं ॥ तन्नो अक्षतपूजाया—मक्षताक्षतवांछया ॥ यत्नः सदैव कर्तव्यो । लोकद्वयहितैषिणा ॥ ७३ ॥ इत्यक्षतपूजाकथानकं परिसमाप्तं ॥

सांप्रतं फलपूजाया । दृष्टांतोऽयं प्रदर्श्यते ॥ श्रूयतां सावधानेन । चेतसा पुण्यहेतवे ॥ १ ॥ अस्तीह लोकविख्यातं । सोपाराभिधपत्तनं ॥ नानावृक्षसमाकीर्णं । रम्यारामविराजितं ॥ २ ॥ बभूवारामिकस्तत्र । फलसाराभिधानकः ॥ सदापि सफलारंभ—प्रभूतारामनायकः ॥ ३ ॥ अन्यदा च तदारामाः । सर्वे दुर्वातदोषतः ॥ शुष्का अकांड एवाशु । न यच्छंतीप्सितं फलं ॥ ४ ॥ फलाभावे·

न तस्यासी—द्दारिद्र्यमतिदारुणं ॥ ततोऽसौ सर्वलोकानां । जातः परिभवास्पदं ॥ ५ ॥ यतः—
दौर्गत्यं देहिनां दुःखं । किमन्यैः कीर्तितैः पुनः ॥ इहैव येन जायंते । जीवंतोऽपि मृता इव ॥
॥ ६ ॥ दैन्यस्य पात्रतामेति । पराभूतेः परं पदं ॥ विपदामाश्रयः शश्वद् । दौर्गत्यकलुषीकृतः ॥७॥
नीचानपि हि सेवंते । पालयंति पशूनपि ॥ समुद्रमपि लंघंते । दारिद्र्योपहता नराः ॥ ८ ॥ मूर्त्तं
लाघवमेवैत—दपायानामिदं गृहं ॥ पर्यायो मरणस्यैष । दारिद्र्यं नाम यज्जनाः ॥ ९ ॥ लज्जं-
ते बांधवास्तेन । संबंधं गोपयंति च ॥ न भजंते यथा पूर्वं । यस्य स्तोकाः कपर्दिकाः ॥ १० ॥
परगेहे कदन्नानि । दत्तान्युच्चैरवज्ञया ॥ प्रभुंक्ते चाश्रुमिश्राणि । दौर्गत्यात्किमतः परं ॥ ११ ॥ धा-
र्मिकोऽपि विनीतोऽपि । वृद्धो वा पूजितोऽपि वा ॥ जनैर्दरिद्रः सावज्ञं । चांमाल इव दृश्यते ॥
॥ १२ ॥ शौचार्थं शिष्टयाप्यस्ति । किंचित्कार्यं कचिन्मृदा ॥ निर्धनेन नरेणेह । तावन्मात्रं न वि-
द्यते ॥ १३ ॥ दुरुत्तारो महापंकः । शल्यं दुःखदमुच्यते ॥ दुर्लंघ्यमेतत्कांतारं । यद्दरिद्रस्य जीवि-
तं ॥ १४ ॥ स एव नरको घोर—स्तदेतद्व्यसनं महत् ॥ सेयं कष्टा दशा पुंसां । दारिद्र्यं नाम य-
ज्जनाः ॥ १५ ॥ स्पष्टेऽपि वासरे सत्यं । दौर्गत्यतमसावृतः ॥ अग्रतोऽपि स्थितो यत्ना—न्न केना-

पीह दृश्यते ॥ १६ ॥ अतिसंतिष्ठमानोऽपि । प्रमोदादीश्वरे जने ॥ कार्याय कल्प्यते क्षुद्रै—र्धिग्दौर्गत्यमसंगतं ॥ १७ ॥ अन्यस्य विनयेनापि । दरिद्रो यदि तिष्ठति ॥ आर्थित्वपक्षे तदपि । क्षिप्यते निखिलं खलैः ॥ १८ ॥ एवं च फलसारोऽसौ । दुर्गदारिद्र्यखेदितः ॥ कष्टां दशां समापन्नः । कष्टं नयति वासरान् ॥ १९ ॥

अन्यदा गृहिणी तस्य । पुष्पश्रीनामिका किल ॥ रजन्यां पश्चिमे यामे । शयाना शयनीयके ॥ २० ॥ स्वप्ने पश्य निजारामान् । पल्लवितान् समंततः ॥ चारुपुष्पफलोपेतान् । नयनानंददायकान् ॥ २१ ॥ शिष्टः स्वप्नतया भर्तु—स्तेनाभाणि तव प्रिये ॥ भविता सुंदरः पुत्रः । समीहितफलप्रदः ॥ २२ ॥ प्रतीच्छ्य वचनं भर्तु—र्निजस्थानं जगाम सा ॥ गमितो रात्रिशेषश्च । धर्म्यया कथया तया ॥ २३ ॥ फलसारोऽपि सानंदो । दृष्टः स्वप्नो वरोऽनया ॥ जल्पन्नेवं गतः प्रात—र्निजारामेषु सत्वरं ॥ २४ ॥ यावदालोकते सर्वान् । पुष्पितान् फलितांस्तथा ॥ सर्वतः शाखलानुच्चैः । सिक्तानिवामृतप्लवैः ॥ २५ ॥ ततोऽसौ चिंतयामास । विस्मयाकुलचेतसा ॥ अहो मे पुण्यविस्फूर्ति—रहो मे चलिता दशा ॥ २६ ॥ येनैते सर्वतो रम्याः । पुष्पिताः फलिता द्रुमाः ॥ मन्ये

जातं ममैश्वर्यं । दूरं नष्टा दरिद्रता ॥ २७ ॥ ततस्तेन समाकार्य । शीघ्रं कर्मकरान् बहून् ॥ नालि-
केरादिवृक्षेभ्यो । जग्रहे तत्फलोत्कराः ॥ २ए ॥ ततस्तानपि विक्रीय । लब्धं द्रव्यं यथेप्सितं ॥ क्र-
मेण जातमैश्वर्यं । लोकमध्ये च गौरवं ॥ २ए ॥ यतः—मंदरतुल्लावि नरा । अब्बविहूणा हवंति
तिणतुल्ला ॥ तिणतुल्लावि हु अब्बेण । परिगया मंदरसमाणा ॥ ३० ॥ यस्यार्थास्तस्य मित्राणि ।
यस्यार्थास्तस्य बांधवाः ॥ यस्यार्थाः स पुमान् लोके । यस्यार्थाः स च पंडितः ॥ ३१ ॥ जातिर्यातु
रसातलं गुणगणास्तस्याप्यधो गच्छतां । शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ॥ शौर्ये वैरि-
णि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलो । येनैकेन विना गुणास्तृणलवप्रायाः समस्ता अमी ॥
॥ ३२ ॥ एवं चैश्वर्ययुक्तोऽसौ । फलसारः फलैः कृतः ॥ मान्यते सर्वलोकेन । सर्वकार्येषु सादरं ॥
॥ ३३ ॥ अथान्यदास्य गेहिन्याः । कुक्षौ पुष्पश्रियोऽजनि ॥ गर्भस्ततश्च सा तुष्टा । तमुवाह यथा-
सुखं ॥ ३४ ॥ भर्त्रा संपूरिताशेष—दोहदा समये च सा ॥ प्रसूता सुंदरं पुत्रं । सर्वलक्षणसंयुतं
॥ ३५ ॥ कारितं च ततः पित्रा । महोत्सवपुरस्सरं ॥ कृतबंधुजनानंदं । वर्धापनकमंजसा ॥ ३६ ॥
स्वप्नानुसारतस्तस्य । पित्रा नाम प्रतिष्ठितं ॥ फलदेव इति ख्यातं । विभूत्या बंधुभिः सह ॥ ३७ ॥

यथा यथा गृहे तत्र । बालोऽसौ परिवर्धते ॥ तथा तथा तदारामे । फलवृद्धिरपीष्टदा ॥ ३८ ॥ एवं च वर्धमानोऽसौ । वयसासमनोरथः ॥ स्वीकृताशेषविद्यश्च । संप्राप्तो वरयौवनं ॥ ३९ ॥ ततश्च जनकेनैष । महर्ध्या परिणायितः ॥ कन्यकां वसुदत्तस्य । वसुश्रीरितिनामिकां ॥ ४० ॥ एवं च पूर्णसर्वेच्छो । भुंक्ते भोगांस्तया सह ॥ प्रावीण्यं च परं बिभ्र—त्कलासु सकलास्वपि ॥ ४१ ॥ अथान्यदा हतस्तस्य । पिता हतकमृत्युना ॥ कृतानि मृतकृत्यानि । विशोकश्चाजनि क्रमात् ॥ ४२ ॥ बंधुभिः स्थापितः प्रीत्या । फलदेवः पितुः पदे ॥ सर्वं सर्वजनानिंद्यं । व्यवहारं चकार सः ॥ ४३ ॥ कीर्त्या रूपेण लक्ष्म्या च । सौजन्यादिगुणैस्तथा ॥ शेषलोकैः समं तेन । व्यतिक्रांतो निजः पिता ॥ ४४ ॥ अन्यदा कारितास्तेन । पोताः पंच महालयाः ॥ कृत्वा समग्रसामग्रीं । क्रमेण प्रगुणीकृताः ॥ ४५ ॥ प्रधानभूरिभांडैश्च । पोताः पंचापि ते भृताः ॥ प्रभूतदिनयोग्यं च । संगृहीतं जलेंधनं ॥ ४६ ॥ शोभने तिथिनक्षत्रे । समारूढस्ततः स्वयं ॥ दुर्योधयोधसंघातैः । सार्धं वणिक्सुतैश्च सः ॥ ४७ ॥ ततश्च प्रेरिताः पोताः । सिंहलद्वीपसन्मुखं ॥ तूर्णं गंतुं समारब्धा—स्तूर्यध्वानभृतांबराः ॥ ४८ ॥ उल्लंघ्य भूयसीं भूमिं । स्तोकैरपि दिनैर्जवात् ॥ प्राप्ता मलयदेशस्य । तटं चं-

दनशोभितं ॥ ४९ ॥ दूरादेव ततो दृष्ट्वा । शोभितानि वनश्रिया ॥ मलयाचलशृंगाणि । फलदे· वोऽब्रवीदिदं ॥ ५० ॥ कोऽयं नगो दृश्यते शैल—स्तैरूचे मलयाभिधः ॥ गछतामुं प्रपश्याम । ए· वमस्त्विति ते जगुः ॥ ५१ ॥

ततश्चोत्तीर्य पोतेभ्यो । गतस्तत्र सकौतुकः ॥ युक्तः शौर्ययुतैर्योधैः । कैश्चिद्वणिक्सुतैस्तथा ॥ ॥ ५२ ॥ आलोक्य सर्वतः शैल—मुत्तीर्णाश्च ततो भुवि ॥ ते सर्वे हर्षिता बाढं । पश्यंतिस्माभि· तस्ततः ॥ ५३ ॥ यावदेकत्र पश्यंति । वरारामद्वयं महत् ॥ शुष्कमेकं तयोर्बाढ—मेकमत्यंतशाद्व· वलं ॥ ५४ ॥ तयोर्मध्ये पुनर्दृष्टं । जीर्णं देवकुलद्वयं ॥ ततस्तत्रापि ते जग्मु—र्भ्राम्यंतिस्म समं· ततः ॥ ५५ ॥ जिनालये जिनेंद्रस्य । बिंबं सर्वांगसुंदरं ॥ विलोक्य च प्रहृष्टोऽसौ । मनस्येवं व्य· चिंतयत् ॥ ५६ ॥ अहो देवाधिदेवोऽयं । पूज्योऽयं सर्वदेहिनां ॥ तदेनमहमप्यद्य । पूजयामीति तर्कयन् ॥ ५७ ॥ बहिर्देवकुलाद्याव—न्निष्क्रांतः पुष्पहेतवे ॥ तावद् दृष्टः स आरामः । सद्यः पल्ल· वितद्रुमः ॥ ५८ ॥ युग्मं ॥ ततश्चादाय पुष्पाणि । पूजितः परमेश्वरः ॥ गृहीत्वा फलपूगं च । त· त्पुरो रचितो बलिः ॥ ५९ ॥ ततः प्रणम्य तं देवं । भक्त्या चिरं विलोक्य च ॥ संप्राप्ताशेषकृत्या·

णा—मात्मानमिति कल्पयन् ॥ ६० ॥ विनिर्गत्य स तत्स्थानाद् । द्वितीयाराममागतः ॥ देवकुलं
च तत्रस्थं । प्रविवेश स कौतुकी ॥ ६१ ॥ युग्मं ॥ दृष्टा च तत्र यक्षस्य । प्रतिमातिमहोदरा ॥ सु-
भोगाशुभसद्गंध—पुष्पमालाभिरर्चिता ॥ ६२ ॥ ततोऽसौ चिंतयामास । साश्चर्यो निजमानसे ॥
अहो एकप्रदेशेऽपि । तथैकस्मिन्नृतावपि ॥ ६३ ॥ एकोऽयं शुष्कआरामो । द्वितीयस्त्वभिशाड्वलः
॥ एको देवाधिदेवोऽयं । केनापीह न पूज्यते ॥ ६४ ॥ पूज्यतेऽसौ तथा नित्यं । तेनोच्चैर्विस्मयो
मम ॥ कारणेनात्र भो भाव्यं । ज्ञातव्यं तत्कथं मया ॥ ६५ ॥ यावदेवं स तत्रास्ते । विकल्पाकु
लमानसः ॥ तावत्पुरः स्थितामेकां । ददर्शासौ वरस्त्रियं ॥ ६६ ॥ पृष्टा च सा यथा का त्वं । कुतो
वा कुत्र तिष्ठसि ॥ सा प्राह देवतात्राहं । वसामि वरकानने ॥ ६७ ॥ यक्षमेनं सदाकालं । सपूजं
कुर्वती सती ॥ रक्षंती च निजोद्यानं । नानावृक्षसमाकुलं ॥ ६८ ॥ स प्राह शुष्कआरामे । योऽयं
देवोऽवतिष्ठते ॥ तं सपूजं किमत्यत्र । न करोषि निवेदय ॥ ६९ ॥ तथा शुष्कः स आरामो ।
भद्र चायं तु शाड्वलः ॥ ममैतत्कौतुकं भाति । यदि वेत्सि तदा वद ॥ ७० ॥ तयोक्तं श्रूयतां
भद्र । सावधानेन चेतसा ॥ आसीदत्र पुरं रम्यं । शंखावर्ताभिधं महत् ॥ ७१ ॥

बभूव तत्र विख्यातः । शंखचूडाभिधो नृपः ॥ तद्भार्या वनमालाख्या । रूपसौभाग्यशालिनी ॥ ७२ ॥ पुत्रश्च वनमालायाः । शंखनामा तथाजनि ॥ स पित्रा यौवनं प्राप्तो । यौवराजपदे कृतः ॥ ७३ ॥ छत्रचामरहस्त्याद्यं । तस्मै दत्तं महीभुजा ॥ ततोऽसौ भुज्यते भोगान् । विलसन् राजली· लया ॥ ७४ ॥ इतश्च दक्षिणश्रेण्यां । वैताढ्येऽस्ति महापुरं ॥ रथावर्तं प्रभुस्तत्र । विद्याधरो मणि· प्रभः ॥ ७५ ॥ तद्भार्या रत्नरेखाख्या । रत्नमाला च तत्सुता ॥ सान्यदा शंखचूडेन । मद्भर्त्री पर्य· णीयत ॥ ७६ ॥ कालेन गछता जाता । सा राज्ञोऽतीववल्लभा ॥ अहं पुनरनिष्टेति । दुर्गदौर्भाग्य· योगतः ॥ ७७ ॥ किंबहुना तयाकारि । वशवर्ती नराधिपः ॥ युक्तमयुक्तकं वापि । करोत्येव स त· द्वचः ॥ ७८ ॥ अन्यदा च सुतस्तस्या । जातो रत्नप्रभाभिधः ॥ क्रमेण यौवनं प्राप्तः । नारीजन· मनोहरं ॥ ७९ ॥ प्रधानराजपुत्रीश्च । मद्भर्त्री परिणीतवान् ॥ बुभुजे कामजं सौख्यं । ताभिः सा· र्धं स संततं ॥ ८० ॥ अन्यदा भणितो राजा । सादरं रत्नमालया ॥ यथामुं मामकं पुत्रं । यौव· राजपदे कुरु ॥ ८१ ॥ तेनापि तत्तथाचक्रे । सर्वं तद्वशवर्तिना ॥ अतीव च पराभूतः । शंखनामा महीभुजा ॥ ८२ ॥ ततोऽसौ वनमालाया । अनाख्यायैव निर्गतः ॥ दूरं देशांतरं प्राप्तो । बंभ्रमी·

तिस भूतले ॥ ७३ ॥ तथेदं मंदिरं जैनं । कारितं रत्नमालया ॥ आरामश्चाभिरामोऽयं । नानावृक्षसमाकुलः ॥ ७४ ॥ वनमाला पुनश्चेदं । सुंदरारामराजितं ॥ प्राकारवेष्टितं तुंगं । यक्षालयमचीकरत् ॥ ७५ ॥ वहंती रत्नमालासौ । वनमालां च मत्सरं ॥ व्याघातं यक्षपूजायाः । प्रचक्रे शजवर्चसा ॥ ७६ ॥ आदाय सर्वपुष्पाणि । सर्वारामोद्भवानि सा ॥ कारयति सदा पूजां । स्वकीये जिनमंदिरे ॥ ७७ ॥ तथाभिभूयते बाढं । वनमाला पदे पदे ॥ दूयते च दृढं चित्ते । ततः सैवमचिंतयत् ॥ ७८ ॥ राजा च रत्नमाला च । कुर्वते मे पराभवं ॥ न शक्ताहममुं सोढुं । तस्मादग्नौ विशाम्यहं ॥ ७९ ॥ वहंती मत्सरं घोरं । ततः सा दंपतींप्रति ॥ अवज्ञाता च सा राज्ञा । प्रविवेश हुताशने ॥ ८० ॥

मृत्वा च व्यंतरी जाता । विज्ञाय ज्ञानतस्ततः ॥ आगत्य रुष्टया तूर्णं । शंखचूडो निपातितः ॥ ८१ ॥ ससुता रत्नमाला च । शेषलोको बहुस्तथा ॥ शंखावर्तं पुरं दग्धं । धनधान्यसमाकुलं ॥ ॥ ८२ ॥ तथा सर्वोऽपि देशोऽयं । निर्दह्योद्वासितस्तया ॥ शोषितश्चायमारामः । प्राकारश्चास्य पातितः ॥ ८३ ॥ देवकुलानि सर्वाणि । संजग्मान्यत्र कानने ॥ अथेदं त्यक्तुमारब्धा । मौलं देवकु·

त्वं च सा ॥ ९४ ॥ न शशाक परं भंक्तुं । प्रतिष्ठागुणगौरवात् ॥ सा चाहं वनमाल्लेति । व्यंतरी त्वमुपागता ॥ ९५ ॥ श्रुत्वेदं फलदेवेन । जजल्पेऽमलया गिरा ॥ यदहं वच्मि हे भद्रे । त्वं को· पं तत्र माकृथाः ॥ ९६ ॥ नेदं मे संगतं भाति । भद्रे यच्चेष्टितं त्वया ॥ निरागसोऽपि यल्लोकाः एतावंतो निपातिताः ॥ ९७ ॥ इदं च पुनरत्यंत—मसंगततरंतरं ॥ यदेव देवदेवोऽय—मपूज्य· स्त्वयका कृतः ॥ ९८ ॥ धर्मार्थमेव यक्षोऽपि । पूज्यते च भवादृशैः ॥ धर्मार्थिना च पूज्योऽसौ । यो देवस्त्रिजगत्प्रभुः ॥ ९९ ॥ त्रैलोक्यप्रभुता ताव—द्यक्षस्यास्य न विद्यते ॥ तत्संसूचकलिंगानां । यच्छरीरेऽप्यदर्शनात् ॥ १०० ॥ अस्य तु देवदेवस्य । त्रैलोक्यप्रभुतां स्फुटं ॥ छत्रत्रयादिचिह्नानि । व्यंजयंति न संशयः ॥ १ ॥ तथाहि—श्वेतछत्रत्रयं भेव—न्नानारत्नविराजितं ॥ शंसत् त्रैलोक्य· नाथत्व—मस्योपरि विराजते ॥ २ ॥ उभयपार्श्वयोश्चेमौ । सुरौ चामरधारिणौ ॥ व्यक्तं देवाधिदे· वत्वं । व्यंजयंतौ विराजितः ॥ ३ ॥ सिंहासनं च सौवर्णं । भास्वद्रत्नौघमंडितं ॥ अस्येह ख्यापय· त्येव । त्रैलोक्यमहनीयतां ॥ ४ ॥ तद्भद्रे देवदेवोऽयं । सर्वामरनरार्चितः ॥ पूजनीयो विशेषेण । किं शेषैः पूजितैः सुरैः ॥ ५ ॥ तदत्र मत्सरं मुक्त्वा । मुक्त्वा मिथ्याभिमानितां ॥ जगद्धितमिमं

देवं । स्पूजं कुरु सर्वदा ॥ ६ ॥ सा प्राह सर्वमेवेदं । करिष्याम्येवमेव हि ॥ नान्यथा जायते तत्तु । यच्चित्ते चिंतितं त्वया ॥ ७ ॥ चिंतानंतरमेवाशु । येनारामः स शुष्ककः ॥ त्वत्प्रभावेण संजातः । सद्यः पुष्पफलाकुलः ॥ ८ ॥ तदिदं सर्वथा मुक्तं । वैरं पूर्वभवानुगं ॥ प्रतिपन्नश्च देवोऽयं । देवत्वेन मयाधुना ॥ ९ ॥ अतस्त्वं मेऽधुना बंधु—र्गौरव्यो गुरुसन्निभः ॥ इदं गृहाण मत्तुष्टि—हेतवे रत्नपंचकं ॥ १० ॥ तत्र यक्षगृहस्याग्रे । सद्वृक्षो यः प्रदृश्यते ॥ सर्वरोगहरश्चायं । नामतः कर्मतस्तथा ॥ ११ ॥ द्वितीयश्च तदासन्न । दृश्यते यो महाद्रुमः ॥ सर्वविषापहो नाम्ना । ख्यातोऽयं क्रियया तथा ॥ १२ ॥

एतयोः पुष्पपत्राणि । फलानि च गृहाण भोः ॥ येन मे जायते तुष्टि—र्मा मोघां प्रार्थनां कृथाः ॥ १३ ॥ तथेदं भो गृहाण त्व—मौषधीद्वयमुत्तमं ॥ एका संरोहिणीनाम्नी । शल्योद्धारकरा परा ॥ १४ ॥ अयं च गृह्यतां बंधो । हारः सौभाग्यसुंदरः ॥ दुर्भगस्यापि सौभाग्य—कारको मम तुष्टये ॥ १५ ॥ ततश्च फलदेवोऽपि । लात्वा तद्रत्नपंचकं ॥ वनमालोपरोधेन । पूजयंस्तत्र तं जिनं ॥ १६ ॥ दिनानां पंचकं स्थित्वा । वनमालाविसर्जितः ॥ अचलध्यानपात्रस्थः । स्वाभिप्रेतदि-

शंप्रति ॥ १७ ॥ युग्मं ॥ समुल्लंघ्य ततस्तूर्ण—मंभोधेर्भूयसीं भुवं ॥ सुवर्णवालुकाख्याया । नद्या मुखमुपागतः ॥ १८ ॥ ततो जलेंधनाद्यर्थं । प्रेषिताः पुरुषा निजाः ॥ गत्वा तेऽपि समायाता । जलाद्यादाय सत्वरं ॥ १९ ॥ प्रोक्तं च फलदेवाय । यद् दृष्टं कौतुकं तकैः ॥ यथास्मान्निर्गतैस्तीरं । दृष्टैका वरकन्यका ॥ २० ॥ वंशकुडंगमध्यस्था । यौवनारंभवर्तिनी ॥ सविषादा रुदंती च । भय· संभ्रांतलोचना ॥ २१ ॥ युग्मं ॥ कुडंगान्नातिदूरेण । ददृशे पुरुषद्वयं ॥ पतितं भूतले शस्त्र—प्रहारशतसंकुलं ॥ २२ ॥ अंतःशल्यं समासन्न—मरणादतिदुःखितं ॥ श्रुत्वेदं फलदेवोऽपि । समुत्तीर्य द्रुतं ततः ॥ २३ ॥ युग्मं ॥ आरुह्य डोणिकां लघ्वीं । कियद्भिः सुभटैः सह ॥ गतस्तत्र क्षणादेव । दृष्टौ च पुरुषौ तकौ ॥ २४ ॥ शल्योद्धरणिकानाम्नी । क्षिप्ता सा चौषधी ततः ॥ दत्ता व्रणमुखेष्वाशु । ततः शल्यानि निर्ययुः ॥ २५ ॥ संरोहिणीप्रयोगेण । व्रणाः संरोहिताः क्षणात् ॥ स्वस्थावस्थौ च तौ जातौ । पुमांसावौषधीगुणात् ॥ २६ ॥ पृष्टौ च फलदेवेन । यथा भोः किमु कारणं ॥ युवां यदत्र शस्त्रौघ—प्रहारशतजर्जरौ ॥ २७ ॥ गतौ च मरणावस्थां । पतितावत्र भूतले ॥ ताभ्यामुक्तं महाभाग । श्रूयतां तव कथ्यते ॥ २८ ॥ युग्मं ॥

आवां हि भ्रातरौ विद्धि । द्वावपि च सहोदरौ ॥ पुत्रौ च चंद्रचूडस्य । चंद्रश्रीकुक्षिसंभवौ ॥ २९ ॥ सुचंद्रपूर्णचंद्राख्यौ । बंधूनामतिवल्लभौ ॥ विद्याधरौ सदा प्रीत्या । वर्तावहे परस्परं ॥ ॥ ३० ॥ अन्यदा पूर्णचंद्रेण । भ्राम्यता धरणीतलं ॥ सिंहलद्वीपमध्यस्थे । पुरे सिंहपुराभिधे ॥ ॥ ३१ ॥ सिंहविक्रमभूपस्य । दुहिता रत्नसुंदरी ॥ दृष्टा ततश्च सर्वांगं । विद्धः कामशिलीमुखैः ॥ ॥ ३२ ॥ युग्मं ॥ समाख्यातं ममागत्य । द्वावप्यावां ततो द्रुतं ॥ गत्वा सिंहपुरे तूर्णं । गृहीत्वा रत्नसुंदरीं ॥ ३३ ॥ गगनवर्त्मना याव—दागच्छावस्ततो मम ॥ नितांतं रत्नसुंदर्याः । सौंदर्येण हृतं मनः ॥ ३४ ॥ युग्मं ॥ भक्तो मया लघुभ्राता । बालेयं मे भविष्यति ॥ स प्राह न ददे तुभ्य—महमिमां विना प्रिये ॥ ३५ ॥ ततः सा लातुमारब्धा । तस्य हस्तान्मया बलात् ॥ केशाकेशिं च कुर्वता—ववतीर्णौ महीतले ॥ ३६ ॥ मुक्त्वा वंशकुडंगांतः । कन्यकां रत्नसुंदरीं ॥ गजाविव मदोन्मत्तौ । लग्नौ योध्धुं परस्परं ॥ ३७ ॥ युध्ध्वा च विविधैः शस्त्रै—श्चिरमाबद्धमत्सरौ ॥ ततो गाढप्रहारैश्च । पतितावत्र भूतले ॥ ३८ ॥ प्राप्तौ च मरणावस्थां । त्वयोज्जीवापितौ पुनः ॥ तस्मादावयोः श्रीमं—स्त्वदन्यो नोपकारकः ॥ ३९ ॥ त्वं पिता त्वं परं मित्रं । त्वं चात्यंतिकबांधवः ॥ अस्याश्च

रत्नसुंदर्याः । कारणेनावयोरिमा ॥ ४० ॥ संजाता दारुणा व्याप—दन्योन्यं मरणांतिका ॥ तदेष स्वीयवृत्तांत । आवाभ्यां कथितस्तव ॥ ४१ ॥ युग्मं ॥ सांप्रतं त्वं स्वकीयं नौ । संक्षेपेण निवेदय ॥ स प्राह वयमायाताः । सोपाराभिधपत्तनात् ॥ ४२ ॥ गंतारः सिंहलद्वीपं । वाणिज्येन धनेछया ॥ ततः प्रोक्तं सुचंडेण । यद्येवं गृह्यतामियं ॥ ४३ ॥ कन्या सिंहपुरे गत्वा । जनकस्य समर्पयेः ॥ तथा गृहाण भो विद्या—मिमामाकाशगामिनीं ॥ ४४ ॥ युग्मं ॥ येन नौ जायते तुष्टि—स्ते· नापि च तथा कृतं ॥ अथ प्रणम्य तौ भक्त्या । विद्याधरौ गतौ ततः ॥ ४५ ॥ फलदेवोऽपि सानं· दो । गृहीत्वा रत्नसुंदरीं ॥ आयातस्तेषु पोतेषु । प्रवृत्तो गंतुमुच्चकैः ॥ ४६ ॥

अथ गच्छद्भिरेकत्र । वंशाग्रे ददृशे ध्वजः ॥ किमेतदिति पप्रछ । फलदेवो निजान् जनान्॥ ॥ ४७ ॥ तैरवाचीदमत्रास्ते । भिन्नवाहनिको नरः ॥ कश्चित्तेनेह बद्धोऽयं । वंशाग्रे दृश्यते ध्वजः ॥ ४८ ॥ आत्मनो ज्ञापनाहेतो—रेवं संभावयामहे ॥ श्रुत्वेदं प्रेषिता द्रोणी । स पुमानानीतः क्ष· णात् ॥ ४९ ॥ युग्मं ॥ आरोपितः स्वबोहित्थे । दृष्टो रोगैरपि द्रुतः ॥ तथाहि तत्तनौ दृष्टो । दा· घज्वरो हि दारुणः ॥ ५० ॥ श्वासः कासो गलत्कुष्टः । शुष्ककंडूः शिरोव्यथा ॥ अक्षिकुक्षिव्यथा

तीव्रा । दंतपीमा जलोदरं ॥ ५१ ॥ ततश्च फलदेवेन । परोपकृतिबंधुना ॥ तस्य रोगहरस्याशु । पूर्वोद्दिष्टस्य शाखिनः ॥ ५२ ॥ पूर्वात्तपुष्पपत्राणि । तस्मै दत्तानि सादरं ॥ ततोऽसौ प्रगुणो जातो । नीरोगः कनकच्छविः ॥ ५३ ॥ पृष्टश्च फलदेवेन । कुतस्त्वं कुत्र यास्यसि ॥ किमर्थं वा किमेकाकी । कथं वाजनि रोगवान् ॥ ५४ ॥ किं कुलं किं च ते नाम । स प्राह श्रूयतामिति ॥ कथामाश्चर्यसंपूर्णां । मामकीनां नरोत्तम ॥ ५५ ॥ सिंधुसौवीरदेशस्था—दहं वीतजयात्पुरः ॥ अगच्छं कलहद्वीपं । यानस्थितो धनेच्छया ॥ ५६ ॥ राशिं महांतमादाय । तथा स्वस्य सहायकं ॥ कृत्वा च शुभदत्ताख्यं । वणिक्पुत्रं च दुर्जनं ॥ ५७ ॥ युग्मं ॥ विक्रीतानि च भांडानि । भूरिद्रव्यमुपार्जितं ॥ ततो भृत्वा निजं पोतं । चलिताः स्वं पुरंप्रति ॥ ५८ ॥ अर्धमार्गं समायाताः । स्तोकैरपि च वासरैः ॥ चिंतितं शुभदत्तेन । गृह्णाम्यस्याखिलं धनं ॥ ५८ ॥ अथाहं शुभदत्तेन । द्रव्यसंलुब्धचेतसा ॥ क्षिप्तश्छलेन बोहित्था—त्पतितोऽगाधवारिणि ॥ ५९ ॥ उच्छलितः क्षणादेव । लब्ध्वं फलकखंभकं ॥ लग्नस्तत्र जले भ्राम्यन् । दैवयोगादिहागतः ॥ ६० ॥ अत्रत्यांबुफलाहार—दोषाद्रोगैरभिद्रुतः ॥ नाम्ना च शुभचंद्रोऽहं । जिनचंद्रश्च मत्पिता ॥ ६१ ॥ सुश्रावकसमाचार—कारको ध-

र्मकारकः ॥ तदहो यत्त्वया पृष्टं । तदादिष्टं मयाखिलं ॥ ६२ ॥ अथोक्तं फलदेवेन । भो शुभचंद्र कीदृशः ॥ सुश्रावकसमाचारः । संक्षेपान्मम कथ्यतां ॥ ६३ ॥ स प्राह श्रूयतां श्रेष्टिन् । कर्णं दत्वा क्षणांतरं ॥ श्रावको नात्ति मांसानि । न मद्यानि पिबत्यसौ ॥ ६४ ॥ न च भुंक्ते रजन्यां तु । नाश्नाति मधुभक्षणे ॥ एषां हि भक्षणे दोषा । भूयांसः कथिता जिनैः ॥ ६५ ॥ धिग्मांसं यत्परप्राण—प्रणाशेन प्रजायते ॥ को भक्षयेदिदं प्राज्ञो । यद्भुक्तं पातयेदधः ॥ ६६ ॥ अहिंसा धर्मसर्वस्वं । कुतः सा मांसभक्षणे ॥ अतः श्रावकलोकेन । मांसमाजन्मवर्जितं ॥ ६७ ॥ मद्यं सर्वप्रमादानां । प्रमादः प्रथमो मतः ॥ प्रथमत्वे च को हेतु—र्ज्येष्टं यत्पापकारणं ॥ ६८ ॥ किंच—वैरूप्यं व्याधिपिंडः स्वजनपरिभवः कार्यकालातिपातो । विद्वेषो ज्ञाननाशः स्मृतिमतिहरणं विप्रयोगश्च सद्भिः ॥ पारुष्यं नीचसेवा कुलबलतुलना धर्मकामार्थहानिः । कष्टं वो षोडशैते निरुपचयकरा मद्यपानस्य दोषाः ॥ ६९ ॥ मूलं सर्वविकाराणां । कारणं पापकर्मणां ॥ हेतुर्वैरानुबंधस्य । निवासो निखिलापदां ॥ ७० ॥ रागद्वेषादिदोषाणां । पोषणं गुणमोषणं ॥ शिष्टैर्निंद्यं कथं नाम । मद्यं सुश्रावकः पिबेत् ॥ ७१ ॥ युग्मं ॥ आयुर्वर्षशतं लोके । तदर्धं स उपोषितः ॥ करोति विरतिं धन्यो । यः

सदा निशि भोजने ॥ ७२ ॥ यतः—मालिंति महियलं जामि—णीए रयणीयरासयं तेणं ॥ ते विट्टालंति फुडं । रयणीए भुंजमाणे उ ॥ ७३ ॥ मेहं पिपीलियाउ । हणंति वमणं च मच्छिया कुणइ ॥ जुया जलोयरत्तं । कोलिउ उ कोढरोगं च ॥ ७४ ॥ वालो सरस्स भंगं । कंटो लग्गइ गलंमि दारुं च ॥ तालुंमि विंधइ अली । वंजणमज्झंमि भुंजंतो ॥ ७५ ॥ जीवाणं कुंथुमाइण । घायणं भायणधोयणाइसु ॥ एमाई रयणिभोयण—दोसा को साहिउं तरइ ॥ ७६ ॥ तद्वर्णास्तद्रसा जीवाः । संभवंति यतः किल ॥ सर्वज्ञशासने तेन । दूषिते मधुमृक्षणे ॥ ७७ ॥ यत उक्त मागमे—मज्जे महुंमि मंसे य । नवणीयंमि चउत्थए ॥ उप्पज्जंति असंखात—तवन्ना तत्थ जंतुणो ॥ ७८ ॥

तथा श्रावकलोकस्य । देवः सर्वज्ञ एव हि ॥ धर्मस्तु तत्प्रणीतो यः । स त्वहिंसादिलक्षणः ॥ ७९ ॥ श्रुतशीलतपोयुक्ता । गुरवस्तु सुसाधवः ॥ तथा सुश्रावका नैव । हिंसति स्थूलदेहिनः ॥ ८० ॥ स्थूलालीकं न जल्पंति । स्थूलादत्तं न गृह्णते ॥ परदारान्न गच्छंति । परिगृह्णंति नामितं ॥ ८१ ॥ कुर्वंति दिक्षु सर्वासु । प्रमाणं गमनाश्रितं ॥ कुर्वंति शक्तितो मान—मपि भोगोपभोग-

योः ॥ ७२ ॥ त्यजंत्यनर्थदंडं च । मनोवाक्कायजं सदा ॥ समस्तव्रतसंक्षेपं । कुर्वंति प्रतिवासरं ॥ ॥ ७३ ॥ सावद्येतरयोगानां । त्यागसेवनरूपकं ॥ सामायिकव्रतं चैव । यथाशक्त्या प्रकुर्वते ॥७४॥ आहारदेहसत्कारा—ब्रह्मव्यापारवर्जनात् ॥ कुर्वंति पौषधं चैव । विशुद्धं धर्मपोषकं ॥ ७५ ॥ वरा· हारादिदानं च । निजन्यायार्जितं तथा ॥ यच्छंति साधुलोकाय । कर्मक्षयार्थमंजसा ॥ ७६ ॥ जैने गृहे च बिंबे च । सिद्धांते संघ एव च ॥ व्ययंति च यथाशक्त्या । न्यायोपात्तं निजं धनं ॥७७॥ तथा साधर्मिलोकानां । वात्सल्यं भक्तियोगतः ॥ प्रकुर्वंति यथायोगं । यथाकालं यथाबलं ॥७८॥ क्रियते च सदा श्राद्धै—स्त्रिसंध्यं जिनपूजनं ॥ सदा सद्गुरुसेवा च । भक्त्या जैनवचःश्रुतिः ॥ ॥ ७९ ॥ दानं दीनादिलोकेभ्यो । विधिवद्गुरुपूजनं ॥ लोकागमविरुद्धानां । दूरतः परिवर्जनं ॥ ॥ ८० ॥ अशिष्टसंगतित्यागः । शिष्टैश्च सह संगतिः ॥ मोक्षसौख्याभिलाषश्च । संसारभयभीरुता ॥ ८१ ॥ इंद्रियाणां जयः शक्त्या । कषायाणां च निग्रहः ॥ सत्यं शीलं च शौचं च । दाक्षिण्यं च दयालुता ॥ ८२ ॥ तथैंगालवनादीनां । बहुसावद्यकर्मणां ॥ बहुलोकविरुद्धानां । शक्तितः प- रिवर्जनं ॥ ८३ ॥ परपीडापरित्यागः । परावर्णाप्रभाषणं ॥ परोपकारकारित्वं । परद्रव्येष्वलोभता ॥

॥ ९४ ॥ मैत्री सर्वेषु सत्वेषु । माध्यस्थ्यं निर्गुणे जने ॥ कृपा संक्लिश्यमानेषु । तुष्टिः सद्गुणधारिषु ॥ ९५ ॥ माननं मान्यलोकस्य । पूज्यलोकस्य पूजनं ॥ सर्वशिष्टजनानिंद्य—व्यवहारेषु वर्तनं ॥ ९६ ॥ इत्यनेकगुणग्रामः । सुश्रावकजनोचितः ॥ नाख्यातुं शक्यते सर्वो । ज्ञो श्रेष्टिन्माहशैर्जनैः ॥ ९७ ॥ लेशतश्च मयाख्यातो । यथामति तवाग्रतः ॥ विस्तरेण समाख्यांति । साधवो हि बहुश्रुताः ॥ ९८ ॥ तदेष श्रावको धर्मः । सर्वः सर्वज्ञभाषितः ॥ शुद्धसम्यक्त्वसंयुक्तः । पंचाणुव्रतसंयुतः ॥ ९९ ॥ सप्तशिक्षापदोपेतो । नानाभिग्रहशोभितः ॥ सद्गतिपूरसन्मार्गो । दुर्गतिद्वाररोधकः ॥ २०० ॥ पारंपर्येण जीवानां । मोक्षस्यापि हि साधकः ॥ मयापि श्राद्धधर्मोऽयं । सर्वकल्याणकारकः ॥ १ ॥ सद्भावतो विधानेन । गृहीतो गुरुसन्निधौ ॥ अथानंदितचित्तेन । फलदेवेन जल्पितं ॥ २ ॥ सुंदरः सुंदरो धर्मः । साधु साधूदितं त्वया ॥ ममापि त्वं ह्यमुं धर्मं । देहि त्वमेव मे गुरुः ॥ ३ ॥ आख्याय देवतत्वादि । तेनापि च तथा कृतं ॥ ततश्च फलदेवस्य । धर्मप्राप्तिवशादलं ॥ ४ ॥ संजातः परमानंद—स्ततश्चिंतितवानिदं ॥ धन्योऽहं कृतपुण्योऽहं । दृष्टोऽहं त्रिजगच्छ्रिया ॥ ५ ॥ युग्मं ॥

यतोऽयं सुंदरो धर्मो । लब्धो लब्धिमता मया ॥ स एष शुभ्रचंद्रो मे । सद्धर्मबंधुरो गुरुः ॥ ॥ ६ ॥ यत्संगेनाद्य जातोऽहं । सर्वकल्याणभाजनं ॥ अथोक्तं शुभचंद्रेण । फलदेवाधुना भवान् ॥ ७ ॥ आख्यातु निजवृत्तांतं । येन मे जायते धृतिः ॥ मूलादेव समाख्यात—स्तस्मै तेनापि सोऽखिलः ॥ ८ ॥ युग्मं ॥ सोऽपि तस्य समाकर्ण्य । मुमुदे निजमानसे ॥ एवं च धर्मसंबंधं । विचारं कुर्वतोस्तयोः ॥ ९ ॥ वहंतस्ते महापोताः । समुल्लंघ्य पयोनिधिं ॥ संप्राप्ता रत्नगंभीरं । पुरं पौरजनाकुलं ॥ १० ॥ युग्मं ॥ ततो नंगरितास्तत्र । वेलाकुले जनाकुले ॥ ततोऽवतीर्य पोतेभ्यः । फलदेवो नयान्वितः ॥ ११ ॥ प्रधानवणिग्भिः सार्धं । गृहीत्वा प्राभृतं महत् ॥ गतो राजकुले शीघ्रं । दृष्टो राजा ननाम तं ॥ १२ ॥ युग्मं ॥ अर्पितं प्राभृतं पश्चा—न्निषण्णो दर्शितासने ॥ पृष्टा वार्ता नरेंद्रेण । प्रोक्ता तेनापि मूलतः ॥ १३ ॥ ततस्तद्दर्शनेनैव । राज्ञा रंजितचेतसा ॥ सन्मानं सादरं तस्य । प्रासादा दर्शिता वराः ॥ १४ ॥ ततश्च पातितं शुल्कं । विक्रीतं च क्रयाणकं ॥ आसादितो महान् लाभो । जाता चित्तस्य निवृतिः ॥ १५ ॥ गृहीतं प्रतिभांडं च । सर्वं च प्रगुणीकृतं ॥ अन्यदा फलदेवस्तां । गृहीत्वा रत्नसुंदरीं ॥ १६ ॥ कृत्वा प्रधानसामग्रीं । चेले सिंहपुरं

प्रति ॥ प्रेरितो वर्यशकुनैः । परिवारसमन्वितः ॥ १७ ॥ युग्मं ॥ गछता च पुमानेकः । परं खेद-मुपेयिवान् ॥ दृष्टः प्रदेश एकस्मिन् । महादारिद्र्यपीडितः ॥ १८ ॥ पृष्टश्च फलदेवेन । गत्वा कोमलया गिरा ॥ किमित्येवं महासत्व । सखेद इव लक्ष्यसे ॥ १९ ॥ स प्राह नोचितं वक्तुं । निजखेदस्य कारणं ॥ तथापि तव मूर्त्यैव । रंजितः कथयाम्यहं ॥ २० ॥ इदं हि वसुधासारं । महाभाग महापुरं ॥ अत्राभून्मे सुचित्ताख्यः । पितामहपिता मम ॥ २१ ॥ तेनार्जिता महारंभैः । सप्त स्वर्णस्य कोटयः ॥ निखाताश्च महालोभा—देकांते निजवेश्मनि ॥ २२ ॥

अन्यदा मूर्छितस्तत्र । मृतोऽसौ दैवयोगतः ॥ तत्पदे च कृतो लोकै—स्तत्पुत्रः सुधनाभिधः ॥ २३ ॥ अन्यदा सीदता तेन । समुत्खातुं प्रचक्रमे ॥ निधानं तदहो पैत्र्यं । यावत्तस्माद्विनिर्गतः ॥ २४ ॥ दुष्टो दृष्टिविषः सर्प—स्तेनालोकि महारुषा ॥ सुधनो भस्मतां नीत—स्तत्पदेऽजनि तत्सुतः ॥ २५ ॥ युग्मं ॥ सुचित्तो नाम सोऽप्येवं । प्रापितो भस्मपुंजतां ॥ पदे तस्यानुजातोऽहं । दूरं दारिद्र्यपीडितः ॥ २६ ॥ निधानस्थं च नूनं त—द्दारिद्र्यविनिवारकं ॥ द्रव्यं लातुं न शक्नोमि । तेनाहं खेदवानिति ॥ २७ ॥ श्रुत्वेदं फलदेवेन । निजचित्ते विचिंतितं ॥ मन्ये सुचित्त एवायं

। मृत्वाजनि भुजंगमः ॥ २८ ॥ तेनेदं मूर्छितेनोच्चै—र्निधानकमधिष्ठितं ॥ तदिदं रक्षता तेन । प्रत्यक्षेणेव मृत्युना ॥ २९ ॥ स्वपुत्रः पुत्रपुत्रश्च । नीतौ द्वावपि पंचतां ॥ विचिंत्यैवं ततस्तेन । स पुमान् भणितो यथा ॥ २९ ॥ युग्मं ॥ दर्शयस्व निधानं मे । येनोत्खात्य तवार्पये ॥ स प्राह मम नो कार्यं । तेन भो मूर्तमृत्युना ॥ ३० ॥ जीव नंद चिरं कालं । भुंक्ष्वेमां निजसंपदं ॥ स प्रोक्तः फलदेवेन । मा भैषीर्दर्शयस्व मे ॥ ३१ ॥ उत्तिष्ठ येन तद्द्रव्य—मुत्खात्याहं ददामि ते ॥ प्रतिपन्नं च तत्तेन । नीतश्च निजमंदिरे ॥ ३२ ॥ दर्शितं च तकं तस्मै । तेनापि च ततो द्रुतं ॥ गृहीत्वा फलपत्राणि । तस्य विषघ्नशाखिनः ॥ ३३ ॥ कृत्वा चूर्णमतिश्लक्ष्णं । बद्धो मुष्टिस्ततो जवात ॥ उद्घाटितं निधानं त—न्निष्क्रांतः स भुजंगमः ॥ ३४ ॥ आछोटितश्च चूर्णेन । भुजंगोऽजनि निर्विषः ॥ उक्तश्च फलदेवेन । मुंच मुंचाधुना रुषं ॥ ३५ ॥ मा कार्षीर्निजगोत्रस्य । क्षयं भो भो महोरग ॥ तवैवेदं गृहं भोगिं—स्तवैते पुत्रपौत्रकाः ॥ ३६ ॥ तवैवायं निजो लोकः । किमेवं खिद्यते भवान् ॥ आकर्ण्येदं भुजंगोऽपि । जातो जातिस्मरः क्षणात् ॥ ३७ ॥ तस्यैव पादमूलांतः । संलीनः संवृतेक्षणः ॥ ततस्तस्मै पयो दत्तं । न चासौ पातुमिछति ॥ ३८ ॥ शुभचंद्रस्त·

तः प्राह । सर्पोऽयं भोक्ष्यते न हि ॥ मन्ये जातिस्मरो जातो । गृहीतानशनस्तथा ॥ ३९ ॥ तस्यो
पंचनमस्कारो । दीयतेऽस्मै महाहये ॥ तथैव दातुमारब्धो । नमस्कारं स्फुटाक्षरं ॥ ४० ॥ सर्वज्ञ-
भाषितो धर्मः । प्रोक्तस्तस्य सविस्तरः ॥ ततः शृण्वन्नमस्कारं । जीवित्वा दिनपंचकं ॥ ४१ ॥ मृत्वा
समाधिना जातो । दिवि देवो महर्द्धिकः ॥ नमस्कारप्रभावेण । धर्मध्यानपरायणः ॥ ४२ ॥ युग्मं
॥ ततः सुचित्तपुत्रेण । तकं स्वर्णनिधानकं ॥ उत्खन्य पुंजितं सर्वं । जनाध्यक्षं गृहांगणे ॥ ४३ ॥
फलदेवस्ततः प्रोक्त—स्तेनैवं हृष्टचेतसा ॥ गृह्यतां गृह्यतां स्वामि—स्तवैवैतत्सुवर्णकं ॥ ४४ ॥ त-
था भो भगिनी येयं । मामकी धनसुंदरी ॥ श्रेष्ठिन् परिणयस्वेमां । मत्तुष्टिं कुरु सर्वथा ॥ ४५ ॥
फलदेवस्ततः स्माह । स्थाने कुरु सुवर्णकं ॥ तवैवेदं महाभाग । संवृणु वृणु सत्वरं ॥ ४६ ॥ मा
कार्षीरुपरोधं नः । सर्वथा कुरु मे वचः ॥ ततस्तत्संवृतं तेन । यथायोगं निजोचितं ॥ ४७ ॥ ल-
ब्धश्च फलदेवेन । साधुवादो जनेऽधिकः ॥ श्लाघितोऽस्य गुणग्रामो । लोकै रंजितमानसैः ॥ ४८ ॥
श्रेष्ठिना बंधुयुक्तेन । भण्यमानश्च सादरं ॥ परिणिन्ये परक्ष्यांसौ । कन्यां तां धनसुंदरीं ॥ ४९ ॥
कतिचिद्दिनानि तत्रैव । तया सार्धं प्रमोदतः ॥ स्थित्वा संप्रस्थितो भूयः । पुरं सिंहपुरंप्रति ॥ ५० ॥

क्रमशस्तत्र संप्राप्तो । गृहीत्वा रत्नसुंदरीं ॥ प्राभृतं च वरं लात्वा । गतोऽसौ राजमंदिरे ॥ ५१ ॥
दृष्टो राजा ततस्तस्मै । चार्पिता रत्नसुंदरी ॥ वरप्राभृतसंयुक्ता । ततस्तुष्टेन नृभुजा ॥ ५२ ॥ पृष्टश्च
कुत्र त्वो लब्धा । मत्पुत्री रत्नसुंदरी ॥ तेनाप्यामूलतः सर्वो । वृत्तांतोऽस्मै निवेदितः ॥ ५३ ॥ यु-
ग्मं ॥ ततश्च सादरं राज्ञा । स्नापितो भोजितस्तथा ॥ सन्मानितश्च वस्त्राद्यैः । फलदेवः सगौरवं
॥ ५४ ॥ तद्रूपादिगुणग्रामै । राजा रंजितमानसः ॥ तस्मा एव ददौ प्रीत्या । कन्यां तां रत्नसुंदरीं
॥ ५५ ॥ शुभे च तिथिनक्षत्रे । महामहपुरस्सरं ॥ वृत्तं चातिप्रमोदेन । पाणिग्रहणमंगलं ॥५६॥
दत्तं च नृभुजा तस्मै । वरप्रासादसंयुतं ॥ हस्त्यश्वस्वर्णरत्नादि—भूरिदानमनेकधा ॥ ५७ ॥ एवं
भार्याद्वयोपेतो । भुंजानः कामजं सुखं ॥ मासमेकं स्थितस्तत्र । श्लाघ्यमानो जनैरलं ॥ ५८ ॥ त-
तो मुत्कलितः कष्टा—द्राज्ञा सन्मानपूर्वकं ॥ हस्त्यश्वरथपादाति—सत्सामग्र्या चचाल सः ॥५९॥
आगच्च सुधासारे । नगरे दिनपंचकं ॥ स्थित्वा कृत्वा महानंदं । श्वशुरस्य ततोऽपि च ॥ ६० ॥
संप्रस्थितः स्वसामग्र्या । रत्नगंभीरमागतः ॥ सिंहविक्रमसंबंधि—हस्त्याद्यं विससर्ज सः ॥ ६१ ॥
युग्मं ॥ आरोप्य निजपोतेषु । स्वर्णरत्नादिकं धनं ॥ ततः स्वयं समारूढो । हेलया संपरिच्छदः ॥

॥ ६२ ॥ ततश्च प्रेरिताः पोताः । प्रवृत्ता गंतुमुच्चकैः ॥ प्राप्ता मलयदेशांतं । तत्र स्थाने धृतास्ततः ॥ ६३ ॥ फलदेवः समुत्तीर्णः । सत्वरं सपरिछदः ॥ गत्वा तत्र पुरा दृष्ट—काननस्थजिनालये ॥ ६४ ॥ दृष्टः श्रीमज्जिनाधीशः । पूजितो वंदितस्तथा ॥ कारिता च वरा यात्रा । प्रबंधेन दिनाष्टकं ॥ ६५ ॥ तृतीये च दिने तत्र । वनमाला समागता ॥ पृष्टा च फलदेवेन । किं चिरादत्र दृश्यसे ॥ ६६ ॥ तयाख्याणि गताहं भो । द्वीपे नंदीश्वराभिधे ॥ तत्र संति समुत्तुंगा । द्वापंचाशज्जिनालयाः ॥ ६७ ॥ तत्राशेषसुराधीशै—रष्टाह्निकामहोत्सवः ॥ चक्रे जैनेंद्रबिंबानां । गताहं तद्दिदृक्षया ॥ ६८ ॥ युष्मानिह समायातान् । विलोक्येह समागता ॥ फलदेवस्ततः प्राह । कौतुकाकुलमानसः ॥ ६९ ॥ यदि भो गम्यते तत्र । दृश्यंते ते जिनालयाः ॥ वंद्यंते जिनबिंबानि । सुंदरं जायते तदा ॥ ७० ॥ वनमाला ततः प्राह । गम्यतां भो नयाम्यहं ॥ पूरयामि तवाभीष्टं । धर्मबंधो यथा तथा ॥ ७१ ॥ स प्राह स्वयमेवाहं । गगने गंतुमीश्वरः ॥ अयं तु त्वयका नेयः । शुभचंद्रः सुहृन्मम ॥ ७२ ॥

अथोक्तं रत्नसुंदर्या । नयस्व प्रिय मामपि ॥ कथं नयामि तत्रेमां । यावच्चिंतापरोऽभवत् ॥

॥ ७३ ॥ तावत्पश्यति तं सर्प—जीवदेवं पुरः स्थितं ॥ देवः प्राह भवानद्य । परिजानाति मां न वा ॥ ७४ ॥ तेनोक्तं परिजानामि । सामान्येनामरो भवान् ॥ नो विशेषेण स प्राह । तर्हि ते क थयाम्यहं ॥ ७५ ॥ स एव सर्पजीवोऽहं । यस्त्वया प्रतिबोधितः ॥ मृत्वा जातः सुरः कल्पे । ब्रह्म लोकाभिधानके ॥ ७६ ॥ अवधिज्ञानतो ज्ञात्वा । समायातस्तवांतिके ॥ तद्ब्रूहि यत्तवाभीष्टं । ये न संपादयाम्यहं ॥ ७७ ॥ फलदेवस्ततः प्राह । द्वीपे नंदीश्वराभिधे ॥ चैत्यानां वंदनार्थं तु । गंतु मिच्छामि सांप्रतं ॥ ७८ ॥ तेनापि सुंदरं चैत—देवमुक्त्वा विकुर्वितं ॥ विमानं सुंदराकारं । विस्ती र्णं सुमनोहरं ॥ ७९ ॥ फलदेवस्ततस्तस्मि—न्नारोप्य सपरिच्छदः ॥ नीतो नंदीश्वरे द्वीपे । दर्शि ताश्च जिनालयाः ॥ ८० ॥ ततश्च तेन चैत्यानि । वंदितान्यखिलान्यपि ॥ जातश्चित्ते महानंदः । कृतार्थं स्वं ह्यमन्यत ॥ ८१ ॥ आनीतश्च ततः शीघ्रं । तस्मिन्नेव जिनालये ॥ तत्रापि च कृता पू जा । सर्वैरपि विशेषतः ॥ ८२ ॥ भूयोऽप्यवाचि देवेन । फलदेवः कृतादरं ॥ सांप्रतं किमु ते का र्यं । ब्रूहि येन प्रसाध्यते ॥ ८३ ॥ स प्राह नास्ति मे कार्यं । कार्यं किंचिदतःपरं ॥ पूरितं मे म नोऽभीष्टं । निजस्थानमलंकुरु ॥ ८४ ॥ गतो देवस्ततस्तेन । वनमाला प्रजल्पिता ॥ त्वया भद्रे

तथा कार्यं । यथैतज्जिनमंदिरं ॥ ८५ ॥ विशेषतः सदाकालं । सपूजं जायतेतरां ॥ तथापि तद्व-चस्तोषा—त्तथेति प्रत्यपद्यत ॥ ८६ ॥ युग्मं ॥ एवं च तत्र चैत्यानि । द्वीपे नंदीश्वरे तथा ॥ वंदित्वा पूजयित्वा च । प्रमोदातिशयं दधन् ॥ ८७ ॥ आगत्य च निजान् पोता—नारूढः सपरिच्छदः ॥ ततस्ते प्रेरिताः पोताः । प्रवृत्ता गंतुमंजसा ॥ ८८ ॥ युग्मं ॥ लंघयित्वा नदीनाथं । स्तोककैरेव वासरैः ॥ संप्राप्तश्च निजे स्थाने । सोपाराभिधपत्तने ॥ ८९ ॥ नंगरिताश्च ते शीघ्रं । तीरमानीय धीवरैः ॥ वर्धापितो जनै राजा । पोतागमनिवेदनात् ॥ ९० ॥ तत्रैवासौ समायातो । भूरिपौरजनैः सह ॥ परिवारयुतो वेगा—दतीवप्रमदाकुलः ॥ ९१ ॥

ततश्च फलदेवोऽपि । पोतादुत्तीर्य सत्वरं ॥ प्रतिपत्तिं यथायोगं । राजादीनां चकार सः ॥९१॥ ततः समं नरेंद्रेण । पौरैर्बंधुजनैस्तथा ॥ गीयमानगुणग्रामो । बंदिवृंदैर्मुहुर्मुहुः ॥ ९२ ॥ दीनानाथादिलोकेभ्यो । ददद्दानं यथेप्सितं ॥ वाद्यमानैर्वरैस्तूर्यै—र्नृत्यद्भिः स्त्रीजनोत्करैः ॥ ९३ ॥ एवमादिप्रमोदेन । निजमंदिरमागतः ॥ सन्मान्य च यथायोगं । पौरलोको विसर्जितः ॥ ९४ ॥ लिग्निर्विशेषकं ॥ उत्तारितं च पोतेभ्यो । भांडं शुल्कं च पातितं ॥ विक्रीतं च यथामूल्यं । लब्धो ला-

भो यथेप्सितः ॥ ९५ ॥ संतोषितो निजो लोको । दत्वा वित्तं यथोचितं ॥ सन्मानितो बृहल्लोकः
। सहस्रादिप्रदानतः ॥ ९६ ॥ यथालाभं निजं वित्तं । धर्मस्थाने नियोजितं ॥ यदन्यदपि कर्तव्यं
। तत्कृतं सर्वमंजसा ॥ ९७ ॥ भुंजानश्च सपत्नीको । कामभोगाननुत्तरान् ॥ विदधद्धर्मकार्याणि ।
कालं नयति नीतिमान् ॥ ९८ ॥ तथास्य संपदं दृष्ट्वा । रंजिताः सज्जना जनाः ॥ दूनाश्च दुर्ज-
ना लोकाः । स्वभावोऽयं भुवि स्थितः ॥ ९९ ॥ अन्यदा शुभचंद्रोऽसौ । फलदेवं प्रभाषते ॥ भो
भ्रातर्गंतुमिच्छामि । सांप्रतं स्वपुरंप्रति ॥ ३०० ॥ किंचात्र साधवः श्रेष्ठि—न्न संत्यागमवेदिनः ॥ न
च साधर्मिका लोका । नापि तादृग्जिनालयाः ॥ १ ॥ तद्भो मदुपरोधेन । तत्रायातु भवानपि ॥
वीक्षतां जिनवेश्मानि । वंदतां मुनिपुंगवान् ॥ २ ॥ शृणोतु शुद्धसिद्धांतं । सिद्धिसंबंधसाधकं ॥
वीक्षतां धर्मसन्निष्ठं । जनं साधर्मिकं तथा ॥ ३ ॥ एवमस्त्विति संजल्प्य । फलदेवेन सत्वरं ॥ भू-
रिद्रविणसंपूर्णो । बोहित्थः प्रगुणीकृतः ॥ ४ ॥ ततस्तत्र सपत्नीकः । शुभचंद्रसमन्वितः ॥ समारुह्य
गतः शीघ्रं । पुरे वीतभयाभिधे ॥ ५ ॥ ततश्च शुभचंद्रस्य । बंधुवर्गोऽखिलोऽपि हि ॥ तस्य स-
न्मुखमायातो । बहुः पौरजनस्तथा ॥ ६ ॥ महर्द्धिपूर्वकं प्रीत्या । पुरमध्ये प्रवेशितः ॥ नीतश्च तै-

र्निजे गेहे । कृतं कृत्यं यथोचितं ॥ ७ ॥ ततश्च कृतशृंगारः । सह साधर्मिकैर्जनैः ॥ पूजोपकरणं लात्वा । जगाम जिनमंदिरे ॥ ८ ॥ दृष्टानि जिनबिंबानि । पूजितानि विधानतः ॥ वंदितानि स्तुतिस्तोत्रै—स्ततः स्वावासमागतः ॥ ९ ॥ पित्रा च शुभचंद्रस्य । भोजितश्च सगौरवं ॥ सन्मानितश्च वस्त्राद्यैः । सानंदं सपरिच्छदः ॥ १० ॥

एवं च शुभचंद्रस्य । समग्रैरपि बंधुभिः ॥ सन्मानितो यथाशक्त्या । फलदेवः कृतादरः ॥
॥ ११ ॥ ततश्च शुभचंद्रेण । बंधूनामग्रतो मुदा ॥ मूलादारभ्य सर्वोऽपि । वृत्तांतः कथितो निजः
॥ १२ ॥ ततस्तैर्नृपतेः सर्वं । प्रोक्तं तेनापि सत्वरं ॥ स आहूतो वणिक्पुत्रो । दूरमारुष्टचेतसा ॥
॥ १३ ॥ शुभचंद्रो जले तेन । क्षिप्तो द्रव्याभिलाषिणा ॥ शुभचंद्राय तद्द्रव्यं । तन्निगृह्य प्रदापितं
॥ १४ ॥ ततश्च फलदेवेन । सानंदं तत्र तिष्ठता ॥ वंदितानि समग्राणि । चैत्यानि विधिपूर्वकं ॥
॥ १५ ॥ कारिताश्च महायात्राः । सर्वेषु जिनवेश्मसु ॥ सद्वस्त्रपात्रभक्ताद्यैः । साधवः प्रतिलाभिताः ॥ १६ ॥ पूजितश्च सुवस्त्राद्यैः । सर्वः साधर्मिको जनः ॥ दीनानाथादिलोकेभ्यो । दत्तं दानं यथेच्छया ॥ १७ ॥ एवं च कुर्वता तेन । कृता तीर्थप्रभावना ॥ तत्रत्यसर्वलोकस्य । रंजितं नितरां

मनः ॥ १८ ॥ एवं तिष्ठन्नसौ तत्र । स्वकीयगुणसंपदा ॥ सर्वस्यापि हि लोकस्य । प्रमोदमकरोदि·
ति ॥ १९ ॥ स्थित्वा च तत्र सानंदः । कतिपयान्यहान्यसौ ॥ शुभचंद्रं समापृच्छ्य । स्वकीयं पु·
रमागतः ॥ २० ॥ तत्र संपादयन् प्रीतिं । लोकानां निजकैर्गुणैः ॥ भुंक्ते भोगान् सपत्नीकः । पू·
र्णाखिलमनोरथः ॥ २१ ॥ कालेन गछता तस्य । जाताः पुत्रा मनोरमाः ॥ सर्वलक्षणसंपूर्णाः ।
कलाकौशलशालिनः ॥ २२ ॥ अन्यदा फलदेवस्तं । हारं सौभाग्यसुंदरं ॥ परिधाय निजे कंठे ।
एकाक्येव सकौतुकः ॥ २३ ॥ निष्क्रांतश्च ततः स्थाना—द्भूमंडलदिदृक्षया ॥ बभ्राम व्योममार्गेण
। ग्रामे ग्रामे पुरे पुरे ॥ २४ ॥ युग्मं ॥ हारानुभावजोदग्र—सौभाग्यगुणयोगतः ॥ सर्वत्र सर्वलो·
कस्य । प्रीतिस्थानमभूदसौ ॥ २५ ॥ यत्र यत्र पुरे ग्रामे । यात्यसौ तत्र तत्र हि ॥ जायते तन्म·
ना लोकः । स्त्रीलोकस्तु विशेषतः ॥ २६ ॥ भ्राम्यन्नेवं महीपीठे । वीक्षमाणो जिनालयान् ॥ पूज·
यन् वंदमानश्च । जिनबिंबानि भावतः ॥ २७ ॥

अन्यदा च जगामैष । पुरं भोगपुराभिधं ॥ तस्मिन्नालोकयामास । सूरिं सूरप्रभाभिधं ॥२८॥
कानने सुंदरामोदे । बहुशिष्यसमन्वितं ॥ आचक्षाणं जिनप्रोक्तं । धर्मं संविग्नपर्षदि ॥ २९ ॥ त्रि·

र्निर्विशेषकं ॥ ततोऽतिभक्तिसंयुक्तः । समायातस्तदंतिकं ॥ वंदित्वा विधिवत्सूरिं । निषण्णः शुद्धभूतले ॥ ३० ॥ ततस्तं सूरिभिः किंचि—त्संभाष्य च यथोचितं ॥ भूयोऽपि च समारब्धा । देशना भवनाशिनी ॥ ३१ ॥ यथा जीवाः प्रबध्यंते । मुच्यंते कर्मभिस्तथा ॥ संक्लिश्यंते यथा चैते । यांति ते नरकं तथा ॥ ३२ ॥ रागद्वेषप्रबद्धानां । विपाकोऽतीवदारुणः ॥ कष्टेन वेद्यते जीवै—र्दुर्गतौ दुष्टकर्मणां ॥ ३३ ॥ गम्यंते कर्मणा येन । नरके तत्र वेदनाः ॥ तादृश्यस्तद्विपाकेन । वेद्यंते पापकर्मभिः ॥ ३४ ॥ छेदनभेदनकुंभी—पाचनबहुशीतवातजनितानि ॥ शाल्मलीवृक्षारोपण—वैतरिणीतारणादीनि ॥ ३५ ॥ तप्तत्रपुपानात्पुन—र्दह्यमानसर्वांगविह्वलाः संतः ॥ असिपत्रवनछायां । गतास्तैरेव तत्र पाट्यंते ॥ ३६ ॥ उत्कृत्योत्कृत्य खंडानि । मांसास्यास्ये तदीयके ॥ प्रचिक्षिपुः प्रजल्पंतो । मांसमासीत्तव प्रियं ॥ ३७ ॥ अंबादिजनितास्तीव्राः । परस्परसमुद्भवाः ॥ क्षेत्रानुभाविताश्चान्या । वेद्यंते तीव्रवेदनाः ॥ ३८ ॥ उक्तं च—अच्छिनिमीलियमित्तं । नत्थि सुहं दुक्खमेव अणुबद्धं ॥ नरए नेरइयाणं । अहोनिसं पच्चमाणाणं ॥ ३९ ॥ इदमाख्याति सर्वज्ञः । सर्वदर्शी जिनोत्तमः ॥ केवलज्ञानसद्दृष्ट्या । लोकालोकं विलोकयन् ॥ ४० ॥ असत्यवादिनो जीवाः । कृत्वो-

त्कोचनबंधने ॥ कूटमानेन जायंते । तिर्यंचस्तीव्रवेदनाः ॥ ४१ ॥ शारीरमानसानेक—दुःखव्रातै-
रुपद्रुताः ॥ परवाह्याः परायत्ताः । प्रायः सीदंति दुःखिताः ॥ ४२ ॥ कशाघातैस्तथा तीव्रै—रंकुशै-
र्वधबंधनैः ॥ शीतवातातपैर्दंशै—र्मशकैश्चापि पीडिताः ॥ ४३ ॥ सर्वलोकेन वाह्यंते । बुभुक्षिनपि-
पासिताः ॥ त्राणकारी न कोऽप्येषां । प्रायशः प्रविलोक्यते ॥ ४४ ॥ इदमाख्याति सर्वज्ञः । सर्व-
जीवदयापरः ॥ सर्वदोषविनिर्मुक्तः । परमात्मा निरंजनः ॥ ४५ ॥ प्रकृत्यैव प्रशांतात्मा । दानदाता
दयापरः ॥ शीलसंयमहीनोऽपि । मानुष्यं लभते नरः ॥ ४६ ॥ अनित्यं मानुषं जन्म । जरामृत्यु-
भयद्रुतं ॥ दारिद्र्योपद्रुतं प्रायः । क्षणध्वंसि रुगाकुलं ॥ ४७ ॥ अष्टोत्तरशतव्याधि—व्रातेन विधु-
रीकृतं ॥ सर्वदाऽप्रियसंयोग—प्रियायोगविसंस्थुलं ॥ ४८ ॥ इदमाख्याति योगीशो । योगिगम्यो
जिनोत्तमः ॥ त्रिकालवेदी भगवान् । देवदेवो जिनेश्वरः ॥ ४९ ॥ सरागसंयमाद्देवा । देशसंयम-
तोऽपि वा ॥ अकामनिर्जरा'देवा । अज्ञानतपसोऽपि वा ॥ ५० ॥ ईर्ष्याविषादसंताप—मानमा-
यातिलोभताः ॥ देवेष्वपि वसंत्येते । दोषास्तेषां कुतः सुखं ॥ ५१ ॥ एवमाह जिनाधीशो । दे-
वदेवो दयानिधिः ॥ क्लिष्टकर्मा भवातीतः । परं पदमुपागतः ॥ ५२ ॥ चतुर्विधेऽपि संसारे । सौख्यं

स्वल्पं शरीरिणां ॥ सकृत्सौख्यानि जायंते । दुःखानि च पदे पदे ॥ ५३ ॥ सिद्धौ च सर्वजीवानां । संपूर्णा सुखसंकथा ॥ निःशेषकर्मविछेदा—त्स च चारित्रयोगतः ॥ ५४ ॥ सर्वोपाधिविमुक्तं च । चारित्रं प्राप्य सुंदरं ॥ क्रमेण केवलज्ञानं । लोकालोकप्रकाशकं ॥ ५५ ॥ शैलेशीं च समासाद्य । समस्तोपरतक्रियं ॥ भवोपग्रहकारि च । हत्वा कर्मचतुष्टयं ॥ ५६ ॥ सर्वद्वंद्वविनिर्मुक्ता । अष्टकर्मविवर्जिताः ॥ भवांभोधिं समुल्लंघ्य । गछंति परमं पदं ॥ ५७ ॥ इदमाख्याति सर्वज्ञः । सनरामरपर्षदि ॥ सुरासुरनराधीश—मौलिमालार्चितक्रमः ॥ ५८ ॥ भवाटव्यामटाट्यंते । बहुदुःखप्रपीमिताः ॥ अधर्मसंबला जीवा । यत्र तत्रैव दुःखिताः ॥ ५९ ॥ तद्भो भव्या भवाटव्यां । परिभ्रमणभीरवः ॥ यदि यूयं तदा लात । धर्मसंबलमुत्तमं ॥ ६० ॥ वंदित्वा च सभा सर्वा । विधाय करकुद्मलं ॥ अवादीच्च गणाधीशं । सत्यमेव त्वयोदितं ॥ ६१ ॥ तथ्यैवैतन्न संदेहो । तथैवैतन्न संशयः ॥ अहो निदर्शितो मार्गः । सिद्धिपुर्यास्त्वया प्रभो ॥ ६२ ॥ श्रमणो ब्राह्मणो वापि । पाखंडी वा गृहाश्रमी ॥ ईदृक्षं धर्ममाख्यातुं । न शक्तः कोऽपि भूतले ॥ ६३ ॥ यथायोगं परिज्ञाय । स्वत एव च योग्यतां ॥ परलोकहितं पथ्यं । ददध्वं धर्मसंबलं ॥ ६४ ॥ व्रतिनः केऽपि संजाताः । श्राव-

का जज्ञिरे परे ॥ प्रत्याख्यानबहिर्भूताः । केचिद्विरतदृष्टयः ॥ ६५ ॥
अत्र च फलदेवेन । सूरयः प्रश्निताः स्वयं ॥ अन्यजन्मकृतं पुण्यं । मम किं कथ्यतां प्रभो
॥ ६६ ॥ मित्रपुत्रकलत्राणि । राजानः सेवकाः श्रियः ॥ वर्तंतेऽनुकूलाः केन । कर्मणेदं निवेद्य-
तां ॥ ६७ ॥ सूरिः प्राहाभवस्त्वं तु । पुरे कुंभपुराभिधे ॥ मालिकः पुष्पकुंभाख्यो । भद्रको मल-
यप्रभुः ॥ ६८ ॥ बंधूनां सर्वपुष्पाणि । फलानि स ददौ सदा ॥ एवं व्यवस्थया कालो । याति ते-
षां परस्परं ॥ ६९ ॥ अन्यदाष्टाह्निकापूजा । प्रारब्धा जिनमंदिरे ॥ पुष्पकुंभः समादाय । फलान्य-
त्र समागतः ॥ ७० ॥ गृहीतानि च सर्वाणि । दत्तमुचितवेतनं ॥ तांबूलादिप्रदानेन । संभूष्य च
विसर्जितः ॥ ७१ ॥ अहो नीतिरहो धर्मो । ह्यहो एकार्थचित्तता ॥ अहो दया अहो दान—महो
चित्तविशालता ॥ ७२ ॥ अन्यत्रापि च दृश्यंते । यात्रा नैवंविधो विधिः ॥ एवं चिंतयतस्तस्य ।
जातं दर्शनकारणं ॥ ७३ ॥ अष्टमेऽह्नि समायाते । भणितास्तेन गोष्ठिकाः ॥ वेतनेन न मे का-
र्यं । पुण्यमेवात्र वेतनं ॥ ७४ ॥ प्रतिपन्नमिदं तेन । समानीय कृतो बलिः ॥ फलान्यनेकभेदानि
। सांडान्याऽर्द्रांतरात्मना ॥ ७५ ॥ कृतार्थमद्य मे जन्म । जीवितं यौवनं तथा ॥ फलान्यपि कृता-

धीनि । यैरेवं विहितो बलिः ॥ ७६ ॥ बद्धं परभवायुष्कं । भोगसारं भवांतरे ॥ ततो मृत्वात्र संजातः । फलसारस्य नंदनः ॥ ७७ ॥ मासांते विहितं नाम । पित्रा स्वप्नानुसारतः ॥ फलदेव इति ख्यातं । महामहपुरस्सरं ॥ ७८ ॥ आकर्ण्येदं स्मृता जातिः । संवेगश्च समागतः ॥ संजातो भव निर्वेदः । शुद्धे धर्मे गतं मनः ॥ ७९ ॥ श्रुत्वेदं फलदेवस्य । फलपूजाफलं महत् ॥ सर्वज्ञफलपूजायां । भूरिलोको ददौ मनः ॥ ८० ॥ अथोक्तं फलदेवेन । भगवन् भवतारक ॥ निर्विण्णोऽहं भवावासाद् । दूरं दुःखनिबंधनात् ॥ ८१ ॥ अतोऽहं स्वकुटुंबस्य । कृत्वा सौस्थ्यं यथोचितं ॥ संसारोत्तारिणीं दीक्षां । गृहीष्ये युष्मदंतिके ॥ ८२ ॥ सूरिभिर्जल्पितं भद्र । मात्र कार्षीर्विलंबनं ॥ स्वामिन्नेवं करिष्येऽह—मेवमुक्त्वा समुत्थितः ॥ ८३ ॥ जगाम निजकस्थाने । रंजितो निजको जनः ॥ ततश्च सर्वबंधूनां । स्वाभिप्रायो निवेदितः ॥ ८४ ॥ धर्मस्थाने निजं द्रव्यं । प्रभूतं विनियोजितं ॥ पुत्रश्च रत्नसुंदर्याः । फलचंद्राभिधानकः ॥ ८५ ॥ संमतेन स्वबंधूनां । स्थापितो निजके पदे ॥ कृतं सौस्थ्यं कुटुंबस्य । यथौचित्यविधानतः ॥ ८६ ॥ संभाष्य क्षामयित्वा च । पौरलोकं यथाक्रमं ॥ इत्याद्यखिलं कृत्वा च । कृत्यं कृत्यविदां वरः ॥ ८७ ॥ नभसैव समायातः । सूरीणां संनिधौ त-

तः ॥ सूत्रोक्तेन विधानेन । दीक्षितः सूरिणाप्यसौ ॥ ८८ ॥ युग्मं ॥ अनुशिष्टश्च गंभीर—वाक्यैः संवेगसुंदरैः ॥ यथा भो भो महासत्व । यावज्जीवमपि त्वया ॥ ८९ ॥ अष्टावीर्यासमित्याद्या । मातर इव मातरः ॥ क्षणमपि न मोक्तव्याः । स्वस्य कल्याणमिछता ॥ ९० ॥ युग्मं ॥ द्रव्याद्यभिग्रहाश्चित्रा । ग्राह्याश्चारित्रपुष्टये ॥ प्राशुकमेषणीयं च । ग्राह्यं भक्तादि सर्वदा ॥ ९१ ॥ उपसर्गाश्च सोढव्या । दिव्याद्या भद्र षोडश ॥ विषह्याश्च सदाकालं । द्वाविंशतिपरीषहाः ॥ ९२ ॥ तपसि द्वादशांशेऽपि । यतितव्यं यथाबलं ॥ उद्यतव्यं च सर्वेषु । वैयावृत्त्यादिकर्मसु ॥ ९३ ॥ किंचेमां मानुषत्वादि—सामग्रीं प्राप्य दुर्लभां ॥ तथा यत्नस्त्वया कार्यो । दुःखोछेदो भवेद्यथा ॥ ९४ ॥ इत्याद्यनेकधाचार्यै—श्चक्रे तस्यानुशासनं ॥ इछाम्यहमनुशास्ति—मित्येवं सोऽप्यभाषत ॥ ९५ ॥ ततस्तेनाप्रमत्तेन । स्वगुरूणां पदांतिके ॥ ग्रहणासेवनाशिक्षा । शिक्षिता शीघ्रमेव हि ॥ ९६ ॥ चिरं तेपे तपश्चित्रं । पालितः संयमस्तथा ॥ आलोचितः प्रतिक्रांतः । संलिख्य च निजां तनुं ॥ ॥ ९७ ॥ पर्यंतेऽनशनं कृत्वा । मृत्वा बाढं समाधिना ॥ अच्युते द्वादशे कल्पे । जातो देवो महर्द्धिकः ॥ ९८ ॥ इत्थं प्रवर्धमानोरु—सत्कल्याणपरंपरां ॥ प्राप्नुवन् क्षीणकर्मांशो । सिद्धोऽसौ पं॰

चमे भवे ॥ ९९ ॥ तदहो फलदेवस्य । फलपूजाफलं महत् ॥ श्रुत्वा जिनेंद्रपूजायां । भो भव्याः कुरुतादरं ॥ ४०० ॥ इति फलपूजाकथानकं समाप्तं ॥

फलपूजाफलं प्रोक्तं । दृष्टांतेन सविस्तरं ॥ सांप्रतं घृतपूजायाः । फलं तेनैव कथ्यते ॥ १ ॥ अस्तीह भारते क्षेत्रे । काशीदेशः सुविश्रुतः ॥ तत्राभूद्धनो नाम । गोकुलिको महर्द्धिकः ॥२॥ प्रभूतानां गवां स्वामी । प्रकृत्यैवातिभद्रकः ॥ दानश्रद्धालुरत्यंतं । धर्मलिप्सुः प्रशांतधीः ॥ ३ ॥ अन्यदा ददृशे तेन । भ्राम्यता मेदिनीतलं ॥ एकत्रोद्वसितप्राये । पुरे जीर्णजिनालयः ॥ ४ ॥ तस्मिंश्च सुंदरं बिंबं । जैनेंद्रं सुतरां महत् ॥ तद् दृष्ट्वा रंजितश्चित्ते । ततश्चैवं व्यचिंतयत् ॥ ५ ॥ अहो देवाधिदेवोऽयं । सुरूपः प्रीतिदायकः ॥ तदहं स्नपयाम्येनं । सद्गोधुरसर्पिषा ॥ ६ ॥ विचिंत्यैवं ततः सर्पि—रानीयातिमनोहरं ॥ स्नापितः श्रीजिनाधीशः । पूजितश्चाक्षतादिभिः ॥ ७ ॥ एवं च प्रत्यहं तस्य । कुर्वतो भक्तिनिर्भरं ॥ कालो भूयाननिक्रांतः । शुभं भावमुपेयुषः ॥ ८ ॥ कालक्रमात्ततो मृत्वा । जातो नंदिपुरे पुरे ॥ जयवर्धननृपस्य । पुत्रो विजयवर्धनः ॥ ९ ॥ कलाभिः स सर्वाभि—र्वर्धमानो दिने दिने ॥ क्रमेण यौवनं प्राप्तः । कंदर्पकुलकेतनं ॥ १० ॥ प-

रिणान्ये च रूपादि—गुणाढ्या राजकन्यकाः ॥ स्थापितश्च निजे राज्ये । पित्रा धर्मं चिकीर्षुणा ॥
॥ ११ ॥ ततश्च स्वप्रतापेन । समाक्रांतमहीतलः ॥ कुर्वन् शेषमहीनाथा—नुत्खातप्रतिरोपितान् ॥
॥ १२ ॥ हस्तिभिर्वाजिभिर्भृत्यैः । पुरैरंतःपुरैस्तथा ॥ कोष्टागारैश्च कोशैश्च । वर्धमानो यथोत्तरं ॥
॥ १३ ॥ स्वकांत्या कामिनीवृंदं । सन्नीत्या निखिलाः प्रजाः ॥ रंजयन् स्नेहतो बंधून् । सज्जनान्
गुणसंपदा ॥ १४ ॥ शौर्येण सर्वशत्रूणां । ददन्नित्यं महाभयं ॥ सौजन्यादिगुणग्रामैः । स्वकीर्तिं
वत वर्धयन् ॥ १५ ॥ दुष्टानां निग्रहं कुर्वन् । शिष्टानां परिपालनं ॥ औचित्येन करं गृह्ण—न्नौचि·
त्येन च दंमयन् ॥ १६ ॥ नातिशीतो न चाप्युष्णो । न मृदुर्न च कर्कशः ॥ न क्रोधी नातिशां·
तश्च । नातिदाता न संचकः ॥ १७ ॥ चिंतानंतरनिःशेष—पूर्यमाणमनोरथः ॥ स्वराज्यं पालया·
मास । राजा विजयवर्धनः ॥ १८ ॥ कुलकं ॥

विस्मारिता सुपुत्रेण । पितुः संबंधिनो गुणाः ॥ फलेन सहकारस्य । पुष्पसंबंधिनो यथा ॥
॥ १९ ॥ त्रिवर्गं सेवमानस्य । परस्परमबाधया ॥ व्रजंति वासरास्तस्य । सुखवृंदमया इव ॥ २० ॥
अन्यदा च शुभे लग्ने । राज्ञी मदनकंदली ॥ दृष्टं शुभग्रहैः सर्वैः । पुत्ररत्नमजीजनत् ॥ २१ ॥

मासांते विहितं नाम । महोत्सवपुरस्सरं ॥ यथार्थं जातसंतोषैः । पुत्रो मदनसुंदरः ॥ २२ ॥ अ-
न्यदा च समायाता । बहुशिष्यसमन्विताः ॥ तपःसंयमसंयुक्ताः । सूरयोऽमरसुंदराः ॥ २३ ॥ स्थि-
ताश्च नंदनोद्याने । भूभागे जंतुवर्जिते ॥ अवग्रहमनुज्ञाप्य । ज्ञानत्रयसमन्विताः ॥ २४ ॥ वंद-
नार्थं समायातो । राजाऽन्येऽपि च नागराः ॥ प्रारब्धा देशना चैवं । सूरिभिः समशालिभिः ॥
॥ २५ ॥ सुखैषिणो जनाः सर्वे । सुखं धर्मनिबंधनं ॥ धर्मः सदागमादेव । ज्ञायते क्रियते तथा
॥ २६ ॥ एष एव हि जीवानां । सुखदाता जिनागमः ॥ हस्तालंबसमो ह्येष । भवकूपे निमज्जतां
॥ २७ ॥ एष एव जगन्नाथो । वत्सलः परमार्थतः ॥ एष एव जगत्त्राण—मेष एव सुबांधवः ॥
॥ २८ ॥ एष एव विपर्त्तै । पततामवलंबनं ॥ एष एव भवाटव्या—मटतां मार्गदर्शकः ॥ २९ ॥
एष एव महावैद्यः । कर्मव्याधेर्निबर्हणः ॥ एष एव परानंद—कारणं परमौषधं ॥ ३० ॥ एष एव
जगद्दीपः । सर्ववस्तुप्रकाशकः ॥ प्रमादराक्षसाचूर्ण—मेष एव विमोचकः ॥ ३१ ॥ एषोऽविरतिजं-
बाल—कल्मषक्षालनक्षमः ॥ एष एव हि योगानां । दुष्टानां विनिवर्तकः ॥ ३२ ॥ शब्दवेधिशरत्रा-
तै—र्जीवानामिह निःकृपं ॥ सततं पीड्यमानाना—मेष एव हि रक्षकः ॥ ३३ ॥ एष एव हि नि-

व्याजं । नरकद्वाररोधकः ॥ एष एव हि तैरश्च—दुःखवह्निघनाघनः ॥ ३४ ॥ एष एव कुमानुष्य—
दुःखविछेदकारणं ॥ एष एव कुदेवत्व—मनःसंतापनाशकः ॥ ३५ ॥ अज्ञानतरुविछेदे । एष एव
कुठारकः ॥ एष एव महानिद्रा—द्रावणः प्रतिबोधकः ॥ ३६ ॥ एष स्वाभाविकानंद—कारणं बत
गीयते ॥ अनंतभवसंवार्धि—मिथ्याबुद्धिविधूनकः ॥ ३७ ॥ एष एव गुरुक्रोध—वह्निविध्यापने ज·
लं ॥ एष एव महामान—पर्वतोद्दलने पविः ॥ ३८ ॥ एष मायामहाव्याघ्री—पातने सरभायते
॥ एष एव महालोभ—नीरधेः शोषणोऽनलः ॥ ३९ ॥ एष हास्यविकारस्य । गाढं प्रशमनक्षमः ॥
एष मोहोदयोत्पन्ना—रतिं निर्नाशयत्यलं ॥ ४० ॥ एष एवारतिग्रस्ते । जनेऽस्मिन्नमृतायते ॥ एष
एव भयोद्भ्रांत—सत्वसंरक्षणक्षमः ॥ ४१ ॥ एष शोकभराक्रांतं । संधीरयति देहिनं ॥ एष एव
जुगुप्सादि—विकारं शमयत्यलं ॥ ४२ ॥ एष कामपिशाचस्य । दृढमुच्चाटने पटुः ॥ एष एव च
मार्तंडो । मिथ्यात्वध्वांतसूदनः ॥ ४३ ॥ एष एव च दानादि—शक्तिसंदोहकारणं ॥ एष एव म·
हावीर्य—योगहेतुरुदाहृतः ॥ ४४ ॥ यस्माद्भागवतं वाक्यं । श्रुतं ज्ञातं परिस्फुटं ॥ अक्षाणां निग्रहं
धत्ते । धत्ते जीवं शिवालये ॥ ४५ ॥ राजाह किमु सर्वेऽपि । न कुर्वंतीह सर्वदा ॥ धर्मं सर्वज्ञनि·

र्दिष्टं । सर्वकल्याणकारणं ॥ ४६ ॥ सूरिराह—

सुखाभिलाषः सुकरो । दुःकरोऽसौ नृपोत्तम ॥ यतो जितेंद्रियग्राम—स्तं साधयति मानवः ॥ ॥ ४७ ॥ अनादिभवकांतारे । प्राप्तानि परमं बलं ॥ दुर्बुद्धिभिर्न शक्यंते । जेतुं तानींद्रियाणि वै ॥ ४८ ॥ ते नैते जंतवो मूढाः । सुखमिच्छंति केवलं ॥ धर्मं पुनः सुदूरेण । त्यजंति सुखकारणं ॥ ॥ ४९ ॥ इंद्रियाणां जयं नृप । कर्तुं नो पारयंत्यमी ॥ धर्मतः प्रपलायंते । ततो जीवाः सुखैषिणः ॥ ५० ॥ नरसुंदरभूपेना—भाणि भगवन्निवेद्यतां ॥ कानि तानींद्रियाणीह । किंस्वरूपाणि वा मुने ॥ ५१ ॥ कथं वा दुर्जयानीति । श्रोतुमिच्छामि तत्वतः ॥ यत्कुतूहलमत्रार्थे । गुरुकं मम वर्तते ॥ ५२ ॥ सूरिः प्राह—स्पर्शनं रसनं घ्राणं । चक्षुः श्रोत्रं च पंचमं ॥ एतानि तानि राजेंद्र । हृषीकाणि प्रचक्षते ॥ ५३ ॥ इष्टैः स्पर्शादिभिस्तोषो । द्वेषवृद्धिस्तथेतरैः ॥ एतत्स्वरूपमेतेषा—मिंद्रियाणां नृपोत्तम ॥ ५४ ॥ दुर्जयाणि तथा कानि । कथ्यमानं तथाधुना ॥ दत्तावधानस्तत्सर्व—मनुश्रुत्यावधारय ॥ ५५ ॥ अनेकभटसंकीर्णे । समरे योधयंति ये ॥ मत्तमातंगसंघात—मेतैस्तेऽपि विनिर्जिताः ॥ ५६ ॥ अंगुल्यग्रे विधायेदं । भुवनं नाटयंति ये ॥ स्वशक्त्या बलगर्विष्ठा—स्ते-

ऽप्यमीभिर्वशीकृताः ॥ ५७ ॥ हिरण्यगर्भवैकुंठ—महेश्वरपुरस्सराः ॥ एतैर्वशीकृताः संत—स्तेऽपि किंकरतां गताः ॥ ५८ ॥ अधीत्य सर्वशास्त्राणि । परमार्थविदो जनाः ॥ एभिर्विधुरिताः संत— श्चेष्टंते बालिशा इव ॥ ५९ ॥ एतानि हि स्ववीर्येण । ससुरासुरमानुषं ॥ वराकमिव मन्यंते । सकलं भुवनत्रयं ॥ ६० ॥ दुर्जयानि ततोऽमूनि । हृषीकाणि नराधिप ॥ एवं सामान्यतः प्रोक्तं । हृषीकगुणवर्णनं ॥ ६१ ॥ तिष्ठंतु तावच्छेषाणि । हृषीकाणि नराधिप ॥ स्पर्शनेंद्रियमेवैकं । समर्थं बत वर्तते ॥ ६२ ॥ यतो न शक्यते लोके—र्जेतुमेकैकमप्यदः ॥ यतो विज्ञातवृत्तांता । इदमूचुर्विचक्षणाः ॥ ६३ ॥ सक्तः शब्दे हरिणः । स्पर्शे नागो रसे च वारिचरः ॥ नेत्रे कृपणपतंगो । भ्रमरो गंधे विनष्टश्च ॥ ६४ ॥ नृपः प्राह—

स्वामिन्निंद्रियजेतारो । नराः किं संति कुत्रचित् ॥ आहोश्विन्नैव विद्यंते । भुवनेऽपि तथाविधाः ॥ ६५ ॥ सूरिराह—राजन्न हि न विद्यंते । केवलं विरला जनाः ॥ ये तेषां विनिहंतार—स्तत्राकर्णय कारणं ॥ ६६ ॥ जघन्यमध्यमोत्कृष्टा—स्तथोत्कृष्टतमा गुणैः ॥ चतुर्विधा भवंतीह । पुरुषा भुवनोदरे ॥ ६७ ॥ तत्रोत्कृष्टतमास्ताव—द्यैरिहेंद्रियपंचकं ॥ अनादिभवसंबंधा—त्पालितं लालि-

तं प्रियं ॥ ६८ ॥ जैनेंद्रागमसंपर्का—द्विज्ञाय बहुदूषणं ॥ ततः संतोषमादाय । महासत्वैर्निराकृतं ॥ ६९ ॥ गृहस्था अपि ते संतो । ज्ञाततत्वा जिनागमे ॥ हृषीकपंचलौल्येन । नाचरंति कुचेष्टितं ॥ ७० ॥ यदा पुनर्विशेषेण । तिष्टत्येष जिनागमः ॥ हृषीकपंचसंबंधं । त्रोटयंति सदाखिलं ॥ ॥ ७१ ॥ यतो दीक्षां समादाय । निर्मलीकृतमानसाः ॥ संतोषभावतो धन्या । जायंतेऽत्यंतनिस्पृहाः ॥ ७२ ॥ ततस्ते भवकांतार—निर्विण्णा वीतकल्मषाः ॥ इंद्रियप्रतिकूलानि । सेवंते वीरमानसाः ॥ ७३ ॥ भूमीशयनलोचादि—कायक्लेशविधानतः ॥ ततः सुखस्पृहां हित्वा । जायंतेऽतिनिराकुलाः ॥ ७४ ॥ ततः सकलकर्मांश—क्लेशविच्छेदभाजनं ॥ भूत्वा ते निर्वृतिं यांति । निर्जितेंद्रियपंचकं ॥ ७५ ॥ तेनोत्कृष्टतमा राज—न्निर्दिष्टास्ते विचक्षणैः ॥ ये चैवमनुतिष्टंति । विरलास्ते जगतत्रये ॥ ७६ ॥ सांप्रतं च तथोत्कृष्ट—नराणां शुद्धचेतसां ॥ स्वरूपं श्रूयतां राजन् । कथ्यमानं मयाधुना ॥ ७७ ॥ उत्कृष्टास्ते नरा ज्ञेया । यैश्च पंचेंद्रियं जितं ॥ अवाप्य मानुषं जन्म । शत्रुबुद्ध्यावधारितं ॥ ७८ ॥ भाविभद्रतया तेषां । परिस्फुरति मानसे ॥ नैवैतत्सुंदरं हंत । पापमिंद्रियपंचकं ॥ ७९ ॥ ततो विज्ञाय ते तेषां । लोकवंचनतां नराः ॥ सर्वत्र चकिता नैव । विश्वसंति कु-

दाचन ॥ ८० ॥ न चानुकूलं चारित्रं । भजंते विजितस्पृहाः ॥ ततस्तज्जनितैर्दोषै—र्न युज्यंते
विचक्षणाः ॥ ८१ ॥ शरीरस्थितिमात्रार्थ—माचरंतोऽपि तत्प्रियं ॥ तत्र गृद्धेरभावेन । भवंति सुख·
भाजनं ॥ ८२ ॥ प्राप्नुवंति यशः शुभ्र—मिह लोकेऽपि ते नराः ॥ स्वर्गापवर्गमार्गस्य । निकटे
तादृशाः सदा ॥ ८३ ॥ गुरवः केवलं तेषां । नाममात्रेण कारणं ॥ मोक्षमार्गे प्रवर्तंते । स्वत एव
हि ते नराः ॥ ८४ ॥ अन्येषामपि कुर्वंति । शुद्धमार्गावतारणं ॥ तद्वाक्यं ये प्रपद्यंते । विज्ञाय गु·
णकारणं ॥ ८५ ॥ ये पुनर्न प्रपद्यंते । तद्वाक्यं बालिशा जनाः ॥ तेषामनादरं कृत्वा । ते तिष्ठंति
निराकुलाः ॥ ८६ ॥ प्रकृत्यैव भवंत्येते । देवाचार्यतपस्विनां ॥ पूजासत्कारकरणे । रक्तचित्ता म-
हाधियः ॥ ८७ ॥ इदमेवमुत्कृष्टानां । साधितं चरितं नृणां ॥ सांप्रतं मध्यबुद्धीनां । कथ्यमानं नि·
शम्यतां ॥ ८८ ॥

मध्यमास्ते नरा ज्ञेया । यैर्हृषीककदंबकं ॥ अवाप्य मानुषं जन्म । मध्यबुद्ध्यावधारितं ॥८९॥
इंद्रियग्रामसंपाद्ये । सुखे ये गृद्धमानसाः ॥ पंडितैरनुशिष्टाश्च । दोलायंते स्वचेतसा ॥ ९० ॥
चिंतयंति निजे चित्ते । ते दोलायतबुद्धयः ॥ विचित्ररूपसंसारे । किमत्र बत कुर्महे ॥ ९१ ॥ लो·

गानेके प्रशंसंति । रमंते सुखनिर्भराः ॥ अन्ये शांतांतरात्मानो । निंदंति विगतस्पृहाः ॥ ७२ ॥
तदत्र कतरो मार्गो । मादृशामिह युज्यते ॥ न लक्ष्यामस्तच्चित्तं । संदेहमवगाहते ॥ ७३ ॥ त-
स्मात्कालविलंबोऽत्र । युक्तोऽस्माकं प्रयोजने ॥ नैवैकपदनिक्षेपो । विधातुमिह बुध्यते ॥ ७४ ॥
मध्यमानां भवेद्बुद्धि—र्यादृशी कर्मपद्धतिः ॥ यस्मादाचक्षते संतो । बुद्धिः कर्मानुसारिणी ॥
॥ ७५ ॥ तत इंद्रियवर्गं ते । मन्यंते सुखहेतुना ॥ अनुकूले च वर्तंते । किंतु नात्यंतलोलुपाः ॥
॥ ७६ ॥ ततो लोकविरुद्धानि । नाचरंति कदाचन ॥ पंचेंद्रियवशं प्राप्ता । नापायान् प्राप्नुवंत्यतः
॥ ७७ ॥ हितेनोक्ताः प्रबुध्यंते । विशेषवचनस्य ते ॥ अदृष्टदोषास्तद्वाक्यं । केवलं नाचरंति ते
॥ ७८ ॥ मैत्रीं बालिशलोकेन । कुर्वंति स्नेहनिर्भरां ॥ लभंते तद्विपाकेन । रौद्रां दुःखपरंपरां ॥
॥ ७९ ॥ अवर्णवादं लोके च । प्राप्नुवंति न संशयः ॥ संसर्गः पापलोकेन । सर्वानर्थपरो यतः
॥ १०० ॥ यदा पुनः प्रपद्यंते । विदुषां वचनानि ते ॥ आचरंति च विज्ञाय । तदीयां हितरूपतां
॥ १ ॥ तदा ते विगताबाधा । भवंति सुखिनो नराः ॥ महापुरुषसंपर्का—ल्लभंते मार्गमुत्तमं ॥२॥
पंडिता इव ते नित्यं । गुरुदेवतपस्विनां ॥ बहुमानपराः संतः । कुर्वंत्यर्चनवंदनं ॥ ३ ॥ तदेवं भ-

णितास्ताव—न्मध्यमानां गुणागुणाः ॥ जघन्यनरसंबंधे । स्वरूपमधुनोच्यते ॥ ४ ॥ जघन्यास्ते नरा ज्ञेया । ये हृषीकवशं गताः ॥ संप्राप्य मानुषं जन्म । करणैर्ये विनिर्जिताः ॥ ५ ॥ परारिरूपतां तेषां । न जानंति यतः स्वयं ॥ परेषामपि रुष्यंति । विदुषां हितभाषिणां ॥ ६ ॥ हृषीकवर्गसंपाद्ये । पामाकंडूयनोपमे ॥ परार्थेऽपि च दुःखेऽपि । सुखक्लेशेऽतिगृद्धयः ॥ ७ ॥ स्वर्गोऽयं परमार्थोऽयं । लब्धोऽयं सुखसागरः ॥ अस्माभिरिति मन्यंते । विपर्यासवशं गताः ॥ ८ ॥ ततो हार्दं तमस्तेषां । प्रतिसर्पति सर्वतः ॥ विवेकशेषकाश्चित्त । वर्धंते रागरश्मयः ॥ ९ ॥ प्रणष्टसत्यसद्भावा । अंधीभूतस्वबुद्धयः ॥ कुर्वतोऽनार्यकार्याणि । वार्यंते केन ते ततः ॥ १० ॥ धर्मलोकविरुद्धानि । निंदितानि पृथग्जनैः ॥ कार्याणि कुर्वतां लोकः । शत्रुभावं प्रपद्यते ॥ ११ ॥ कुलं चंद्रांशुविशदं । ते कुर्वंति मलीमसं ॥ आत्मीयचरितैः पापाः । प्रयांति जनहास्यतां ॥ १२ ॥ अगम्यगमनासक्ता । निर्मर्यादा नराधमाः ॥ अर्कतूलादपि परं । ते जने यांति लाघवं ॥ १३ ॥ दुर्लभा हि मनोऽभीष्टा । विषयाः स्त्र्यादिगोचराः ॥ प्राणिनां हृदि वर्तंते । न लभ्यंते यथेप्सिताः ॥ १४ ॥ तदा ते यानि दुःखानि । याश्च लोके विडंबनाः ॥ प्राप्नुवंति न शक्यंते । ता व्यावर्णयितुं गिरा ॥ १५ ॥

केवलं गदितुं शक्य—मिदमेव समासतः ॥ लज्जंते ते नराः सर्वा । लोके दुःखविडंबनाः ॥ १६ ॥ प्रकृत्यैव भवंत्येते । गुरुदेवतपस्विनां ॥ प्रत्यनीका महापापा । निर्भाग्या गुणदूषकाः ॥ १७ ॥ सन्मार्गपतितं वाक्य—मुपदिष्टं हितैषिणा ॥ केनचिन्न प्रपद्यंते । महामोहेन दूषिताः ॥ १८ ॥ ततश्चेदं मुनेर्वाक्यं । विनिश्चित्य महीभृता ॥ विचिंतितं निजे चित्ते । अहो सद्धर्मदेशकाः ॥ १९ ॥ रंजितो हृदये राजा । सभा संतोषमागता ॥ यथायोगं गुणस्थानं । प्रतिपद्य गृहं गता ॥ २० ॥ उत्तमोत्तमनरैर्ग्राह्यं । नियम्येंद्रियपंचकं ॥ नृजन्म सफलं कार्यं । विजयवर्धन त्वया ॥ २१ ॥

इत्येवं सूरिभिः शिष्टे । धर्मे सर्वज्ञभाषिते ॥ राजाह रंजितश्चांतः । संवेगातिशयं वहन् ॥ ॥ २२ ॥ भगवन्निर्जितास्ताव—देते बाह्या मया द्विषः ॥ आंतरानपि निःशेषान् । जेतुमिच्छामि सांप्रतं ॥ २३ ॥ एते च सर्वदा पूज्य—पादसेवनतत्परैः ॥ शक्यंते हि निराकर्तुं । मादृशैरत्र नान्यथा ॥ २४ ॥ तथाहं निजराज्यस्य । सौस्थ्यं कृत्वा यथोचितं ॥ अथो दीक्षां गृहीष्यामि । पूज्यानामंतिके प्रभो ॥ २५ ॥ मा प्रमादं कृथा भद्र । सर्वथात्र प्रयोजने ॥ एवं सूरिभिरादिष्टे । ततो राजा समुत्थितः ॥ २६ ॥ गतो गेहे ततः प्रोक्तः । स्वाभिप्रायः स्वमंत्रिणां ॥ ततश्च स्थापितो रा-

ज्ये । पुत्रो मदनसुंदरः ॥ २७ ॥ दत्ता शिक्षा ततस्तस्य । मंत्रिणां च यथोचितं ॥ यदन्यदपि क-र्तव्यं । तत्कृतं स्वयमेव हि ॥ २८ ॥ ततोऽसौ नंदनोद्याने । गत्वा सूरिपदांतिके ॥ जग्राह विधि-ना दीक्षां । सर्वकर्मक्षयंकरीं ॥ २९ ॥ शिक्षिता द्विविधा शिक्षा । पठितं च बहु श्रुतं ॥ पालित-श्च चिरं चारुः । संयमस्तपसा सह ॥ ३० ॥ आगमोक्तविधानेन । विधायानशनं ततः ॥ मृत्वा च द्वादशे कल्पे । जातो देवो महर्द्धिकः ॥ ३१ ॥ ततश्च्युत्वा महाराज—वंशे भूत्वा महानृपः ॥ सं-प्राप्य शुद्धचारित्रं । निष्कलंकं प्रपाल्य च ॥ ३२ ॥ आरुह्य क्षपकश्रेण्यां । हत्वा घातिचतुष्टयं ॥ उत्पाद्य केवलज्ञानं । कृत्वा भव्यप्रबोधनं ॥ ३३ ॥ भवोपग्राहिकर्माणि । शुक्लध्यानकृशानुना ॥ निर्दह्य निर्वृतौ प्राप्तो । जातः सिद्धः सुखालयः ॥ ३४ ॥ त्रिभिर्विशेषकं॥ इति घृतपूजाकथानकं.

घृतपूजाफलं प्रोक्तं । स्वर्गमोक्षप्रसाधकं ॥ सांप्रतं जलपूजायाः । फलं शृणुत कथ्यते ॥ १ ॥ बभूव भुवने ख्यातो । ग्रामाकरपुराकुलः ॥ बंगाजनपदस्तत्र । पुरं विश्वपुराभिधं ॥ २ ॥ गुणसारो नृपस्तत्र । प्रजापालो महाबलः ॥ तद्भार्या रूपसौभाग्य—संपन्ना बंधुसुंदरी ॥ ३ ॥ अन्यदा च त-या स्वप्ने । दृष्टा मेघाः समुन्नताः ॥ सर्वतोऽपि जलप्लावैः । प्लावयंतो महीतलं ॥ ४ ॥ ततः प्रोक्त-

स्तया स्वप्नः । समानंदितचित्तया ॥ सादरं नरनाथाय । सुष्टु कोमलया गिरा ॥ ५ ॥ तेनाभाणि प्रिये श्रेष्टः । पुत्रस्तव भविष्यति ॥ सर्वेषामपि लोकानां । मनोवांछितपूरकः ॥ ६ ॥ प्रादुर्भूतस्ततो गर्भ—स्तस्याः कुक्षौ सुखप्रदः ॥ अथ सोवाह तं गर्भं । संपूर्णाखिलदोहदा ॥ ७ ॥ तस्मिन् गर्भस्थिते वृष्टाः । सर्वत्रापि घनं घनाः ॥ पूरिता च जलप्लावैः । सर्वतोऽपि हि मेदिनी ॥ ८ ॥ सर्वेषामपि संजाता । रसानां वृद्धिरुच्चकैः ॥ धान्यानि च समर्घाणि । सर्वदेशेषु जज्ञिरे ॥ ९ ॥ वासरेषु च पूर्णेषु । पुत्रं सासूत सुंदरं ॥ कारितं च ततः पित्रा । वर्धापनकमंगलं ॥ १० ॥ स्वमानुसारतस्तस्य । महामहपुरस्सरं ॥ रससार इति ख्यातं । कृतं नाम यथार्थकं ॥ ११ ॥ अथासौ वर्धते बालः । कलाभिर्वपुषापि च ॥ क्रमेण यौवनं प्राप्तो । धर्मकामार्थसाधकं ॥ १२ ॥ परिणीतास्ततस्तेन । रूपयौवनगर्विताः ॥ विशालकुलसंभूता । अनेके राजकन्यकाः ॥ १३ ॥ पूर्णाशेषमनोवांछ—स्ताभिः सार्धमखंभितं ॥ शब्दादिविषयांस्तुष्टो । भुंक्ते पंचविधानपि ॥ १४ ॥ अथ सोऽद्भुतशौर्येण । चक्रे क्षोभं हृदि द्विषां ॥ चेतांसि चोरयामास । कामिनीनां सुलीलया ॥ १५ ॥ सन्मानेन स्वमंत्रिणां । परां तुष्टिं चकार सः ॥ विदुषां विनयादेव । हृद्यानंदं ददाविति ॥ १६ ॥ इ·

त्यादिभिर्गुणग्रामैः । सर्वलोकातिशायिभिः ॥ शत्रवोऽपि हि तेनोच्चैः । शिरःकंपं विधापिताः ॥१७॥
अन्यदा तत्र वर्षासु । धान्यपूर्णेषु भूतले ॥ उद्गतेषु च नो मेघः । कथंचिदपि वर्षति ॥ १८ ॥
ततः शुष्यंति धान्यानि । वांति वाताः सुदारुणाः ॥ तपत्यर्को धरापीठं । द्वादशार्कसमर्गलं ॥१९॥
जलाशयेषु सर्वेषु । त्रुट्यंति च पयांस्यलं ॥ गोरूपाणि च सीदंति । विना वारि गृहे गृहे ॥२०॥
बुभुक्षाक्रांतदेहानि । म्रियंते तानि कानिचित् ॥ आसते च गृहद्वारे । पतितानि च कानिचित ॥
॥ २१ ॥ सानंदा मानसे जाता । धान्यसंग्रहकारिणः ॥ विषण्णा दुर्गता लोका । जाताश्चिंतातुरा
हृदि ॥ २२ ॥ बहुर्भिक्षाचरो लोको । वर्धते च दिने दिने ॥ श्रीमंतोऽपि हि नेच्छंति । भिक्षां दा-
तुं तदर्थिनां ॥ २३ ॥ त्यागिनोऽपि हि ये लोकाः । सुप्रसिद्धा मनस्विनः ॥ तैरपि चेतसा सार्धं ।
हस्तः संकोचितो दृढं ॥ २४ ॥ मूल्यं चटितुमारब्धं । धान्यानां प्रतिवासरं ॥ तानि दातुं न वांछंति
। धान्यसंग्रहकारिणः ॥ २५ ॥ यथा यथा न तादृक्षा । भिक्षा गेहेषु लभ्यते ॥ तथा तथा मनः-
क्षोभो । जातः पाखंडिनामपि ॥ २६ ॥ एवं हल्लोहले जाते । लोकानां दौःस्थ्यदायिनि ॥ सुभि-
क्षं देशमाश्रित्य । लोकेषु च यियासुषु ॥ २७ ॥

ततश्च नृपतेश्चिंता । जाता संभ्रांतचेतसः ॥ कथं नु मामके देशे । वर्षिष्यति घनाघनः ॥ ॥ २८ ॥ शुष्यंति तावदेतानि । शस्यानीह विना जलं ॥ विना धान्यं न जीवंति । मामकीना इमाः प्रजाः ॥ २९ ॥ विना लोकं न जायंते । ममापि द्रव्यसंपदः ॥ विना द्रव्यमिमे भृत्या । न स्थास्यंति ममांतिके ॥ ३० ॥ विना भृत्यैर्न मे राज्यं । स्थिरं संभाव्यते चिरं ॥ विना राज्यं भविष्यामि । लघूनामप्यहं लघुः ॥ ३१ ॥ एवं विचिंत्य नृपेन । समाहूताः स्वमंत्रिणः ॥ प्रधानपौरलोकाश्च । ततश्चैवं प्रजल्पितं ॥ ३२ ॥ भो भो मे मंत्रिणः प्राज्ञा । भो भो पौराः सुबुद्धयः ॥ दुर्भिक्षं जायते बाढं । कथ्यतां किमु कुर्महे ॥ ३३ ॥ चिंत्यतां कोऽप्युपायोऽत्र । येन मेघः प्रवर्षति ॥ श्रुत्वेदं नृपतेर्वाक्यं । तत्रैवं कैश्चिदूचिरे ॥ ३४ ॥ इज्यंतां विविधा यज्ञाः । पूज्यंतां ब्राह्मणास्तथा ॥ हूयंतां भूरिसर्पींषि । ज्वलज्ज्वालाकुलेऽनले ॥ ३५ ॥ अन्ये पुनरिदं प्राहु—र्वक्रस्थानं गता ग्रहाः ॥ तैश्च विष्कंभितं तोयं । मेघस्तेन न वर्षति ॥ ३६ ॥ ततश्च क्रियतां पूजा । ग्रहाणामत्र सादरं ॥ येन ते प्रीणिताः संत—स्तोयं कुर्वंति मुत्कलं ॥ ३७ ॥ अन्यैरभाणि भो राजन् । संति पाखंडिनोऽत्र ये ॥ ते समाहूय पृच्छ्यंतां । जलविष्कंभकारणं ॥ ३८ ॥ अन्ये प्रोचुः प्रजाभाग्यं ।

यद्यस्तीह तदा ध्रुवं ॥ पतिष्यंत्येव तोयानि । नान्यथेति किमाकुलाः ॥ ३९ ॥ अन्यैः पुनरिदं प्रोक्तं । कूर्चामर्षणपूर्वकं ॥ भो राजन् यद्वयं ब्रूम—स्तदाकर्णय सांप्रतं ॥ ४० ॥ यः कश्चिदत्र सत्पुण्यो । महासत्वो नरोत्तमः ॥ यद्यसौ सत्वमालंब्य । निश्चयं कुरुते नृप ॥ ४१ ॥ जलं वा पातयाम्यद्य । वह्नौ वा प्रविशाम्यहं ॥ यद्येवं कुरुते कोऽपि । तदा वर्षति माधवः ॥ ४२ ॥ श्रुत्वेदं नरनाथेन । मंत्रिलोकप्रजल्पितं ॥ तथैवाकारि यज्ञाद्यं । सर्वं नो पतितं जलं ॥ ४३ ॥ ततो ज्योतिष्ककाः केचि—न्महासत्वाश्च केचन ॥ निश्चयं कर्तुमारब्धाः । स्पर्धमानाः परस्परं ॥ ४४ ॥ तत्र ज्योतिष्ककाः प्राहु—र्यद्यहो पंचमे दिने ॥ पातयामो न तोयानि । मुंचामो खटिकां ततः ॥४५॥ एवं कैश्चिद्दिनं षष्टं । सप्तमं चाष्टमं तथा ॥ प्रतिज्ञातं न चांभांसि । निपतंति कथंचन ॥ ४६ ॥ ततश्च ये महासत्वाः । महासत्यश्च तत्र याः ॥ स्थितास्ते ताश्च निश्चित्य । न च मेघः प्रवर्षति ॥ ४७ ॥ श्रुत्वेदमथ वृत्तांतं । रससारः कुमारकः ॥ समागत्य सभास्थानं । प्रणम्य च नराधिपं ॥ ४८ ॥ एवं ब्रूते यथा देव । मेघं प्रवर्षयाम्यहं ॥ अद्यैव निश्चितं नो चेत् । प्रविशामि हुताशनं ॥ ४९ ॥ युग्मं ॥ आकर्ण्येदं ततो राजा । ब्रूते लोकाः समंत्रिणः ॥ हाहा मा मा महाभागा—

भाणीरेवंविधं वचः ॥ ५० ॥ जीव नंद चिरं कालं । पालयस्व निजाः प्रजाः ॥ भुंक्ष्व त्वं भो म-
हाभोगान् । प्रजाभाग्यैः सुरक्षितः ॥ ५१ ॥

श्रुत्वेदं कुमरः प्राह । राजन् मामा भयं कृथाः ॥ एषोऽहं वर्षयाम्यद्य । मेघं पश्य क्षणांतरं ॥
॥ ५२ ॥ वारंवारं कृतारावं । जनेषु वारयत्स्वपि ॥ दुर्निवार्यां महासत्वः । प्रतिज्ञां कृतवानिमां ॥
॥ ५३ ॥ विशाम्यग्नौ प्रदीप्तेऽहं । यदि नाद्य धराधरं ॥ वर्षयामि यथावांछं । युष्माकं पश्यतामहो ॥
॥ ५४ ॥ यतः—आरंभो चिय न फुरइ । अहव समत्ताण फुरइ आरंभो ॥ आरंभो य समप्पइ ।
अहव समत्ता समप्पंति ॥ ५५ ॥ एवं च निश्चयं कृत्वा । यावदास्ते कुमारकः ॥ तावत्क्षणांतरात्प्रो-
च्चै—रभ्रैराच्छादितं नभः ॥ ५६ ॥ झंपाभिरुच्छिता विद्यु—ज्जजृंभे गर्जिरंजसा ॥ दृश्यंते पंचव-
र्णानि । पुरंदरधनूंषि च ॥ ५७ ॥ अतीवस्थूलधाराभिः । प्रवृत्ता वर्षितुं घनाः ॥ आवारिता दिशः
सर्वा । अभ्रवातैर्विसर्पिभिः ॥ ५८ ॥ केकिनश्च प्रमोदेन । केकायंते दिशोदिशं ॥ पूत्कुर्वंति च
सानंदाः । सर्वतोऽपि कृषीवलाः ॥ ५९ ॥ माविता भूजलप्लावै—र्विसर्पद्भिरितस्ततः ॥ पूरितानि
पयःपूरैः । सरांसि सुमहांत्यपि ॥ ६० ॥ प्रवहंत्यो महारावैः । श्रूयते नैव जल्पितं ॥ पीडयंत्यस्त-

टान्युच्चै—र्वहंते सरितस्तरां ॥ ६१ ॥ स्वस्थीभूतानि चेतांसि । सर्वेषामपि देहिनां ॥ सप्रमोदा विशेषेण । जाता भिक्षाचरा नराः ॥ ६२ ॥ समंताडुच्छ्रितः प्रोच्चै—र्दर्दुराणां महारवः ॥ शब्दमयमिदं सर्वं । कुर्वन्निव महीतलं ॥ ६३ ॥ धान्यानि च समर्घाणि । संजातानि फटित्यपि ॥ जाता च जीवितव्याशा । नृणां दारिद्रिणां दृढं ॥ ६४ ॥ एवं सर्वप्रजानंदे । चिरवृष्ट्या घने स्थिते ॥ स्वस्थीभूते जने सर्वे । सानंदे च धराधिपे ॥ ६५ ॥ निर्व्यूढस्वप्रतिज्ञोऽसौ । रससारकुमारकः ॥ समुत्थाय ततः स्थाना—दायातः पितुरंतिकं ॥ ६६ ॥ ततः प्रणम्य राजानं । तदासन्नं निषण्णवान् ॥ श्लाघितं च जनैः सर्वै—स्तस्य सत्वं मुहुर्मुहुः ॥ ६७ ॥ आस्तां तावन्निजो लोकः । संतो वा गुणरंजिताः ॥ तस्य सत्वं दुराराध्यै—र्दुर्जनैरपि वर्णितं ॥ ६८ ॥ एवं च सर्वदेशेषु । ग्रामे ग्रामे पुरे पुरे ॥ वर्ण्यंते सद्गुणास्तस्य । सर्वलोकैः सविस्मयं ॥ ६९ ॥ तत्रैके तस्य पुण्यानि । वर्णयंति महौजसः ॥ अन्ये पुनर्महासत्व—मन्ये पुनः पराक्रमं ॥ ७० ॥ अन्ये वचनचातुर्य—मन्ये सद्रूपसंपदं ॥ अन्ये सत्वप्रतिष्ठत्व—मौदार्यमपरे तथा ॥ ७१ ॥ अन्ये कलासु कौशल्यं । सौशील्यमपरे पुनः ॥ अन्ये परोपकारित्वं । दाक्षिण्यं त्वपरे जनाः ॥ ७२ ॥ तस्यैवमासमुद्रांतं । कुमारस्य म-

हात्मनः ॥ क्रमेणोल्लसिता कीर्तिः । शंखकुंदेंदुनिर्मला ॥ ७३ ॥ एवं च श्लाघ्यमानोऽसौ । मान्यमानो महाजनैः ॥ वल्लभो नृपतेर्बाढं । भुंक्ते विषयजं सुखं ॥ ७४ ॥ अन्यदा स महीनाथो । गुणसारश्चिरं महीं ॥ पालयित्वा निजे राज्ये । निजं पुत्रं न्यवेशयत् ॥ ७५ ॥ रससारं गुणाधारं । सदाचारं सतां समं ॥ सम्मतं राजलोकानां । सर्वसामंतमंत्रिणां ॥ ७६ ॥ युग्मं ॥ स्वयं पुनर्विनिर्गत्य । पुरादापृच्छ्य पौरवान् ॥ कुलक्रमसमायातं । वनवासमशिश्रियत ॥ ७७ ॥ रससारस्ततो राजा । संजातश्चंडशासनः ॥ सूर्य इव प्रतापेन । समाक्रांतरसातलः ॥ ७८ ॥ अन्यदा च महादेवी । नाम्ना सौभाग्यसुंदरी ॥ सर्वलक्षणसंपूर्णं । पुत्ररत्नमजीजनत् ॥ ७९ ॥ कारितश्च ततः पित्रा । पुत्रजन्ममहोत्सवः ॥ कृतसर्वजनानंदः । पूरितार्थिमनोरथः ॥ ८० ॥ द्वादशाहे च संवृत्ते । महर्ध्योत्सवपूर्वकं ॥ जयसार इति ख्यातं । तस्य नाम प्रतिष्ठितं ॥ ८१ ॥ अथासौ ववृधे बालो । धात्रीपंचकलालितः ॥ शशीव प्रत्यहं लोक—लोचनानंददायकः ॥ ८२ ॥ क्रमेण यौवनस्थेन । तेनोढा राजकन्यका ॥ दत्वा छत्राद्यलंकारान् । पित्रा स युवराट् कृतः ॥ ८३ ॥ अन्यदा बहिरुद्याने । वनसुंदरनामनि ॥ विहरंतः समायाताः । सूरयः श्रुतसुंदराः ॥ ८४ ॥ अवग्रहमनुज्ञाप्य । स्थाने

साधूचिते स्थिताः ॥ निर्गता वंदनाद्यर्थं । नगरान्नागरा जनाः ॥ ८५ ॥
अथैवं हेलया लोकं । निर्गच्छंतं पुराद्बहिः ॥ दृष्ट्वा पप्रच्छ भूपालः । स्वं पुमांसं सकौतुकः ॥
॥ ८६ ॥ स प्राह मयका राजन् । जल्पन्नेवं जनः श्रुतः ॥ यथेह सूरयः केचि—दुद्याने बहिराग·
ताः ॥ ८७ ॥ तेषामेष जनः सर्वो । वंदनार्थं विनिर्गतः ॥ श्रुत्वेदं रससारोऽपि । कृत्वा सामग्रिकां
क्षणात ॥ ८८ ॥ जगाम सिंधुरारूढः । कानने सूरिसन्निधौ ॥ भक्त्याभिवंद्य तं सूरिं । नातिदूरे
निषण्णवान् ॥ ८९ ॥ युग्मं ॥ ततः सदर्थगंभीर—वरवाक्यैः सुकोमलैः ॥ सूरिभिर्भूरिसंवेगैः । प्रा·
रब्धा धर्मदेशना ॥ ९० ॥ तद्यथा—यानपात्रं भवांभोधे—र्दुर्गतिद्वाररोधिका ॥ दया धर्मस्य स·
र्वस्वं । कर्तव्या सर्वदा बुधैः ॥ ९१ ॥ सत्यं हितं प्रियं वाक्यं । वाच्यं सत्वसुखावहं ॥ सर्वदापि प·
रित्याज्यं । चौर्यं दुःखनिबंधनं ॥ ९२ ॥ मातेव सर्वदा दृश्या । धार्मिकेण परांगना ॥ परित्याज्यः
सदा धीरै—र्महारंभपरिग्रहः ॥ ९३ ॥ संसारसौख्यवैमुख्यं । विधेयं सुधियाधिकं ॥ कार्यः सज्ज·
नसंसर्गो । न कार्याऽनार्यसंगतिः ॥ ९४ ॥ इत्याद्यनेकधा धर्म—माचक्षाणं मुनीश्वरं ॥ नत्वा प्र·
स्तावमासाद्य । रससारोऽब्रवीदिदं ॥ ९५ ॥ भगवन् किं मयाकारि । सुकृतं पूर्वजन्मनि ॥ येनेह·

द्धा मम स्फीताः । संजाता राज्यसंपदः ॥ ९६ ॥ सूरिः प्राह महाभाग । कथ्यते शृणु सादरं ॥ इतो भवाच्चतुर्थे त्वं । भवे हर्षपुरे पुरे ॥ ९७ ॥ बभूथ दुर्गता नारी । परकर्मकरी सदा ॥ इतश्च नगरात्तस्मा—दूर्ध्वभूतांतरसंस्थितं ॥ ९८ ॥ आसीज्जनमनोहारि । काननं कुंदसुंदरं ॥ तत्र शुभ्राभ्रसंकाशं । तुंगं जैनेंद्रमंदिरं ॥ ९९ ॥ युग्मं ॥ तस्य मध्ये शिवं शांतं । बिंबं जैनेश्वरं महत् ॥ तत्सुतीर्थमिति ख्यातं । जनवांछितपूरकं ॥ १०० ॥ तत्र चानेकदेशेभ्यः । समायाति बहुर्जनः ॥ स्तोत्रं पूजां बलिं चैव । विदधाति निरंतरं ॥ १ ॥ अथासौ दुर्गता नारी । कानने कुंदसुंदरे ॥ कृता लोकैः प्रपापाली । जनं पाययते पयः ॥ २ ॥

अन्यदा च समायाताः । श्रीमंतो बहवो जनाः ॥ महर्ध्या तैः समारब्धं । स्नात्रं तत्र जिनालये ॥ ३ ॥ सापि तत्र प्रपापाली । गता स्नात्रदिदृक्षया ॥ स्नाप्यमानस्तया दृष्टो । जिनः कुंभैः पयोभृतैः ॥ ४ ॥ ततो हर्षभरापूर्णा । मनस्येवं व्यचिंतयत ॥ अहो धन्या इमे लोकाः । पुण्यवंतः कृतार्थकाः ॥ ५ ॥ श्लाघ्यमेषामिदं जन्म । य एनं परमेश्वरं ॥ कुंकुमोदकसंपूर्णैः । सत्कुंभैः स्नपयंत्यहो ॥ ६ ॥ अहमपुण्याऽधन्यैव । निःपुण्या दुःखदुःखिताः ॥ दुर्गदारिद्र्यसंदग्धा । किं कुर्वे ध-

नवर्जिता ॥ ७ ॥ ममापि वसुधालभ्य—मत्र संपद्यते पयः ॥ न च कुंकुमकर्पूर—श्रीखंडादि धनं
विना ॥ ८ ॥ अतोऽहं केवलेनापि । नीरेण परमेश्वरं ॥ स्नपयामि ममापीह । येन धर्मः प्रजाय-
ते ॥ ९ ॥ विचिंत्यैवं पयःपूर्णं । कुंभमादाय भक्तितः ॥ स्नापयामास तद्बिंबं । रोमांचांचितविग्रहा
॥ १० ॥ ततश्च स्थापयामास । पयःपूर्णं मनोहरं ॥ प्रत्यग्रं मृन्मयं कुंभं । भावसारं तदग्रतः ॥११॥
एवं चानेकधा तत्र । दृष्टं दुर्गतया तया ॥ क्रियमाणं जिनेंद्रस्य । स्नात्रं नानाविधैर्जनैः ॥ १२ ॥
तयापि स्नापितं तत्र । तद्बिंबं भूरिशो जलैः ॥ पूजितं च मुधालभ्यैः । कुसुमैः काननोद्भवैः ॥१३॥
अथो निजायुषः प्रांते । दुर्गता स्त्री मृता सती ॥ तस्मिन्नेव पुरे जाता । सिंहसेनमहीपतेः ॥१४॥
चंद्रश्रीकुक्षिसंभूता । दुहिता कंदकंदली ॥ रूपसौभाग्यसंपन्ना । लावण्यामृतकूपिका ॥ १५ ॥ यु-
ग्मं ॥ अथासौ वर्धते बाला । पुष्णंती सकलाः कलाः ॥ क्रीडाभिश्च ह्यनेकाभिः । क्रीडंती हर्ष-
निर्भरं ॥ १६ ॥ अन्यदा च जगामासौ । सखीवृंदसमन्विता ॥ तत्रैव सर्वतो रम्ये । कानने कुंद-
सुंदरे ॥ १७ ॥ इतश्चेतो भ्रमंती च । नानाक्रीडापरायणा ॥ तमेवालोकयामास । पूर्वदृष्टं जिना-
लयं ॥ १८ ॥ ततस्तत्र प्रविष्टासौ । तद्बिंबं च विलोकितं ॥ वीक्षितं च चिरं कालं । स्निग्धमंथरया

दृशा ॥ १९ ॥ तथासौ चिंतयामास । क मन्ये दृष्टपूर्वकं ॥ जैनचंद्रमिदं गेहं । बिंबं चेदं मनोहरं ॥ २० ॥ काननं च मनोहारि । वृक्षसंदोहसंकुलं ॥ पत्तनं च जनश्चैष । क दृष्टोऽयं नराधिपः ॥ ॥ २१ ॥ एवं विचिंतयंत्याश्च । तस्याः शुद्धिविशेषतः ॥ जातिस्मरणमुत्पन्नं । प्राचीनभवगोचरं ॥ ॥ २२ ॥ तेनालोकि स्ववृत्तांतः । सर्वः पूर्वभवोद्भवः ॥ ततो मूर्छावशादेषा । पपात धरणीतले ॥ ॥ २३ ॥ ततश्चाकुलचित्तेन । सखीलोकेन सत्वरं ॥ वीजिता तालवृंताद्यैः । सिक्ता शीतलवारिणा ॥ २४ ॥ क्षणेन लब्धचैतन्या । स्वस्थीभूता समुत्थिता ॥ वृत्तांतमिममाकर्ण्य । तत्रायातो नरेश्वरः ॥ २५ ॥ ततः पृष्टा नरेंद्रेण । मूर्छाकारणमादरात् ॥ तयापि कथितः सर्व—स्तस्मै पूर्वभवो निजः ॥ २६ ॥ ततश्च विस्मितो राजा । शेषलोकश्च पौरवः ॥ हृष्टः प्रशंसयामास । जिनपूजामहाफलं ॥ ॥ २७ ॥ ततः समग्रसामग्र्या । सर्वैः सगंधवस्तुभिः ॥ महर्ध्या कारितं राज्ञा । स्नात्रं तत्र जिनालये ॥ २८ ॥ ततश्च कुंदकंदल्या । पूजितोऽसौ जिनेश्वरः ॥ कर्पूरकुंकुमोन्मिश्र—सच्चंदनविलेपनैः ॥ २९ ॥ पूजितश्च महामूल्य—वस्त्रपुष्पादिवस्तुभिः ॥ ततः स्तोतुं समारब्धा । संवेगभरनिर्भरा ॥ ३० ॥ तद्यथा—

जय जय जिण तिजगुत्तम । जय जय तेल्लोक्कमंगलपईव ॥ जय जय सुरसयसंथुय । जय जय तेल्लोक्कसिरिनिलय ॥ ३१ ॥ जय जय गुणमणिरोहण । जय जय पणयाण सयलसुहजणय ॥ जय जय तिहुअणबंधव । जय जय पहु तिहुयणाणंद ॥ ३२ ॥ तुह थोविआवि भत्ती । मह्ल्लकल्लाणकारणं होइ ॥ होइ चिय बहुफलयं । थोवंपि सुखेत्तगयबीयं ॥ ३३ ॥ तुह दंसणेण सामिय । मञ्च पणठाइं असुहकम्माइं ॥ किं गरुडदंसणेण । नासंति न विसहरकुलाइं ॥ ३४ ॥ तुह पूयामेत्तेणवि । जीवा पावंति सयलरिद्धीउ ॥ अहवा सुयणंमि कयं । थोवंपि अणंतगुणफलयं ॥ ३५ ॥ दिठे तुमंमि संपइ । मणाउमढ नाह विहलिउ ॥ मोहो किं न विलिज्जंत । जहा हिमाइं रविकरपरद्धाइं ॥ ३६ ॥ जो तुह रूवं सामिय । पेच्छंति सिणिद्धमंथरच्छीहिं ॥ ते पेच्छिज्जंति इह । साणंदं तिहुयणसिरीए ॥ ३७ ॥ पूइज्जसि जेहिं तुमं । सुरहिवरकुसुमगंधमाईहिं ॥ ते सव्वत्थवि जयगुरु—वरपूयाभायणं होंति ॥ ३८ ॥ भत्तिब्भरनिब्भरंगा । नमंति जे तुम्ह पायपउमाइं ॥ ते सयलसुरवरेहिंवि । नाह नमिज्जंति अणवरयं ॥ ३९ ॥ जेएइं थुणंति सामिय । गंभीरपयत्थविरइयज्जणेहिं ॥ ते थुवंति सुरेहिंवि । उत्तमपयसठिया पुरिसा ॥ ४० ॥ ससिसंखछत्त·

सव्हिय—कलसंकुसलंछियाण सुहयाण ॥ वरमंगलनिलयाणं । नमो नमो तुम्न पायाणं ॥ ४१ ॥
सुरनरपहुपणयाणं । सरणागयवज्जपंजरसमाणं ॥ पणयजयमुहयशणं । नमो नमो तुम्न चलणाणं
॥ ४२ ॥ तह पसियसु सामि तुमं । पणईयाण कप्पपायव जिणिंद ॥ आसंसारं जह तुह । करे-
मि पयपूयणं अहयं ॥ ४३ ॥

एवं स्तुत्वा जिनाधीशं । सद्भक्त्या कुंदकंदली ॥ निष्क्रांतातीवसानंदा । जिनमंदिरमध्यतः ॥
॥ ४४ ॥ गता राज्ञः सकाशे सा । निषण्णा च तदंतिके ॥ ततस्तत्र जनैः सर्वैः । कृता पूजा विशे-
षतः ॥ ४५ ॥ एवं तत्र नराधीशः । समं लोकैर्महर्द्धिभिः ॥ कारयित्वा जिनस्नात्रं । निजमंदिरमा-
गतः ॥ ४६ ॥ जिनपूजाफलं तादृ—ग्दृष्ट्वा तत्र जनो बहुः ॥ श्रीमज्जिनेंद्रपूजायां । यत्नं चक्रे वि-
शेषतः ॥ ४७ ॥ अथासौ नरनाथस्य । मंदिरे कुंदकंदली ॥ अमंदानंदसंदोह—मग्ना पूर्णमनोर-
था ॥ ४८ ॥ त्रिसंध्यं पूजयंती च । जैनबिंबानि भावतः ॥ कुर्वंती श्रावकं धर्मं । शृण्वंती च जि-
नागमं ॥ ४९ ॥ दधती वरवात्सल्यं । सदा साधर्मिके जने ॥ धर्मतत्वं च पृच्छंती । गमयामास वा-
सरान् ॥ ५० ॥ निर्विशेषकं ॥ प्राचीनभवसंबंधि—तीव्रदुःखपरंपरां ॥ स्मृत्वा स्मृत्वा ददौ नैव ।

कामभोगेषु सा मनः ॥ ५१ ॥ निर्विण्णा कामभोगाच्च । सुव्रतार्यासमीपके ॥ जग्राह विधिना दी·
क्षां । सर्वकर्मक्षयंकरीं ॥ ५२ ॥ शिक्षिता द्विविधा शिक्षा । पठितं च बहु श्रुतं ॥ प्रतप्तं च तप·
स्तीव्रं । पालितं च व्रतं चिरं ॥ ५३ ॥ विधायाराधनामंते । सिद्धांतोक्तविधानतः ॥ ततो मृत्वा सु·
रो जातः । षष्टे कल्पे महर्द्धिकः ॥ ५४ ॥ भुक्त्वा तत्र सुखं दिव्यं । सागराणि चतुर्दश ॥ तत·
श्च्युत्वेह संजातो । रससारो भवानिति ॥ ५५ ॥ श्रुत्वेमं निजवृत्तांतं । पूर्वजन्मसमुद्भवं ॥ नरेंद्रो
रससारोऽपि । जातो जातिस्मरः क्षणात् ॥ ५६ ॥ संवेगातिशयं बिभ्रन् । ब्रूते सूरिं कृतांजलिः ॥
संसारवासतः स्वामि—न्निर्विण्णो नितरामहं ॥ ५७ ॥ कृत्वा सौस्थ्यं निजे राज्ये । गृहीष्ये युष्मदं·
तिके ॥ संसारोत्तारिणीं दीक्षां । सकलक्लेशनाशिनीं ॥ ५८ ॥ अत्रार्थे माप्रमादीस्त्व—मित्युक्ते
सति सूरिणा ॥ सूरिं प्रणम्य भूपालो । निजमंदिरमागतः ॥ ५९ ॥ समस्तमंत्रिसामंत—संमतेन
सतां मतं ॥ स्वराज्ये स्थापयामास । जयसारं निजांगजं ॥ ६० ॥ यदन्यदपि कर्तव्यं । तदशेषं वि·
धाय सः ॥ श्रुतसुंदरसूरिणा—मंते दीक्षां गृहीतवान् ॥ ६१ ॥ ततस्तेनाचिरादेव । संसारभयभी·
रुणा ॥ गृहीता द्विविधा शिक्षा । ग्रहणासेवनाभिधा ॥ ६२ ॥ षष्टाष्टमार्धमासादि—तपस्तप्तं सुदुः·

करं ॥ द्रव्याद्यभिग्रहैः सार्धं । पालितः संयमश्चिरं ॥ ६३ ॥ एवं द्वादशवर्षाणि । संलेखनाविधानतः ॥ पर्यंतेऽनशनं कृत्वा । समभावसमन्वितः ॥ ६४ ॥ मृत्वा च वैजयंतेऽसौ । संजातोऽनुत्तरः सुरः ॥ ततश्च्युत्वा विदेहेषु । राजा भूत्वा महाबलः ॥ ६५ ॥ लब्ध्वा चारित्रसल्लक्ष्मीं । पालयित्वा च निर्मलां ॥ प्रलीनाशेषकर्मांशो । गतः सिद्धिं महापुरीं ॥ ६६ ॥ इत्यष्टमपूजाफलकथानकं परिसमाप्तं॥ उक्तानि पुष्पाद्यष्टविधपूजाफलसूचकान्यष्टावपि कथानकानि. अथ प्रकारांतरेण पूजामेवाह—

॥ मूलम् ॥—अष्टस्वंगेषु वा पूजा । पुष्पैरष्टभिरर्हतः ॥ विशुद्धप्रणिधानेन । कर्माष्टकक्षयंकरी ॥ १ ॥ अष्टकर्मविनिर्मुक्त—पूज्यसद्गुणसूचिका ॥ अष्टपुष्पी समाख्याता । फलं भावनिबंधनं ॥ २ ॥ एकेनापि हि पुष्पेण । पूजा सर्वविदः कृता ॥ त्रिजगत्यपि तन्नास्ति । वस्तु सद्यन्न यच्छति ॥ ३ ॥ व्याख्या—इति श्लोकत्रयं स्पष्टं, न वरमष्टावंगान्यमूनि—शीर्षं १ उरः २, उदरः ३, पृष्टिः ४ द्वौ बाहू ६ द्वे ऊरुणी ८, एतेष्वष्टस्वंगेषु एकैकपुष्पदानात्पुष्पाष्टकं, अर्हतस्तीर्थकृतो विशुद्धप्रणिधानेन निर्मलांतःकरणेन कर्माष्टकक्षयंकरी, ज्ञानावरणाद्यष्टकर्मोच्छेदकारिणीति. तथाष्टकर्मविनिर्मुक्तपूज्यसद्गुणसूचिकेत्यष्टकर्मविनिर्मुक्तश्चासौ पूज्यश्च तीर्थकृत्तस्य सद्गुणास्तेषां सूचिका प्रदर्शिका,

ष्टपुष्पीति संज्ञया समाख्याता कथिता, फलं कार्यं भावनिबंधनं शुभाध्यवसायनिमित्तं. तथैकेना-
पि हि पुष्पेणेति श्लोकः सुगमः, इति श्लोकत्रयार्थः ॥ अथ विलेपनपूजामाह—

॥ मूलम् ॥—आदाय कुंकुमं रम्यं । कर्पूरोन्मिश्रचंदनं ॥ विलेपनं जिनेंद्रस्य । धन्यैरेव वि-
धीयते ॥ १ ॥ व्याख्या—श्लोकोऽयं सुगमः. अथाभरणपूजाविधित्सया श्लोकत्रयमाह—

॥ मूलम् ॥—नानारत्नसमाकीर्णै—र्हारिहाटकनिर्मितैः ॥ कंठकैः कुंडलैः कांतैः । कंकटैः
कर्णपूरकैः ॥ १ ॥ हारिहारैर्महामूल्यैः । कंकणैर्बीजपूरकैः ॥ सद्रत्नस्वर्णपद्मादि—भूषणैर्भवभेदिनं
॥ २ ॥ शांतं कांतं शिवं सौम्यं । जिनबिंबं यैर्नार्चितं ॥ श्रीणां कर्मकरा मूढा—स्ते नरा मूर्खशे-
खराः ॥ ३ ॥ व्याख्या—नानारत्नसमाकीर्णैरनेकरत्नसंकुलैर्हारिहाटकनिर्मितैः शोभायमानस्वर्ण-
निष्पन्नैः कंठकैः कंठाभरणैः, कंकटैर्मुकुटैः, कर्णपूरकैः कर्णाभरणविशेषैरिति श्लोकार्थः ॥ १ ॥ हा-
रिहारैः शोभायमानमुक्ताफलाद्याभरणविशेषैः कंकणैर्हस्ताभरणैः, बीजपूरकैः सुवर्णादिनिर्मितप्रसि-
द्धफलविशेषैः, सद्रत्नस्वर्णपद्मादिभूषणैः प्रधानरत्नकनककमलाद्यनेकप्रवराभरणैर्भवभेदिनं संसार-
विदारकमिति. ॥ २ ॥ शांतं कांतमित्यादि सुगममिति श्लोकत्रयार्थः. ॥ ३ ॥ अथ वीतरागस्य पु-

ष्पादिपूजाया अनुपयोगित्वमाशंक्य परिहरन् श्लोकत्रयमाह—

॥ मूलम् ॥—यदि ब्रूयान्नरः कोऽपि । पूजया किं प्रयोजनं ॥ वीतरागस्य वाच्योऽसौ । सत्यमेव त्वयोदितं ॥ १ ॥ शीतोष्णकालयोर्यद्व—ज्जनो यत्नेन सेवते ॥ जलानलौ तयोर्नैव । गुणः कोऽपि प्रजायते ॥ २ ॥ तथापीहोपकारोऽस्ति । तत्सेवाकारिणामलं ॥ एवमेव स विज्ञेयो । जिनपूजाविधायिनां ॥ ३ ॥ व्याख्या—यदि ब्रूयाद्यदि वदेन्मनुष्यः कोऽपि कश्चित्पूजया सपर्यया किमिति प्रश्ने प्रयोजनं कार्यं वाच्योऽसौ वक्तव्योऽसौ सत्यमेवावितथमेव त्वया भवतोदितं भणितमिति, एवमाशंक्योत्तरमाह ॥ १ ॥ शीतोष्णकालयोः प्रतीतयोर्यद्वद्येन प्रकारेण जनो लोको यत्नेनादरेण सेवते आश्रयते जलानलौ सलिलज्वलनौ, तयोर्जलानलयोर्नैव गुणो नैवोपकारः कोऽपि कश्चित्प्रजायते भवतीति. ॥ २ ॥ तथापीह तथाप्यत्रोपकारो गुणोऽस्ति विद्यते तत्सेवाकारिणां जलानलसेवाविधायिनां, तत्र जलं सेवमानानां पंकदाहतृष्णापनोदलक्षणो गुणो जायते, अनलसेविनां पुनः सीतापगमादिक इति. एवमेवेहमेव स उपकारः पुण्यबंधलक्षणो विज्ञेयो ज्ञातव्यो जिनपूजाविधायिनां सर्वज्ञसपर्याकारिणामिति. उक्तं च—पूयाए कायवहो । पडिकुठो सो य नेय

पुज्जाणं ॥ उवगारिणित्ति तो सा । परिसुद्धा कहणु होइत्ति ॥ १ ॥ भन्नइ जिणपूयाए । कायवहो जइवि होइ कहिंवि ॥ तहवि हवई परिसुद्धा । गिहीण कूयाहरणजोगा ॥ २ ॥ असयारंभपवत्ता । जं च गिही तेण तेसिं विन्नेया ॥ तिन्निवित्तिफलच्चिय । एसा परिभावणीयमिणं ॥ ३ ॥ उवगारा भावंमिवि । पुज्जाणं पूयगस्स उवगारो ॥ मंताइसरणजलणाइ—सेवणे जह तहेहंपि ॥ ४ ॥ देहाइनिमित्तंपि हु । जे कायवहंमि तह पयट्टंति ॥ जिणपूयाकायवहंमि । तेसि मयवत्तणं मोहो ॥ ५ ॥ इति श्लोकत्रयार्थः. अथ जिनपूजाकरणंप्रत्युपदेशं प्रयच्छन् श्लोकपंचकमाह—

॥ मूलम् ॥—रागद्वेषसमुद्भूत—ग्रंथेरत्यंतदुर्भिदः ॥ यदि वो भेदने वांछा । कुरुध्वं तज्जिनार्चनं ॥ १ ॥ जिनार्चनान्महापुण्यं । महापुण्याच्च संपदः ॥ संपदः शिष्टलोकस्य । स्वर्गमोक्षप्रसाधिकाः ॥ २ ॥ प्राणैः प्रायो गतप्रायैः । शरीरे विशरारुणि ॥ करिकर्णचले वित्ते । चित्ते चिंतासमाकुले ॥ ३ ॥ एतदेव हि साफल्यं । जन्मजीवितयोर्जनाः ॥ यज्जिने क्रियते पूजा । त्रिसंध्यं शुद्धचेतसा ॥ ४ ॥ जिनं पूजयतो यस्य । यांत्यहानि निरंतरं ॥ तस्यैव सफलं वित्तं । स पुमान् स च पंडितः ॥ ५ ॥ व्याख्या—इति श्लोकपंचकं सुगममेव. अथ जिनपूजाप्रणिधानमपि

दर्शयन् श्लोकमेकमाह—

॥ मूलम् ॥—प्रणिधानमपि प्राहु—र्जिनपूजनगोचरं ॥ स्वर्गादिसाधनायालं । दुर्गताया इव स्त्रियः ॥ १ ॥ व्याख्या—प्रणिधानमप्यभिप्रायोऽपि प्राहुर्ब्रुवते जिनपूजनगोचरं तीर्थंकरार्चनविषयं स्वर्गादिसाधनायालं स्वर्गमर्त्यसुखसाधनायालं स्वर्गमर्त्यसुखसाधनाय समर्थं पारंपर्येण सिद्धिशर्मप्रसाधनायाप्यलं भवतीति, दुर्गताया इव दारिद्र्योपद्रुताया इव स्त्रियो नार्या इति श्लोकसमुदायार्थः, भावार्थः कथानकादवसेयस्तच्चेदं—इह हि भक्तिनिर्भरानेकनाकनाकीननिकरानुगम्यमानमार्गोऽमरवरनिर्मितस्फुरदुरुरुचिरुचिरतरचारुचामीकरप्रवरतरवारिरुहनिकरोपरिक्षिप्तप्रशस्तसमस्तस्वस्तिकाद्यतुललक्षणावलिकलितसरलसुकुमालविमलतरचारुचरणकमलयुगलो निजकतनुप्रभवप्रभास्वरप्रभामंडलविदलिताखिलदिक्चक्रवालोज्जृंभमाणतिमिरभवप्राग्भारः सकलत्रैलोक्यप्रभुः सकलसद्गुणरत्नरत्नाकरः श्रीमन्महावीरवर्धमानस्वामी ईक्ष्वाकुकुलनंदनः प्रसिद्धसिद्धार्थपार्थिवपुत्रः पुत्रीयितनिखिलभुवनजनो जनितजनमनश्चमत्कारगुणग्रामो ग्रामाकरपुरपृथ्वीं पृथिवीं विहरन्नन्यदा कदाचित्काकंदीनामिकायां पुरि समाजगाम. तत्र चामरवरविसरविरचितसमवसरणमध्यवर्तिनि भगवति धर्मदेश-

नां विदधति, तथा नानाविधयानवाहनसमारूढप्रौढपत्तिपरिगते गंधसिंधुरमधिष्टिते छत्रछन्ननन्नस्तले मागधोद्गीतगुणगणे भेरीभांकारभरितांबरतले नरपतौ. तथा द्विजवरवैश्यादिके पुरजने, तथा गंधधूपपुष्पपटलप्रभृतिपूजापदार्थव्यग्रकरकिंकरीनिकरपरिगते विविधवसनाभरणरमणीयनरशरीरे नगरनारीनिकरे भगवतो वंदनार्थं व्रजति सत्येकया वृद्धदरिद्रयोषिता जलेंधनाद्यर्थं बहिर्निर्गतया कश्चिन्नरः पृष्टः क्वायं लोक एकमुखस्त्वरितं याति? तेनोक्तं जगदेकबांधवस्य देहिनां जन्मजरामरणरोगशोकदौर्गत्यादिदुःखविदुरस्य श्रीमन्महावीरस्य वंदनपूजनाद्यर्थं. ततस्तच्छ्रवणात्तस्या भगवति भक्तिरभवदचिंतयच्च, यथाहमपि भगवतः पूजार्थं यत्नं करोमि, केवलमहं दुर्गता पुण्यरहिता विविधपूजासामग्रीवर्जितेति. ततोऽरण्यदृष्टानि मुधालभ्यानि सिंदुवारकुसुमानि स्वयमेव गृहीत्वा भक्तिनिर्भरांगी अहो धन्या पुण्या कृतार्था हतलक्षणाहं, सुलब्धं मम जीवितं, मनुष्यजन्मफलं वाहमवाप्तेति भावनया पुलककंटकितकाया प्रमोदजलप्लवप्लावितकपोला भगवंतंप्रति प्रयांती समवसरणकाननयोरंतराल एव वृद्धतया क्षीणायुष्कतया च झगिति मृतिमुपागता. ततः साऽविहितपूजापि पूजाप्रणिधानोल्लसितमानसतया देवत्वमवाप्तवती, ततस्तस्याः कलेवरमवनीपीठलुठितमवलोक्यानुकंपाप·

रीतांतःकरणो लोको मूर्छितेयमिति मन्यमानोंऽजसा सिषेच. ततस्तामपरिस्पंदामवलोक्य लोको भगवंतं पप्रछ, भगवन्नसौ वृद्धा किं मृता वा जीवतीति? भगवांस्तु व्याजहार यथा मृतासौ देवत्वं चावाप्ता. ततः पर्याप्तिभावमुपगत्य प्रयुक्तावधेः पूर्वभवानुभूतमवगम्य मद्वंदनार्थमागतः स चायं मत्पुरोवर्ती देव इति. ततो भगवदभिहितमिदमनुश्रुत्य समस्तः समवसरणधरणीगतो जनः परमविस्मयमगमत. यथाहो पूजाप्रणिधानमात्रेणापि कथममरतामवाप्तासाविति. ततो भगवान् गंभीरां धर्मकथामकथयत्, यथा स्तोकोऽपि शुभाध्यवसायो विशिष्टगुणपात्रविषयो महाफलो भवति. तथा च—

एक्कंपि उदगबिंदु । जह पक्खित्तं महासमुद्दंमि ॥ जाइ अक्खयमेवं । पूयावि हु वीयरागेसु ॥ १ ॥
उत्तमगुणबहुमाणो । पयमुत्तसत्तमज्झयारम्मि ॥ उत्तमधम्मपसिद्धी । पूयाए वीअरागाणं ॥ २ ॥

ततो भगवांस्तत्संबंधिनं भाविव्यतिकरमकथयत्, स दुर्गतयोषाजीवो देवो देवलोकाच्च्युत्वा कनकपुरे नगरे कनकध्वजनामा राजा भविष्यति, स च जन्मांतरोपार्जितपुण्यप्राग्भारवशेन सांसारिकसुखान्यनुभवन्नन्यदा शरत्काले शक्रमहोत्सवप्रदर्शनार्थं निर्गछन्नंतरा सरःपरिसरे दर्दुरं भुजंगेन, भुजंगमं कुररेण, कुररमजगरेण च ग्रस्यमानं दृष्ट्वा संवेगमापन्नो भवनिर्विण्णमनाश्चिंतयिष्यति, यथा-

यं दर्दुरः स्वल्पबलो महाबलेन भुजंगमेन ग्रस्यते. भुजंगमोऽपि तदधिकबलेन कुररेण ग्रस्यते, कुररोऽप्यजगरेण चैवं कृषीवलो बलाधिपेन, बलाधिपोऽप्यमात्येन, ह्यमात्योऽपि राज्ञा, राजापि चक्रवर्तिना, चक्रवर्त्यपि मृत्युना यथाबलं बाध्यते, तदेवमसारोऽयं संसार इति वितर्कयन् संवेगमापन्नः प्राज्यं राज्यं तृणवत्परित्यज्य शब्दादिविषयान् विषविषमान् परिकल्प्य प्रत्येकबुद्धो भविष्यति, स चाद्यदिन एव द्रव्यक्षेत्रकालभावभेदभिन्नानभिग्रहान् गृहीष्यति, दुःकरतरतपोभिर्निष्टप्तसर्वांगो निरतिचारां प्रव्रज्यां चिरकालं परिपाल्य प्रवर्धमानशुभपरिणामोऽयोध्यायां शक्रावतारचैत्योद्याने शुभभूतलेऽनशनं करिष्यति, मूलोन्मूलितघातिकर्मा च समुत्पन्नदिव्यज्ञानः क्षपकश्रेणिमारुह्य निरुद्धयोगत्रिकः शैलेशीं प्रतिपद्य निःशेषिताशेषकर्मांशोऽष्टमे भवे निर्वाणं गमिष्यति, एवं च पूज्यपूजाप्रणिधानमपि महाफलमिति. किंच—

॥ मूलम् ॥—ऐश्वर्येणापि किं तेन । किं प्रभुत्वेन भूयसा ॥ पाण्डित्येनापि किं तेन । जिनो यत्र न पूज्यते ॥ १ ॥ व्याख्या—स्पष्टं. इति धर्मरत्नकरंडके जिनपूजाविषये द्वितीयोऽधिकारः समाप्तः ॥ श्रीरस्तु ॥

अथ गुरुभक्तिरिति तृतीयोऽधिकार आरभ्यते—अस्य चायमभिसंबंधः—अनंतराधिकारे पूजाविधिरुक्तः, तत्र जिनस्य जिनपूजनस्य च स्वरूपं गुरुभक्तिप्रसादत एव ज्ञायते. इत्यतो गुरुभक्तिप्रशंसात्राभिधीयते. इत्यनेन संबंधेनागतोऽयं व्याख्यायते. तत्र गुरुरिति कः शब्दार्थः? उच्यते—गृ निगरणे, इत्यस्य उणादिक उप्रत्ययांतस्य गुरुरिति भवति. गृणाति प्रतिपादयति शिष्येभ्यः शास्त्रार्थमिति गुरुस्तस्य भक्तिः सेवा पर्युपासनेति पर्यायाः. गुरुभक्तिस्तस्याः प्रशंसा श्लाघा, गुरुभक्तिरिहलौकिकपारलौकिकगुणोपवर्णनमित्यर्थः, गुरुभक्तिप्रशंसात्र वर्ण्यत इति संबंधः, तत्रायमादिश्लोकः—

॥ मूलम् ॥—गुरुभक्तिर्भवांभोधे—स्तारिका दुःखवारिका ॥ धन्यानां वर्तते चित्ते । प्रत्यहं नौरिव दृढा ॥ १ ॥ व्याख्या—गुरुभक्तिर्धर्माचार्यबहुमानो भवांभोधेः संसारसमुद्रात्तारिका. तारणकारिका, दुःखवारिका शारीरमानसाशर्मनिषेधिका, धन्यानां धर्मधनलाभवतां वर्तते संतिष्ठते नौरिव बेडेव दृढा बलिष्ठेति श्लोकसमासार्थः. ॥ १ ॥ तत्र गुरुलक्षणमिदं—धर्मज्ञो धर्मकर्ता च । सदा धर्मप्रवर्तकः ॥ सत्वेभ्यो धर्मशास्त्रार्थ—देशको गुरुरुच्यते ॥ १ ॥ अथवा—जो जेणं जंमि

णाणंमि । णवित्ते दंसणे च चरणे वा ॥ सो चेव तस्स भन्नइ । धम्मगुरु धम्मदाणाओ ॥१॥ इति प्रथमश्लोकभावार्थः. अथ गुरुभक्तेः फलमाह—

॥ मूलम् ॥—यत्र शिष्टसमाचारो । यत्र धर्मव्यवस्थितिः ॥ तत्राविगानतो दृष्टं । गुरुतत्त्वं विचक्षणैः ॥ १ ॥ व्याख्या—यत्र कुत्रापि शिष्टजनसमाचारो धार्मिकजनसमाचारो यत्र च धर्मस्य व्यवस्थितिर्व्यवस्था तत्र. विगानं व्यभिचारः, न विगानमविगानं तस्मादविगानतो निश्चयेन दृष्टमुपलब्धं गुरुतत्त्वं धर्माचार्यरहस्यं विचक्षणैर्विद्वद्भिरिति श्लोकार्थः. ॥ १ ॥ अथ गुरुभक्तिफलमेव दृष्टांतेन स्पष्टमाचष्टे—

॥ मूलम् ॥—प्रथमांतिमतीर्थेशै—स्तीर्थकृन्नामकर्मणः ॥ बीजं लब्धमटव्यां य—द्गुरुभक्त्यत्र कारणं ॥ १ ॥ व्याख्या—प्रथमांतिमतीर्थेशैः प्रथमपश्चिमतीर्थनायकैः प्रलब्धं प्राप्तं बीजं कारणं, कस्य ? तीर्थकृन्नामकर्मणः, तीर्थकरत्वं भूयते येन कर्मणा तत्तीर्थकृन्नामकर्म तस्य, कुत्र बीजं लब्धं ? अटव्यां शून्यारण्ये, गुरुभक्तिर्धर्माचार्येऽतिकर्तव्यता, तत्र तीर्थकृन्नामकर्मलाभे कारणं हेतुः. ॥ १ ॥ तथाहि—धनेन वाणिज्यार्थं विनिर्गतेन वर्षाकालव्याहतगमनेनाटव्यां संतिष्टता सीदतां

साधूनां घृतप्रदानेन तीर्थंकरत्वबीजमासादितं. महावीरजीवेनाप्यपरविदेहे ग्रामचिंतकेन सता राजादेशेन काष्ठनिमित्तं कांतारमनुप्रविष्टेन सार्थपरिभ्रष्टा निरसना अटव्यां पर्यटंतः साधवो दृष्टाः, समाहूय भक्तपानेन च प्रतिलाभिताः, स्वस्थावस्थामार्गे चावतारिताः. ततश्च साधूनां तंप्रत्यनुकंपा समजनि, धर्मदेशना कृता, बोधिबीजं च तेन प्राप्तमिति. यदाह—अवरविदेहे गामस्स । चिंतउ रायदारुवणगमणं ॥ साहू भिक्खनिमित्तं । सत्थाहीणे तहिं पासे ॥ १ ॥ दाणं दाउं पंथणयणं । अणुकंपगुरुण कहणसम्मत्तं ॥ सोहम्मे उववन्नो । पलियाउ सुरो महिड्ढीउ ॥२॥ व्यतिरेकमाह—

॥ मूलम् ॥—पापोपहतबुद्धीनां । येषां चेतसि न स्थिता ॥ गुरुभक्तिः कुतस्तेषां । सम्यग्दर्शनमुत्तमं ॥ १ ॥ व्याख्या—पापेन पापाभिसंधिनोपहता दूषिता मतिर्बुद्धिर्येषां ते पापोपहतबुद्धयस्तेषां, येषां केषांचिच्चेतसि मनसि न स्थिता नावस्थानं कृतवती गुरुभक्तिर्धर्माचार्येतिकर्तव्यता, कुतः कस्मान्न कुतोऽपीति, सम्यग्दर्शनं सद्बोधलक्षणमुत्तमं प्रधानं. ॥ १ ॥ ननु सम्यग्दर्शनेन किं कार्यं ? चारित्रधर्म एव श्रेयानिति यो ब्रूयात्तस्य दूषणमाह—

॥ मूलम् ॥—तद्भावादुत्तरो धर्मः । साधुश्रावकलक्षणः ॥ तस्मान्मिथ्यादृशः पापाः । साधु·

निह्नवकारिणः ॥ १ ॥ व्याख्या—तद्भावादर्शनलाभनाभावादुत्तरो देशविरतिसर्वविरतिलक्षणो धर्मो दुर्गतिनिपतज्जंतुजातधरणप्रवणो जीवपरिणामः, यतः—दुर्गतिप्रसृतान् जंतून् । यस्माद्धारयते ततः ॥ धत्ते चैतान् शुभे स्थाने । तस्माद्धर्म इति स्मृतः ॥ १ ॥ साधुश्रावकलक्षणो गृहियतिस्वरूपः. तस्मान्मिथ्यादृशो विपरीतदृष्टयो न संति डुष्षमायां साधव इति वादिनः. यतः—

॥ मूलम् ॥—न विना साधुभिस्तीर्थं । नाऽतीर्थे साधुसंभवः ॥ समं सत्ता तयोर्गीता । सर्वज्ञैः सर्वदर्शिभिः ॥ १ ॥ व्याख्या—न विना न ऋते साधुभिर्मुनिभिस्तीर्थं संसारसागरसंतरणतरंडकल्पं, न च नैवातीर्थे जिनांतरादौ साधुसंभवः साधुसत्ता, सममेककालं सत्ता विद्यमानता तयोः साधुतीर्थयोर्गीता प्रतिपादिता, कैः? सर्वज्ञैः सर्ववस्तुस्तोमविशेषवेदिभिः, सर्वदर्शिभिः समस्तवस्तुसामान्यावलोकिभिः ॥ १ ॥ ननु भवतु शुभकाले सुखमासुखमादावुभयसत्ता, सांप्रतं श्रावकैरेव तीर्थं यातीति यो मन्येत तन्मतं निरस्यन् श्लोकमाह—

॥ मूलम् ॥—अद्यापि दुःखमाकाले । यावद्दुःप्रसहप्रभुः ॥ तावच्चरणसत्तापि । भगवद्वाक्यतः स्थिता ॥ १ ॥ व्याख्या—अद्याप्यधुनापि दुःषमाकाले कालचक्रस्य पंचमेऽरके कियंतंका लं

यावदिति परमार्थः, दुःप्रसहो दुःप्रसहाभिधानः प्रभुः सूरिस्तावदिति तावंतं कालं चरणसत्तापि चारित्रसंभवोऽपि भगवद्वाक्यतः श्रीमन्महावीरवर्धमानस्वामिवचनात्स्थिता प्रतिष्ठिता. ॥ १ ॥ उक्तं च—दुप्पसहंतं चरणं । जं भणियं भगवया इहं तित्थे ॥ आणाजुत्ताण इमं । न होइ अहुणत्ति वा मोहो ॥ १ ॥ परितुलियनियबलाणं । सत्तीए जहागमं जयंताणं ॥ संपुन्नच्चिय किरिया । दुप्पसहंताण साहूणं ॥ २ ॥ एवं च सति—जो भणइ नत्थि धम्मो । न य सामाइयं न चेव वयाइं ॥ सो समणसंघबज्झो । कायव्वो समणसंघेण ॥ ३ ॥ इह च दुःप्रसहसूरिवक्तव्यता एवमागमे श्रूयते; सा च मूलादारभ्य कथ्यते, तद्यथा—बायालवाससहस्सूणि—यत्तिए सेक्ककोडिकोम्मित्ति ॥ गोयमवोच्छो कालो । एत्थ जिणा चक्किजुयलाइं ॥ १ ॥ चउप्पन्नमहापुरिसा । चोत्थे अरयंमि जंति गणनाह ॥ चोत्थारयस्स सेसे । तिवासअद्धनवमाससेसेसु ॥ २ ॥ मम सिद्धिगयस्स पुणो । पालगराया अवंतिनयरीए ॥ होही तं रयणीए । सट्ठि वरिसाइं पुह हवई ॥ ३ ॥ तस्स वुड्ढीए नंदाए । पणपन्नसयं च होइ वासाणं ॥ मरुयाणं अट्ठसयं । तीसच्चिय पूसमित्तस्स ॥ ४ ॥ बलमित्तभाणुमित्ता । सट्ठी होहंति वासरायाणो ॥ नहवाहणो य राया । होही चत्ताउ वासाणं ॥ ५ ॥

तह गद्दहिल्लरज्जं । बावन्नसयं च पंचमासयं ॥ एयाणं अवसाणे । होही य पुणो स गोराया ॥६॥
छव्वाससएहिं । समं पंचपंचमासेहिं ॥ सिद्धिगयस्स उ राया । सगोत्ति नामेण विक्खाउ ॥ ७ ॥
तेरसवाससएहिं । तेवीसइवासवड्ढिमेहिं च ॥ पाडलिपुत्ते राया । कक्की होइत्ति सगरन्नो ॥ ८ ॥
एगुणवीसवरिसाणं । सयगए अठवीसवासाइं ॥ वोलीणं पंच मासा । मम सिद्धिगयस्स गणनाह
॥ ९ ॥ होही चंडालकुले । कक्की रुद्दो य चेत्तमासम्मि ॥ अट्ठमिविठीजाउ । चउम्मुहो बीय-
नामेणं ॥ १० ॥ तम्मि दिणे महुराए । महुसहन्नवणं पडिस्सए तुंगं ॥ कूरस्स तस्स उदए । देव
य साहू निवारेही ॥ ११ ॥ गावीरूवं काउं । अन्नह वच्चाहए स पावोत्ति ॥ सिस्सीहुंति कुलिंगा ।
चोरेहिं पया विलुप्पिहिं ॥ १२ ॥ रायडमरेहिं दलिया । गामा होहिंति नाममेत्तेण ॥ तस्स उ-
दएण नरहं । होही बहुदुक्खपडिपुन्नं ॥ १३ ॥ हिंडंतो दहूणं । पंचवि थूभे उ नंददव्वस्स ॥ जा-
णेत्ता खणिऊणं । थूभे लेहिई तं दव्वं ॥ १४ ॥ पासंडा फेडेही । जंजेवि करेहिं साहु पुण भि-
क्खं ॥ पावो उ भोगवंतो । वारेही देवया तइया ॥ १५ ॥ निमिहिज्जिही पुरं सव्वं । सोअणं ग-
रुयगंगावाहेणं ॥ सत्तरस उ तव दिणा । देवो वासेही निच्चिंडं ॥ १६ ॥ सो धणपरियणसहिउ

। वलासिउ व नंददविणकयनिचउ ॥ बुद्धेही महपावो । पउरं चुज्झिही गंगाए ॥ १७ ॥ पच्चा तेण धणेणं । पुरं समारित्तु त्तुंजिही रज्जं ॥ पाडिवउ आयरिउ । बुद्धेही तब्ब जोगेणं ॥ १८ ॥ नयरे मिम्मायंगी । देवो वरिसिही होइ सुभिक्खं ॥ पम्मिएणवि कुंभेणं । न किणंता तब्ब होहिं- ति ॥ १९ ॥ पुणरवि सो साहूणं । गोवाडनिसेहणं करेऊणं ॥ मग्गिही भिक्खभागं । अइलुद्धो पावपडिबद्धो ॥ २० ॥ आयरिउ पाडिवउ । कप्पववहारधारउ तइया ॥ संघसहिउ महप्पा । स- क्कस्स य देवरन्नस्स ॥ २१ ॥ काउं काउस्सग्गं । अच्छिही ताव जाव सक्कस्स ॥ होही आसणकं- पो । आगंतू सोवहेसी य ॥ २२ ॥ छासीसो वासाणं । महराया होइऊण एवमउ ॥ गच्छेही पु ण नयरं । कक्कीरायत्ति मे कहियं ॥ २३ ॥ सक्केण कक्किपुत्तो । दत्तो अणुसासिऊण जिणधम्मे ॥ ठविउ सो पुण रज्जे । होही जिणसाहुपूयरउ ॥ २४ ॥ सो दत्तो महराया । काही जिणभव- णमंडियं वसुहं ॥ होहिंति अवहिउ । समणा होहिंति सुवइणो ॥ २५ ॥ तइया इंदवयारे । दिट्ठे धम्मस्स गुरुपहावंमि ॥ बहुलोउ जिणभत्तो । कहीहि साहूण पूयाउ ॥ २६ ॥ दत्तसुउ जियसत्तु । होही तस्सवि य मेहघोसोत्ति ॥ जिणपूयणरया लोगा । सक्कवयारेण होहिंति ॥२७॥

अन्नन्नरायवंसा । होहिंति य गोयमा वियाणेहि ॥ जा विमलवाहणो नर—वइत्ति ता रायधम्मोत्ति ॥ २८ ॥ दुप्पसहो जा साहू । होहिंति जुगप्पहाण आयरिया ॥ अज्जसुहम्मपभिई । चउसहिया दोन्नि उ सहस्सा ॥ २९ ॥ वासाण सहस्सेहिं य । एकवीसाइ इह भरहवासे ॥ दसवेयालिया अत्था । दुप्पसहजइंमि नासिही ॥ ३० ॥ उसप्पिणी इमीसे अ । चत्तारि पडिमाई इह भरहे ॥ अंतंमि दूसमाए । संघस्स चउविहस्सावि ॥ ३१ ॥ दुप्पसहो समणाणं । सव्वसिरी साहुणीण पव्वमिया सड्ढो ॥ नाइलनामो फग्गु—सिरी सावयाणं च ॥ ३२ ॥ राया य विमलवाहण । सुहुमो नामेण तस्स य अमच्चो ॥ इय दुसमाए काले । रायामच्चा य पच्छिमया ॥ ३३ ॥ दुप्पसहो फग्गुसिरी । सच्चसिरी नाइलो य राया य ॥ इय दूसमचरिमंते । दोरयणी हुंति उच्चाउ ॥ ३४ ॥ दुप्पसहो फग्गुसिरी । सच्चसिरी नाइलो य राया य ॥ इय दूसमचरिमंते । वीस य वासाउया सव्व ॥ ३५ ॥ छठचउत्थं च तहा । होही उक्कोसगं तवोकम्मं ॥ अणुसठो इंदेणं । काही किल अठमं भत्तं ॥ ३६ ॥ दसवेयालियधारी । पूजिसइ जह य चोदसियपुव्वी ॥ सो पुण सुकुतरागं । पूजिसइ समणसंघेण ॥ ३७ ॥ बारसवरिसे जम्म । अठ य वासाइं होइ परियाउ ॥

कालं काही तइयाउ । छठमभत्तेण दुप्पसहो ॥ ३८ ॥ उववज्जिहि विमाणे । सागरनामंमि सो उ सोहम्मे ॥ तत्तो य चयित्ताणं । सिज्झिही नीरउ नरहे ॥ ३९ ॥ एवं अइक्कमंते । वाससहस्सेहिं एकवीसाए ॥ फिट्टिही लोगधम्मो । अग्गीमग्गो जिणक्काउ ॥ ४० ॥ पूवाए संझाए । वोछेउ होइ चरणधम्मस्स ॥ मझन्ने राईणं । अवरह्ने जायतेयस्स ॥ ४१ ॥ पछिमसंझाए नवे । छेउ कुलधम्मदेसधम्माणं ॥ एसो खलु वोछेउ । दूसमचरिमंमि दिवसंमि ॥ ४२ ॥ तदिमां दुःप्रसहसूरिवक्तव्यतामाकर्ण्य न वक्तव्यं संप्रति चारित्रं नास्तीति, तस्य दुःप्रसह एव व्यवछेद इत्यागमोक्तिरिति. अथैवंविधेऽपि चारित्रप्रतिपादके सर्वजनप्रतीते सिद्धांतवचने यो मन्येत न संति संप्रति साधव इति तंप्रत्यभ्युच्चयमाह—

॥ मूलम् ॥—कृत्यमार्गोपदेष्टारो । यत्र संति न साधवः ॥ न तत्र धर्मनामापि । कुतो धर्मः कुतः क्रिया ॥ १ ॥ व्याख्या—कृत्यमार्गोपदेष्टारः शुभमार्गोपदेशिका यत्रैकांतदुःषमादौ काले न संति न विद्यंते साधवो मुनयः, नामाप्यभिधानमात्रमपि तत्र देशादौ कुतो धर्मस्य? तर्हि कुतो धर्मः? कुतः क्रिया सदनुष्ठानात्मिका? न कुतोऽपि कारणाभावादिति. ॥ १ ॥ साधूनेव स्तुवन्नाह—

॥ मूलम् ॥—क्षमादिब्रह्मपर्यंत—गुणरत्नैरलंकृताः ॥ साधवः कलिकालेऽपि । चलंतः कल्पपादपाः ॥ १ ॥ व्याख्या—कल्पपादपा वर्तंते कल्पोर्वीरुहा वर्तंते साधव इति योगः. कथंभूताः? चलंतश्चंक्रमणशीलाः, क्व? कलिकालेऽपि दुःषमायामपि, कथंभूताः साधवः? क्षमामार्दवार्जवसत्यशौचब्रह्माकिंचन्यतपःसंयमा एव गुणाः, त एव रत्नानि मरकतादीनि, तैरलंकृता विभूषिताः ॥ १ ॥ एवंगुणेष्वपि साधुषु ये मत्सरोपहतबुद्धयो दोषग्राहिणस्तेषां दोषदर्शनायाह—

॥ मूलम् ॥—कल्पपादपतुल्येषु । ये सुसाधुपराङ्मुखाः ॥ आत्मद्रुहो निर्मर्यादा—स्ते नरा नरकोन्मुखाः ॥ १ ॥ व्याख्या—कल्पपादपतुल्येषु कल्पोर्वीरुहसमानेषु साधुषु मुनिषु ये केचन पराङ्मुखा निर्भक्तिका इत्यर्थः, आत्मद्रुह आत्मद्रोहकारिणस्ते निर्मर्यादाः पुरुषा नरकोन्मुखा दुर्गतिसन्मुखा इति. ॥ १ ॥ किमिति साधुपराङ्मुखा एवं निंद्यंत इत्याह—

॥ मूलम् ॥—गौरव्या गुरवो मान्या । धर्ममार्गोपदेशकाः ॥ सेवनीयाः प्रयत्नेन । संसारांबुधिसेतवः ॥ १ ॥ व्याख्या—गौरव्या गौरवार्हा गुरवो धर्माचार्या मान्या बहुमानविषया धर्ममार्गोपदेशका ज्ञानदर्शनचारित्रमोक्षमार्गोपदेष्टारः सेवनीयाः पर्युपासनीया विशेषतः संसारांबुधिसेतवः

संसारसमुद्रसमुत्तरणसेतवो मार्गकल्पाः. ॥ १ ॥ तथा श्रोतव्यं शुद्धसिद्धांतसारं शुद्धसिद्धांतः सारः प्रधानो यत्र तत्, केभ्यः? साधुभ्यस्तदनुसारेणागमानुसारेण विधेया कार्या, का? सदनुष्ठितिः, शोभनानुष्ठानरूपा सुस्थचिंता च साबाधनिराबाधगवेषणा च, सदा सर्वदौदासीन्यभावपरिहारः प्रवर्तननिवर्तनलक्षणस्य वर्जनं परिहारः, तन्निंदाऽश्रवणं तेषां साधूनां निंदा दोषग्रहणलक्षणा तस्या अश्रवणमनाकर्णनं, दोषेषु दोषोद्घट्टनेषु मूकता मूकीभावः कार्यः, दुष्टनिग्रहो दुष्टानां मिथ्यादृष्टीनां यथाशक्त्या निग्रहो निवारणमपकारकरणप्रवृत्तानामिति शेषः, तथा सदाचारप्रमत्तानां ज्ञानादिपंचप्रकाराचारचरणप्रमादिनां मतं संमतमेकांतशिक्षणं रहःशिक्षाप्रदानलक्षणं, यथान्योऽपि मिथ्यादृष्ट्यादिर्न जानाति न वेत्ति यदनेनेदं कुकर्म सेवितमिति. तथा हितं मिताक्षरैस्तथा तेन प्रकारेण हितान्यागामिनि काले पथ्यानि तानि परिमितानि वर्णरूपाणि तैः. अत्र श्रोतव्यं शुद्धसिद्धांतसारमार्हतं वच इत्युपदिष्टं, तत्र ये केचन भावसारं सार्वज्ञं वचः शृण्वंति तेषां तावदैहिकामुष्मिकसकलकल्याणपरंपरा भवत्येव, भावविकलानामपि केषांचिद्दैवयोगेन श्रवणपथमुपगतं सत् जैनेंद्रं वचः सकलमपि समीहितं साधयति, यथा रौहिणेयकचौरस्य, तत्कथानकं चात्र—अस्तीह

सर्वतो रम्यं । पुरं राजगृहाभिधं ॥ स्वर्गखंममिवोत्तुंग—देववेश्मसमाकुलं ॥ १ ॥ आसीत्तत्र श्रि-
यां धाम । श्रेणिको नाम भूपतिः ॥ बभूव तस्य सद्बुद्धिः । सुप्रसिद्धोऽभयाभिधः ॥ २ ॥ पुत्रो
मंत्री च निःशेष—गुणसंदोहमंदिरं ॥ तथा तत्रैव सन्नैलो । वैभारगिरिनामकः ॥ ३ ॥ युग्मं ॥
नानावृक्षसमाकीर्णो । नानागह्वरसंकुलः ॥ प्रोत्तुंगैः शृंगसंदोहैः । संरुद्धगगनांतरः ॥ ४ ॥ तत्रा-
नेकगुहाकीर्णे । झरन्निर्झरसंकुले ॥ बभूवाशेषसत्त्वानां । सदा संतापकारकः ॥ ५ ॥ नानावेषधरो
धीरो । धर्मवार्ताबहिःकृतः ॥ वसत्यलक्षितो लोकै—स्तस्करो रौहिणेयकः ॥ ६ ॥ युग्मं ॥ माया
माता जनी यस्य । मृषा हृदयवासिनी ॥ अदत्तग्रहणं मूल—नीवी नित्यं तदापणे ॥ ७ ॥ अभ-
क्ष्यं विद्यते नास्य । नापेयं किंचिदप्यहो ॥ अगम्यं विद्यते नैव । सर्वाशी सर्वभूषकः ॥ ८ ॥ वा-
सरे नगरस्यांत—र्बद्धपट्टपदद्वयः ॥ शनैः शनैश्चरत्येष । खंजन् क्षीणस्वरं लपन् ॥ ९ ॥ यष्ट्यव-
ष्टंभतो धूर्तो । दुःखंदुःखेन गच्छति ॥ कासन्ननारतं रीणः । कष्टंकष्टेन जल्पति ॥ १० ॥ चालस्थ-
जीर्णपट्टेन । स्थगितैकविलोचनः ॥ बभ्राम हंडिकाहस्तो । गृहदर्शनकाम्यया ॥ ११ ॥ सधनं नि-
र्धनं चेद—मिदं पुंभिर्विवर्जितं ॥ इत्यादि सकलं ज्ञात्वा । निश्चक्राम ततः पुरात् ॥ १२ ॥ कुभो-

जनं परित्यज्य । हित्वा दूरे च हंभिकां ॥ सुभोजनं समानीय । बुभुजेऽसौ यथेच्छया ॥ १३ ॥ श्रा-
लक्षितश्च लोकेन । गत्वा वैभारपर्वते ॥ तावदास्ते निलीनोऽसौ । यावदस्तं गतो रविः ॥ १४ ॥
ततश्च पर्वतादेष । उत्ततार शनैः शनैः ॥ दत्वा समंततो दृष्टिं । ततो निःशंकमानसः ॥ १५ ॥
वीरवेषं विधायासौ । लोकमोषणवांछया ॥ नक्तं सुप्तेषु लोकेषु । सालमुल्लंघ्य लीलया ॥ १६ ॥
प्रविश्य नगरं तूर्णं । मुषित्वा चिह्नितं गृहं ॥ निर्जगाम तथैवासौ । तस्करो रौहिणेयकः ॥ १७ ॥
तिभिर्विशेषकं ॥

एवं दिने दिने तेन । कुर्वता निर्धनीकृतः ॥ राजगृहजनः सर्वो । राज्ञोंतिकमुपागतः ॥१८॥
विज्ञप्तो नृपतिस्तेन । देव दर्शय सांप्रतं ॥ पानीयस्थानमस्माकं । वस्तुमत्र न शक्यते ॥ १९ ॥
युग्मं ॥ राज्ञोक्तं केन कार्येण । कथ्यतां स्वप्रयोजनं ॥ जनेनोक्तं महाराज । सावधानैर्निशम्यतां
॥ २० ॥ युष्मासु विद्यमानेषु । विद्यमानेषु मंत्रिषु ॥ केनापीदं पुरं राज—न्ननाथमिव मुष्यते ॥
॥ २१ ॥ ततः संजातखेदेन । भूमिपालेन भाषितं ॥ कथ्यतां किं गतः क्वापि । भो लोका दंड-
पाशिकः ॥ २२ ॥ श्रुत्वेदं कोट्टपालेन । विधाय करकुड्मलं ॥ जल्पितमेष देवाह—मादेशो मम

दीयतां ॥ २३ ॥ भणितं भूमिनाथेन । मूढ किं न श्रुतं त्वया ॥ यदुक्तं पौरलोकेन । विरागवि
धुरं वचः ॥ २४ ॥ तस्करं वा लभस्वाशु । लोकानां देहि वा धनं ॥ न लभ्यते मुधा मूढ । त्वि·
दमारक्षिकं पदं ॥ २५ ॥ कृता गवेषणा तेन । बहिरंतश्च सर्वतः ॥ न लब्धस्तस्करः कापि । ततो
राज्ञे निवेदितं ॥ २६ ॥ न दृष्टस्तस्करो देव । न धनं मम विद्यते ॥ यादृशं सर्वलोकानां । दी·
यते प्रभुवाक्यतः ॥ २७ ॥ एते वयमिमे प्राणा । गृहसारोऽपि तावकः ॥ कुरु यद्रोचते तुभ्यं ।
किमन्यैर्बहुजल्पितैः ॥ २८ ॥ ततो राज्ञा समाहूतो । मंत्री मंत्रिपुरस्सरः ॥ नाम्नाभयकुमारोऽथ ।
साक्षेपं च प्रभाषितः ॥ २९ ॥ वत्स पंचाहमध्ये त्वं । तस्करं प्रकटीकुरु ॥ नो चेत्तस्करदंडस्ते ।
पतिता नास्ति संशयः ॥ ३० ॥ यदादिशति तातो मे । तत्करोमि न संशयः ॥ तिष्ठत सुस्थिता
यूयं । भारोऽयं मयि संभृतः ॥ ३१ ॥ ततस्त्रिकचतुष्केषु । शून्यागारगृहेषु च ॥ वेश्यागृहेषु सर्वेषु
। ध्वजिनामापणेषु च ॥ ३२ ॥ नदीकूपतडागेषु । देवतायतनेषु च ॥ निरूपितो न च दृष्टो । गू·
ढचारी स तस्करः ॥ ३३ ॥ गतान्यहानि चत्वारि । पंचमे च समागते ॥ यामिन्याश्चरमे यामे ।
ह्यभयेन विचिंतितं ॥ ३४ ॥ हुं विज्ञातो मया नैष । द्वारचारी मलिम्लुचः ॥ तदस्य ग्रहणे कोऽ·

प्यु—पायोऽन्यश्च विचिंत्यते ॥ ३५ ॥ शालोपरेण कोऽप्येष । संचरति न संशयः ॥ तस्माद्वाग्ं त्रिशालेन । मालयामि पदातिना ॥ ३६ ॥ इदं विचिंत्य विज्ञप्त—स्तेन राजा रहः स्थितः ॥ पादातं मदधस्तात । रात्रिमेकां विधीयतां ॥ ३७ ॥ प्रतिपन्नं नरेंद्रेण । वत्स किं याचितं त्वया ॥ त्वदाधीनं हि मे राज्यं । प्राणा अपि च तावकाः ॥ ३८ ॥ ततोऽभयकुमारेण । पादातेन समंततः ॥ प्राकारो मालितः सर्वः । सावधानेन सर्पता ॥ ३९ ॥

इतश्च नगरासन्ने । ग्रामे च रौहिणीयकः ॥ गतो बंधूपरोधेन । स्थितश्च प्रहरत्रयं ॥ ४० ॥ वलितः सत्वरैः पादैः । प्राप्तो राजगृहे पुरे ॥ एकतो धर्ममाचष्टे । महावीरो जिनेश्वरः ॥ ४१ ॥ अन्यतः पुरलोकेभ्यो । भयं तस्य विवर्धते ॥ तदिदं हंत संजात—मितो व्याघ्र इतस्तटी ॥ ४२ ॥ कर्णयोरंगुलीर्दत्वा । वेगेन प्रपलायितः ॥ विद्धो सव्येतरे पादे । शूलया धूलिछन्नया ॥ ४३ ॥ ततो गंतुमशक्तेन । भीतभीतेन तेन सा ॥ शूला दक्षिणहस्तेन । शीघ्रमेव समुध्धृता ॥ ४४ ॥ इतश्च लोकनाथेन । वदता देवलक्षणं ॥ न स्पृशंति भुवं देवा । निर्निमेषनिरीक्षिणः ॥ ४५ ॥ इत्यादि गदितं वाक्यं । प्रविष्टं तस्य कर्णयोः ॥ भूयोऽपि चांगुलीर्दत्वा । कर्णयोः स पलायितः ॥

॥ ४६ ॥ वैभारपर्वते गत्वा । भुक्त्वा च वरभोजनं ॥ पीत्वा च वरवारीणि । निलीनो निभृतं स्थि-
तः ॥ ४७ ॥ दिनं गतं निशा जाता । तमःस्तोमो विजृंभितः ॥ दृश्यं न दृश्यते वस्तु । लोकेन
पुरतः स्थितं ॥ ४८ ॥ घूत्कृतं घूकसार्थेन । शिवाभिश्च ववासिरे ॥ स्फीतफेत्कृतशब्देन । जनसं-
त्रासकारिणा ॥ ४९ ॥ इतश्च मंत्रिणा प्रोक्तः । पुररक्षाविधायकः ॥ द्वाररक्षाद्य कर्तव्या । प्रतोली-
नां प्रदानतः ॥ ५० ॥ प्रतिपन्नमिदं तेन । क्रियया च तथा कृतं ॥ शालोऽपि मालितः सर्वो । नि-
रंतरं पदातिना ॥ ५१ ॥ पर्वतात्तूर्णमुत्तीर्ण—स्तस्करो रौहिणीयकः ॥ वीरवेषधरो वीरः । संप्राप्तः
शालसन्निधौ ॥ ५२ ॥ अज्ञातपुरवृत्तांतः । करणाभ्यासयोगतः ॥ शालमुल्लंघयन् बद्धः । शालस्थ-
सुभटैर्दृढं ॥ ५३ ॥ ततोऽभयकुमारस्य । शीघ्रं नीत्वा स ढौकितः ॥ तेनापि यंत्रितं कृत्वा । सुप्रय-
त्नेन धारितः ॥ ५४ ॥ क्षपाक्षये दिनं जात—मुदितोऽरुणसारथिः ॥ स्वकर्मधर्मसंयुक्ता । जज्ञिरे
निखिला जनाः ॥ ५५ ॥ कृतप्रभातकर्तव्यः । श्रेणिको मगधाधिपः ॥ सभासिंहासनासीनो । लो-
केन परिवारितः ॥ ५६ ॥ यावदास्ते क्षणं ताव—दभयोऽपि समागतः ॥ रौहिणीयकनामानं । गृ-
हीत्वा तस्करं तकं ॥ ५७ ॥ युग्मं ॥ वयं निराकुला जाता—स्तात तीर्णभया यतः ॥ प्रभूणां वच-

नं कृत्वा । सेवकाः शेरते सुखं ॥ ५८ ॥ कृतालीकप्रकोपेन । श्रेणिकेन प्रजल्पितं ॥ सुबुद्धिरपि वत्स त्वं । निर्बुद्धिरिव लक्ष्यसे ॥ ५९ ॥ यदस्य नररत्नस्य । बंधायोग्यस्य बंधनं ॥ तद्दुनोति मनो वत्स । मामकीनमनारतं ॥ ६० ॥ अनालोचितकारी हि । नरो नैव प्रशस्यते ॥ ततो विबंधनं कृत्वा । विमुंचैनं ममाग्रतः ॥ ६१ ॥ गतोऽसौ श्रेणिकेनापि । गाढं सावेशचेतसा ॥ चिंतितं यद्ययं नाम । रौहिणीयकसंज्ञकः ॥ ६२ ॥ सहते तदा करोम्यस्य । तीव्रदंडेन शिक्षणं ॥ यथान्योऽपि बिभेत्युच्चैः । कुर्वाणः कर्म कुत्सितं ॥ ६३ ॥ अन्नयोऽपि समायातः । कृत्वादिष्टं महीभुजः ॥ दत्तं तस्मै सुतुष्टेन । स्वांगलग्नं महीभृता ॥ ६४ ॥ वस्त्रादि प्रीतप्रीतेन । तेनापीदं प्रतीच्छितं ॥ तांबूलं च स्वहस्तेन । भ्वासनं चासनाय च ॥ ६५ ॥ ततः संजातशंकेन । तस्करेण विचिंतितं ॥ आश्चर्यमिदं भाति य—ददृष्टे कुरुते नृपः ॥ ६६ ॥ न कृतोऽवसरः कोऽपि । न चास्योपकृतं मया ॥ वैवाहिको न संबंधः । स्वाजन्यं न च तादृशं ॥ ६७ ॥ आदरश्च महानेष । क्रियते मे महीभुजा ॥ महच्छंकापदं चेदं । विपाकोऽस्य न सुंदरः ॥ ६८ ॥ मामयं न विजानाति । नाम च प्रकटं मम ॥ तदयं जीवनोपायो । यत्स्वं नाम न कथ्यते ॥ ६९ ॥ प्रणम्य भणितो राजा । तस्करेण

ससंभ्रमं ॥ प्रसादः क्रियते कस्य । स्वामिना वेद्यतां मम ॥ ७० ॥ राजाह रौहिणीयस्य । तवायं वीरकर्मणः ॥ स प्राहालं प्रसादेन । मुक्त्वा वस्त्रादिकं ततः ॥ ७१ ॥ तांबूलं च परित्यज्य । निषणः शुष्कभूतले ॥ विषण्णवदनो दीन । उवाचेदं नृपं वचः ॥ ७२ ॥ विधातुर्विस्मृतो येन । न कृतं मे स्तनद्वयं ॥ परनामोपजीवी यो । रामा सा न पुमानसौ ॥ ७३ ॥ वरं मृतो वरं दग्धो । मा संजातो वरं नरः ॥ परस्य नाम विक्रीय । प्रसादं यः प्रतीच्छति ॥ ७४ ॥ धान्यपूराभिधे ग्रामे । शिवशक्तिः कुटुंबिकः ॥ श्यामा भार्या तयोर्जातो । दुर्गशक्तिरहं सुतः ॥ ७५ ॥ तस्मै यद्देहि तद्देहि । नाहं हि रौहिणीयकः ॥ श्रुत्वेदं भूभुजा मुक्तः । स्वीकृतो दंभपाशिना ॥ ७६ ॥ आकारितो नरेंद्रेण । मंत्री मंत्रिपुरस्सरः ॥ अभयो भणितश्चेदं । नामाप्येष न मन्यते ॥ ७७ ॥ अप्रतिपन्ननामा च । कथं कष्टेन मार्यते ॥ तथा कुरु यथा नाम । स्वयं स प्रतिपद्यते ॥ ७८ ॥ ततो निर्व्याकुला यूयं । तीर्णभाराः समंततः ॥ वयमेव करिष्यामो । यथा युक्तमतः परं ॥ ७९ ॥ अभयेनापि सस्नेहं । राजाध्यक्षं स जल्पितः ॥ प्रीतिवृद्धिकृते भद्र । भोक्तव्यं मद्गृहे त्वया ॥ ८० ॥ ददतां वर्धते प्रीतिः । समये प्रतिगृह्णतां ॥ गुह्यं कथयतां चैव । समये प्रतिशृण्वतां ॥ ८१ ॥ भुंजतां

मित्रगेहेषु । प्रस्तावे च प्रतीछतां ॥ इत्येवं वर्धते प्रीतिः । प्राणिनां जववासिनां ॥ ७२ ॥ युग्मं ॥
चौरेण चिंतितं सोऽय—मंतिकस्थो ममांतकः ॥ यझोपितं मया नाम । पृछतोऽपि महीपतेः ॥७३॥
तेनाहमर्पितो राज्ञा । बुद्धिगेहस्य मंत्रिणः ॥ येन केन प्रकारेण । नामविज्ञानहेतवे ॥ ७४ ॥
जवत्वात्मा न मोक्तव्यः । खेदोऽपि च न संगतः ॥ सोढव्यं पतितं सर्वं । धीरेणोन्नतचेतसा ॥७५॥
विधिरेष करोत्येवं । नानाकारा विमंबनाः ॥ स्वयं कृतानि कर्माणि । जुज्यंते स्वत एव हि ॥७६॥
जुज्यते यद्विधिर्दत्ते । विधिदत्तं च पीयते ॥ गम्यते नयते यत्र । विधिदत्ते च सुप्यते ॥ ७७ ॥
गम्यते किं विचारेण । नान्यथा बत मुच्यते ॥ विचिंत्यैवं ततस्तेन । प्रपन्नं मंत्रिणो वचः ॥७८॥
ततोऽजयकुमारेणा—नीतः प्रीतिपुरस्सरं ॥ स्वगृहे दापितं तस्य । विशिष्टं बृहदासनं ॥ ७९ ॥
केनोपायेन हंतायं । निजं नाम वदिष्यति ॥ हुं ज्ञातं मद्यपानेन । तत्र यत्नं प्रकुर्महे ॥ ८१ ॥
मद्यापणात्ततो मद्यं । हृद्यं जनमनोहरं ॥ आनीय च विधायोच्चै—र्गोष्टीबंधं समंततः ॥ ८२ ॥
जणितोऽजयकुमारेण । चारणश्चतुराननः ॥ त्वया गीते समारब्धे । स्तोतव्यो रौहिणीयकः ॥८३॥
कृते तथैव तेनापि । चिंतयामास तस्करः ॥ सोऽयं मन्नामविज्ञान—हेतवे पाशकः कृतः ॥ ८४ ॥

तथा मद्यं पिबत्येष । यथा नो जायते मदः ॥ न च ब्रूते विरूपाणि । चेतना नैव मुह्यते ॥७५॥ अ-
पीयमानेषु मद्येषु । दूहकैः सह सुंदरैः ॥ नृत्यत्सु मदमत्तेषु । नरेषु रौहिणीयकः ॥ ७६ ॥ अ-
लीककोपमाधाय । चौरो वदति चारणं ॥ रे चारण दुराचार । कोऽयं भो रौहिणीयकः ॥ ७७ ॥
का माता कः पिता तस्य । मूर्खस्त्वं मूढ लज्यसे ॥ नानृतं गायनं कार्यं । याहि याहि ममाग्रतः ॥
॥ ७८ ॥ शिवशक्तिसुतं शांतं । श्यामलाकुक्षिसंभवं ॥ दुर्गशक्तिं महाशक्तिं । गीतयोग्यं न गाय-
से ॥ ७९ ॥ ततश्चूर्णेन सन्मिश्रं । पायितो मंत्रिणा सुरां ॥ तया निर्नष्टचेष्टोऽसौ । पपात भुवि
चौर्यकृत् ॥ १०० ॥ न वक्ति श्वसिति नापि । न पश्यति न जिघ्रति ॥ निषिद्धेंद्रियसंचारो । जा-
तो योगीव निश्चलः ॥ १ ॥ तथाविधं तकं दृष्ट्वा । मंत्रिणा निजमंदिरं ॥ उपरिष्टाच्च विमानस्य ।
सदृशं कारितं द्रुतं ॥ २ ॥ पंचवर्णमहामूल्य—वस्त्रस्यूतवितानकैः ॥ यन्मनांसि हरत्येव । यथा-
स्थानं नियोजितैः ॥ ३ ॥ मुक्ताहारार्धहारैश्च । चतुर्दिक्षु विलंबितैः ॥ हारिहीरकजालैश्च । मध्यभा-
गे च मंडितं ॥ ४ ॥ नानापुष्पोपहारेण । सर्वतोऽपि विराजितं ॥ कर्पूरागुरुसन्मिश्र—धूपगंधस-
मुध्धुरं ॥ ५ ॥ वरकस्तूरिकालिप्त—भित्तिस्थभ्रमराकुलं ॥ सारस्वस्तिकमालालि—मीलितं रत्नशा-

लितं ॥ ६ ॥ नव्यभव्यव्यवस्थेन । वरनेपथ्यधारिणा ॥ रूपसौभाग्ययुक्तेन । लोकविस्मयकारिणा ॥ ७ ॥ नरनारीसमूहेन । युक्तं युक्तविधायिना ॥ सुरपल्यंकतुल्येन । पल्यंकेन समन्वितं ॥ ८ ॥ कारितं च क्षणादेव । मंत्रिणा निजमंदिरं ॥ ततो भृत्यैः स उत्क्षिप्य । तत्र पर्यंकके वरे ॥ ९ ॥ निवेश्य देवदूष्याख्य—पटेनाछादितस्ततः ॥ संजातो मृतसंकाश—स्तस्करो रौहिणीयकः ॥ १० ॥ कुलकं ॥ यथास्थानं स्थितो लोको । मंत्रिणैवं च शिक्षितः ॥ यथा भो भो विधातव्यं । रौहिणीयकसंज्ञितं ॥ ११ ॥ यथायं सहते नाम । नाम्नैव नः प्रयोजनं ॥ स्वयमेकांतदेशे च । शृण्वन्नसौ व्यवस्थितः ॥ १२ ॥

चौरेणापि जितश्चूर्ण—स्तत उद्घाटितं शिरः ॥ विलोक्यादृष्टपूर्वं त—द्गेहं रम्यजनं तथा ॥ १३ ॥ चिंतितं च किमेतद्भो । मन्नेत्रानंदकारकं ॥ दृश्यते सर्वमेवात्र । मयानीक्षितपूर्वकं ॥१४॥ यावदेष मनस्येवं । सर्वतः क्षिप्तलोचनः ॥ विस्मितश्चिंतयामास । तावदानंदनिर्भरः ॥ १५ ॥ जनोऽपि गातुमारब्धः । प्रतीहारेण वारितः ॥ रेरे कल्पं न जानीथ । स्थिरीभवत सांप्रतं ॥ १६ ॥ स्थितेषु तेषु तेनोचे । यथा शृणु सुरप्रभो ॥ सौधर्माख्यो ह्ययं स्वर्गो । विमानमरुणप्रभं ॥ १७ ॥

अनाथानां भवान्नाथो । जातो बृहन्मनोरथैः ॥ शृणु कल्पं विमानेश । मंगलं येन कुर्महे ॥१८॥
पिता माता निजं स्थानं । नाम कर्म च कथ्यतां ॥ पूर्वभवभवं सर्वं । क्रियते येन मंगलं ॥१९॥
ततः संभ्रांतचित्तेन । तस्करेण विचिंतितं ॥ सांप्रतं का गतिः कोऽपि । प्रकारो विस्मयावहः ॥२०॥
घटामाटीकृते सर्वं । यदनेन प्रभाषितं ॥ स्वर्गः स्वर्गीकृताश्चैता । इमे देवा अहं सुरः ॥ २१ ॥
देवविमानमेतच्चा—दृष्टं दृष्टिमनोहरं ॥ पितादिकर्मपर्यंतः । परं प्रश्नो न संगतः ॥ २२ ॥ यथात-
थ्येन किं सर्वं । कथ्यते गोप्यतेऽथवा ॥ न जाने निश्चयं तेन । चेतो दोलायते मम ॥ २३ ॥
एवं संशयमापन्नो । यावदास्ते मलिम्लुचः ॥ तावच्चित्ते गतं तस्य । वचः सर्वज्ञभाषितं ॥ २४ ॥
यदुक्तं वीरनाथेन । वदता देवलक्षणं ॥ न स्पृशंति भुवं देवा । निर्निमेषनिरीक्षिणः ॥ २५ ॥
रागद्वेषमहामोह—मूढचित्तस्य भाषितं ॥ न तदेकांततः सत्यं । सत्यासत्यं हि तद्वचः ॥ २६ ॥ रा-
गद्वेषमहामोह—दोषमुक्तस्य जल्पितं ॥ सत्यं पाषाणरेखेव । यथैवोक्तं तथैव तत् ॥ २७ ॥ तद-
स्ति जीवनोपायो । ममाप्येष न संशयः ॥ पश्यामि तावदेतेषां । देवानां दृष्टिलक्षणं ॥ २८ ॥
सोऽथ शय्यां परित्यज्य । निषण्णो ह्यासनोपरि ॥ सनिमेषा इमे दृष्टा । लग्नपादाश्च भूतले ॥२९॥

ततः संवादनाहेतोः । कृतात्मनि परीक्षणा ॥ यावद् दृष्टं चलं चक्षु—र्लग्नौ पादौ च भूतले ॥३०॥ न स्वर्गो न सुरा एते । न देव्यो न विमानकं ॥ मायाविलसितं सर्व—मजयस्येति लक्ष्यते ॥ ॥ ३१ ॥ मम नामपरिज्ञान—निमित्तमिति मे मतिः ॥ इदं च चिंतितं तेन । बहिश्चेदं प्रकाशितं ॥ ३२ ॥ भवद्भिर्यदहो पृष्टं । पित्राद्यं तन्निशम्यतां ॥ धान्यपूराभिधे ग्रामे । शिवशक्तेः कुटुंबिनः ॥ ३३ ॥ गृहिणी श्यामलानाम्नी । दुर्गशक्तिरहं सुतः ॥ दयादानसमायुक्तः । सर्वदर्शनभक्तिमान् ॥ ३४ ॥ सदा स्वदारसंतुष्टः । परद्रव्यपराङ्मुखः ॥ अन्यदा च जनन्या मे । रजन्याः प्रहरे गते ॥ ३५ ॥ गाढा विशूचिका जाता । जीवितव्यांतकारिणी ॥ तेनाहं प्रेषितः पित्रा । वैद्यानयनहेतवे ॥ ३६ ॥ यावत्तत्र गतस्ताव—त्पुरद्वारं नियंत्रितं ॥ करणाभ्यासयोगेन । शालमुल्लंघयन्नहं ॥ ३७ ॥ शालस्थितभटैर्बद्धो । ढौकितोऽजयमंत्रिणे ॥ कृपाक्षये च तेनापि । नीत्वा राज्ञे समर्पितः ॥ ३८ ॥ तेनापि सादरं दृष्टो । गौरवेण धृतः क्षणं ॥ सादरं प्रीतिवृद्ध्यर्थ—मजयेन निमंत्रितः ॥ ३९ ॥ नीतस्तेन निजे गेहे । मद्यपानं च कारितः ॥ मत्तश्च न तदा किंचि—ज्जानेऽहं गतचेतनः ॥ ४० ॥

ततो मृत्वा सुरो जातो । भवदीयविमानके ॥ संपादयत सर्वाणि । मंगलानि द्रुतं द्रुतं ॥
॥ ४१ ॥ कालक्षेपो न कर्तव्यः । कार्याणां त्वरिता गतिः ॥ ततोऽभयकुमारेण । सर्वमेतन्महीभृते
॥ ४२ ॥ कथितं न भवत्येव । तातायं रौहिणीयकः ॥ अज्ञातेन च किं तेन । मारितेन तपस्वि-
ना ॥ ४३ ॥ युग्मं ॥ दुःखेन लभ्यते तात । मानुष्यं जन्म जंतुना ॥ राजाह रोचते यत्ते । तत्कु-
रुष्व यदृच्छया ॥ ४४ ॥ ततोऽभयकुमारेण । स्वभृत्या भणिता यथा ॥ रेरेऽर्धचंद्रकं दत्वा । गृही-
त्वा दक्षिणे करे ॥ ४५ ॥ निष्कासयत तं तेऽपि । कृत्वैवं तं बभाषिरे ॥ मुक्तोऽसि मंत्रिणा भद्र ।
गच्छ तत्सत्वरैः पदैः ॥ ४६ ॥ युग्मं ॥ पुनर्जातमिवात्मानं । मन्यमानोऽथ सोऽपि हि ॥ अददद्द-
क्षिणे दृष्टिं । वामतः पृष्ठतस्तथा ॥ ४७ ॥ द्रुतं द्रुतं विनिर्गत्य । व्यजनं देशमाश्रितः ॥ ततश्च
चिंतयामास । चौरः संवेगमागतः ॥ ४८ ॥ युग्मं ॥ ते धन्या येऽत्र शृण्वंति । वचः सर्वज्ञभाषितं
॥ यदनिच्छत एवेह । श्रोतुं मे कर्णयोर्गतं ॥ ४९ ॥ जीवितव्याय संजातं । त्राणमन्येन नो कृतं ॥
नमः श्रीवीरनाथाय । वीरितांतरशत्रवे ॥ ५० ॥ सुरासुरनमस्याय । संसारावनिसेतवे ॥ पूर्वापरावि-
रुद्धाय । जीवानां शुद्धिहेतवे ॥ ५१ ॥ संसारसौधदीपाय । श्रीवीरवचसे नमः ॥ यतोऽद्य कष्टयो-

गेन । यमसुखाद्विनिर्गतः ॥ ५२ ॥ त्रिनिर्विशेषकं ॥ चराचरजगन्नाथः । पुलीयितजगत्त्रयः ॥ त्रा·
णं मे श्रीमहावीरो । यावज्जीवमतःपरं ॥ ५३ ॥ इति संवेगमापन्नो । भवान्निर्विमानसः ॥ चचा·
ल श्रीमहावीर—पादवंदनहेतवे ॥ ५४ ॥ वंदित्वा त्रिजगन्नाथं । निषण्णः शुद्धभूतले ॥ भणितं
किं जगन्नाथ । ममास्ति व्रतयोग्यता ॥ ५५ ॥ अस्तीति भणितस्तेन । शीघ्रमात्मा समर्पितः ॥
भणितः प्रभुणा भद्र । चित्तशुद्धिर्विधीयतां ॥ ५६ ॥ अत्रांतरे समायात—श्चतुरंगबलान्वितः ॥
वंदनाय जिनेंद्रस्य । श्रेणिको मगधाधिपः ॥ ५७ ॥ प्रविश्य विधिना तत्र । दत्वा च भ्रामरीत्रयं ॥
वंदित्वा च महावीरं । निषसादोचितासने ॥ ५८ ॥ ततश्च लोकनाथेन । प्रारब्धा धर्मदेशना ॥
कर्णामृतसमा सारा । संसारोच्छेदकारिणी ॥ ५९ ॥ ततः प्रपेदिरे केचिद् । गृहिधर्मं सदर्शनं ॥
अन्ये च शुद्धचारित्रं । सफलाजनि देशना ॥ ६० ॥ समयं प्राप्य नृपेन । ततः पृष्टो जिनेश्वरः
॥ रौहिणीयाह्वयो नाथ । कुत्र तिष्ठति तस्करः ॥ ६१ ॥ प्रकाशयास्य कर्माणि । नामापि प्रकटं प्र·
भो ॥ परं निरूपितोऽस्माभि—र्न चासौ दृश्यते दृशा ॥ ६२ ॥ उवाच भगवानेष । दक्षिणेन म·
माग्रतः ॥ तिष्ठति लीनगात्रोऽसौ । निषण्णः शुद्धभूतले ॥ ६३ ॥ सन्मुखो मोक्षमार्गस्य । पापकर्म·

पराङ्मुखः ॥ नैनं प्रत्यशुभं चेतो । विधेयं श्रेणिक त्वया ॥ ६४ ॥ शुभाशुभानि चेतांसि । दि-
नमध्ये विदेहिनां ॥ जायंते विस्मयोऽप्यत्र । न कर्तव्यो महीपते ॥ ६५ ॥ मोक्षमार्गप्रपन्नस्य ।
वात्सल्यं तव संगतं ॥ राजाह कुत्सितं कर्म । सुलभं दुर्लभं त्विदं ॥ ६६ ॥ धर्मसत्कर्मकार्याणि ।
कुर्वतोऽस्य सहायकाः ॥ स्वत एव वयं स्वामिन् । युष्मदादेशनोदिताः ॥ ६७ ॥ इत्युक्त्वा स्वकरे
कृत्वा । गच्छताऽभयमंत्रिणा ॥ सगौरवं गृहे नीतो । रौहिणीयकतस्करः ॥ ६८ ॥ आतिथेयीं क्रियां
सर्वां । पादप्रक्षालनादिकां ॥ विधाय समये सोऽथ । वस्त्रैश्च परिधापितः ॥ ६९ ॥ भोजनांतरका-
ले च । विश्रांतोऽभयमंत्रिणा ॥ निर्वेदकारणं पृष्टः । वदतिस्म यथास्थितं ॥ ७० ॥ अभयः प्राह
भो भद्र । चित्तशुद्धिपुरस्सरं ॥ प्रव्रज्याग्रहणं श्रेयः । सर्वेषां सुखकारणं ॥ ७१ ॥ यदत्र परसंबंधि
। चित्तमालिन्यकारणं ॥ अदत्तं स्वीकृतं सर्वं । तत्तस्यैव समर्पय ॥ ७२ ॥ अज्ञातस्वामिकं द्रव्यं ।
तथा विस्मृतनायकं ॥ मृतनष्टधनं सर्वं । तच्च राज्ञे प्रदीयतां ॥ ७३ ॥ विशुद्धात्मा ततस्तूर्णं । कुरु
धर्मं यथोदितं ॥ प्रतिपन्नमिदं तेन । क्रियया च कृतं द्रुतं ॥ ७४ ॥ ततोऽभयकुमारेण । कृतनि-
ष्क्रमणक्रियः ॥ महामहोत्सवेनैष । वीरनाथेन दीक्षितः ॥ ७५ ॥ ततोऽसौ श्रमणो जातो । गु-

णागरजनूषितः ॥ सुदुःकरतपश्चारी । सर्वजीवदयापरः ॥ ७६ ॥ निःसंगो निर्ममः शांतः । प्रसिद्धो जगतीतले ॥ रौहिणीयो मुनीशश्च । विजहार यथागमं ॥ ७७ ॥ उक्तं च—कूरावि सहावेणं । विसयविसवसाणुगावि होऊण ॥ जिणवयणभावियमणा । तेल्लोक्कसुहावहा होंति ॥ ७८ ॥ क्षमादिब्रह्मपर्यंतं । धर्मं कृत्वा सुनिश्चलं ॥ उत्पाद्य केवलज्ञानं । जगाम परमं पदं ॥ ७९ ॥ अत्रैव जीवितं दत्तं । परत्र परमं पदं ॥ रौहिणीयकचौरस्य । श्रीवीरवचसा स्फुटं ॥ ८० ॥ इति रौहिणीयककथानकं समाप्तं ॥ श्रीरस्तु ॥

तदेवं श्रीमन्महावीरवर्धमानस्वामिनः सत्कं वचनमाकर्ण्य रौहिणीयकस्य समीहितार्थसंप्राप्तिरभवत, तदन्यस्यापि पितादेरेकांते नैवाप्तस्य गुरुस्थानीयस्य लोकद्वयहितं वचः श्रोतव्यं, श्रुत्वा च तदनुसारेण प्रवर्तितव्यं. एवं च वर्तमानानां समस्तसमीहितार्थप्राप्तिरुपजायते पितुर्वचनानुसारतः प्रवर्तमानस्य वसुसारस्येव. अथ कोऽयं वसुसार इत्याशंकायां कथानकं कथ्यते—बभूव भुवनख्यातं । गंभीराख्यं महापुरं ॥ अनेकनैगमस्थानं । रम्ये तीरे महोदधेः ॥ १ ॥ यत्र वेलाकुलं भाति । यानपात्रशतैरलं ॥ शुभ्रसितपटाकीर्णैः । शैलैरिव समंततः ॥ २ ॥ यत्र मुक्ताफलव्राताः । शंख

व्राताश्च निर्मलाः ॥ स्थाने स्थाने विलोक्यंते । फेनपुंजा इवोदधेः ॥ ३ ॥ तत्र राजाऽभवत् श्री·
मान् । श्रेयोधाम पदं श्रियां ॥ विक्रमाक्रांतभूपीठः । सिंहविक्रमसंज्ञितः ॥ ४ ॥ अपरित्यक्तमर्या·
दो । वाहिनीशतसेवितः ॥ अनेकगुणरत्नौघ—युक्तः पतिरिवांभसां ॥ ५ ॥ श्रेष्टिवर्योऽभवत्तत्र ।
श्रेष्टकार्यविधायकः ॥ वसुर्नाम्ना यशोधामा । विश्वश्रीकुलमंदिरं ॥ ६ ॥ सदाचारो गुणाधारो । धी·
रो धर्मपरायणः ॥ कृती सत्यप्रतिज्ञश्च । शुचिर्धीमान् सतां मतः ॥ ७ ॥ युग्मं ॥ वसुकांता जनी
तस्य । जनानंदविधायिनी ॥ प्रीतिपात्रं गुणक्षेत्रं । दानदाक्षिण्यमंदिरं ॥ ८ ॥ तयोर्भुंजानयोः सौ·
ख्यं । शब्दादिविषयोद्भवं ॥ कालक्रमेण संजातः । सत्पुत्रस्तुष्टिकारकः ॥ ९ ॥ महामहोत्सवेनाथ
। तस्य नाम प्रतिष्टितं ॥ वसुसार इति ख्यातं । निःशेषैर्बंधुभिर्मुदा ॥ १० ॥ अथासौ वर्धते बा·
लो । लाल्यमानो यथेप्सितं ॥ संपद्यमाननिःशेष—समीहितमनोरथः ॥ ११ ॥ कालक्रमेण पि·
त्रासौ । ग्राहितः सकलाः कलाः ॥ यौवनं च समारूढ—स्तरुणीजनमोहनं ॥ १२ ॥ समानकुल·
शीलायाः । कन्यकाया महर्द्धितः ॥ वसुधरेतिसंज्ञायाः । स पित्रा ग्राहितः करः ॥ १३ ॥ अथैवं
परमप्रीत्या । सार्धं पुत्रेण तिष्टतः ॥ श्रेष्टिनो वसुसंज्ञस्य । वव्रजुर्भूरिवासराः ॥ १४ ॥ अन्यदा श्रे·

ष्ठिना पुत्रो । वृद्धभावमुपेयुषा ॥ शिक्षितः पेशलैर्वाक्यै—रेवं पुत्रहितैषिणा ॥ १५ ॥ यथा वत्स सदा काल । कार्या भक्तिर्जिनेश्वरे ॥ सेव्यास्तदुक्तसिद्धांत—वेदिनः साधवः सदा ॥ १६ ॥ श्रोतव्यं च वचो जैनं । हितं पथ्यं तदंतिके ॥ तथा जीवदया कार्या । वार्या दुर्जनसंगतिः ॥ १७ ॥ वक्तव्यं च वचः सत्यं । त्याज्यं चौर्यं च दूरतः ॥ पारदार्यं परित्याज्यं । भाव्यं नात्यंतलोभिना ॥ ॥ १८ ॥ न भोक्तव्यं निशायां च । मांसमद्यादिकं तथा ॥ तथा पुत्र विनीतेन । भाव्यं गुरुजने त्वया ॥ १९ ॥ दाक्षिण्यं च सदा कार्यं । सर्वस्वजनबंधुषु ॥ इत्यादि श्रेष्ठिनो नित्यं । शिक्षयतः स्वनंदनं ॥ २० ॥

वसुसारं गुणाधारं । गतः कालः कियानपि ॥ अन्यदा च शरीरेऽस्य । व्याधिर्जातः सुदारुणः ॥ २१ ॥ दुःसाध्यः सर्ववैद्यानां । ततः श्रेष्ठी व्यचिंतयत् ॥ अहो मदीयमत्यंतं । संजातं विधुरं वपुः ॥ २२ ॥ नाधुना मुच्यते मृत्योः । करोमि स्वहितं ततः ॥ ददामि निजकं वित्तं । धर्मस्थाने यथोचितं ॥ २३ ॥ चतुर्भिः कलापकं ॥ संभाषयामि निःशेष—बंधुमित्रजनं निजं ॥ कुटुंबं च यथास्थाने । सर्वं संस्थापयाम्यहं ॥ २४ ॥ तत्वं च वसुसारस्य । समाख्यामि वसूद्भवं ॥ इत्यालोच्य

निजे चित्ते । संजाते व्यजने गृहे ॥ २५ ॥ वसुना वसुसारस्य । कर्णे तत्वं निवेदितं ॥ क्रमाग-
ता मया मुक्ता । लक्ष्मीर्वत्स तव गृहे ॥ २६ ॥ चंचलैषा स्वजावेन । जवंतं यदि मुंचति ॥ तदा
भूमिगृहस्यांत—रुद्घाट्या मंजूषा त्वया ॥ २७ ॥ तदंतर्लिखितं पत्रं । मयैवास्ते सविस्तरं ॥ तदा-
दाय रहः स्थाने । वाचनीयं शनैः शनैः ॥ २८ ॥ तदर्थो हृदये धार्यः । कर्तव्यं च क्रमागतं ॥ उ-
पहासपरो लोको । यत्किंचन वदेत्पुनः ॥ २९ ॥ तद्वचो हृदये नैव । कर्तव्यं हितमिछता ॥ प्रति-
पन्नमनेनापि । तद्वचनं तथैव च ॥ ३० ॥ युग्मं ॥ सुपुत्राणां सुशिक्षाणां । नाप्तवाक्ये विचारणा ॥
ततोऽसौ दर्शितो राज्ञः । स्वपदे च निवेशितः ॥ ३१ ॥ बद्धो जालतले पट्टो । दत्तं छत्रं महीभु-
जा ॥ प्रथमासनिको जातः । सर्वेषां वणिजामयं ॥ ३२ ॥ परिवारोऽपि संतुष्टः । पैत्र्यं पदमधिष्ठितं
॥ वसुना वसुसारस्य । दत्ता शिक्षा यथोचिता ॥ ३३ ॥ ततः स्वधर्मकर्माणि । चकार चतुराशयः
॥ द्रव्यबीजं विधानेन । सप्तक्षेत्र्यां नियोजितं ॥ ३४ ॥ ततः समुध्धृतं शल्यं । क्षमितक्षामितं कृतं
॥ कृता देवगृहे पूजा—ऽमारिश्चोद्घोषिता पुनः ॥ ३५ ॥ निर्ममत्वं धृतं चित्ते । पंचधाराधना कृ-
ता ॥ सर्वाहारनिरोधश्च । स्वीकृतो गुरुसाक्षिकः ॥ ३६ ॥ धर्मध्यानसमारूढो । मृत्वा स्वर्गं जगाम

सः ॥ विधाय मृतकार्याणि । स्वपितुर्बंधुभिः सह ॥ ३७ ॥ गतशोकः स्वकार्याणि । कालेनासौ व्य· चिंतयत् ॥ सम्मतः पुरलोकस्य । नृपस्यापि स सम्मतः ॥ ३८ ॥ सम्मतो राजलोकस्य । बंधुवर्ग· स्य सम्मतः ॥ गुणानुरागतो रक्ता—स्तद्गुणग्रहणोद्यताः ॥ ३९ ॥ त्रिभिर्विशेषकं ॥ वसुसारमम· न्यंत । वसुसारमिति प्रजाः ॥ एवं सरति संसारे । ह्यंतराये पुरा कृते ॥ ४० ॥ समीपमागते लक्ष्मी —र्जगाम तस्य मंदिरात् ॥ पराभूतिः समायाता । दारिद्र्येण समन्विताः ॥ ४१ ॥ युग्मं ॥ संप्राप्याव· सरं को वा । जृंभते न महीतले ॥ सानुकूले विधावासी—दनुकूलं नृपादि यत् ॥ ४२ ॥ प्रतिकू ले च तत्सर्वं । वर्तते मे प्रतिकूलं ॥ एवं विषण्णचित्तेन । वसुसारेण चिंतितं ॥ ४३ ॥ अहो वि· धिप्रसादेन । दृष्टं जन्मद्वयं मया ॥ पुरा धनेन संयुक्तं । सांप्रतं धनवर्जितं ॥ ४४ ॥ जात्यादिगु· णसंपूर्णं । परमार्थेन वर्जितं ॥ तृणादपि लघुं लोको । मन्यते निर्धनं जनं ॥ ४५ ॥ जात्यादि· भिर्गुणैर्मुक्तं । परलोकसमाश्रितं ॥ मेरोरप्यधिकं लोको । मन्यते सधनं जनं ॥ ४६ ॥ क्षीणोपा· येन तेनेदं । संस्मृतं पितृभाषितं ॥ उद्घाटिता च मंजूषा । पत्रकं स्वकरे कृतं ॥ ४७ ॥ वाचितं च रहःस्थाने । मंदनादं प्रमोदतः ॥ हंत लब्धो मयोपायः । सामग्री तस्य दुर्लभा ॥ ४८ ॥ स्व·

स्त्यस्ति गौतमो द्वीपः । समुद्रांतर्महालयः ॥ जलाविलो महाकच्छः । सुरभीणां समाश्रयः ॥ ४९ ॥ या-
क्षेत्रानुभावतस्तत्र । तृणानामनुभावतः ॥ अग्निसंपर्कतस्तेषां । रत्नं हि भगणं भवेत ॥ ५० ॥ या-
नपात्रमतो भृत्वा । भस्मनस्तत्र गम्यते ॥ वितीर्यंते च सर्वत्र । भूतले भस्म भूरिशः ॥ ५१ ॥ न-
क्तं तत्र समागत्य । निषीदंते गवां गणाः ॥ तद्विष्ठां भणिकां कृत्वा । भ्रियते यानपात्रकं ॥ ५२ ॥
निजस्थाने समागत्य । भ्रियंते च गृहापणाः ॥ समये चाग्निसंपर्का—ज्जायंते रत्नराशयः ॥ ५३ ॥
हंत तावदुपायोऽयं । सामग्री दुर्लभा पुनः ॥ बुध्यस्ति विभवो नास्ति । वाणिज्यं क्रियते कथं ॥
॥ ५४ ॥ एवमुद्घोषयामास । प्रत्यहं शून्यमानसः ॥ पुररथ्यासु सर्वासु । राजमार्गेण संततं ॥५५॥
पुरान्निर्गम्यमानेन । ह्यन्यदा धरणीभृता ॥ दृष्टः पृष्टश्च तेनापि । पठितं भूपतेः पुरः ॥ ५६ ॥ हंत
लब्धो मयोपायः । सामग्री तच्च दुर्लभा ॥ बुध्यस्ति विभवो नास्ति । वाणिज्यं क्रियते कथं ॥५७॥
राजाह कियता कार्यं । श्रेष्ठिपुत्र धनेन ते ॥ सोऽवक्शतसहस्रेण । दीनाराणां महीपते ॥ ५८ ॥
दत्तो भूपेन लक्षोऽपि । गृहीत्वा गृहमागतः ॥ गमनार्थं समारब्धा । सामग्री कर्तुमंजसा ॥ ५९ ॥
संबलानि विधीयंते । नानारूपाणि भूरिशः ॥ जलेंधनादिसामग्री । सर्वापि प्रगुणीकृता ॥ ६० ॥

धीवराश्च समाहूता । पृष्टाः प्रीतिपुरस्सरं ॥ जानीथ गौतमं द्वीप—मूचे तैर्जानीमो वयं ॥ ६१ ॥
परं निर्मानुषो द्वीपः । किं गतैस्तत्र साध्यते ॥ श्रेष्ठ्याह किं विचारेण । गृह्यतामीप्सितं धनं ॥
॥ ६२ ॥ स्वीकृतं धीवरैः सर्वं । पोतोऽपि प्रगुणीकृतः ॥ भ्रियते भस्मभांडेन । लोकाश्चोपहसंति तं
॥ ६३ ॥ साधके तिथिनक्षत्रे । पूजयित्वा महोदधिं ॥ सोऽथ पोतं समारूढो । मुक्तः पोतोऽपि धी-
वरैः ॥ ६४ ॥ वेगेन गंतुमारब्धः । पृष्टतः पवनेरितः ॥ मासैः कतिपयैरेव । द्वीपं संप्राप गौतमं ॥
॥ ६५ ॥ मुक्तश्च नंगरस्तत्र । पोतः स्थिरतरीकृतः ॥ विज्ञप्तो धीवरैः श्रेष्ठी । द्वीपोऽयं गौतमाभिधः
॥ ६६ ॥ पोतादुत्तार्य तत्राथ । राशयो भस्मनः कृताः ॥ विकीर्णं सर्वतस्तच्च । गतास्ते वासभूमिषु
॥ ६७ ॥ यथास्थानं गते लोके । श्रेष्ठी जातो निराकुलः ॥ एकं छगणमेकांते । दग्धं प्रत्ययहेतवे
॥ ६८ ॥ पर्यायांतरमापन्नं । जातं रत्नमनुत्तमं ॥ ततः संजाततोषेण । छगणानां व्रजाः कृताः ॥
॥ ६९ ॥ शोषितास्तापयोगेन । भृतः पोतः समंततः ॥ समये स्वयमारुह्य । मुक्तः पूजापुरस्सरं ॥
॥ ७० ॥ गरुत्मानिव वेगेन । निजं स्थानमुपागतः ॥ मुक्ता नंगरा मिलितो । लोकः सर्वोऽपि
कौतुकी ॥ ७१ ॥ वसुसारोऽपि वेगेन । राजांतिकमुपागतः ॥ वद श्रेष्ठिन् किमानीतं । छगणानीति

जल्पितं ॥ ७२ ॥ अंतःप्रहसता राज्ञा । प्रकाशमुदितं वचः ॥ भच्छुक्कमुत्करं गांमं । कुरुष्व क्रय-
विक्रयं ॥ ७३ ॥ महाप्रसाद इत्युक्त्वा । वसुसारो गतो गृहं ॥ पोतादुत्तार्य सर्वाणि । भृत्यकर्मकरै-
र्नरैः ॥ ७४ ॥ छगणानि गृहस्यांत—र्मुमोच वसुनंदनः ॥ हृदि प्रमोदसंयुक्तो । हस्यमानो जनै-
स्तथा ॥ ७५ ॥ गस्समगांमं महामूल्यं । नीतमेतेन गछता ॥ आगछता समानीतं । प्रतिगांमं करी-
षकं ॥ ७६ ॥ अहो वाणिज्यकौशल्य—महो बुद्धिरनिंदिता ॥ दत्तो निजे कुलेऽनेन । दारिद्र्यस्य
जलांजलिः ॥ ७७ ॥ इत्येवं हसते लोको । गृहेऽपि स्वजना निजाः ॥ श्यामितास्या वदंत्येवं ।
मा विनाशय मंदिरं ॥ ७८ ॥ छगणानां बहिः स्थानं । कर्तुं पुत्रक संगतं ॥ न शक्यते मुखं धर्तुं
। लोकानां हसतां बहिः ॥ ७८ ॥ मौनस्थितेन तेनापि । कर्तव्यं सकलं कृतं ॥ द्विगुणं वेतनं द-
त्वा । भृत्यवर्गो विसर्जितः ॥ ७९ ॥ गृहशालापणाः सर्वे । कृतास्तालकरक्षिताः ॥ जल्पन्नुपेक्षितो
लोकः । पत्रकं पुरतः कृतं ॥ ८० ॥

अन्यदा नक्तमेकांते । कृते छगणपुंजके ॥ ज्वलज्ज्वलनसंपर्का—द्रत्नीभूते मनोरमे ॥८१॥
स्थालकं रम्यरत्नानां । भृत्वा नृपाय ढौकितं ॥ पृष्टेन कथितं सर्वं । रंजितो हृदि नृपतिः ॥ ८२ ॥

मुद्रा राजवशा दत्ता । महामंत्रिपदे कृतः ॥ सम्मतः सर्वलोकानां । यथा शरदि चंद्रमाः ॥ ७३ ॥
सुकृतं तत्कृतं तेन । यज्जल्पितं तथैव तत् ॥ अमात्यपदमारूढः । परं राजायते गुणैः ॥ ७४ ॥
सर्वज्ञशासनासक्तो । भक्तः सर्वज्ञपादयोः ॥ सुसाधुपुरतः शुद्ध—सिद्धांतश्रवणे रतः ॥ ७५ ॥ का-
लमुल्लंघयामास । धर्मस्थो वसुसारकः ॥ अयं चोपनयः कार्यः । श्रेष्टी तीर्थकरोपमः ॥ ७६ ॥ वसु-
सारसमः संघः । पत्रकं च जिनागमः ॥ दीनाररत्नतुल्यं हि । मानुषत्वं जगुर्जिनाः ॥ ७७ ॥ मू-
लमेतदशेषाणा—मुत्तरोत्तरसंपदां ॥ भस्त्रांम्भसमं ज्ञेय—मशुचीदं कलेवरं ॥ ७८ ॥ अविवेको
महासिंधुः । सद्धर्मः पोतसन्निभः ॥ द्वीपोपमश्च विज्ञेयः । प्रायः सद्गुरुसंगमः ॥ ७९ ॥ शुक्लध्यानं
ज्वलद्वह्निः । कर्म गोमयसन्निभं ॥ तद्दाहे धर्मरत्नानां । ज्ञानादीनां समुद्भवः ॥ ८० ॥ स्वर्गापव
र्गसौख्यानि । भुज्यंते तत्प्रसादतः ॥ एवमुपनयो ज्ञेयो । दृष्टांतेऽत्र विशारदैः ॥ ८१ ॥ तदेवं व-
सुसारस्य । कुर्वाणस्य पितुर्वचः ॥ जाता समीहिताऽशेष—कल्याणवरमालिका ॥ ८२ ॥ इति व-
सुसारकथानकं समाप्तं ॥

तदहो रौहिणीयकचौरस्य वक्तव्यतां श्रुत्वा वसुसारस्य श्रेष्टिनंदनस्य च दृष्टांतं निशम्य निः-

शेषरागादिदोषशत्रुसंघातविघातकारिण्यपारसंसारपारावारागाधमध्यनिमज्जज्जंतुसंतानसमुत्तरणविधायिनि स्वर्गापवर्गसौख्यसंदोहसंपादके श्रीसर्वज्ञवचने तथैकांतागमवचने च श्रद्धानं विधेयं, तदनुसारेण च सदनुष्ठाने प्रवृत्तिः कार्या, एवं च कुर्वतां भव्यानां व्युच्छिद्यंते रागादयः, क्षीयंते क्लिष्टकर्माणि, प्रवर्धंते पुण्यप्रकृतयः, सिध्यंते सकलसमीहितानि, ततश्च निरतिचारचारित्रसंपत्त्या सकलकर्मक्षयलक्षणो मोक्षः प्राप्यत इति. तथा यदुक्तं—सदाचारप्रमत्तानां । मतमेकांतशिक्षणं ॥ इति तद्दृष्टांतद्वारेणाह—

॥ मूलम् ॥—अत्रार्थे श्रेणिको ज्ञात—मभयश्च महामतिः ॥ धर्मदृढमना आद्यो । द्वितीयः स्थिरकारकः ॥ १ ॥ व्याख्या—धर्मे सम्यक्त्वादिमूलगुणोत्तरगुणरूपे पुण्यस्कंधे दृढमना निश्चलचित्त आद्यः श्रेणिकाभिधानो नृपः, द्वितीयस्तथैव पुत्रोऽभयकुमारनामा स्थिरकारको धर्मे चलचित्तानां स्थैर्यसंपादकः. ज्ञाते च यथाक्रममिति—समस्ति मगधालंकारकारकं साधुसाध्वीश्रावकश्राविकाचतुर्विधसंघपदप्रचारालंकृतत्रिकचतुष्कचत्वरं राजगृहं नाम पुरवरं, तत्र श्रीमन्महावीरपादपद्ममधुकरः क्षायिकसम्यक्त्वदर्शनी जिनशासने निःप्रकंपमानसो हैहयान्वयसंभवः श्रेणिको नाम

महाराजोऽभूत्, स चान्यदा सौधर्मदेवलोके सुधर्मायां सभायां शक्रसिंहासने आसीनेनानेकसुरकोटीपरिवृतेन शक्रेण प्रशंसितः, अहो यादृशी श्रेणिकस्य नैर्ग्रंथे प्रवचने निश्चला भक्तिः सुरैरपि क्षोभयितुमशक्या न तादृश्यन्यस्य. एतच्च समाकर्ण्यैकः सुरः शक्रवचनमश्रद्दधानो राजगृहनगरमाजगाम. कृत्वा च वैक्रियं साधुरूपं नगरनिर्गमासन्ने महाह्रदे जालकरो मत्स्यान् जग्राह, स च तेनांतिकं गच्छता श्रेणिकेन ददृशे, अहो शारदीनशशिकरसंकाशं सर्वज्ञशासनमेष मलिनीकरोतीति वितर्क्य परिमितसहायः स तत्समीपमगमत, भणितश्चासौ राज्ञा भो भद्र किमिदं क्रियते? तेनोचे मत्स्यग्रहणं, किमर्थं? संयमोपग्रहार्थं, नास्ति मे कंबलः, तेन च विना प्रदीपप्रभाविद्युद्वारिधारासचित्तरजश्च निवारयितुं न शक्यते, मत्स्यान् वीथ्यां विक्रीय तद्धनेन कंबलं गृहीष्यामि. राज्ञोक्तमलमनेन दुर्व्यवसायेन, अहं ते कंबलं दास्यामि, प्रतिपन्नमनेन, दत्तश्च राज्ञा तस्मै कंबलः. ततो राज्ञा हट्टमार्गेणापन्नसत्वा काचित्संयती प्रत्यापणं कपर्दकान् याचंती दृष्टा, पृष्टा चार्ये! किं करोषि? तयोक्तं निश्चिंतस्त्वं परपीडां न जानासि, गर्भवत्यहं, प्रसवो भविता, तत्र च घृतगुडादिना प्रयोजनं, तच्च कपर्दकैर्विना न संपद्यते, तदर्थं चायमारंभः. राज्ञोक्तमहं ते सर्वं करिष्यामि, आग-

ह्व मम गृहे, आगता, धृता च विविक्ताश्रये, प्रसूता देवमायया, कारितं जृंभृतासस्त्रिया सूतिकर्म, स्वयमपि समीपस्थो न कस्यापि प्रवेशं ददाति. प्रयुक्तावधिना च ज्ञातं देवेन, यादृशोऽयं सुरस्वामिना वर्णितस्तादृश एव महात्मायं, ततोऽसौ संयतीस्वरूपमुपसंहृत्य चलकुंडलाभरणभूषितशरीरो देवो बभूव, अवादीच्च यादृशस्त्वं सौधर्मे शक्रेणानेकसुरसमक्षं निश्चलभक्तिः श्रेणिकः सर्वज्ञधर्मे देवेनापि चालयितुमशक्यस्तत्सत्यमेव, नात्र विचारः, तुष्टोऽहं तावद् गृहाण ममाष्टादशसरमष्टादशचक्रं च हाररत्नं गोलकयुगलं च, एवं तदुभयमपि दत्वा देवलोकं जगाम देवः, श्रेणिकोऽपि प्रीतिपात्रमिति कृत्वा हाररत्नं चेल्लणायै ददौ, गोलकयुगलं च सुनंदायै, तया च क्रोधानलदंदह्यमानचित्तया गोलकयुगलं स्तंभे प्रस्फोटितं. एकस्माद्गोलकात्कुंडलयुगलं विनिर्गतं, द्वितीयाच्च देवदुष्यवस्त्रयुगलं, प्रहृष्टचित्तया च गृहीतं सुनंदयेति गतं श्रेणिकज्ञातं. अधुनाभयकुमारज्ञातमुच्यते—

बभूव दुर्गतः कोऽपि । पुरे राजगृहाभिधे ॥ निःसंतानो निराधारो । भिक्षाचरशिरोमणिः ॥ ॥ १ ॥ काष्ठभारवहः क्वापि । तृणभारवहोऽपि च ॥ जलाहरणकारीति । लोको वक्ति यदृच्छया ॥ ॥ २ ॥ कंडकः पाशकश्चैव । पादप्रक्षालकस्तथा ॥ कुकर्म कुरुते सर्वं । पुरे तत्र गृहे गृहे ॥ ३ ॥

इतश्च विहरन् ग्रामा—नुग्रामं शिष्यसंयुतः ॥ धर्मधामा दयासारो । विश्रुतः श्रुतकेवली ॥ ४ ॥
शिष्यः श्रीवीरनाथस्य । पंचमो गणनायकः ॥ राजगृहे समायातः । परोपकृतिहेतवे ॥ ५ ॥ युग्मं ॥
अवग्रहमनुज्ञाप्य । तस्थौ तत्र गणाधिपः ॥ वंदनार्थं समायाता । राजा पौराश्च भक्तितः ॥ ६ ॥
प्रारब्धा देशना रम्या । हृदयानंदकारिणी ॥ पपुः कर्णपुटैः सर्वे । पीयूषमिव देहिनः ॥ ७ ॥ अत्रां-
तरे समायातः । कांतारात्काष्टवाहकः ॥ काष्टभारं क्षितौ क्षिप्त्वा । चिंतयामास मानसे ॥ ८ ॥
नेहलोको न वा लोको—ऽपरोऽपि मम विद्यते ॥ अजागलस्तनस्येव । मम जन्म निरर्थकं ॥ ९ ॥
एवं वितर्क्य स रंको । वंदनार्थं समागतः ॥ वंदितो गणभृद्भक्त्या । श्रुतो धर्मस्तदीरितः ॥ १० ॥
भावितो मानसे स्वस्य । क्षयोपशमयोगतः ॥ प्रवर्धमानसंवेगः । प्रोवाच गणनायकं ॥ ११ ॥ यूयं
नाथा अनाथानां । विधायानुग्रहं मम ॥ यद्यस्ति योग्यता मह्यं । तदा दीक्षा प्रदीयतां ॥ १२ ॥
भव्योऽयमिति विज्ञाय । दीक्षितस्तत्क्षणादसौ ॥ जग्राह द्विविधां शिक्षां । ग्रहणासेवनात्मिकां ॥
॥ १३ ॥ गुरूपदेशतस्तत्र । विजहार गृहे गृहे ॥ भक्तपानकृते नित्यं । गीतार्थमुनिभिः सह ॥
॥ १४ ॥ काष्टभारवहो हारि । तृणभारवहोऽपि च ॥ कंमकः पीशकश्चैव । पादप्रक्षालकस्तथा ॥

॥ १५ ॥ इत्यादिपटुवाक्यानि । जनो जल्पति नर्मणा ॥ इतीतिकथनं चक्रे । गुरुभ्यो रंकशिष्य-
कः ॥ १६ ॥ गुरुभिश्चाभयोऽज्ञापि । विहर्तारो वयं प्रगे ॥ अभयोऽप्याह नो पूर्णो । मासकल्पः
किमुत्सुकाः ॥ १७ ॥ कथितं कारणं तेन । भद्रं भावीति जल्पितं ॥ प्रातरेव समुत्थाय । पुंजिता
राजवर्त्मनि ॥ १८ ॥ रत्नानां कोट्यस्तिस्रो । घोषितं डिंडिमेन च ॥ भो शृण्वंतु जनाः सर्वे । ह्य-
भयस्य प्रभाषितं ॥ १९ ॥ युग्मं ॥ लभ्यंते कोट्यस्तिस्रो । वस्तुत्रयविसर्जनात ॥ श्रुत्वेदं मिलिता
लोकाः । सर्वेऽपि धनवांछया ॥ २० ॥ किमत्र कथ्यतां वस्तु । वर्जनीयं धनार्थिना ॥ मंत्रिणा भ-
णिता लोकाः । सावधानैर्निशम्यतां ॥ २१ ॥ पानीयं न च पानीयं । यावज्जीवं सचेतनं ॥ अंग-
नावह्निसेवा च । वर्जनीया प्रयत्नतः ॥ २२ ॥ श्रुत्वेदं विरतो लोको । यातो धनपराङ्मुखः ॥ य-
त्रेदं त्रितयं त्याज्यं । तत्र किं रत्नराशिभिः ॥ २३ ॥ रंकसाधुः समाहूतः । प्रोचे चाभयमंत्रिणा ॥
जलादित्रितयं त्यक्तं । त्वया किं नेति कथ्यतां ॥ २४ ॥ यावज्जीवं मया त्यक्तं । द्रव्यतो भावतोऽ-
पि च ॥ यद्येवं ते मया दत्ता—स्तिस्रोऽपि धनराशयः ॥ २५ ॥ कामभोगप्रमुक्तस्य । किं कार्यं र-
त्नराशिभिः ॥ रत्नराशित्रयत्यागी । रोरः कथमयं जनाः ॥ २६ ॥ धन्यश्च पुण्यवानेष । वंदनीयो

महात्मभिः ॥ पूजनीयो विशेषेण । सर्वजीवाभयंकरः ॥ २७ ॥ शिष्यः स्थिरीकृतो धर्मे । ह्यभयेन सुबुद्धिना ॥ हसन्निवारितो लोकः । कलाकौशलशालिना ॥ २८ ॥ इति धर्मस्थिरीकरणेऽभयकुमारदृष्टांतः ॥ पूर्वभवाभ्यासादेव प्राणिनस्तद्वासवासिता जायंते, एतदेव दर्शयन्नाह—

॥ मूलम् ॥—तिलानां यादृशो वास—स्तैलस्यापि च तादृशः ॥ एवंविधा च संगीता । जिनैर्बोधिर्भवांतरे ॥ १ ॥ व्याख्या—तिलानां धान्यविशेषाणां यादृशो वासो वासना, तैलस्यापि तिलविकारस्यापि तादृश एव तत्प्रकार एव, दार्ष्टांतिकमाह—एवंविधा चैतत्प्रकारा संगीता प्रतिपादिता जिनैरर्हद्भिर्बोधिः प्रेत्यजिनधर्मावाप्तिर्भवांतरेऽनेतनजन्मनि. ॥ १ ॥ अत्रैवार्थे दृष्टांतमाह—

॥ मूलम् ॥—चौरयुग्ममिह ज्ञातं । वासनाविषये मतं ॥ एकस्य सुलभा बोधि—र्द्वितीयस्य च दुर्लभा ॥ १ ॥ व्याख्या—चौरयुग्मं चौरद्वंद्वमिह प्रस्तुते ज्ञातमुदाहरणं वासनाविषये संस्कारगोचरे मतं संमतं, एकस्य गुणबहुमानिनः सुलभा सुप्रापा बोधिर्जिनधर्मप्राप्तिः, द्वितीयस्य गुणमत्सरिणो दुर्लभा दुःप्रापा बोधिरिति वर्तते. ॥ १ ॥ चौरयुग्मज्ञातं त्वाह—श्हाभूतां नरौ कौचि—दन्योन्यं दृढसौहृदौ ॥ युवानौ साहसोपेतौ । स्वचौर्यबलगर्वितौ ॥ १ ॥ भोगलब्धौ समस्तेभ्रा—

पूरकद्रव्यवर्जितौ ॥ तौ च चौर्यं व्यधासिष्टां । भोगवांछाविडंबितौ ॥ २ ॥ दंडपाशिकलोकेन । सं-
प्राप्तावन्यदा तकौ ॥ नीयमानौ च तौ तेन । वध्यस्थानं तपस्विनौ ॥ ३ ॥ दृष्टवंतौ मुनीन्मान्या-
न्मान्यमानवसंहतेः ॥ साधूनां सत्क्रियां दृष्ट्वा । तयोरेको व्यचिंतयत् ॥ ४ ॥ अहो धन्यतमा एते
। मुनयो विमलक्रियाः ॥ स्वकीयगुणसंदोहा—ज्जगतां पूज्यतां गताः ॥ ५ ॥ वयं पुनरधन्याना-
मधन्या धनकांक्षया ॥ विदधाना विरुद्धानि । वध्यतां प्रापिता जनैः ॥ ६ ॥ चौर्येणोपहतात्मानो ।
यास्यामः कां गतिं मृताः ॥ ही जाता दुःस्वभावेन । लोकद्वयविरोधकाः ॥ ७ ॥ तदेवं साधु सा-
धूनां । वृत्तं वारितकल्मषं ॥ विपरीतमतोऽस्माक—मस्मात्कल्याणकं कुतः ॥ ८ ॥ अन्यः पुनरुदा-
सीनो । भवतिस्म मुनीनपि ॥ गुणिरागादवापैको । बोधिबीजं न चापरः ॥ ९ ॥ ततस्तनुकषाय-
त्वा—द्दानशीलतया च तौ ॥ नरजन्मोचितं कर्म । लब्धवंतावनिंदितं ॥ १० ॥ मृत्वा च तौ स-
मुत्पन्नौ । कौशांब्यां पुरि वाणिजौ ॥ जातौ चानिंदिताचारौ । वणिग्धर्मपरायणौ ॥ ११ ॥ जन्मांत-
रीयसंस्कारा—दाबालत्वात्तयोरभूत् ॥ अत्यंतमित्रताभावो । लोकाश्चर्यविधायकः ॥ १२ ॥ रोचते च
यदेकस्य । तदन्यस्यापि रोचते ॥ ततो लोके गतौ ख्याति—मेकचित्ताविमाविति ॥ १३ ॥ ततः

कुलोचितं कर्म । कुर्वतोर्याति वासराः ॥ अन्यदा भुवनानंदी । प्राप्तस्तत्र जिनेश्वरः ॥ १४ ॥ भगवान् श्रीमहावीर । इक्ष्वाकुकुलनंदनः ॥ वाग्भीरैर्जनसंताप—शमनेंभोदसन्निभः ॥ १५ ॥ युग्मं ॥ विदधुस्तस्य गीर्वाणा । व्याख्याभूमिं मनोहरां ॥ तत्रासौ धर्ममाचख्यौ । सनरामरपर्षदि ॥ १६ ॥ तमागतं समाकर्ण्य । कौशांबीवासिनो जनाः ॥ राजादयः समाजग्मु—र्वंदितुं तत्पदांबुजं ॥ १७ ॥ तावपि श्रेष्ठिसत्सूनू । कुतूहलपरायणौ ॥ जनेन सार्थमायातौ । जिननायकसन्निधौ ॥ १८ ॥ जिनस्तु देशयामास । मोक्षमार्गं सनातनं ॥ सत्वानां सर्वकल्याण—कारणं करुणापरः ॥ १९ ॥ ततस्तयोर्वणिक्सूनो—रेकस्य तज्जिनोदितं ॥ श्रद्धानमार्गमायाति । भाव्यते च स मानसे ॥२०॥ स्फाराक्षो मस्तकं धुन्वन् । कर्णपर्णपुटार्पितं ॥ रोमांचितः पिबत्युच्चै—र्जिनवाक्यं यथाऽमृतं ॥२१॥ तदन्यस्य तदा भाति । वालुकाकवलोपमं ॥ अन्योन्यस्य च तौ भावं । लक्षयामासतुस्तरां ॥२२॥ व्याख्याभुवः समुत्थाय । जग्मतुर्भवनं निजं ॥ तत्रैको व्याजहारैवं । भ्रातस्त्वं भावितः किल ॥२३॥ जैनवाचा न चाहं भो—स्तदत्र किमु कारणं ॥ एकचित्ततया ख्याता—वावां लोके ह्यच्चिरं ॥ ॥ २४ ॥ युग्मं ॥ इदानीमत्र संजातं । विभिन्नं चित्तमावयोः ॥ तदत्र कारणं किं स्या—दन्यो व

क्तिस्स विस्मितः ॥ २५ ॥ सत्यमेव ममाप्यत्र । विकल्पः संनवर्तते ॥ केवलं केवली नूनं । निश्च· यं नः करिष्यति ॥ २६ ॥ स एव प्रश्नितोऽत्रार्थे । तद्यावः श्वस्तदंतिके ॥ एवं तौ निश्चयं कृत्वा । प्रातर्यातौ जिनांतिके ॥ २७ ॥ युग्मं ॥

पप्रछतुस्तमाराध्य । विनयेन स्वसंशयं ॥ सोऽप्युवाच पुरैकेन । साधवो वां प्रशंसिताः ॥२८॥ न चान्येन तदेतस्य । जातं बीजस्य सत्फलं ॥ सद्बोधे पुनरन्यस्य । निर्बीजत्वेन नाजवत् ॥२९॥ एतां पूर्वजवां सेवां । जिनेनोक्तां सविस्तरां ॥ निशम्यैकस्य संजातं । स्वजातेः स्मरणं क्षणात् ॥ ॥ ३० ॥ ततोऽसौ प्रत्यये जाते । जातः संवेगजावितः ॥ जावितश्च जिनोद्दिष्टं । प्रपेदे शासनं शुजं ॥ ३१ ॥ तत्प्रतिपत्तिसामर्थ्या—च्छुजकर्मानुजावतः ॥ सिद्धिं यास्यत्यसौ काले—ऽपरः संसा· रमेव हि ॥ ३२ ॥ ननु किमित्येकः सुलभबोधिको जातो नेतर इत्याह—

॥ मूलम् ॥—सर्वदा मानसे येषां । गुरुजक्तिर्गरीयसी ॥ पुण्यानुबंधिपुण्येन । तेषां जन्मेह गीयते ॥ १ ॥ व्याख्या—सर्वदा नित्यं मानसे चित्ते येषां पुण्यप्राणिनां गुरुजक्तिर्धर्माचार्येतिकर्त· व्यतालक्षणा गरीयसी महती पुण्यानुबंधिपुण्येन कुशलानुबंधिकर्मणा, तेषां जन्मिनां जन्म जाति·

रिह जगति गीयतेऽभिधीयत इति. ॥ १ ॥ सांप्रतं पापानुबंधिपुण्यवतां लक्षणमाह—
॥ मूलम् ॥—औदासीन्यं गुरौ येषा—मृद्ध्यादि च विलोक्यते ॥ पापानुबंधिपुण्येन । तेषां
जन्म निगद्यते ॥ १ ॥ व्याख्या—औदासीन्यमुदासीनता गुरौ धर्माचार्यविषये येषां जीवानामृ-
द्ध्यादि च विलोक्यते, संपदादि च दृश्यते, पापानुबंधिपुण्येनाकुशलानुबंधिकुशलकर्मणा तेषां दे-
हिनां जन्मोत्पत्तिलक्षणं निगद्यते प्रतिपाद्यते. ॥ १ ॥ सांप्रतं पापानुबंधिपापवतां लक्षणमाह—
॥ मूलम् ॥—अभक्तिर्मानसे येषां । गुरौ भवति भूयसी ॥ पापानुबंधिपापेन । तेषां जन्मे-
ति लक्ष्यते ॥ १ ॥ व्याख्या—अभक्तिर्गुरुकर्तव्यतापरिहारलक्षणा मानसे हृदये येषामपुण्यवतां
गुरौ धर्माचार्यविषये भूयस्यतिशयमहती पापानुबंधिपापेनाकुशलानुबध्यकुशलेन तेषां पापात्मानां
जन्मोत्पत्तिरित्येवं ज्ञायत इति. ॥ १ ॥ गुरुभक्तिर्भवद्भिः कर्तव्येति प्रतिपादिताः संतो ये धृष्टोत्त-
रैस्तां शिथिलयंति तान् श्लोकद्वयेनाह—
॥ मूलम् ॥—पूर्वं कृता करिष्यामः । सांप्रतं व्याकुला वयं ॥ गुरुभक्तिंप्रति प्रोचु—र्ये तेषां न
नु विस्मृता ॥ १ ॥ कालरात्रिर्यकारूढा । अविज्ञातसमागमा ॥ समाप्यते क्षणादेव । यस्यां का-

र्यपरंपरा ॥ २ ॥ व्याख्या—पूर्वं कृता पश्चात्काले विहिता, करिष्याम आगामिनि काले विधास्या-मः, सांप्रतं वर्तमानकाले व्याकुला गृहव्यापारपरंपराकरणसमाकुलमानसा गुरुभक्तिं धर्माचार्यैतिक्र-र्तव्यतांप्रति लक्ष्यीकृत्य प्रोचुरुक्तवंतो ये केचन गुरुकर्माणस्तेषां ननु निश्चितं विस्मृता स्मृतिपथ-मतीता, का? कालरात्रिर्मरणरूपा, या काचिद्रूढा जगति प्रतीता प्रसिद्धा, अविज्ञातसमागमा अ-विज्ञातोऽलक्षितः समागमः समागमनं यस्याः सा तथा, समाप्यते निष्ठां याति क्षणादेव झटित्येव यस्यां कालरात्रौ कार्यपरंपरा समस्तप्रयोजनपद्धतिरिति. अमुमेवार्थमुपसंहरन्नाह—

॥ मूलम् ॥—किं बहुना विचारेण। यदि कार्यं सुखैर्जनाः ॥ तत्सर्वकुग्रहत्यागा—द्गुरुभक्ति-र्विधीयतां ॥ १ ॥ व्याख्या—किं? न किंचिद्बहुना प्रभूतेन विचारेण जल्पेन? यदीत्यभ्युपगमे, कार्यं प्रयोजनं सुखैः रतैर्जना लोकास्तत्तस्मात्कारणात्सर्वकुग्रहत्यागात्समस्तकुबोधपरिहारेण गुरु भक्तिर्धर्माचार्यसेवाकरणलक्षणा विधीयतां क्रियतामिति. ननु किमित्येवं गुरुभक्तेर्माहात्म्यमुपवर्ण्य-ते? उच्यते गुरूणां दुःप्रतीकारत्वात, उक्तं च—दुःप्रतिकारौ माता—पितरौ स्वामी गुरुश्च लोके-ऽस्मिन् ॥ तत्र गुरुरिहामुत्र च। सुदुःकरतरप्रतीकारः ॥ १ ॥ आगमेऽप्युक्तं—तिण्हं दुप्पडियारं स-

मणाउसो, तं जहा—अम्मापिउणो भट्टिस्स धम्मायरियस्स संपाउंवियणं, केइ पुरिसे अम्मापि-यरं सयपागसहस्सपागेहिं तेल्लेहिं अभिंगित्ता सुरहिणा गंधट्ठएणं उवट्टित्ता तिहिं उदएहिं मज्जा-वेत्ता सालंकारभूसियं करेत्ता मणुन्नथालीपागसुद्धं अठारसवंजणाउलं भोयणं भोयावेत्ता जाव-ज्जीवं पिठिवर्डिसियाए परिवहेज्जा, तेणावि तस्स अम्मापिउस्स दुप्पडियरं. अहेणं सेयं अम्मापि-यरं केवलिपन्नत्ते धम्मे आघवतित्ता परूवइत्ता ठावतित्ता भवति, तेणावि नो चेव अम्मापिउस्स सुप्पडियरं भवइ. समणाउसो केइ महठे दरिद्दं समुक्कसिज्जा, त तेणं से दरिद्दे समुक्किठे समाणे पच्छा पुरं च णं विउलभोगसमिद्धिसमं नागएयावि विहरेज्जा, त तेणं से महठे अन्नया कयाइ दरिद्दी हूयमाणे तस्स दरिद्दस्स अंतियं हव्वमागच्छेज्जा, त तेणं से दरिद्दे तस्स भट्टिस्स सव्वस्सम-वि दलयमाणे तेणावि तस्स भट्टिस्स दुप्पडियरं भवति. अहेणं से तं भट्टिं केवलिपन्नत्ते धम्मे आघवित्ता परूवइत्ता ठावइत्ता भवति, तेणावि नो तस्स भट्टिस्स सुप्पडियरं भवति. केइ तहारू-वस्स समणस्स वा माहणस्स अंतियं एगमवि आयरियं सुवयणं सोच्चा निसम्मकालमासे कालं किच्चा अन्नयरेसु देवलोएसु देवत्ताए उववन्नो, तेणं से देवे तं धम्मायरियं दुब्भिक्खदेसाउ सुभि-

रूं देसं साहरेज्जा, कंताराउ वा निक्कंतारं करेज्जा, दीहकालिएण वा रोगायंकेणं अभिभूयं विमोएज्जा, तेणावि तस्स धम्मायरियस्स दुप्पडियारं भवति. अहेणं से तं धम्मायरियं केवलिपन्नत्ताउ धम्माउ भठं समाणं भुज्जो केवलिपन्नत्ते धम्मे आघवित्ता जाव ठावइत्ता भवति तेणावि नो तस्स धम्मायरियस्स सुप्पडियारं भवति. इदं चागमवचनमवगम्य सदैव गुरुभक्तौ प्रयत्नो विधेय इति गुरुभक्तिप्रशंसाकरणं समाप्तमिति. उक्तो गुरुभक्त्यधिकारस्तद्भक्तिकारिणा च परोपकार एव यत्नो विधेयोऽतोऽत्र परोपकारकारिणां प्रशंसोच्यते. तत्र चायं श्लोकः—

॥ मूलम् ॥—उत्पद्यंते विनश्यंति । कोटिशः क्षुद्रजंतवः ॥ परार्थबद्धबुद्धीनां । सतां पुण्यैः समुद्भवः ॥ १ ॥ व्याख्या—उत्पद्यंते जायंते, विनश्यंति म्रियंते कोटिशो बहुशः क्षुद्रजंतवोऽसारसत्वाः. उत्तरार्धेन तु विपर्ययमाह—सतां सत्पुरुषाणां पुण्यैः कुशलकर्मभिः समुद्भवः समुत्पादः, किंविशिष्टानां सतां? परार्थे परप्रयोजने बद्धा दत्ता बुद्धिर्मतिर्यैस्ते तथा तेषामिति. ॥ १ ॥ संतश्च स्वल्पा एव भवंतीति दर्शयन्नाह—

॥ मूलम् ॥—परोपकारप्रवणाः । सदा स्वार्थपराङ्मुखाः ॥ क्वचित्क्वचिद्विलोक्यंते । विरलाः

सज्जना जनाः ॥ १ ॥ व्याख्या—परेषामुपकार उपकृतिस्तत्र प्रवणाः प्रह्वाः सदा सर्वदा स्वार्थपराङ्मुखाः स्वप्रयोजनविमुखास्त एवंविधगुणभाजो जनाः सज्जनाः संतश्च ते जनाश्च सज्जनाः क्वचित्क्वचिद्विलोक्यंते प्रतिनियतदेशकालादौ, न सर्वत्र इति. ॥ १ ॥ यतस्त एवंविधा अत आह—

॥ मूलम् ॥—जन्मापि च प्रमोदाय । शोकाय च तदत्ययः ॥ अशिष्टानां तु लोकाना—मुभयस्मिन विपर्ययः ॥ १ ॥ व्याख्या—जन्माप्युत्पादोऽपि प्रमोदाय हर्षाय, आस्तां वृद्धिः, शोकाय च तदत्ययस्तेषां सतामत्ययो विनाशः शोकाय दुःखाय जनानामिति गम्यते. अशिष्टलोकानामसज्जनानामुभयस्मिन् जीविते मरणे च विपर्ययो हर्षाभावशोकाभावलक्षणः ॥ १ ॥ ननु किमिति संतः स्तूयंते ? यतो धराधरादयोऽपि महत्वगांभीर्यादिगुणोपेता वर्तंते, अत आह—

॥ मूलम् ॥—धराधरा महीयांसो । गंभीरा वारिराशयः ॥ तथापि च समं शिष्टै—रौपम्यं लेभिरे न ते ॥ १ ॥ व्याख्या—धरां धरणीं धरंतीति धराधराः पर्वता हिमवदादयो महीयांसोऽतिशयमहांतः, गंभीरा वारिराशय इति, गंभीरा अलब्धमध्या वारिराशयो जलाशया लवणसमुद्रादयः, यद्यप्येवंविधा एते तथापि च समं शिष्टैरौपम्यं लेभिरे न ते इति, तथापि, अपिशब्दस्तेषां गुणा

धिक्यसूचनार्थः, समं सार्धं शिष्टैः सद्भिरौपम्यं साम्यं लेभिरे लब्धवंतो न नैव ते धराधरादय इति. ॥ १ ॥ ननु किमिति संतस्तेभ्योऽपि समतिरिच्यंते? अत आह—

॥ मूलम् ॥—येषां चित्तं च वित्तं च । वचः कायो विनश्वरः ॥ परेषामुपकाराय । वेधसेह विनिर्मितः ॥ १ ॥ व्याख्या—येषां सतां चित्तं मनो, वित्तं धनं, कायो देहो विनश्वरः क्षणक्षयी परेषामुपकाराय अन्येषामुपकृतये वेधसेह विनिर्मितो वेधसा धात्रेह जगति विनिर्मितः कृत इति. ॥ १ ॥ सांप्रतं सत्पुरुषाणामेव शाखिभिः सह साम्यमुपदर्शयन्नाह—

॥ मूलम् ॥—आत्मानं दुःस्थितं कृत्वा । परं कुर्वंति सुस्थितं ॥ यथा वृक्षास्तथा संतः । परोपकृतये रताः ॥ १ ॥ व्याख्या—आत्मानं स्वं दुःस्थितं कृत्वा दुःखितं विधाय परं कुर्वंति सुस्थितं, परमात्मव्यतिरिक्तं कुर्वंति विदधति सुस्थितं सुखितं यथा वृक्षास्तथा संतः, यथा येन प्रकारेण वृक्षा महीरुहास्तथा तेनैव प्रकारेण संतः सज्जनाः परोपकृतये रताः, परेषामुपकृतिरुपकारस्तत्र रता आसक्ता इति. ॥ १ ॥ एतदेव भावयति—

॥ मूलम् ॥—छायया सुखयंत्यन्यं । सहंते स्वयमातपं ॥ पुष्पंति च परस्यार्थे । फलंति च

महाद्रुमाः ॥ १ ॥ व्याख्या—छायया सुखयंत्यन्यं, छायया आतपाभावलक्षणया सुखयंति सुखिनं कुर्वंत्यन्यं स्वव्यतिरिक्तं, सहंते स्वयमातपं, सहंते मर्षयंति स्वयमात्मना आतपमौष्ण्यं, पुष्पंति च परस्यार्थे, विकसंति च परस्यार्थे आत्मव्यतिरिक्तस्य प्रयोजनाय, फलंति च फलवंतो भवंति च परस्यार्थे इति संबंधः, ते महाद्रुमा वृक्षा इति. ॥ १ ॥ ननु स्वोदरभरणमेव संगतं, किमन्येनेत्याह—

॥ मूलम् ॥—स्वोदरं भ्रियते कष्टा—द्दिनांते वायसैरपि ॥ परार्थकरणासक्तो । यो जीवति स जीवति ॥ १ ॥ व्याख्या—स्वोदरं स्वकीयमुदरं जठरं भ्रियते पूर्यते कष्टाद्दुःखाद्दिनांते दिनमध्ये वायसैरपि काकैरपि, परं ते जीवन्मृतकाः, यतोऽभ्यधायि—जीवंतो मृतकाः पंच । श्रूयंते किल भारते ॥ दरिद्रो व्याधितो मूर्खः । प्रवासी नित्यसेवकः ॥ १ ॥ अतः परार्थकरणासक्तः परप्रयोजननिष्पादनसमर्थो यो जीवति यः सत्पुरुषो जीवति प्राणान् धारयति स एव जीवति, शेषा जीवन्मृतका इति. ॥ १ ॥ सांप्रतं सत्पुरुषाणामेव मेघैः सहोपमानमाह—

॥ मूलम् ॥—क्लेशेनोपार्ज्य वित्तानि । ददुर्धर्मे नरोत्तमाः ॥ यथा लोकोपकाराय । पयः पीत्वा पयोधराः ॥ १ ॥ व्याख्या—क्लेशेनोपार्ज्य वित्तानि क्लेशेन दुःखेनोपार्ज्यार्जयित्वा च वि-

त्तानि द्रव्याणि, तथा च—अर्थानामर्जने दुःख—मर्जितानां च रक्षणे ॥ आये दुःखं व्यये दुःखं । धिगर्थं दुःखकारणं ॥ १ ॥ ददुर्धर्मे नरोत्तमा ददुरयच्छन् धर्मे पुण्यनिमित्तं नरोत्तमा उत्तमपुरुषाः, यथा लोकोपकाराय जनहितकृते पयो जलं पीत्वात्मसाद्विधाय पयोधरा मेघा इति. ॥ १ ॥ ननु किमिति संतः पुनः पुनः शस्यंत इत्याह—

॥ मूलम् ॥—कथं संतो न शस्यंते । हिमांशुकरणोज्ज्वलाः ॥ येषां सदुपकारेण । जायंते सुखिनो जनाः ॥ १ ॥ व्याख्या—कथं केन प्रकारेण संतः सज्जना न शस्यंते? न श्लाघ्यंते? हिमांशुकरणोज्ज्वलाः, हिमांशुश्चंद्रमास्तस्य किरणाः करास्तद्वदुज्ज्वला निर्मलाः, येषां सदुपकारेण येषां सतां सुंदरोपकृत्या जायंते भवंति सुखिनः शर्मभाजो जना लोकाः, तथाहि—उपकर्तुं प्रियं वक्तुं । कर्तुं स्नेहमकृत्रिमं ॥ सज्जनानां स्वभावोऽयं । केनेंदुः शिशिरीकृतः ॥ १ ॥ अधुना सज्जनानां चंदनचंद्रयोश्च लोकानंदविधायकत्वमाह—

॥ मूलम् ॥—सज्जनाश्चंदनं चंद्रो । यदि न स्युर्महीतले ॥ तदा दुःखोपतप्तानां । किं स्यान्निर्वृत्तिकारणं ॥ १ ॥ व्याख्या—सज्जनाः शिष्टजनाश्चंदनं मलयजं, चंद्रः प्रसिद्धः, यदि न स्युर्म-

ह्वीतले, यदि चेन्न भवेयुः पृथ्वीतले, तदा तस्मिन्न काले दुःखोपतप्तानामसातसंघातपीडितानां किं स्यान्निर्वृत्तिकारणं? किं भवेत्स्वास्थ्यनिमित्तं? न किंचिदित्यर्थ इति. ॥ १ ॥ अथ रविकरैः सह सज्जनानां साम्यमुपदर्शयन्नाह—

॥ मूलम् ॥—अज्ञानध्वांतसंतान—विध्वंसनपटीयसः ॥ रवेरिव कराः संतः । परोपकृतिकारिणः ॥ १ ॥ व्याख्या—अज्ञानमेव ध्वांतमंधकारं तस्य संतानः प्रवाहस्तस्य विध्वंसनं विनाशनं तत्र पटीयसोऽतिशयदक्षा अज्ञानध्वांतसंतानविध्वंसनपटीयसो रवेरिव करा भानोरिव रश्मयः संतः शिष्टजनाः परोपकृतिकारिणः स्वव्यतिरिक्तजनोपकारविधायिनः ॥ १ ॥ अथ सज्जनानामसाधारणं गुणमभिधित्सुराह—

॥ मूलम् ॥—अर्थाभावेऽपि दातारः । सत्यसंधा निराकुलाः ॥ सदारंभाः सदा संतो । निर्भया व्यसनागमे ॥ १ ॥ कार्यशतेऽप्यसंमूढा । गूढमंत्रा दिवानिशं ॥ परार्थमेव कुर्वंति । प्राणैरपि धनैरपि ॥ २ ॥ व्याख्या—अर्थाभावेऽपि धनं विनापि दातारो दायकाः सत्यसंधाः सत्यभाषिणो निराकुला निरुत्सुकाः सदारंभाः सद्व्यापाराः सदा नित्यं संतः सज्जनाः, निर्भया निर्भीका व्यसना-

गमे विपदागमे. ॥ १ ॥ तथा कार्यशतेऽपि प्रयोजनशतेऽप्यसंमूढा अविक्लुप्तधियो गूढमंत्रा अन निज्ञातपर्यालोचा दिवानिशं रात्रिंदिवं परार्थमेव परप्रयोजनमेव कुर्वंति विदधति प्राणैरुछ्वासादिभिर्दशप्रकारैः, धनैर्वित्तैः, अपिशब्दः सतां परोपकरणैकचित्ततां सूचयति, यतः—किं चंडेण महोदधेरुपकृतं दूरेऽपि संतिष्ठता । वृद्धौ येन विवर्धते व्रजति च क्षीणे क्षयं सागरः ॥ आ ज्ञातं परकार्यनिश्चितधियां कोऽपि स्वभावः सतां । स्वैरं गैरपि येन यांति तनुतां दृष्ट्वा परं दुःखितं ॥ १ ॥

॥ मूलम् ॥—कैः कैर्वा न प्रशस्यंते । परोपकृतिकारिणः ॥ कुर्वंतो जनतानंदं । नरचंद्रकुमारवत ॥ १ ॥ व्याख्या—श्लोकोऽयं स्पष्टः, नरचंद्रकुमारदृष्टांतश्चायं, तद्यथा—समस्ति भारते वर्षे । रामाजनविराजिता ॥ सत्पुरुषसमाकीर्णा । विस्तीर्णत्रिकचत्वरा ॥ १ ॥ श्रीवासुपूज्यसर्वज्ञ—सत्कल्याणसुरागमा ॥ मंदिरैर्मंदरोदारै—र्मण्डिता च समंततः ॥ २ ॥ उद्दामकाननोद्यानैः । सदा मंडितभूतला ॥ सौराज्येन सुखावासा । चंपानाममहापुरी ॥ ३ ॥ त्रिभिर्विशेषकं ॥ केशेषु बंधनं यस्यां । दंडश्छत्रेषु श्रूयते ॥ वाहनं वाजिनामेव । जने नैव विलोक्यते ॥ ४ ॥ पालयति महीपाल—स्तां पुरीं पुरुषोत्तमः ॥ नरसिंहाभिधो वीरः । सदा नीतिपरायणः ॥ ५ ॥ दुर्वारवैरिवारेण ।

रणे नैव विनिर्जितः ॥ सत्वावर्जिततया यस्तु । वृतो तोषाज्जयश्रिया ॥ ६ ॥ द्वितीयाचंद्रलेखेव । ज-
नानंदविधायिनी ॥ आसीत्प्रियतमा तस्य । चंद्रलेखेति विश्रुता ॥ ७ ॥ भुंजानस्य तया सार्धं ।
पंचापि विषयानलं ॥ कतिचिद्वासरा जग्मु—र्धर्मार्थावपि सेवतः ॥ ८ ॥ अथ पुत्रः समुत्पन्नः ।
सल्लक्षणविराजितः ॥ सौम्यो जनमनोमोद—दायी चंद्रसमाननः ॥ ९ ॥ नरचंद्राभिधो रक्त—
कोमलकरपल्लवः ॥ वर्धमानः शरीरेण । संजातः स कलोचितः ॥ १० ॥ युग्मं ॥ स्वधिया स्वल्पका-
लेन । गृहीताः सकलाः कलाः ॥ यौवनं च समारूढो । लोकलोचनशोभनं ॥ ११ ॥ उदग्रयौव-
नस्थोऽपि । कलाभ्यासपरायणः ॥ कामबाणव्यथातीतो । निर्वाहयति वासरान् ॥ १२ ॥ अन्यदा
चिंतयामास । नरचंद्रः स्वमानसे ॥ परोपकारिणामेव । सफलं जन्म मे मतिः ॥ १३ ॥ कर्तव्योऽ-
सौ सदा सद्भि—र्जीवितेनापि सत्वरं ॥ जायंते जंतवो येन । सुखिनो जगतीतले ॥ १४ ॥ उप-
कारपराः संतो । दुर्जनास्त्वपकारिणः ॥ एतदेव स्फुटं लिंगं । तयोरिह निगद्यते ॥ १५ ॥ आसा-
द्य मानुषं जन्म । सदा कार्यो मनीषिणा ॥ उपकारः परो नित्य—मन्यथा जन्म हारितं ॥ १६ ॥
उपकारोऽपि विज्ञेयो । निराशंसेन चेतसा ॥ विधीयते विशालेन । यः सदा शुद्धबुद्धिना ॥ १७ ॥

यतोऽभ्यधायि—अयं निजः परो वेति । गणना लघुचेतसां ॥ उदारचरितानां तु । वसुधैव कुटुं-
बकं ॥ १८ ॥ आनंदबिंदुसंदोह—दायी कामिजनप्रियः ॥ अवतीर्णस्तदा रम्यो । वसंतसमयो ज-
ने ॥ १९ ॥ धरंति मंजरीवृंदं । सहकारा मनोहरं ॥ पुष्पिताः किंशुका यत्र । रक्ता इव समंततः
॥ २० ॥ अशोकः पल्लवोल्लासी । कलकंठरवाकुलः ॥ सकामकामिनीपाद—पातसंजातसंमदः ॥
॥ २१ ॥ किंबहुना समस्तापि । वनराजी विराजिता ॥ वसंतसमये जाते । रम्यया कुसुमश्रिया ॥
॥ २२ ॥ उत्फुल्लफुल्लकिंजल्क—पानसंजातसंमदाः ॥ अलयस्तत्र गुंजंति । मंदं श्रुतिसुखावहं ॥
॥ २३ ॥ निर्गछंति महाजन्त्या । चच्चर्यः सुमनोहराः ॥ आंदोलिका विधीयंते । शाखिशाखासु
सुंदराः ॥ २४ ॥ गायनाः क्वापि गायंति । रम्यमानंदपूरिताः ॥ पिबंति क्वापि मद्यानि । जना ह-
र्षाकुला भृशं ॥ २५ ॥ कामुकाः क्वापि कांताभिः । समं जल्पंति नर्मणा ॥ क्वापि देहस्य शृंगारं ।
कुर्वंति वसनादिभिः ॥ २६ ॥ नैव लोके जनः कोऽपि । विद्यते यो न गंजितः ॥ सरागकामदे-
वेन । वसंते तु विशेषतः ॥ २७ ॥ उद्दामकाममत्तेभ—कुंभनिर्भेदकेसरी ॥ वसंतसमये नूनं ।
निर्विकारो जिनेश्वरः ॥ २८ ॥

नरचंद्रो महासत्वो । राजसूनुः सुमानसः ॥ आलोक्य तं पुरीलोकं । सारशृंगारशालिनं ॥
॥ २९ ॥ स्फारचित्ततया स्पष्ट—श्चिंतां चक्रे विशालधीः ॥ अस्मिन्नसारसंसारे । किं विलासैर्मनी-
षिणां ॥ ३० ॥ स्तोकावस्थैर्विशेषेण । वसंतोत्सवसंभवैः ॥ बालक्रीडागृहप्रायै—र्विद्वज्जनजुगुप्सि-
तैः ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ तेऽपि वित्तेन लोकानां । भूयसा स्युः सतामलं ॥ काकमांसमिवो-
च्छिष्टं । वर्जनीया विशेषतः ॥ ३२ ॥ तथाहि—काकमांसं तदुच्छिष्टं । तुच्छमत्यंतदुर्बलं ॥ भक्षिते-
नापि किं तेन । तृप्तिर्येन न जायते ॥ ३३ ॥ एवं तुच्छेष्वसारेषु । यद्विलासेषु रज्यते ॥ जनस्त-
त्राज्ञता हेतु—र्हतात्मशरणं तथा ॥ ३४ ॥ शुभचित्तः समालोच्य । चेतसा रहसि स्थितः ॥ क-
लाभ्यासपरः शांतः । समास्तेऽसौ निराकुलः ॥ ३५ ॥ महाराजोऽथ पप्रच्छ । नरसिंहो जनं निजं ॥
किं भो नरचंद्राद्या । लोकाः सर्वेऽपि मामकाः ॥ ३६ ॥ संजातेऽथ मनोमोदे । माधुमासेऽतिशा-
लिनि ॥ क्रीडंति वा न वेत्यत्र । सत्यमेव निगद्यतां ॥ ३७ ॥ युग्मं ॥ ततो जनो जगादैनं । म-
हीनाथं कृतांजलिः ॥ तव पुत्रं विना नाथ । शेषाः क्रीडंति मानवाः ॥ ३८ ॥ तद्वचनं समाकर्ण्य ।
शंकितो निजमानसे ॥ उत्थाय सहसा स्नेहा—त्कुमारांतिकमागतः ॥ ३९ ॥ कुमारोऽपि समुत्थाय

। विनयानतविग्रहः ॥ ऊचे कृतशिरःपाणिः । कार्यं तात निगद्यतां ॥ ४० ॥ राजाह सत्कुले जन्म । रूपं रोगविवर्जितं ॥ वयोऽतिसुंदरं पुत्र । वित्तं तव गृहेऽधिकं ॥ ४१ ॥ परिजनो विनीतश्च । स्वाज्ञैश्वर्यं च सुंदरं ॥ जनानुरागः सौभाग्यं । जातं ते पुण्ययोगतः ॥ ४२ ॥ विलासकारणे यूनां । वसंते समुपस्थिते ॥ विलासविमुखेनेह । मुनिनेव किमास्यते ॥ ४३ ॥ कुमारः प्राह—श्रूयतां कारणं तात । येन न क्रियते मया ॥ विलासो यौवनस्थेन । वसंतेऽपि समागते ॥ ४४ ॥ कायश्चकास्ति रूपेण । रूपं भाति सयौवनं ॥ शृंगारैर्यौवनं भाति । शृंगारा अपि संपदा ॥ ४५ ॥ अथवा—सुगुणै रूपमाभाति । रूपं भाति सुशीलतः ॥ शोभते सर्व एवेह । लोको लक्ष्म्या विशालया ॥ ४६ ॥ विवाहवृद्धियात्रासु । मित्राणां संगमे तथा ॥ जायते मानभंगो हि । मानिनामल्पसंपदां ॥ ४७ ॥ यथाकाशं विना चंद्रं । सरोऽपि कमलैर्विना ॥ शोभते नैव लोकेऽस्मिं—स्तथा भोगो धनं विना ॥ ४८ ॥ उन्नतिर्जायते लोके । निःसंगानां धनं विना ॥ विलासिनां विना वित्तै—र्जायते मानखंडनं ॥ ४९ ॥ तस्मादलं विलासैर्नः । स्वल्पकालैः स्वपोषकैः ॥ श्रुत्वेदं वचनं राजा । चिंतयामास मानसे ॥ ५० ॥ विलासचित्तो मत्सूनु—र्महेच्छोऽयं नरोत्तमः ॥ नैवास्य

जायते तोषो । विलासैर्दानवर्जितैः ॥ ५१ ॥ परोपकारो माध्यस्थ्यं । दाक्षिण्यं दानशीलता ॥ सतामुदारचित्तानां । यतोऽमी सहजा गुणाः ॥ ५२ ॥ ततो राजा बभाणैवं । रंजितस्तद्गुणैरलं ॥ अस्ति वित्तं तवायत्तं । कुरु वत्स समीहितं ॥ ५३ ॥ आदिदेश ततो राजा । भांडागारिकमंजसा ॥ दातव्यं भोस्त्वया सर्वं । कुमारो यत्समीहते ॥ ५४ ॥ एवं सर्वं समादिश्य । राजा स्वार्थमशिश्रियत् ॥ ततः कुमारवाक्येन । पुर्यामुद्घोषणे कृते ॥ ५५ ॥ समायाता जनाः सर्वे । युवानः सविशेषतः ॥ कुमारशासनात्तुष्टा । मधुमासदिदृक्षवः ॥ ५६ ॥ युग्मं ॥ कुमारस्तानथ प्रेक्ष्य । चिंतयामास मानसे ॥ आत्मतुल्यानिमान् कुर्वे । सहस्रादिप्रदानतः ॥ ५७ ॥ यौवनं जीवितं वित्तं । व्यापारो रूपमेव वा ॥ तदेव शस्यते सद्भि—रुपकाराय देहिनां ॥ ५८ ॥ ततः समानतांबूलं । तुल्याभरणभूषणं ॥ समानवस्त्रसत्पुष्पं । तुल्ययानादिवाहनं ॥ ५९ ॥ तुल्यकर्पूरसन्मिश्र—श्रीखंडादिविलेपनं ॥ कारयित्वा जनं सर्वं । कुमारो हृष्टमानसः ॥ ६० ॥ विहितस्फारशृंगारः । पुरमध्याद्विनिर्ययौ ॥ स्थाने स्थाने इमाः श्रव्याः । शृण्वन् वाचो जिनोदिताः ॥ ६१ ॥ त्रिभिर्विशेषकं ॥ धन्योऽयं पुण्यवानेष । श्लाघ्यं जन्मास्य गण्यते ॥ येनेप्सितार्थदानेन । सर्वोऽयं तोषितो जनः

॥ ६२ ॥ ततो गत्वा वरोद्याने । पुष्पसुंदरनामनि ॥ कुमारः सह लोकेन । प्रमोदभरनिर्भरः ॥ ॥ ६३ ॥ दीनानाथादिलोकेभ्यो । याचकादिजनाय च ॥ वांछातीतं ददद्द्रव्यं । संक्रीमति यथे च्छया ॥ ६४ ॥ युग्मं ॥ एवमर्थव्ययं वीक्ष्य । भांडागारनियुक्तकः ॥ राज्ञे निवेदयामास । सर्वं पुत्रविजृंभितं ॥ ६५ ॥ ददाति ते महाराज । पुत्रो दानमनर्गलं ॥ सहस्रलक्षकोटीभि—र्दीनादिभ्यः कुबेरवत् ॥ ६६ ॥ कतिचिद्वासरानेष । यद्येवं देव दास्यते ॥ तदा नूनं महाराज । रिक्तः कोशो भविष्यति ॥ ६७ ॥

श्रुत्वेदं वचनं राजा । कोशक्षयनिवेदकं ॥ दूनितो मानसे बाढं । कुमारंप्रति रंहसा ॥ ६८ ॥ आहूय निष्ठुरैर्वाक्यै—रुपालब्धकुमारकं ॥ मूढबुद्धिर्न जानासि । धनानामर्जने श्रमं ॥ ६९ ॥ युग्मं ॥ किं दुर्गो हस्तिनो देशो । वाजिनो वातिसुंदराः ॥ इयद्वित्तव्ययात्सिद्धं । यत्ते तन्मे निवेदय ॥ ७० ॥ कुमारोऽपि समाकर्ण्य । सोपालंभं वचः पितुः ॥ समुत्थाय समायातो । दुःखितो निजमंदिरं ॥ ७१ ॥ तत्रापि शयने सुप्तो । रात्रौ चिंतितवानसौ ॥ मानभंगे हि यद्दुःखं । तन्मृत्योरतिरिच्यते ॥ ७२ ॥ यतः—मरणे स्यात्क्षणं दुःख—माजन्मं मानखंडने ॥ विषहंते कथं ना·

म । मानिनो मानखंडनं ॥ ७३ ॥ सह्यतां मानभंगो हि । साधुभिर्मोक्षकांक्षिभिः ॥ मानिभिः सह्यते नैव । तद्भना एव येन ते ॥ ७४ ॥ सह्यते मानभंगो हि । निर्विज्ञानैर्नपुंसकैः ॥ जन्मभूमिसमासक्तै—र्मंडलैरिव मानवैः ॥ ७५ ॥ इत्यादि चिंतयित्वाथ । खड्गपाणिर्निरुत्सुकः ॥ रजन्यां निर्ययौ धीर । एकाकी सुविचक्षणः ॥ ७६ ॥ कथानकविशेषेण । पुरे पारेतकाभिधे ॥ सायं संप्राप तत्रापि । सुप्तोऽसौ देवमंदिरे ॥ ७७ ॥ अथ निद्राविरामेऽसा—वासन्ने गिरिगह्वरे ॥ वह्निमालोकयामास । ज्वलंतं मनुजोत्तमः ॥ ७८ ॥ किंकारणो भवेदग्निः । कौतुकाक्षिप्तमानसः ॥ समुत्थाय ततो धीरो । ज्वलनाभिमुखं ययौ ॥ ७९ ॥ अपश्यद्धामतस्तत्र । धातुर्वादिजनान् बहून् ॥ ताम्रप्रयोगसमायुक्तान् । भूरिवित्ताभिलाषिणः ॥ ८० ॥ आशीर्वादं ददौ तेभ्यः । सिद्धिरस्तु समीहिते ॥ स्वागतं तेऽपि जल्पंतः । कुमाराभिमुखं गताः ॥ ८१ ॥ इतश्च पुण्ययोगेन । सिद्धं स्वर्णमनुत्तरं ॥ अहो पुण्यवतां योगः । सर्वकल्याणकारणं ॥ ८२ ॥ लात्वा स्वर्णं ततः प्रोचु—स्ते तुष्टाः कुमरं प्रति ॥ गृहाणेदं महाभाग । स्वपुण्यैः समुपार्जितं ॥ ८३ ॥ यतः—एवंविधा समस्तापि । सामग्री हेमसाधिका ॥ संजाता न पुनर्जातं । जातरूपं त्वया विना ॥ ८४ ॥ ततोऽवोचत्कुमारस्तान् । स्व-

भावोदारया गिरा ॥ युष्मदीयमिदं स्वर्णं । न ममास्ति प्रयोजनं ॥ ८५ ॥ श्रुत्वेदं विस्मिताः सर्वे ।
चिंतां चक्रुः स्वचेतसि ॥ महीनाथसुतः कोऽपि । परोपकृतिकारकः ॥ ८६ ॥ लात्वा स्वर्णं स्वके
स्थाने । ततः सर्वेऽपि ते गताः ॥ कुमारोऽपि महीं भ्राम्यन् । पुरे भोगपुरे गतः ॥ ८७ ॥ दृष्ट्वा
तत्र वरोद्यानं । नानावृक्षसमाकुलं ॥ विश्रामहेतवे तत्र । प्रविष्टो हृष्टमानसः ॥ ८८ ॥ उद्यानदी-
र्घिकानीरे । स्नात्वा पीत्वा च तज्जलं ॥ अशोकवरवृक्षस्य । छायायां स सुप्तवान् ॥ ८९ ॥ इत-
श्चापुत्रको राजा । मृतस्तत्र महापुरे ॥ ततश्च पंच दिव्यानि । मंत्रिभिरभिषेचिरे ॥ ९० ॥ तत-
स्तानि चिरं भ्रांत्वा । तत्र सर्वत्र पत्तने ॥ निर्गत्य काननस्थस्य । कुमारस्यांतिकं ययुः ॥ ९१ ॥
ततो राज्याभिषेकाणा—भिषिक्तः कुमरस्तकैः ॥ हस्तिस्कंधसमारूढो । महर्ध्या पुरमाविशत ॥९२॥
जातो राजा महाकोशः । प्रचंडश्चंडशासनः ॥ ख्यातकीर्तिः प्रजानंदः । साधिताशेषभूतलः ॥९३॥
अन्यदा ये पुरा दृष्टा । धातुर्वादकमानवाः ॥ भूपेन ते समागत्य । नत्वा भूपं निषेदिरे ॥ ९४ ॥
ततः सन्मानिता राज्ञा । तांबूलादिप्रदानतः ॥ पृष्ट्वा च कुशलोदंतं । भोजिता निजमंदिरे ॥९५॥
ततो दत्तं धनं भूरि । प्रासादाश्च मनोहराः ॥ उक्ताश्च मत्समीपे भो । संतिष्ठत निराकुलाः ॥९६॥

श्रुत्वेदं तेऽपि सानंदा—स्तस्थुर्विलसतो धनं ॥ पूजिता राजलोकेन । भूपतेरपि वल्लभाः ॥ ९७ ॥
अन्यदा भणिता राज्ञा । भूरिद्रव्यार्थिना सता ॥ यथा भो मम वाक्येन । स्वर्णसिद्धिर्विधीयतां ॥
॥ ९८ ॥ युष्माकं सर्वमेवात्र । साहाय्यं प्रकरोम्यहं ॥ क्रियतां सर्वसामग्री । पात्यतां भूरि कांचनं
॥ ९९ ॥ ततस्तेऽपि विधायाशु । सामग्रीमखिलामपि ॥ स्वर्णसिद्धिं प्रयत्नेन । प्रवृत्ताः कर्तुमंजसा
॥ १०० ॥ राज्ञः पुण्यानुभावेन । पातितं भूरि कांचनं ॥ तुष्टो राजा ततश्चैत—श्चिंतयामास मान-
से ॥ १ ॥ वांछितार्थप्रदानेन । विधाय निःऋणां महीं ॥ करोमि सुस्थितं लोकं । सांप्रतं सर्वमेव
हि ॥ २ ॥ विचिंत्यैवं ततो राजा । समाहूय स्वमंत्रिणः ॥ बभाण भणितिप्रौढः । प्रौढवाक्यैरिदं
मुदा ॥ ३ ॥ अहोऽहो मंत्रिणः सर्वे । समाहूय जनं ततः ॥ पृच्छ्यतां येन यावच्च । दातव्यं वि-
द्यते धनं ॥ ४ ॥ तत्तावद्दीयतां तस्मै । क्रियतां निःऋणां महीं ॥ ततस्तूर्णं तथा चक्रे । मंत्रिभी
राजशासनं ॥ ५ ॥ सर्वेषु चैव देशेषु । सर्वग्रामपुरादिषु ॥ दत्तं यथेप्सितं द्रव्यं । सर्वलोकाय भू-
भुजा ॥ ६ ॥ सर्वपाखंडिलोकानां । सर्वदीनादिदेहिनां ॥ चकारोपकृतिं राजा । वांछातीतं धनं द-
दन् ॥ ७ ॥ एवं च कुर्वतो राज्ञो । लोकं सर्वत्र सुस्थितं ॥ गतः कालो बहुर्जातो । कीर्तिः शुभ्रा

जगत्त्रये ॥ ८ ॥
अन्यदा स्वर्गनाथेन । स्वर्गे स्वर्गौकसां पुरः ॥ सदौदार्यगुणो राज्ञो । वारंवारं प्रशंसितः ॥
॥ ९ ॥ यथा जो जो सुराः श्रीमा—न्नरचंद्रो नरेश्वरः ॥ सर्वदा सर्वलोकाय । ददात्येव हि वांछि-
तं ॥ १० ॥ वाक्यमेतत्सुरेंद्रस्य । द्वावश्रद्दधतौ सुरौ ॥ परीक्षार्थं समायातौ । राज्ञो जोगपुरं पुरं ॥
॥ ११ ॥ तत्रैकः शक्ररूपेण । जगाम नृपसन्निधौ ॥ जगादेवं स्फुटैर्वाक्यै—र्नराधीशं कृतांजलिः ॥
॥ १२ ॥ अहं हि सूरराजस्य । सूरसेनाभिधः सुतः ॥ श्रीमच्चंद्रपुरस्वामी । सुप्रतीतो रिपुस्तव ॥१३॥
तावकीनैर्महादं मै—र्निर्जितो लूषिता पुरी ॥ सर्वं मम हृतं राज्यं । पुरमंतःपुरं तथा ॥ १४ ॥ वि
योजितः स्वबंधुभ्यो । भ्रंशितो राज्यसंपदः ॥ एकाक्यत्र चिरं भ्रांतो । महीपीठे सुदुःखितः ॥१५॥
भ्राम्यता च मयाश्रावि । कीर्तिर्दानोद्भवा तव ॥ ततो मया व्यचिंत्येव । किमन्यैस्तुच्छकैर्जनैः ॥१६॥
सेवितैर्याचितैर्वापि । कृपणैर्द्रव्यलोलुपैः ॥ याचिता अपि ते दद्युः । शतं पंचशतानि वा ॥ १७ ॥
युग्मं ॥ तदौदार्यगुणोपेतं । नरचंद्रनरेश्वरं ॥ दातारमीप्सितार्थस्य । शत्रुमप्याश्रयाम्यहं ॥ १८ ॥ एवं
विचिंत्य राजेंद्र । समायातस्त्वदंतिके ॥ न कार्यः प्रार्थनाभंगः । किंचित्तुच्छं प्रयच्छ मे ॥ १९ ॥ नृ-

पतिः प्राह याचस्व । यद्भवतः प्रतिभासते ॥ स प्राह दीयतां तर्हि । राज्यं राजेंद्र मे निजं ॥२०॥
ततश्च नरचंद्रेण । स्वभुजोदारचेतसा ॥ तृणाय मन्यमानेन । तस्मै राज्यमदीयत ॥ २१ ॥ यतः—
कियती पंचसहस्री । कियती लक्षा च कोटिरपि कियती ॥ अनुकंपामयमनसां । सा रत्नवती वसु-
मती कियती ॥ २२ ॥ किमत्र चित्रं यत्संतः । परानुग्रहकारिणः ॥ न हि स्वदेहशांत्यर्थं । जायंते
चंदनद्रुमाः ॥ २३ ॥ ततो राजा विनिष्क्रांतः । पुरात्खड्गसहायकः ॥ जगाम बहिरुद्याने । सानंदो
दैन्यवर्जितः ॥ २४ ॥ तत्रैवं चिंतयामास । विशालोदारचेतसा ॥ परोपकारतानिष्ठो । महेच्छः स्वच्छ-
मानसः ॥ २५ ॥ तद्यथा—पातालान्न विमोचितो बत बलिर्मृत्युर्न नीतो क्षयं ॥ नो मृष्टं शशलांछ-
नस्य मलिनं नोन्मूलिता व्याधयः ॥ शेषस्यापि धरां विधृत्य न कृतो भारापहारः क्षणं । चेतः स-
त्पुरुषाभिमानकलुषं मिथ्यैव किं खिद्यसे ॥ २६ ॥

यावदेवं नराधीशः । संतिष्ठति विचिंतयन् ॥ तावच्छशकव्याधस्य । रूपद्वयं विकुर्व्य सः ॥२७॥
देवो द्वितीयकस्तूर्णं । समायातो नृपांतिकं ॥ तत्रासौ शशकः शीघ्रं । राज्ञः पादांतमाश्रितः ॥२८॥
राजन् मां रक्ष रक्षेति । भाष्यमाणो भयातुरः ॥ त्वमेवात्र मम त्राण—मत्राणत्राणकारकः ॥ २९ ॥

ततः प्रछादितः स्वीय—वस्त्रे तेन स भूभुजा ॥ आयातस्तदनु व्याधो । बिभ्राणः सशरं धनुः ॥
॥ ३० ॥ नृपस्य पुरतो भूत्वा । बभाणैवं स्फुटाक्षरैः ॥ शशकोऽयं महाराज । लब्धोऽत्यंतक्षुधालुना
॥ ३१ ॥ तदर्पयस्व येनैनं । भक्षयामि बुभुक्षितः ॥ राजाह किं तवानेन । याचस्व द्रव्यमीप्सितं ॥
॥ ३२ ॥ द्रव्येण लप्स्यसे मांस—मन्यद्वा वस्तु वांछितं ॥ व्याधः प्रोवाच मे राज—न्ननेनैव प्र·
योजनं ॥ ३३ ॥ राजाह मे वराकोऽयं । शशकः शरणागतः ॥ तदेनं नार्पयाम्येव । किंचिदन्यत्प्र·
याच्यतां ॥ ३४ ॥ यद्येवं दीयतां ताव—त्स्वमांसं क्षुधिताय मे ॥ तोल्यते शशको याव—द्यदि
चेतसि ते कृपा ॥ ३५ ॥ राज्ञोक्तं गृह्यतां मांसं । शशको मुच्यतामयं ॥ एवमुक्त्वा सहर्षेण । ना·
राची प्रगुणीकृतः ॥ ३६ ॥ ततः शशकमेकत्र । तत्रारोप्य नरेश्वरः ॥ उत्कृत्योत्कृत्य जंघातो । मां·
सं चिक्षेप सोऽन्यतः ॥ ३७ ॥ यथा यथा क्षिपत्येष । स्वमांसं तत्र भूपतिः ॥ तथा तथा महाभारः
। शशको वर्धतेतरां ॥ ३८ ॥ एवं तत्र निजं मांसं । क्षिपन् राजा मुहुर्मुहुः ॥ संजातो मरणावस्थो
। मूर्छया पतितः क्षितौ ॥ ३९ ॥ तथापि तेन नो मुक्तं । निजं सत्वं मनागपि ॥ महासत्वेन वी·
रेण । परोपकृतिचंचुना ॥ ४० ॥ ततो विज्ञाय तौ देवौ । राज्ञश्चित्तं सुनिश्चलं ॥ प्रकटीभूय भा·

षेते । श्लाघ्यमानौ नरेश्वरं ॥ ४१ ॥ अहो ते परमौदार्य—महो ते सत्वमूर्जितं ॥ अहो ते नृप-
गांभीर्य—महो ते वीर वीरता ॥ ४२ ॥ अहो ते निर्मला कीर्त्ति—स्त्रैलोक्योदरचारिणी ॥ शक्रे
णापि सुराध्यक्षं । यस्त्वं संश्लाघ्यसे नृप ॥ ४३ ॥ एवं नृपगुणान् स्तुत्वा । कथयामासतुस्तकौ ॥
राज्ञः सर्वं स्ववृत्तांतं । शक्रश्लाघादिकं मुदा ॥ ४४ ॥ ततस्तोषेण तौ देवौ । हारं त्रैलोक्यसुंदरं ॥
नृपाय दातुमारब्धौ । न चासौ तं गृहीतवान् ॥ ४५ ॥ ततस्ताभ्यां नृपः प्रोक्तो । भो नृप क्षमय-
स्व नौ ॥ इयच्चिरं यदावाभ्यां । विना दोषं कदर्थितः ॥ ४६ ॥ गच्छ राजन्निजे राज्ये । पालयस्व
निजाः प्रजाः ॥ जीव नंद चिरं कालं । दुर्लभास्त्वादृशा जनाः ॥ ४७ ॥ एवमुक्त्वा गतौ देवौ ।
स्वस्थानं तुष्टमानसौ ॥ स्वगेहमागत्य राजापि । प्राज्यं राज्यमपालयत् ॥ ४८ ॥ अनेका वरभूपाल
—कन्यकाः परिणीतवान् ॥ भुक्त्वा भोगांश्चिरं कालं । जाताः पुत्रा मनोहराः ॥ ४९ ॥

अन्यदा नरचंद्राय । समानयनहेतवे ॥ प्रेषिता नरसिंहेन । पित्रामात्या महत्तराः ॥ ५० ॥
आगत्य नरचंद्रस्य । पितुर्वाक्यं निवेदितं ॥ यथा भो जनकेन त्वं । समाहूतोऽसि सादरं ॥ ५१ ॥
तद्राजन् गम्यतां तत्र । पितुर्वाक्यं विधीयतां ॥ ततश्च नरचंद्रोऽपि । निजे राज्ये निजं सुतं ॥५२॥

निवेश्य नरधर्माख्यं । सर्वलोकस्य संमतं ॥ संभाष्य पौरवं लोकं । सन्मान्य च यथोचितं ॥ ५३ ॥
कृत्वा सामग्रिकां सर्वां । सांतःपुरो नरेश्वरः ॥ कुर्वन् सर्वजनानंदं । समायानः पितुः पुरं ॥ ५४ ॥
त्रिभिर्विशेषकं ॥ आनंदितस्ततो राजा । सर्वः परिजनस्तथा ॥ नरचंद्रे समायाते । जीमूत इव के·
किनः ॥ ५५ ॥ ततो राजा निजे राज्ये । नरसिंहो निवेश्य तं ॥ दत्वा धर्मे धनं भूरि । कृत्वा
सर्वं यथोचितं ॥ ५६ ॥ धर्मार्थी स्वंक्रमायातं । वनवासमशिश्रियत् ॥ नरचंद्रोऽपि संजातः । प्रजा·
नंदो महानृपः ॥ ५७ ॥ युग्मं ॥ प्रभूता साधिता पृथ्वी । प्रभूता जज्ञिरे गजाः ॥ प्रभूता वाजि-
नो जाताः । प्रभूताः स्यंदनास्तथा ॥ ५८ ॥ बभूव भूरिपादातं । द्रव्यं जातं प्रभूतकं ॥ शत्रवो मि-
त्रतां नीता । गुणग्राही जनः कृतः ॥ ५९ ॥ उल्लासिता सिता कीर्ति—र्विश्वविश्वाभिगामिनी ॥
पूरिता भूरिदानेन । समस्तार्थिमनोरथाः ॥ ६० ॥ एवं प्रकुर्वता तेन । नरचंद्रेण भूभुजा ॥ मध्ये
परोपकर्तॄणां । स्वा रेखा धुरि वापिता ॥ ६१ ॥ अन्यदा बहिरुद्याने । चंपकामोदनामनि ॥ शी·
लसुंदरनामानः । समायाता मुनीश्वराः ॥ ६२ ॥ चतुर्ज्ञानसुविज्ञात—सर्वविज्ञेयविस्तराः ॥ बहुशि·
ष्यसमायुक्ता । भव्यांभोरुहभास्कराः ॥ ६३ ॥ तदागमं समाकर्ण्य । वंदनार्थं बहुर्जनः ॥ पुरमध्या-

द्विनिष्क्रांतो । हेलया भक्तिनिर्भरः ॥ ६४ ॥ राजाप्यागमनं ज्ञात्वा । सूरीणां ज्ञानशालिनां ॥ जगाम वंदनाद्यर्थं । समं सामंतमंत्रिभिः ॥ ६५ ॥ अभिवंद्य यथौचित्यं । सूरीनन्यमुनींस्तथा ॥ निषण्णश्चोचिते स्थाने । ततः सूरिभिरंजसा ॥ ६६ ॥ गंभीरधीरनादेन । प्रारब्धा धर्मदेशना ॥ मिथ्यात्वविततध्वांत—ध्वंसनैकरविप्रभा ॥ ६७ ॥ युग्मं ॥ भो भो भव्या इमे जीवाः । सर्वेऽपि सुखलिप्सवः ॥ सुखं च धर्मतस्तस्मा—द्धर्मे यत्नो विधीयतां ॥ ६८ ॥ धर्मस्तु स एवेह । यः सर्वज्ञैः प्ररूपितः ॥ अहिंसादिगुणाधारः । सारः सर्वजगद्धितः ॥ ६९ ॥

इत्याद्यनेकधा धर्म—माचक्षाणं मुनीश्वरं ॥ पप्रच्छावसरं प्राप्य । नरचंद्रो नरेश्वरः ॥ ७० ॥ भगवन् किं मयाकारि । शुभं कर्मान्यजन्मनि ॥ चिंताक्रांता ममाशेषा । येन पूर्णा मनोरथाः ॥ ॥ ७१ ॥ सूरिः प्राह महाराज । श्रूयतां सावधानतः ॥ त्वमासीर्भो नराधीश । कुंजरः पूर्वजन्मनि ॥ ७२ ॥ विंध्याटव्यां सुभद्राख्य—श्चतुर्दंतः शितप्रभः ॥ सुरूपो भद्रजातीयो । हस्तियूथस्य नायकः ॥ ७३ ॥ युग्मं ॥ अन्यदा च त्वया दृष्टः । साधुर्दृष्टव्यदर्शनः ॥ अवधिज्ञानसंपन्नो । नभोगामी विहंगवत् ॥ ७४ ॥ ततस्त्वं धावितो वेगा—त्तं प्रत्यारुष्टमानसः ॥ गतस्तूर्णं तदासन्ने । सम्य-

गालोकितो मुनिः ॥ ७५ ॥ ततस्तद्दर्शनादेव । कोपावेशं विमुक्तवान् ॥ स्तंभित इव सन्मंत्रैः ।
स्थितस्तस्याग्रतो मुनेः ॥ ७६ ॥ ततस्त्वं साधुना प्रोक्तो । गंभीरोदारया गिरा ॥ अहो पूर्वभवः किं
ते । विस्मृतो वरकुंजर ॥ ७७ ॥ वाणिज्यं वा त्वयाकारि । मया सार्धं तदा गज ॥ अथ त्वं धा-
वितो भद्र । दूरं रुष्टो ममोपरि ॥ ७८ ॥ यदि ते विस्मृतं सर्वं । तदाकर्णय कथ्यते ॥ त्वं चाहं च
वरे द्वीपे । धातकीखंडनामनि ॥ ७९ ॥ पुरे राजपुरे हस्तिन् । द्वावप्यावां वयस्यकौ ॥ अभवाव
वणिक्पुत्रौ । स्नेहवंतौ परस्परं ॥ ८० ॥ युग्मं ॥ कृतवंतौ सहैवावां । वाणिज्यं द्रविणार्थिनौ ॥ वं-
चितोऽहं त्वया द्रव्य—लोभेनानेकधा तदा ॥ ८१ ॥ तेन त्वं वंचनादोषा—न्मृत्वा जातोऽसि कुं-
जरः ॥ कृतं हि कुत्सितं कर्म । नामोघं जायते यतः ॥ ८२ ॥ येन ते परमाप्रीति—स्तदाभवन्म-
मोपरि ॥ मामालोक्य तव क्रोधः । प्रशांतस्तेन हेतुना ॥ ८३ ॥ सहसा येन दृष्टेन । कोपावेशः
प्रशाम्यति ॥ वर्धते प्रीतिरत्यर्थं । पूर्वं बंधुः स तस्य भोः ॥ ८४ ॥ सहसा येन दृष्टेन । कोपावे-
शः प्रवर्धते ॥ हीयते प्रीतिरत्यर्थं । पूर्वशत्रुः स तस्य हि ॥ ८५ ॥ अहं पुनस्तदाभूवं । सदा दा-
नपरायणः ॥ किंचित्तनुकषायत्वा—त्प्रांजलिः सर्वकर्मसु ॥ ८६ ॥ ततो मृत्वा समुत्पन्नः । पुरे रा-

जपुराभिधे ॥ श्रेष्ठिनश्चंदनाख्यस्य । पुत्रः सुंदरनामकः ॥ ८७ ॥ क्रमेण यौवनं प्राप्तः । कामिनी-जनमोहनं ॥ विशालवंशजां कन्यां । विभूत्या परिणीतवान् ॥ ८८ ॥ भुक्त्वा भोगास्तया सार्धं । जाता योग्याः सुता मम ॥ संपालितः सुखेनैव । चिरं कालं गृहाश्रमः ॥ ८९ ॥ आयाताः सूरयस्तत्र । श्रुतसागरनामकाः ॥ धर्मं श्रुत्वा गृहीता च । प्रव्रज्येयं तदंतिके ॥ ९० ॥ अधीतो भूरिसिद्धांतः । सुष्टु तप्तं तपश्चिरं ॥ संजातमवधिज्ञानं । लब्धिश्चाकाशगामिनी ॥ ९१ ॥ दृष्टश्च ज्ञानसदृदृष्ट्या । ज्ञातो हस्तितया भवान् ॥ समायातश्च तेनाहं । त्वत्प्रतिबोधहेतवे ॥ ९२ ॥ तदहो सांप्रतं हस्तिन् । कोपं मुंचस्व सर्वथा ॥ प्रतिपद्यस्व सद्धर्मं । तूर्णं स्वहितमाचर ॥ ९३ ॥ श्रुत्वेदं स गजस्तत्र । जातो जातिस्मरः क्षणात् ॥ ततस्तस्य मुनेः पार्श्वे । श्रावकत्वं प्रपन्नवान् ॥ ९४ ॥ ततोऽसौ सुमुनिः सम्यग् । बोधयित्वा गजं तकं ॥ जगाम निजके स्थाने । कालेन च शिवालये ॥ ९५ ॥ गजोऽपि श्रावकं धर्मं । पालयित्वा चिरं ततः ॥ पर्यंतेऽनशनं कृत्वा । मृत्वा सौधर्मनामनि ॥ ९६ ॥ देवलोके सुरो जातो । महातेजा महर्द्धिकः ॥ ततश्च्युत्वा भवानत्र । नरचंद्रो नृपोऽजनि ॥ ९७ ॥ युग्मं ॥

श्रुत्वेदं सूरिसद्वाक्यं । नृपतिर्मूर्छितः क्षणं ॥ सस्मार पूर्वजां जातिं । शुभभावानुभावतः ॥
॥ ९८ ॥ ततः सूरिमुवाचैवं । संवेगोध्धुरया गिरा ॥ भदंताहं निजे राज्ये । सुस्थं कृत्वा त्वदंतिके
॥ ९९ ॥ सर्वक्लेशहरां दीक्षां । गृहीष्यामि मुनीश्वर ॥ एवमुक्त्वा गतो राजा । स्वगेहे सपरिछ्दः
॥ २०० ॥ युग्मं ॥ ततो राज्ये सुसेनाख्यं । निजपुत्रं न्यवेशयत् ॥ कृत्वान्यदपि यत्कृत्यं । दत्वा
दानं यथेप्सितं ॥ १ ॥ कारयित्वा महापूजां । सर्वेषु जिनवेश्मसु ॥ वस्त्रपात्रादिभिः सम्य—क्प्र-
तिलाभ्य मुनीन्नृपः ॥ २ ॥ सूरिणामंतिके तत्र । गत्वा संविग्नमानसः ॥ जग्राह विधिना दीक्षां ।
सर्वकर्मविमोचिनीं ॥ ३ ॥ त्रिभिर्विशेषकं ॥ ततो गीतार्थसत्साधु—समीपे शुभभावतः ॥ शिक्षि-
ता द्विविधा शिक्षा । नरचंद्रसुसाधुना ॥ ४ ॥ पालितः सुचिरं शुद्धः । संयमस्तपसा सह ॥ साव-
शेषीकृतं कर्म । संसारश्च लघूकृतः ॥ ५ ॥ पर्यंते विधिना मृत्वा । संजातोऽनुत्तरे सुरः ॥ ततश्च्यु-
त्वा विदेहेऽसौ । व्रतं लात्वा शिवं गतः ॥ ६ ॥ चरितमिदमुदारं सर्वलोकैकसारं । नरपतिनरचंद्र-
स्याद्भुतं भव्यलोकाः ॥ त्रिभुवनजनतानां दत्तमोदं निशम्य । कुरुत निजकशक्त्या सर्वलोकोप-
कारं ॥ ७ ॥ इति श्रीनरचंद्रस्य कथानकं परिसमाप्तं ॥

अथ परोपकर्तॄनेव विशेषतः प्रशंसयन्नाह—

॥ मूलम् ॥—मिथ्येदं कूर्मशेषाभ्यां । यन्मही विधृता किल ॥ परोपकर्तृभिः सद्भि—र्धृता त्विति मे मतिः ॥ १ ॥ व्याख्या—मिथ्या अलीकमिदं जनजल्पितं कूर्मशेषाभ्यां कच्छपनागराजाभ्यां यदिति संभावनायां मही मेदिनी विधृता विशेषेण धारिता, किलेत्यपवादे, तर्हि कैर्धृतेत्याह—सद्भिः सज्जनैः परोपकर्तृभिः परोपकारनिष्ठैर्धृता धारिता त्वियमित्येवं मे मम मतिर्बुद्धिरिति. ॥ १ ॥ सांप्रतं परोपकारिणां फलमुपदर्शयन्नधिकारं निगमयन्नाह—

॥ मूलम् ॥—परोपकारकर्तॄणां । मृतानामप्यनर्गलं ॥ बंभ्रमीति जगत्कृत्स्नं । कुंदेंदुधवलं यशः ॥ १ ॥ व्याख्या—परोपकारकर्तॄणां परोपकृतिविधायिनां मृतानामपि परासुतां प्राप्तानामप्यनर्गलमनिवारितप्रसरं बंभ्रमीति सर्वतोऽतिशयेन विचरति जगल्लोकं कृत्स्नं समस्तं कुंदेंदुधवलं कुंदचंद्रनिर्मलं यशः सर्वदिग्गामीति परोपकाराधिकारः परिसमाप्तः, इति चतुर्थोऽधिकारः ॥ संतोषवद्भिरेव सद्भिः परोपकारो विधीयत इत्यतः परोपकारसमनंतरं संतोषाधिकार उच्यते, तत्र संतोषवतः प्रशंसयन्नाह—

॥ मूलम् ॥—सर्वतोऽपि प्रसर्पंती । तृष्णावल्ली निर्गला ॥ यैः संतोषासिना छिन्ना । त एव सुखिनो जनाः ॥ १ ॥ व्याख्या—सर्वतोऽपि समंततोऽपि प्रसर्पंती विसर्पंती तृष्णावल्ली वांछावल्लरी निर्गला अनिवारितप्रसरा यैः कैश्चन महानुभावैः संतोषासिना वांछाविच्छेदखड्गेन छिन्ना द्विधा कृता त एव नान्ये सुखिनः शर्मभाजो जना लोका इति. ॥ १ ॥ न केवलं संतोषवंतः संतः सुखिनो भवंति, किंतु राजादिष्वपि ते निस्पृहाश्चेत्युपदर्शयन्नाह—

॥ मूलम् ॥—निःस्पृहस्य तृणं राजा । तृणं शक्रस्तृणं धनी ॥ कांचनोऽपि तृणं मेरु—र्धनदोऽपि तृणायते ॥ १ ॥ व्याख्या—निःस्पृहस्य गतलोभस्य तृणं वीरुणादि राजा नरेश्वरः, तृणं शक्रो देवराट्, तृणं धनी धनवान्, तथा कांचनोऽपि स्वर्णमयोऽपि मेरुर्मंदरस्तृणं, धनदोऽपि समस्तनिधानाधिपतिरपि तृणायते तृणवदाचरति निःस्पृहंप्रतीति गम्यते. ॥ १ ॥ न केवलं संतुष्ट इह लोक एव सुखी, संसारोऽपि तस्य कतिपयभवशाव्येवेति दर्शयन्नाह—

॥ मूलम् ॥—अनाद्यनंतसंसार—मार्गस्तस्य सुखोत्तरः ॥ वामेतरकरे यस्य । संतोषः संबलं वरं ॥ १ ॥ व्याख्या—न विद्यते आदिर्यस्य सः, तथा न विद्यतेंतो यस्य सोऽनाद्यनंतः, स चासौ

संसारमार्गश्चानाद्यनिधनभवपथाः, तस्य संतोषवतः सुखत्तोरः सुलंघ्यो, वामेतरकरे दक्षिणबाहौ यस्य कस्यापि संतोषः संतुष्टता संबलं पथ्यदनं वरं प्रधानमिति. ॥ १ ॥ ननु कथं धनं विना संतोषवतां सुखं भवतीत्याह—

॥ मूलम् ॥—संतोषामृततृप्तानां । यत्तेषां सुखमुत्तमं ॥ कुतस्तद्धनलुब्धानां । दिवारात्रौ च धावतां ॥ १ ॥ व्याख्या—संतोषामृततृप्तानां संतोषपीयूषप्रीणितानां यदित्यनाख्येयं तेषां संतोषवतां सुखं शर्मोत्तमं प्रधानं भवति, तदिति सुखं घनलुब्धानामर्थगृद्धिमतां दिवारात्रौ वा रात्रिं दिवं च धावतां प्रसर्पतां कुतः? न कुतोऽपीत्यर्थः. ॥ १ ॥ सांप्रतं यद्वशेन सत्वाः सुखिनो भवंति तं संतोषं नमस्कुर्वन्नाह—

॥ मूलम् ॥—दुःखदारुकुठाराय । बह्वाशापाशनाशिने ॥ निःशेषसुखमूलाय । संतोषाय नमोनमः ॥ १ ॥ व्याख्या—दुःखदारुकुठारायेत्यशर्मदारुविदारणपरशवे, बह्वाशापाशनाशिने प्रभूतवांछाबंधनविनाशकाय, निःशेषसुखमूलाय समस्तशर्मकारणाय संतोषाय संतुष्टये नमोनमोऽतिशयेन नमस्कारोऽस्तु. ॥ १ ॥ इह लोक एव संतोषफलमाह—

॥ मूलम् ॥—यद्दीनानि न जल्पंति । यत्सेवां नैव कुर्वते ॥ यन्गुरुत्वं ययुर्लोकाः । संतोषस्तत्र कारणं ॥ १ ॥ व्याख्या—यदिति जाषायां, दीनानि तुच्छानि न नैव जल्पंति जाषंते, यत्सेवां परोपसर्पणलक्षणां न कुर्वते न विदधति, यन्गुरुत्वं महत्वं ययुर्गता उपलक्षणत्वाद्यांति गमिष्यंति च लोका जनाः, संतोषो निःस्पृहत्वं तत्र महत्त्वगमने कारणं बीजमिति. ॥ १ ॥ सांप्रतं संतोषवतां सर्वमपि सुखायेत्युपदर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—यद्वा तद्वा जलं येषां । यद्वा तद्वा च जोजनं ॥ आसनं शयनं यानं । जायते सुखकारणं ॥ १ ॥ तेषां दूरतरं दुःखं । सुखं च निकटस्थितं ॥ यतः संतोषसाराणि । सुखानि जगदुर्जिनाः ॥ २ ॥ व्याख्या—यद्वा तद्वा यदेव तदेव सुंदरासुंदरमित्यर्थः, जलं पानीयं येषां संतोषतृप्तानां, यद्वा तद्वा च जोजनं यदेव तदेव मनोरमामनोरममित्यर्थः, जोजनमभ्यवहार्यं, आसनं पट्टपीठकादि. शय्यतेऽस्मिन्निति शयनं सर्वांगीणशय्या, यानं वेसरादि, जायते जवति सुखकारणं शर्मनिबंधनमिति. ॥ १ ॥ तेषां संतोषिणां दूरतरं दवीयस्तरं दुःखमसातं, सुखं च सातं च निकटस्थितं समीपवर्ति, कुत एतदित्याह—यद्यस्मात्कारणात्संतोषसाराणि वांछाविच्छेदप्रधानानि सुखा-

नि सातानि जगदुरुक्तवंतो जिना केवलिन इति. तथा च—जइ जब्व तब्व जहव । तहव हे हियय निच्चुइं कुणसि ॥ तादुकुह तुह जम्मं । तरेवि डुक्कं चिय न होइ ॥ १ ॥ २ ॥ सांप्रतं समस्तविशालवस्तूनां मध्ये निःस्पृहाणां विशालत्वमुपदर्शयन्नाह—

॥ मूलम् ॥—न च पृथ्वी तथा पृथ्वी । स्वयंभूरमणोऽपि वा ॥ ब्रह्मांडमपि नो ताह—ग्या· दृशो निःस्पृहो जनः ॥ १ ॥ व्याख्या—न च नैव पृथ्वी वसुंधरा तथा सुसंतुष्टवत्पृथ्वी विस्तीर्णा, स्वयंभूरमणोऽपि वा समस्तसमुद्रपर्यंतवर्तिसमुद्रो वा. अपिवाशब्दौ समुच्चयार्थौ, ब्रह्मांडमपि जगदु· त्पत्तिकारणमपि नो तादृग् न तादृशं. यादृशो यद्विधो निःस्पृहो निरभिलाषो जनो लोक इति. ॥ १ ॥ इदानीं संतोषिण ऐहिकसुखमाह—

॥ मूलम् ॥—कृतं शेषगुणैस्ताव—त्संतुष्टस्येह देहिनः ॥ एतावतैव पर्याप्तं । यदधीनो न कस्यचित् ॥ १ ॥ व्याख्या—कृतं परिपूर्णं शेषगुणैरन्यगुणैस्तावदिति क्रमे. संतुष्टस्य निरीहस्येह जगति देहिनः प्राणिनः, एतावतैवामुनैव पर्याप्तं कृतं, यद्यस्मात्कारणादधीन आयत्तो न कस्यचिन्न कस्यापीति. ॥ १ ॥ इदानीमसंतुष्टानामिहैव दुःखपरंपरामुपदर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—कुटुंबककृते याव—न्नितश्चेतश्च संततं ॥ किं कृतं किं करिष्यामि । किं करोमीति चिंतयन् ॥ १ ॥ छिद्यते प्रत्यहं प्राणी । बह्वाशापाशपाशितः ॥ वांछाविच्छेदजं सौख्यं । स्वप्नेऽप्येष न विंदति ॥ २ ॥ व्याख्या—कुटुंबककृते गृहनिमित्तं धावन् पर्यटन्नितश्चेतश्च यतस्ततः संततमनवरतं, किं कृतमित्यतीतकाले, किं करिष्यामीति वर्तमाने च चिंतयन् वितर्कयन्, ॥ १ ॥ खिद्यते क्लिश्यते प्रत्यहमनुदिनं जंतुः प्राणी बह्वाशापाशपाशितः प्रभूतमनोरथबंधनबद्धो वांछाविच्छेदजमिच्छाविनिवृत्तिजं सौख्यं शर्म स्वप्नेऽपि सुप्तजागरावस्थायामप्येष प्राणी न विंदति न लभते. ॥ ॥ २ ॥ अत्रैवार्थे दृष्टांतद्वयमाह—

॥ मूलम् ॥—असंतोषो हि दोषाय । संतोषः सुखहेतवे ॥ कपिलो ज्ञातमत्रार्थे । पिंगला च पणांगना ॥ १ ॥ व्याख्या—असंतोषोऽपरापरवस्तुसस्पृहता दोषाय दूषणहेतवे. संतोषो निरीहता सुखहेतवे शर्मनिमित्तं, कपिलः पुरोहितपुत्रो ज्ञातं निदर्शनमत्रार्थे संतोषसुखविषये, पिंगला च पिंगलाभिधाना च पणांगना, पणो मूल्यं तत्प्रधानांगना पणांगना मूल्यभोग्या वेश्येत्यर्थः. ॥ १ ॥ ज्ञाते च यथाक्रममिमे—बभूव नगरी रम्या । रम्यारामविराजिता ॥ कौशांबी नाम विख्याता । व-

त्सादेशखुन्नूषणा ॥ १ ॥ सुमनः संघसंयुक्ता । मेरुचूलेव सुंदरा ॥ सुप्रतिष्ठा सुवर्णौघ—धारिका शर्मकारिका ॥ २ ॥ युग्मं ॥ जितशत्रुर्महाराज—स्तस्यामासीन्नरोत्तमः ॥ सम्यग्बोदग्रसत्कोशः । प्रजापालनतत्परः ॥ ३ ॥ सम्मतः सर्वकार्येषु । तस्यासीच्च पुरोहितः ॥ काश्यपाह्वः सदाचारो । गुणाधारो गुणिप्रियः ॥ ४ ॥ चतुर्दशमहाविद्या—स्थानसागरपारगः ॥ राज्ञा वितीर्णसद्वृत्तिः । सद्वृत्तः पार्वणेंदुवत् ॥ ५ ॥ युग्मं ॥ भार्या तस्य यशानाम्नी । विशालाक्षी मनःप्रिया ॥ कपिलाह्वस्तयोः पुत्रः । संजज्ञे कांतलोचनः ॥ ६ ॥ बालत्वे वर्तमानस्य । कपिलस्य स काश्यपः ॥ विधेः स्वछंदकारित्वा—त्पंचत्वं समुपागतः ॥ ७ ॥ नृभुजा तत्पदं दत्तं । तदन्यस्मै द्विजन्मने ॥ ततोऽसावश्वमारूढ । छ्रातपत्रविराजितः ॥ ८ ॥ एति गछति सानंदं । सदलंकारधारकः ॥ यशाया गृहपार्श्वाच्च । परिवारयुतः सदा ॥ ९ ॥ अन्यदा तं तदा दृष्ट्वा । व्रजंतं तं पुरोहितं ॥ प्रत्यासन्नं स्वगेहस्य । समालोक्य यशा ततः ॥ १० ॥ भूतपूर्वां निजां स्फीतिं । स्मृत्वारोदीत्सुदुःखिना ॥ कपिलेन ततः स्पृष्टा । मातः किं शोककारणं ॥ ११ ॥ सापि सर्वं स्ववृत्तांतं । कपिलाय न्यवेदयत् ॥ स प्राह किं न मे दत्तं । पदं पैत्र्यं महीभुजा ॥ १२ ॥ तयोक्तं पुत्र सद्विद्या—हीनैस्तल्लभ्यते न हि

॥ तेन प्रोक्तमधीयेऽहं । सद्विद्यामंब सांप्रतं ॥ १३ ॥ ततो यशाब्रवीदेवं । पुत्रवाक्येन रंजिता ॥ भवंतं पाठयिष्यंति । नेहवास्तव्यपंम्डिताः ॥ १४ ॥ तद्वत्स गछ वेगेन । श्रावस्तीं नगरीं यतः ॥ समस्ति तत्र सद्विद्या—महासागरपारगः ॥ १५ ॥ मित्रं तव पितुर्विद्वा—निंडदत्ताभिधः सुधीः ॥ मित्रस्नेहेन सोऽवश्यं । भवंतं पाठयिष्यति ॥ १६ ॥ श्रुत्वेदं वचनं मातुः । श्रावस्त्यां कपिलो गतः ॥ उपाध्यायस्ततस्तेन । प्रणतो भक्तियोगतः ॥ १७ ॥ निवेदितं यथा तात । विद्यार्थमहमागतः ॥ तेनोचे सुंदरं भद्र । विद्यायाः समुपार्जनं ॥ १८ ॥ विद्याहीना यतो लोके । मानवाः पशुभिः समाः ॥ न शोभंते सभामध्ये । हंसौघे इव वायसाः ॥ १९ ॥ तथा चोक्तं—

विद्या नाम नरस्य रूपमधिकं प्रछन्नगुप्तं धनं । विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ॥ विद्या बंधुजनो विदेशगमने विद्या परा देवता । विद्या राजसु पूजिता न हि धनं विद्याविहीनः पशुः ॥ २० ॥ किं तेन जातु जातेन । यो न विद्वान्न धार्मिकः ॥ तया गवा हि किं कृत्यं । या न धेनुर्न गर्भिणी ॥ २१ ॥ दाने यशसि शौर्ये च । यस्य न प्रथितं यशः ॥ विद्यायामर्थलाभे वा । मातुरुच्चार एव सः ॥ २२ ॥ विद्यायाः साधनानीह । विद्यंते मम मंदिरे ॥ केवलं

भोजनं भद्र । निर्धनत्वान्न विद्यते ॥ २३ ॥ तानि चामूनि विद्यासाधनानि—आरोग्यबुद्धिविनयोद्यमशास्त्ररागा । अभ्यंतरा जगति पाठगुणा भवंति ॥ आचार्यपुस्तकनिवाससहायवस्त्रा । बाह्याश्च पंच पठनं परिवर्धयंति ॥ २४ ॥ तेनोचे भिक्षयित्वाहं । पठिष्ये भवदंतिके ॥ उपाध्यायस्ततः प्राह । वत्सैवं पठनं कुतः ॥ २५ ॥ एवमुक्त्वा समं तेन । गतोऽसौ श्रेष्ठिनो गृहं ॥ शालिभद्राभिधानस्य । ततश्चैवमभाषत ॥ ७ ॥ कौशांब्या अयमायातो । विद्यार्थी सुहृदंगजः ॥ तदस्य कुरु साहाय्यं । त्वमाहारप्रदानतः ॥ ८ ॥ श्रेष्ठिनापि च तत्तोषा—त्प्रतिपन्नं गुरोर्वचः ॥ भोजनाय ततस्तस्य । दासी तेन निरूपिता ॥ ९ ॥ अधीते सोऽपि सानंदो । हास्यशीलः स्वभावतः ॥ मोहयौवनसंवास—दोषात्संमूढमानसः ॥ १० ॥ कामस्य दुर्जयत्वाच्च । तस्यां दास्यां प्रलभवान् ॥ अवोचदन्यदा सा तं । स्नेहेन रहसि स्थितं ॥ ११ ॥ यद्यहं सह केनापि । वस्त्रमूल्याय संवसे ॥ सोढव्यं तत्त्वया कांत । यतस्त्वं तद्विवर्जितः ॥ १२ ॥ एवमस्त्विति तेनापि । तद्वचः प्रतिपद्यते ॥ सखेदा चान्यदा तेन । दृष्टा पृष्टा च कारणं ॥ १३ ॥ तयोचे सर्वदासीनां । महः कल्ये भविष्यति ॥ तां बूलादिविहीनाया । लाघवं भविता मम ॥ १४ ॥ सोऽपि श्रुत्वा वचस्तस्या । विनिद्रो दुःखविह्वलः

॥ अमुंचद्दीर्घनिःश्वासां—स्तदिच्छापूरणाशयः ॥ १५ ॥ उक्तं च—सीमंतपरियणच्छवियाण । पुरिसाण धणविहीणाण ॥ न हु नवरि कायराणं । गरुयाणवि चलइ मइविहवो ॥ १६ ॥ बभाण सा ततः कांतं । गच्छ त्वं धनमंदिरं ॥ प्रातरेव समुच्छाय । यतोऽसावग्रजन्मने ॥ १७ ॥ द्वौ माषौ जातरूपस्य । प्रथमाय प्रयच्छति ॥ मायासीदपरः कश्चि—दर्धरात्रेऽपि निर्गतः ॥ १८ ॥ युग्मं ॥ चौरोऽयमिति मत्वा तै—र्गृहीतो दंडपाशिकैः ॥ आस्थानसन्निषण्णस्य । राज्ञस्तैरुपदर्शितः ॥ १९ ॥ तेनाभाणि यथा विप्र । किमु युक्तं तवेदृशं ॥ अमायी कथयामास । राज्ञः सत्यं स्वमाशयं ॥२०॥ ततः संजातकारुण्यो । राजा तुष्टस्तदार्जवात् ॥ अवादीत्तं द्विजं मुग्धं । वरं वृणु यथेप्सितं ॥ २१ ॥ स प्राहालोच्य याचिष्ये । राजाहालोचयस्व भोः ॥ गत्वैकांते ततश्चैव—मारब्धश्चिंतितुं यथा ॥ ॥ २२ ॥ राजा तुष्टो ददात्यद्य । द्रव्यं मे तावदीप्सितं ॥ माषद्वयेन किं कार्यं । याचेऽहं माषपंचकं ॥ २३ ॥ नालं तांबूलमूल्येऽपि । नूनं तन्मे भविष्यति ॥ दशमाषांस्ततो याचे । तेऽपि वस्त्राद्यसाधकाः ॥ २४ ॥ मार्गयामि शतं नालं । तदप्याभरणाय मे ॥ बंधुवर्गसमेतस्य । सहस्रोऽपि दशायते ॥ २५ ॥ प्रार्थयामि ततो लक्षं । क्षितीशं वरदायिनं ॥ परोपकारकर्तृत्वे । लक्षमप्यक्षमं ततः

॥ २६ ॥ कोटिं याचे सुवर्णस्य । दीनादेर्दानसाधिकां ॥ हस्त्यश्वरथपादाति—साधने सापि नो स्पृहा ॥ २७ ॥ चिंतावीचिचयोत्क्षिप्त—लोभसागरमध्यगः ॥ स्थितः संचिंतयन्नेवं । क्षणं संतोषवर्जितः ॥ २८ ॥ शुद्धत्वाज्जीवरूपस्य । चित्रत्वात्कर्मणां गतेः ॥ जज्ञे सद्ज्ञानसंयोगः । कपिलस्य ततो दृढः ॥ २९ ॥ ततः सद्ज्ञानसंयोगा—च्चिंतयामास तत्क्षणं ॥ अहो लोभस्य माहात्म्य—मपूर्वं दुःखकारणं ॥ ३० ॥ यतः—

यदि स्याद्रत्नसंपूर्णो । जंबूद्वीपः कथंचन ॥ अपर्याप्तः प्रहर्षाय । लोभात्तस्य जिनैः स्मृतः ॥ ॥ ३१ ॥ अहो मया किमारब्ध—मज्ञानवशवर्तिना ॥ विज्ञाय वचनं मातु—र्विद्यादातुश्च सुंदरं ॥ ३२ ॥ जानन्नपि यदासक्तः । सामान्यायां स्त्रियामहं ॥ तदिदं सत्यतां नीतं । वचनं मोहवर्तिना ॥ ३३ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेंद्रियाणां । लज्जां तावद्विधत्ते विनयमपि समालंबते तावदेव ॥ भ्रूचापाक्षेपमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते । यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतंति ॥ ३४ ॥ ताव फुरइ वेरग्गु । चित्ति कुललज्जवि तावहिं ताव ॥ अकज्जहतणि यं संक । गुरुयाणवि भत्त ताव ॥ ३५ ॥ ताविंदियह वसाइ । जसह सिरिहाइ ताव

हि ॥ रमणीहिं मणमोहिणीहिं । पुरिस वसी होइ न जावहि ॥ ३६ ॥ सो सुकयकम्मु सो नि-
ब्भणमइ । सिवहमग्गि सो संघम्मिज्ज ॥ परमोहणजसहिसरिसिय । महिलाण पेम्मंमि नो पडिज्ज
॥ ३७ ॥ तस्मादलं सुवर्णेन । विषयैरप्यलं मम ॥ कृतं कांताप्रसंगेन । घोरसंसारहेतुना ॥ ३८ ॥
एवं चिंतयतस्तस्य । जातिस्मरणमंजसा ॥ संपन्नं शुद्धभावस्य । स्वयंबुद्धस्ततोऽजनि ॥ ३९ ॥ दे-
वतादत्तलिंगोऽयं । स्वयं लुंचितकुंतलः ॥ प्रत्यक्षो धर्म एवैष । राजानं समुपस्थितः ॥ ४० ॥ रा-
ज्ञोचे किं त्वयाचिंति । ततः सोऽपि न्यवेदयत ॥ आत्मेच्छाविस्तरं सर्वं । नरेंद्राय पठन्निदं ॥ ४१ ॥
उक्तं च—जहा लाहो तहा लोहो । लाहालोहो पवड्ढइ ॥ दोमासकणयकज्जं । कोडिएवि न
निठियं ॥ ४२ ॥ ददामि भद्र ते कोटिं । राज्ञोचे चारुचेतसा ॥ मुनिनोक्तं मया सर्वं । परित्यक्तं
धनादिकं ॥ ४३ ॥ यतः—अर्थानामर्जने दुःख—मर्जितानां च रक्षणे ॥ आये दुःखं व्यये दुःखं
। धिगर्थं दुःखकारणं ॥ ४४ ॥ इत्यादिधर्ममाख्याय । कपिलाख्यो महामुनिः ॥ विजहार महीपीठे
। संयमी मुनिसत्तमः ॥ ४५ ॥ निर्ममो निरहंकारो । निरारंभो निरालयः ॥ निःसहायो निराशंसो
। निःसंगो निःपरिग्रहः ॥ ४६ ॥ युक्तः समितिभिर्नित्यं । सुगुप्तो गुप्तिभिस्तथा ॥ क्षांत्यादिसद्गुणो-

पेतः । सर्वशीलांगधारकः ॥ ४९ ॥ त्रिभिर्विशेषकं ॥ षण्मासांते ततस्तस्य । ज्ञानमुत्पन्नमुत्तमं ॥ घातिकर्मक्षये जाते । लोकालोकावभासकं ॥ ५० ॥ इतश्च—

अस्ति राजगृहस्येह । श्रावस्त्याश्च महापुरः ॥ दुष्टश्वापदसंकीर्णा—पांतराले महाटवी ॥५१॥ तस्यामिक्कडसंज्ञानां । चौराणां शतपंचकं ॥ अस्त्येतत्प्रतिबोधार्थं । तदंतः कपिलो गतः ॥ ५२ ॥ दृष्टः शाखिगतेनैष । दस्युना मुनिपुंगवः ॥ श्रमणोऽयं समायाति । शेषाणां च निवेदितं ॥५३॥ ततस्ते तं समादाय । निन्युश्चौराधिपांतिकं ॥ तेनापि स मुनिः प्रोक्तो । नृत्यतां नृत्यतां मुने ॥ ॥ ५४ ॥ तेषां विज्ञाय स ज्ञान—चक्षुषा मोक्षकारणं ॥ इत्थमेव ततः प्राह । वादको नो न विद्यते ॥ ५५ ॥ केलिना मिलिताः सर्वे । तालाः कुर्वंति दस्यवः ॥ तेषां मध्यगतः साधु—र्ध्रुवकं यागतीदृशं ॥ ५६ ॥ अधुवे असासयंमि । संसारंमि दुक्खपउरए ॥ किं नाम होज्ज तं कम्मं । जेणाहं दुग्गइं न गछेज्जा ॥ ५७ ॥ एवं भगवतोद्गीते । तेऽपि गायंति दस्यवः ॥ तालाश्च कुर्वंत्युच्चैः । सानंदाः समचेतसः ॥ ५८ ॥ एवमुद्गीतिकाव्याजा—दनित्यत्वं प्रकाशयन् ॥ सम्यक्संबोध्य तान् सर्वान् । दीक्षयामास सन्मुनिः ॥ ५९ ॥ ततस्ते साधवो जाताः । साधुसद्गुणधारिणः ॥

जाता जातिस्मराः सर्वे । सर्वे संविग्नमानसाः ॥ ६० ॥ कालेन केवलज्ञानं । सर्वेषामुदपद्यत ॥ त
तश्च क्षीणकर्मांशा । ययुः सर्वे शिवालयं ॥ ६१ ॥ इति कपिलाख्यानकं समाप्तं ॥ इदानीं पिंग·
लाख्यानमुच्यते—

अव्यक्तलिंगधारीह । नरः संतोषसुंदरः ॥ केनापि वणिजा पृष्टः । को गुरुस्ते निवेद्यतां ॥
॥ १ ॥ पिंगला कुररः सर्पः । सारंगास्त्रस्तलोचनाः ॥ इषुकारकुमारी च । षडेते गुरवो मम ॥२॥
श्रुत्वेदं वणिजा प्रोक्तं । गुरुरेकः शरीरिणां ॥ महत्कौतुकमेतच्च । गुरवः षट् कथं तव ॥ ३ ॥ सं·
तोषसुंदरः प्राह । सावधानमनाः शृणु ॥ एकस्यापि हि संजाता । गुरवः षट् यथा मम ॥ ४ ॥
नानावर्णसमाकीर्णं । नानासौधसमाकुलं ॥ विशालशालसंयुक्तं । सुरसद्मविराजितं ॥ ५ ॥ का·
मिनीमंजुमंजीर—रवरंजितहंसकं ॥ समस्तमेदिनीपीठे । रम्यं रत्नपुरं पुरं ॥ ६ ॥ युग्मं ॥ तत्राहं
भांममादाय । गतो वाणिज्यकर्मणे ॥ वाणिज्यं कुर्वता दृष्टा । पिंगलाख्या विलासिनी ॥ ७ ॥ त·
तो जातानुरागोऽहं । संवसामि तया सह ॥ वाणिज्ये प्रतला बुद्धि—स्तस्यासक्तस्य मेऽजनि ॥
॥ ८ ॥ अन्यदाहं गृहे तस्या । अर्धरात्रे समागतः ॥ यावत्सा पिंगला सुप्ता । निश्चिंता सपरिच्छदा

॥ ९ ॥ अहो सुखं स्वपित्येषा । कृतकृत्या इवाधिकं ॥ विचिंत्यैवं क्षणं चित्ते । श्लोकोऽयं पठितो मया ॥ १० ॥ आशा हि परमं दुःखं । निराशा परमं सुखं ॥ आशां निराशतां नीत्वा । सुखं स्वपिति पिंगला ॥ ११ ॥ प्रभाते पुनरायातः । पृष्टा सा पिंगला मया ॥ किं कारणं विशालाक्षि । निशीथे तव मंदिरं ॥ १२ ॥ दत्तार्गलं निःशब्दं च । मया सुप्तु विलोकितं ॥ यदि कथ्यं तदा शीघ्रं । मम साधय कारणं ॥ १३ ॥ युग्मं ॥ तयोक्तं साधयाम्येषा । निशामय निराकुलः ॥ सज्जाने कथितं कार्यं । गुणायैव प्रजायते ॥ १४ ॥ एकदा जागराद्गाढं । संजाता मे विसूचिका ॥ जाताहं मरणावस्था । कष्टंकष्टेन जीविता ॥ १५ ॥ ततस्तदा मयाकारि । प्रतिज्ञेयं सुखावहा ॥ आद्ययामद्वयादूर्ध्वं । सुप्तव्यं निश्चितं मया ॥ १६ ॥ आद्यमेवं च यामिन्या । जागर्मि प्रहरद्वयं ॥ ततः संतुष्टचित्ताहं । नित्यं स्वपिमि सुस्थिता ॥ १७ ॥ असंतोषो हि दुःखाय । संतोषः सुखकारणं ॥ असंतोषोपतप्तानां । संतोषो नंदनं वनं ॥ १८ ॥ असंतुष्टस्य यद्दुःखं । संतुष्टस्य च यत्सुखं ॥ अनयोरंतरं ज्ञेयं । भानुखद्योतयोरिव ॥ १९ ॥ आद्ययामद्वये जातं । यद्वित्तं तेन मे धृतिः ॥ एवं निश्चयमाधाय । तिष्ठामि सुखिता सदा ॥ २० ॥ तवापि संगतश्चायं । संतोषः सर्ववस्तुषु ॥ सुसंतोष·

समो बंधु—र्न भूतो न भविष्यति ॥ २१ ॥ प्रतिपद्याद्य तद्वाक्यं । धर्मे दत्वा निजं धनं ॥ ततो
मया गृहीतं भोः । सुसंतोषव्रतं परं ॥ २२ ॥ स्थितस्तत्र सुसंतुष्टः । कतिचिद्दिवसानहं ॥ एवं धो
मम संजाता । संतोषे पिंगला गुरुः ॥ २३ ॥ अन्यदा च ततः स्थाना—ग्रच्छता बहिरीक्षितः ॥
गृहीतमांसपेशीकः । कुरराख्यो विहंगमः ॥ २४ ॥ हन्यमानस्तरां लुब्धैः । पक्षिभिर्मांसभक्षिभिः ॥
चंडतुंडाभिघातेन । सर्वैरपि समंततः ॥ २५ ॥ कथंचिद्दैवयोगेन । मांसपेशी तदाननात् ॥ पतिता
भूतले कापि । गृहीता काकपक्षिणा ॥ २६ ॥ ततस्तं कुररं मुक्त्वा । सर्वे ते वायसंप्रति ॥ धाविताः
स पुनर्जातः । कुररो नितरां सुखी ॥ २७ ॥ ततस्तत्कौतुकं दृष्ट्वा । मया चित्ते विचिंतितं ॥ सामि-
षस्य सदा दुःखं । सौख्यमामिषवर्जनात् ॥ २८ ॥ ततो मया परित्यक्तः । समग्रोऽपि परिग्रहः ॥ ते-
न तस्य परित्यागे । कुररोऽपि गुरुर्मम ॥ २९ ॥ ततोऽग्रे गच्छता दृष्टः । सर्पः सर्वभयंकरः ॥ भूमि-
स्त्रीवेणिसंकाशः । परवेश्मकृताश्रयः ॥ ३० ॥ ततोऽचिंति मया चित्ते । सुंदरं व्रतिनां व्रतं ॥ गृ-
हारंभो हि पापाय । दुःखाय च शरीरिणां ॥ ३१ ॥ ततःप्रभृति जातोऽह—मपराश्रमसेवकः ॥ त-
तः परकृतावासे । सर्पो मे गुरुतां गतः ॥ ३२ ॥

क्रमेण गछता दृष्टं । काननं विपदाननं ॥ तत्र जातुं समारब्धा । लुब्धकैः पाशबंधनैः ॥३३॥
वागुरासु विचित्रासु । सारंगास्त्रस्तलोचनाः ॥ परं ते पतिता नात्र । ह्यप्रमत्ततया तया ॥ ३४ ॥
युग्मं ॥ नानाविधैरुपायैस्तै—र्व्याधैर्हंतुं समीहिताः ॥ रक्षिता निजमात्रेव । निःप्रमादतया तया ॥
॥ ३५ ॥ अप्रमादप्रसादेन । जातास्ते चिरजीविनः ॥ निर्विण्णमनसो व्याधाः । सविषादास्ततो ग-
ताः ॥ ३६ ॥ ततो मया विचिंत्येव—मप्रमादो हि सौख्यदः ॥ कर्तुं युक्तो ममाप्येष । तथैव कृत·
वानहं ॥ ३७ ॥ एवं मे गुरवो जाताः । सारंगास्तत्र कानने ॥ अप्रमादविधौ नाड । सदा चकित·
चेतसः ॥ ३८ ॥ ततोऽग्रे गछता दृष्ट । इषुकारः पुराद्बहिः ॥ शरव्रातमृजूकुर्व—न्निश्चलीकृतमान·
सः ॥ ३९ ॥ अत्रांतरे समायातः । पुमानेकस्तदंतिके ॥ तेनोक्तं किं त्वया दृष्टो । गछन् राजामु-
ना पथा ॥ ४० ॥ स प्राह न मया दृष्टः । स्वकर्मैकाग्रचेतसा ॥ ततो मया व्यचिंत्येवं । न चायं
विकलेंद्रियः ॥ ४१ ॥ अथ चानेन नो दृष्ट—श्चतुरंगबलान्वितः ॥ राजा गछन् समीपेन । मह·
देतत्कुतूहलं ॥ ४२ ॥ यस्मात्स्वकार्यनिष्टत्वा—देकचित्तैर्न दृश्यते ॥ चलं वा स्थाणु वा वस्तु ।
समीपेऽपि शरीरिभिः ॥ ४३ ॥ एकाग्रचेतसामेव । स्वार्थसिद्धिरपि ध्रुवं ॥ तन्मयापि मनः कार्य—

मेकाग्रं धर्मचिंतने ॥ ४४ ॥ ततःप्रभृति भो भद्र । संयमेंद्रियपंचकं ॥ जयाजयफलं तस्य । ध्यान-
स्थश्चिंतयेद्यथा ॥ ४५ ॥ दिवसरजनीसारैः सारितं पक्षगेहं । समयफलकमेतन्मंडितं भूतधात्र्यां ॥
इह हि जयति कश्चिन्मोक्षमक्षैर्विधेयै—रधिगतमपि चान्ये विप्लुतैर्हारयंति ॥ ४६ ॥ तदेकाग्रम-
नोध्याने । पंचेंद्रियविनिग्रहे ॥ इषुकारो गुरुर्जातो । ममैवमवधारय ॥ ४७ ॥ तथात्रैव पुरे दृष्टा ।
कंडयंती कुमारिका ॥ तंदुलान् वलयाराव—खेदितश्रवणद्वया ॥ ४८ ॥ ततः सामुंचदेकैकं । व-
लयं शब्दशांतये ॥ तथापि तत्कृताराबो । नोपशांतो मनागपि ॥ ४९ ॥ ततो द्वे त्रीणि चत्वारि ।
न च शाम्यति तध्ध्वनिः ॥ ततो विमुच्य शेषाणि । तदेकैकं धृतं तया ॥ ५० ॥ शांतः शब्दस्त-
तस्तस्य । जाता चित्तस्य निर्वृतिः ॥ दृष्टेदं सुखदा तेन । रुचितैकाकिता मम ॥ ५१ ॥ ततोऽहं
बंधुसंबंधि—मित्रवर्गं विमुच्य च ॥ विचरामि सुखेनैव । सदैकाकी निराकुलः ॥ ५२ ॥ तदेवमे-
कत्वे मे । गुरुर्जाता कुमारिका ॥ तदेवं मम भो भद्र । गुरवः षट् प्रजज्ञिरे ॥ ५३ ॥ स्वस्त्य-
स्तु सांप्रतं तुभ्यं । स्वस्थानं समलंकुरु ॥ इत्युक्त्वा सोऽपि संप्राप । स्थानं स्वेष्टं तदा द्रुतं ॥ ५४ ॥
सांप्रतमाशापिशाचिकाया जयोपायं, तज्जये च सुखमुपदर्शयन्नाह—

॥ मूलम् ॥—आशापिशाचिका नित्यं । देहस्था दुःखदायिनी ॥ संतोषवरमंत्रेण । स सुखी येन नाशिता ॥ १ ॥ व्याख्या—आशापिशाचिका वांछाव्यंतरी नित्यं सर्वदा देहस्था शरीरस्था दुःखदायिन्यशर्मप्रदा संतोषवरमंत्रेण निःस्पृहतापरममंत्रेणासावनिर्दिष्टनामा सुखी शर्मवान् येनकेनचिन्नाशिता देहाद् दूरीकृता. ॥ १ ॥ असंतुष्टो हि जंतुर्भवभ्रमणे दुःखितो भवतीति दर्शयन्नाह—

॥ मूलम् ॥—चिंताचक्रसमारूढो । योगदंडसमाहतः ॥ कर्माष्टककुलालेन । भ्राम्यते घटवन्नरः ॥ १ ॥ व्याख्या—चिंताचक्रसमारूढो विकल्पमालारथांगारूढो योगदंडसमाहतो मनोवाकायलकुटाहतः कर्माष्टककुलालेन ज्ञानावरणीयादिकर्माष्टककुंभकारेण भ्राम्यते भ्रमणशीलः क्रियते घटवत्कुंभवन्नरो मानवोऽसंतुष्ट इति गम्यते. ॥ १ ॥ ननु वांछासद्भावेऽपि जनः सुखी भविष्यति, कोत्र विरोधः? इत्याशंकापनोदाय श्लोकद्वयमाह—

॥ मूलम् ॥—आतपच्छाययोर्यद्व—त्सहावस्थानलक्षणः ॥ विरोधस्तद्वदत्रापि । विज्ञेयः सुखवांछयोः ॥ १ ॥ वांछा चेन्न सुखं जंतो—स्तद्विना शर्म संततं ॥ न भूतानि न भावीनि । सुखानि सह वांछया ॥ २ ॥ व्याख्या—आतपस्तापश्छाया चातपाभावभाविनी, तयोर्यद्वद्यथा सहवस्थानल·

क्षणः समवस्थितिस्वरूपो विरोधो विपर्यस्तदा तद्वत्तथात्रापि प्रस्तुते विज्ञेयो वेदितव्यः सुखवांछयोः शर्मेच्छयोः ॥ १ ॥ एतदेव दर्शयति—वांछा स्पृहा चेद्यदि न सुखं नैव शर्म जंतोर्देहिनः, तद्विना वांछाविरहे शर्म सातं संततमविच्छेदं, एतदेव निगमयति—न भूतानि न जातानि, न भावीति न भविष्यंति, उपलक्षणत्वान्न भवंति च सुखानि सातानि सार्धं वांछया स्पृहया. ॥ २ ॥ सांप्रतं संतोषफलमुपदर्शयन् संतोषाधिकारमुपसंहरन्नाह—

॥ मूलम् ॥—संतोषसुखशय्यायां । सद्विवेकपटावृताः ॥ स्वपंति ये महात्मानः । शेरते ते निराकुलाः ॥ १ ॥ व्याख्या—संतोषसुखशय्यायां निरीहतामृदुपर्यंके सद्विवेकपटावृता निर्मलबोधपटावृता निर्मलबोधपटावगुंठिताः स्वपंति स्वापं विदधति ये केचन महात्मानो महापुरुषाः शेरते स्वपंति ते नरा निराकुला निःशेषसुखया इति. ॥ १ ॥ तदेवंविधविविधामलगुणकलापभाजो भवंति संतोषकारिणो जनाः, ये सर्वत्रैवासंतुष्टचेतसो भवंति ते परद्रव्यार्थिनः संतो व्यापादयंति प्राणिनः, वदंति मृषावादं. रचयंति कूटकपटानि, वंचयंति मित्रमंडलानि, दुह्यंति निरंतरं स्नेहपरानपि निजकः गुरुजनबंधुसंबंधिनः, आरंभयंति महारंभान्, मुष्णंति परद्रव्याणि, कुर्वंति न्यासापहारं. लोपयंति

धर्मव्यवहारं, न गणयंति कुलाचारं, घातयंति ग्रामनगरादीनि, विलुंपंति मार्गेषु भूरिद्रविणसंभार- संभृताननेकसार्थान्, कुर्वंति निःकरुणाः संतो भ्रूणहत्यां गोहत्यां ब्रह्महत्यां स्त्रीहत्यां च, किं बहुना? यदेकांतेन लोकद्वयविरुद्धं सकलबुधजननिंदितं सर्वथा विवेकिनामतिदुष्करं निस्त्रिंशं निर्घृणं, निस्त्रपं निर्मर्यादं पातकानामपि महापापं स कर्ता. यत श्रुतमात्रमपि लोमोद्धर्षकारकं तदपि कुर्वंति, किमुच्छाऽसंतुष्टचित्तानां चेष्टितं कथ्यते—ये परद्रव्यं जिघृक्षवः कानि कानि कूटकपटानि न रचयंति? यथा ताराचंद्रसत्कं यानपात्रं भूरिद्रविणजातसंभृतं समायातमाकर्ण्य लोभनंदादिभिः पुरंदरवास्तव्यैरनेकानि कूटकपटानि कर्तुमारब्धानि, तथापि नार्थसिद्धिः संजातेति ताराचंद्रस्य पोताधिपतेरुत्कटपुण्ययुक्तत्वात्, कथानकं चात्र—

बभूव विश्वविख्यातं । पुरं तारापुराभिधं ॥ कैलासपर्वताकारं । तुंगप्राकारवेष्टितं ॥ १ ॥ तत्राभवद्भूयां धाम । ताराचंद्राभिधो वणिक् ॥ ख्यातकीर्तिर्जने मान्यः । सुहृदानंदकारकः ॥ २ ॥ ताराप्रभा प्रिया तस्य । विनयादिगुणान्विता ॥ प्रेमस्थानं परं चारु—शीलालंकारशालिनी ॥ ३ ॥ ह्यर्थार्थिना महापोत—स्ताराचंद्रेण चान्यदा ॥ महार्घ्यभूरिभांडानां । भृतोऽन्यद्द्वीपयायिना ॥४॥

कृता सर्वापि सामग्री । सज्जीभूताश्च धीवराः ॥ समारूढाश्च निःशेषा । वणिजः सुभटास्तथा
॥ ५ ॥ अथाशेषं निजं लोकं । सम्यक्संभाष्य सादरं ॥ विसृष्टवांश्च सन्मान्य । तांबूलादिभिरंज-
सा ॥ ६ ॥ अनेकभटसंयुक्तः । शुभालंकारधारकः ॥ भूरिद्रव्यप्रदानेन । पूरितार्थिमनोरथः ॥ ७ ॥
गत्वा पोते समारूढो । बंदिगीतयशास्ततः ॥ हेलयाहतसत्तूर्य—शब्दैरापूरितांबरः ॥ ८ ॥ कृतपू-
जोपचारश्च । योषाभिर्गीतमंगलः ॥ कृतकोलाहलो लोकै—र्यथास्थानस्थितप्रजः ॥ ९ ॥ छत्रछ-
न्नमुखश्चारु—चामरैरुपवीजितः ॥ क्षिप्तनंगरो मुक्त—पोतः पूर्णमनोरथः ॥ १० ॥ शीघ्रं गंतुं प्र-
वृत्तोऽसौ । पृष्टतः पवनेरितः ॥ एष याति गतो दूरं । दृश्यते नैव लोचनैः ॥ ११ ॥ पंचभिः कुल-
कं ॥ इत्युक्त्वा वलितो लोको । गतो निजनिजे गृहे ॥ पोतोऽपि वायुवेगेन । लंघित्वा लघुसा-
गरं ॥ १२ ॥ रत्नमेखलनामानं । द्वीपं प्राप्तस्ततो धृतः ॥ पोतादुत्तार्य भांडानि । श्रेष्ठिना राशयः
कृताः ॥ १३ ॥ युग्मं ॥ यथास्थानं स्थितो लोकः । श्रेष्ठी जातो निराकुलः ॥ भुक्तेऽपि ते निरा-
बाधे । जाते पोतजनेऽखिले ॥ १४ ॥ पुरंदरपुरावासी । लोभनंदिरिति श्रुतः ॥ वणिक् च नाम-
तः श्रेष्ठी । कर्मतः पापकर्मकृत् ॥ १५ ॥ अत्रैव च पुरे मंत्री । काणो मायानिकेतनं ॥ वसतिस्म

दुराचारो । लोभसागरसंज्ञितः ॥ १६ ॥ परद्रव्यापहारेच्छः । सदा संक्लिष्टमानसः ॥ तत्रास्ते नर्मका·
रोऽपि । मायामय इति स्मृतः ॥ १७ ॥ तथान्यो लोकविख्यातो । मान्यो विप्रगुणान्वितः ॥ आ·
दित्यमंदिरे तत्र । द्विजो विगतलोचनः ॥ १८ ॥ अविद्यमाननेत्रोऽपि । त्रिलोचन इति स्मृतः ॥
होराबलेन लोकानां । दत्तादेशो विचक्षणः ॥ १९ ॥ अथ बोहित्थमायातं । भूरिभांडसमाकुलं ॥
श्रुत्वानेकजनाकीर्णं । ताराचंडं च तत्प्रभुं ॥ २० ॥ लोभनंदिर्गतो रात्रौ । तदंते वंचनेच्छया ॥ कृ·
तोचितोपचारश्च । निषण्णो दर्शितासने ॥ २१ ॥ कुशलं ते शरीरस्य । पृष्टोऽसौ लोभनंदिना ॥
पूर्वाभाष्यमिदं चैव । सुलभं सज्जने जने ॥ २२ ॥ किं भांडं वा कियद्वापि । पृच्छतो मम कथ्य·
तां ॥ तेनापि कथितं सर्वं । प्रायः प्रांजलचेतसा ॥ २३ ॥ शिरो विधूय तेनापि । सखेदमिव ज·
ल्पितं ॥ प्रयास एव ते जातः । कुभांडानयनादिह ॥ २४ ॥ यस्मादेतस्य नास्त्यत्र । ग्राहकः को·
ऽपि सर्वथा ॥ परं तथापि गृह्णामि । कीर्तिभंगभयादहं ॥ २५ ॥ दास्यामि प्रस्थकं त्वेकं । तुभ्यं
वांछितवस्तुनः ॥ प्रतिपन्नमनेनापि । सत्यंकारश्च ढौकितः ॥ २६ ॥ साक्षिणो विहिता लोका । भां·
डं दृष्ट्वाहृतं कृतं ॥ आगतः स्वगृहे श्रेष्ठी । प्रमोदभरनिर्भरः ॥ २७ ॥ अहो मे धन्यता येन ।

परश्रीः स्ववशे कृता ॥ द्वितीययामे यामिन्या । मंत्री लोभपरायणः ॥ २८ ॥ ताराचंद्रांतिकं प्राप्तो । निषण्णो बृहदासने ॥ भणितो मंत्रिणा श्रेष्टि—स्ताराचंद्र निशम्यतां ॥ २९ ॥ एकदा दंडितो राज्ञा । कारागारे प्रवेशितः ॥ कथंचिदंतरं लब्ध्वा । नष्टोऽहं जीविताशया ॥ ३० ॥ मुच्यमानो मया दृष्टः । पोतः पुण्यैः पुराकृतैः ॥ तेनोत्तीर्य द्रुतं प्राप्तः । पुरे तारापुराभिधे ॥ ३१ ॥ तत्रापि मंदिरे गत्वा । तावकीने चिरं स्थितः ॥ अन्यदा भणितं राज्ञा । लक्षे दत्ते न ते भयं ॥ ३२ ॥ मयापि त्वत्पितुः पार्श्वा—ल्लक्षो निजकरे कृतः ॥ लोकाध्यक्षं मया मुक्तं । ग्रहणे दक्षिणेक्षणं ॥३३॥ लक्षं लात्वा समायान—स्तं दत्वा तोषितो नृपः ॥ भूयोऽपि स्वं पदं लब्धं । ते दरास्ते च मोचकाः ॥ ३४ ॥ अद्य त्वं पुनरायातो । मम पुण्यैः प्रणोदितः ॥ लात्वा लक्षं स्वकं भाड । देहि मे दक्षिणेक्षणं ॥ ३५ ॥ दत्ते च लोचने मह्यं । कर्तव्यो भांडविक्रयः ॥ आहारे व्यवहारे च । न लज्जा गुणकारिणी ॥ ३६ ॥

एवमुक्त्वा गतो मंत्री । विषण्णः पोतनायकः ॥ चिंताचक्रसमारूढः । किंकर्तव्यसमाकुलः ॥ ॥ ३७ ॥ खिन्नोऽदीनमनाः श्रांतः । शून्यचेताः परिभ्रमन् ॥ उपानत्संधनाहेतो—श्चर्मकारापणे ग·

तः ॥ ३८ ॥ दृष्टो मायामयेनैष । चर्मकारेण भोगिना ॥ नीतः सगौरवं गेहे । निषण्णो वरविष्टरे
॥ ३९ ॥ पृष्टश्च केन कार्येण । यूयमत्र समागताः ॥ श्रेष्ठ्याह वर्ध्रसंधान—हेतवे वयमागताः ॥
॥ ४० ॥ चर्मकारः पुनः प्राह । किं मे दास्यथ वेतनं ॥ श्रेष्ठ्याह किं विचारेण । कुरु कर्म नि-
राकुलः ॥ ४१ ॥ तोषवंतं करिष्यामि । भवंतं भूरिदानतः ॥ वर्ध्रसंधानतस्तेनो—पानहौ प्रगुणीकृ-
तौ ॥ ४२ ॥ वेतने काकिणी दत्ता । न तुष्टश्चर्मकर्मकृत् ॥ रूपकार्धं ततो द्रम्म । एवं यावच्छतं ग-
तः ॥ ४३ ॥ सहस्रलक्षकोटीभि—स्तेन तोषमगच्छता ॥ भणितश्चर्मकारेण । श्रेष्ठिन् संस्मर जल्पि-
तं ॥ ४४ ॥ तव पोतगते द्रव्ये । निःशेषे मम मंदिरे ॥ प्रविष्टे यदि मे तुष्टिः । संतुष्टिर्नान्यथा
मम ॥ ४५ ॥ ममाधीनं धनं सर्वं । भवान् कर्मकरो मम ॥ न दातव्यं न भोक्तव्यं । रक्षणीयं प्र-
यत्नतः ॥ ४६ ॥ एवमुक्त्वा गतो गेहे । चर्मकारः प्रमोदभृत् ॥ ताराचंद्रो निजं स्थानं । गच्छन् श्रां-
तः शनैः शनैः ॥ ४७ ॥ दृष्टो मदनमंजर्या । वेश्यया वरवेषया ॥ निरूपितश्चिरं कालं । साभि-
लाषेण चक्षुषा ॥ ४८ ॥ दास्या स्वगृहमानीतो । ततो मकरदंष्ट्रया ॥ स्नापितो भोजितो दत्त—
तांबूलः सविलेपनं ॥ ४९ ॥ नक्तं मदनमंजर्या । सह सुप्तोऽनुरक्तया ॥ प्रभाते कथितं सर्वं । कु-

ट्टिन्या तस्य हृष्टया ॥ ५० ॥ यथैषा मे प्रिया पुत्री । नाम्ना मदनमंजरी ॥ पुरुषद्वेषिणी भूत्वा । बभूव त्वयि तोषिणी ॥ ५१ ॥ तदिमां भवते दत्वा । संजाताहं निराकुला ॥ सुस्थितं जायते चेतो । योग्ययोगेन देहिनां ॥ ५२ ॥ भक्ता च सा यथा वत्से । त्वया भाव्यं विनीतया ॥ विनयो हि कारणं येन । सर्वदा सर्वसंपदां ॥ ५३ ॥ एवं च वसतस्तत्र । वव्रजुर्भूरिवासराः ॥ स्वर्नाथस्येव सौधर्मे । सततं हृष्टचेतसः ॥ ५४ ॥ अन्यदा च तया पृष्टः । कस्त्वं कस्मादिहागतः ॥ ततस्तस्यै स्ववृत्तांतः । सर्वस्तेन निवेदितः ॥ ५५ ॥ तयोक्तं विषदेषा ते । परं खेदो न संगतः ॥ आपदः संपदश्चैव । समीपस्थाः शरीरिणां ॥ ५६ ॥ एवमुक्त्वा गता तूर्णं । कुट्टिनी भानुमंदिरे ॥ ततस्त्रिलोचनं भट्टं । प्रणम्योवाच सा यथा ॥ ५७ ॥ समयोऽस्ति न वा विप्र । पृष्टव्यं मम किंचन ॥ स प्राह समयो दत्त—श्चर्मकृतश्रेष्टिमंत्रिणां ॥ ५८ ॥ एवं विज्ञाय सा सर्वं । कुट्टिनी स्वगृहे गता ॥ जामाता भणितो वत्स । स्वल्पं हि व्यसनं तव ॥ ५९ ॥ यामिन्याः प्रथमे यामे । व्यतीते रविमंदिरे ॥ प्रच्छन्नीभूय तिष्ठ त्वं । शृण्वन् श्रेष्ट्यादिजल्पितं ॥ ६० ॥ तेनापि च कृतं सर्वं । यथादिष्टं तथैव तत् ॥ ततः श्रेष्टी समायातो । यामिन्याः प्रहरे गते ॥ ६१ ॥ गात्रेणाभाणि कर्णांते ।

लोभनंदिः समागतः ॥ प्रवेशय द्रुतं वत्स । द्वाररक्षापरो भव ॥ ६२ ॥ प्रविश्य श्रेष्ठिना भानु— रुपाध्यायश्च वंदितः ॥ आख्याय पूर्ववृत्तांतं । श्रेष्ठिनेदं प्रजल्पितं ॥ ६३ ॥ निरूपय निजां होरां । निर्वाहो भविता न वा ॥ निरूप्य भणितं तेन । भद्र होरा न भद्रिका ॥ ६४ ॥ यदि वक्षस्यसौ देहि । मे मशकास्थिप्रस्थकं ॥ भुक्तरानिलपूतानां । खंभितानामुदूखले ॥ ६५ ॥ तदा ते संकटं मन्ये । मौनमेवात्र सुंदरं ॥ श्रेष्ठी प्राह किमीदृक्षा । बुद्धिस्तस्य भविष्यति ॥ ६६ ॥ इत्युक्त्वाथ गतः श्रेष्ठी । ततो मंत्री समागतः ॥ छात्रेणावेदितः सोऽपि । प्रविष्टो भानुमंदिरे ॥ ६७ ॥ भानु मंतं नमस्कृत्य । नतो भट्टस्त्रिलोचनः ॥ ततश्चाभाणि तेनैव—माशीर्वादपुरस्सरं ॥ ६८ ॥—नंद मंत्रिन् धनवान् भव ? तुषसाद ततो मंत्री । लब्धाशीः शुभ्रभूतले ॥ कथितश्च स्ववृत्तांतो । यो कृतो वणिजा सह ॥ ६९ ॥ युष्मत्पादप्रसादेन । कल्याणं समुपस्थितं ॥ निरूपय निजां होरां । चित्तनिर्वृत्तिहेतवे ॥ ७० ॥ विभाव्य भणितं तेन । सखेदेन द्विजन्मना ॥ अपूर्वं यदि कल्याणं । मंत्रिन् होरा न सुंदरा ॥ ७१ ॥ तेनोचे त्वत्प्रसादेन । सर्वं सुस्थं भविष्यति ॥ इत्युक्त्वा च गतो मंत्री । चर्मकारः समागतः ॥ ७२ ॥ छात्रेण भणितः सोऽपि । प्रविष्टो रविमंदिरे ॥ दूरस्थेन ततो

भानुः । शिरोनमनपूर्वकं ॥ ७३ ॥ उपाध्यायोऽपि तेनैव । क्रमेणानेन वंदितः ॥ विप्रः प्रोवाच भो भद्र । किमागमनकारणं ॥ ७४ ॥ युग्मं ॥ सोऽवग् मयि कृपां कृत्वा । श्रूयतां कथयाम्यहं ॥ मया स्वबुद्धियोगेन । वचनच्छलनात्तथा ॥ ७५ ॥ ताराचंद्राभिधः श्रेष्ठी । छलितः सांप्रतं किल ॥ तत्प्रश्नार्थमहं नूनं । संप्राप्तो युष्मदंतिके ॥ ७६ ॥ युग्मं ॥ सुप्रसादं मनः कृत्वा । स्वामिन् होरां निरूपय ॥ विभाव्य भणितं तेन । रेरे होरा न सुंदरा ॥ ७७ ॥ यदि वदत्यसौ श्रेष्ठी । रत्नसारस्य भूपतेः ॥ अपुत्रस्य सुतो जात—स्तेन तुष्टो जनोऽखिलः ॥ ७८ ॥ त्वं तु तुष्टोऽथवा नेति । चर्मकार निवेदय ॥ यदि ब्रूषे न संतुष्ट—स्ततो भूमिपतेर्भयं ॥ ७९ ॥ संतुष्टश्चेद्धनं नैव । लभ्यं संतोष एव हि ॥ तत् श्रुत्वा चर्मकारोऽपि । निरानंदो गतो गृहे ॥ ८० ॥ विप्रस्य निष्टुरैर्वाक्यै—र्दूनितो मानसे यतः ॥ वचसोऽनुकूलात्तुष्टि—रसत्यादपि जायते ॥ ८१ ॥ विवाहमंगलान्यत्र । प्रतीतानि निदर्शनं ॥ असत्यान्यपि लोकानां । जायंते प्रीतिहेतवे ॥ ८२ ॥ अथोद्गतो दिनाधीश—स्ताम्रचूडैर्ववासिरे ॥ उत्थाय स्वक्रियाः कर्तुं । समारब्धो जनस्ततः ॥ ८३ ॥ ताराचंद्रोऽपि वेगेन । निर्गतो रविमंदिरात् ॥ गतो वेश्यागृहे तोषात् । किंचिदुत्फुल्ललोचनः ॥ ८४ ॥ ततोऽसौ रात्रिवृत्तां-

तं । पृष्टो मकरदंष्ट्रया ॥ तेनापि कथितः सर्वो । यथा दृष्टो यथा श्रुतः ॥ ८५ ॥ स तया भणि-
तो भद्र । तथा कार्यं त्वयाधुना ॥ यथा श्रुतं द्विजस्यांते । जयो येन प्रजायते ॥ ८६ ॥ एवमु-
क्त्वा गता वेश्या । पुरतो राजमंदिरे ॥ दृष्टा पृष्टा च भूपेन । किमागमनकारणं ॥ ८७ ॥ तयोक्तं
देव कार्येण । समयश्चेन्निवेद्यते ॥ अनुज्ञाता नरेंद्रेण । वेश्या वक्तुं प्रचक्रमे ॥ ८८ ॥ हाहा क-
ष्टं महीनाथ । महत्खेदस्य कारणं ॥ कुतोऽपि वणिजः कोऽपि । पोतेनात्र समागतः ॥ ८९ ॥ श्रे-
ष्ठिना मंत्रिणा चैवं । तथा चर्मकरेण च ॥ विनापि कारणं नाथ । निर्नाथ इव खेद्यते ॥ ९० ॥
द्वीपस्य नगरस्यास्य । तवापि च महीपते ॥ अकीर्तिर्महती तेन । स्वामिन् विज्ञप्यसे मया ॥९१॥
श्रुत्वेदं भूभुजाज्ञाणि । रेरे नगररक्षक ॥ गत्वा तं वणिजं लात्वा । शीघ्रमागच्छ मत्पुरः ॥ ९२ ॥
सोऽपि शीघ्रं समादाय । संप्राप्तो नृपतेः पुरः ॥ पुण्यानुभावतस्तस्य । सानुकूलो नृपोऽजनि ॥९३॥
नत्वा नृपं निषण्णोऽसौ । सानंदं वीक्ष्य भूभुजा ॥ पृष्टस्त्वं कुत्र वास्तव्य । किमानीतं त्वया वद ॥
॥ ९४ ॥ तेनापि कथितं सर्वं । यथावृत्तं महीभुजे ॥ ततः श्रेष्ठी समाहूतो । भूमिपालेन सत्वरं ॥
॥ ९५ ॥ आयातस्तं तथा दृष्ट्वा । जातः साशंकमानसः ॥ विनम्य च महीनाथं । निषण्णश्चोचिता-

सने ॥ ७६ ॥ रोषारुणितनेत्रेण । साक्षेपं धरणीभृता ॥ भणितो भाष्यसे किंचि—च्छ्रीमानंदे नि-
शामय ॥ ७७ ॥ हे श्रेष्ठिन् श्रेष्ठकर्माणि । कुर्वन् श्रेष्ठी निगद्यते ॥ शेषस्तु नामतः श्रेष्ठी । भाष्य-
ते न तु कर्मतः ॥ ७८ ॥ किमराजमिदं स्थानं । न्यायो वात्र न लभ्यते ॥ येन सर्वाणि कार्या-
णि । क्रियंते स्वेछया त्वया ॥ ७९ ॥ विदेशिवणिजा सार्धं । विवादः केन हेतुना ॥ किं कुकर्म
कृतं तेन । किंचानेन विनाशितं ॥ १०० ॥ श्रेष्ठ्याह श्रूयतां देव । सावधानेन चेतसा ॥ आति-
थेयीं क्रियां कर्तु—मस्यावासे गता वयं ॥ १ ॥ संलापपूर्वकं पृष्टा । वयमेतेन सांजसं ॥ किमस्ति
नास्ति वा मित्र । भांडानामत्र निर्गमः ॥ २ ॥ मयोक्तं दीर्घकालेन । ततो विषादिचेतसा ॥ श्या-
मितास्येन संलप्त—मनेनेदं मुहुर्मुहुः ॥ ३ ॥ शीघ्रं निर्गममिछामो । न चिरं स्थास्नवो वयं ॥ म-
याप्यागतचित्तेन । भणितो भद्र सांप्रतं ॥ ४ ॥ अस्त्युपायः परं मित्र । भवते यदि रोचते ॥ य-
त्किंचिद्रोचते तुभ्यं । प्रतिभांडं तत्प्रस्थकं ॥ ५ ॥ भृत्वा शीघ्रं प्रयछामि । ततस्ते भांडनिर्गमः ॥
प्रतिपन्नमनेनापि । सत्यंकारश्च ढौकितः ॥ ६ ॥ युग्मं ॥ विधृताः साक्षिणो लोका । भांडं दृष्ट्वा-
हृतं कृतं ॥ संव्यवहारमुज्झेति । निषिद्धा भांडविक्रये ॥ ७ ॥ न चौर्यं छलनं नैव । व्यवहारो मया

कृतः ॥ यद्यस्यापि निषेधोऽस्ति । वणिग्धर्मो गतस्तदा ॥ ८ ॥ राजाह संगतं ब्रूते । श्रेष्ठी न्याया-
नुगं वचः ॥ श्रेष्ठिना लभ्यमेवेदं । यद्ययं मन्यते वणिक् ॥ ९ ॥ ताराचंद्रस्ततो ब्रूते । सत्यं सर्व-
मिदं नृप ॥ गृह्णात्वयं निजं लभ्यं । युष्माकं चरणाग्रतः ॥ १० ॥ ददातु प्रस्थकं मह्यं । नव्यानां
मशकास्थनां ॥ भुक्तशनिष्पूतानां । खंडितानामुदूखले ॥ ११ ॥ ततो दातुमशक्तेन । जजल्पे श्रे-
ष्ठिना वचः ॥ विजितोऽहं महाभाग । जयस्त्वयि व्यवस्थितः ॥ १२ ॥ राजाध्यक्षं मया मुक्तः । स-
भा सर्वात्र साक्षिणी ॥ ततो मंत्री समाहूत—स्तदा सोऽपि समागतः ॥ १३ ॥ विनम्य च महीना-
थं । निषसादोचितासने ॥ भणितो भूमिपालेन । मंत्रिन् मंत्रो न सुंदरः ॥ १४ ॥ विवादः केन
कार्येण । संजातो वणिजा सह ॥ साधयागतमात्रेण । किंचानेन विनाशितं ॥ १५ ॥ व्यवहारनि-
रोधोऽपि । सहसैव कथं कृतः ॥ कथितं किं न नः कार्यं । स्वछंद इव लक्ष्यसे ॥ १६ ॥ मंत्र्याह
श्रूयतां देव । सावधानेन चेतसा ॥ एकदाहं हताशेन । विधिनालं विडंबितः ॥ १७ ॥ इतो नी-
तः समाकृष्य । पुरे तारापुरेऽन्यदा ॥ अस्य पित्रा समं तत्र । जातं मे सख्यमुत्तमं ॥ १८ ॥ अ-
न्यदा याचितो लक्षो । दत्तस्तेनापि सोंजसा ॥ तस्मै ग्रहणके दत्तं । दक्षिणाक्षि निजं मया ॥

॥ १७ ॥ वयमत्र समायाताः । संहृतः सोऽपि वेधसा ॥ एषोऽप्यत्रागतो दृष्टः । सांप्रतं भणितो मया ॥ २० ॥ दत्वा लक्षं जनाध्यक्षं । गृह्णेऽहं दक्षिणेक्षणं ॥ व्यापारोऽयं महाराज । संमतो व्यवहारिणां ॥ २१ ॥ राज्ञोक्तं शोभनं वक्ति । मंत्री नीतिविचक्षणः ॥ तदहो मंत्रिणो दोषो । विद्यते नात्र कर्मणि ॥ २२ ॥

ताराचंद्रस्ततः प्राह । सत्यमेतन्न संशयः ॥ व्यवहारविलोपो हि । परिणामे न सुंदरः ॥ २३ ॥
संति प्रभूतलोकाक्षि—लक्षाणि ग्रहणे मम ॥ तन्मध्यमिलितं नैव । लप्स्यते तव लोचनं ॥ २४ ॥
तदर्पयाक्षि मे वामं । तत्तुल्यं वीक्ष्य येन ते ॥ आनीय च जनाध्यक्षं । दीयते दक्षिणेक्षणं ॥ २५ ॥
ततः संजातखेदेन । चिंतितं काणमंत्रिणा ॥ अहो मे मूर्खता येन । दीर्घं दृष्टं न चेतसा ॥ २६ ॥
अथ संकटमायातं । लोकनीतिरियं पुनः ॥ सर्वनाशे समुत्पन्ने । ह्यर्धं त्यजति पंडितः ॥ २७ ॥ निर्जितोऽहं महाभाग । बुद्धिस्ते भद्र भद्रिका ॥ राजाध्यक्षं मया मुक्तो । व्यवहारं निजं कुरु ॥ २८ ॥
चर्मकारः समानीतो । भयभीतमना नरैः ॥ ब्रूहि रे वणिग्भांमस्य । व्यापारः किं निवारितः ॥ २९ ॥
तेनापि कथितं सर्वं । यत्कृतं यच्च भाषितं ॥ सभ्यैरभाणि निर्दोष—श्चर्मकारोऽपि लक्ष्यते ॥ ३० ॥

ताराचंडोऽप्युवाचेदं । मायामय निशामय ॥ यच्च लोकान्मयाश्रावि । वचो विस्मयकारकं ॥ ३१ ॥
रत्नसारनरेंद्रस्य । निष्पुत्रस्य सुतोऽजनि ॥ तेन तुष्टो जनः सर्व—स्त्वं तुष्टः किं न कथ्यतां ।३२।
स प्राह सुतरां तुष्ट—स्तर्हि याहि निजे गृहे ॥ न ते किंचिच्च दातव्यं । परितोषो हि वेतनं ॥
॥ ३३ ॥ ताराचंडो नरेंद्रस्य । प्रणम्य पदपंकजं ॥ पाशत्रयविनिर्मुक्तो । व्यवहारपरोऽजनि ॥ ३४॥
स्वल्पेनापि च कालेन । विक्रीतं वणिजा निजं ॥ भांडं च भूरिलाभोऽपि । लब्धः पुण्यानुभाव-
तः ॥ ३५ ॥ पृष्टो राजा भृतो पोतः । प्रतिभांडेन सर्वतः ॥ गत्वा मकरदंष्ट्रापि । पृष्टा गमनहेतवे
॥ ३६ ॥ रुद्धशब्दं रुदंती सा । लोचने गलदश्रुणी ॥ बिभ्रती वक्तुमारब्धा । यद्येयं मम पुत्रिका
॥ ३७ ॥ प्राणेभ्योऽपि प्रिया वत्स । दत्ता मदनमंजरी ॥ आकृष्टयुवभृंगौघा । ह्याम्रडोरिव मंजरी ॥
॥ ३८ ॥ चंडेण भवता भाव्यं । जडिका सा विशेषतः ॥ प्रतिकूलेऽनुकूला ये । स्वल्पास्ते सज्ज-
ना जनाः ॥ ३९ ॥ मयि स्नेहो न मोक्तव्य—स्ताराचंद्र सदा त्वया ॥ यत्प्रतिपन्ननिर्वाहं । कुर्वते
विरला जनाः ॥ ४० ॥ उक्तं च—बहुवल्लहेवि कय—विप्पिएवि अन्नत्थबद्धरागेवि ॥ जंमि मणो
नियत्तइ । सो नेहो परिचत्त सेसो ॥ ४१ ॥ ताराचंड चिरं जीव । यावच्चंद्रदिवाकरौ ॥ स्मर्तव्याहं

सदाकालं । वत्से मदनमंजरी ॥ ४२ ॥ इत्युक्ते दंपती पोते । समारूढौ जनाकुले ॥ पोतोऽपि गं·
तुमारब्धो । गरुत्मानिव वेगतः ॥ ४३ ॥ स्तोकैरेव दिनैस्तूर्णं । पूर्वपुण्यानुभावतः ॥ प्राप्तो जल·
निधेस्तीरे । पुरे तारापुराभिधे ॥ ४४ ॥ नानाक्रयाणकाकीर्णं । श्रुत्वा तं पोतमागतं ॥ आनंदि·
तो नराधीशो । नागरीको जनस्तथा ॥ ४५ ॥ ततस्तीरे धृतः पोतो । लंबिता नंगरा द्रुतं ॥ उ·
त्तीर्णश्च ततः पोता—त्ताराचंद्रो भयान्वितः ॥ ४६ ॥ ततः पणांगनावृंदैः । सानंदैः कृतमंगलः ॥
अनेकैर्बंदिवृंदैश्च । स्तूयमानगुणोत्करः ॥ ४७ ॥ मानयन्मान्यलोकौघं । नमनीयान्नमन्नसौ ॥ सं·
भाषयंश्च संभाष्यान् । दानं ददत्तदर्थिनां ॥ ४८ ॥ संप्राप्तो निजगेहं च । बद्धबंधुरतोरणं ॥ निज·
स्य बंधुवर्गस्य । सोत्कंठो मिमिले स च ॥ ४९ ॥ निर्विशेषकं ॥ पुष्पतांबूलवस्त्राद्यैः । सन्मा·
नितो निजो जनः ॥ गतश्च निजके स्थाने । ताराचंडविसर्जितः ॥ ५० ॥ कृत्वा स्नानादिकं कृत्यं
। ताराचंडोऽपि सत्वरं ॥ गृहीत्वा प्राभृतं प्राज्यं । जगाम नृपमंदिरं ॥ ५१ ॥ दृष्टो राजा ततस्तस्मै
। ढौकितं प्राभृतं तथा ॥ प्रोक्तश्च निजवृत्तांतः । स्वपोतागमनादिकः ॥ ५२ ॥ उच्छुल्कश्च कृतो
राज्ञा । ततो वेलाकुले गतः ॥ उत्तारितं ततो भांडं । नीतं च निजमंदिरे ॥ ५३ ॥ सर्वस्यापि

स्वलोकस्य । दातव्यं च ददौ मुदा ॥ ततोऽसौ बुभुजे भोगान् । प्रमोदभरनिर्भरः ॥ ५४ ॥ सार्धं निजकलार्याभ्यां । पूर्णाखिलमनोरथः ॥ धर्मध्यानरतो नित्यं । संतोषैकमनाः खलु ॥ ५५ ॥ विज्ञायेदमसंतोषः । सर्वदा त्यज्यतां जनाः ॥ विधीयतां च संतोषः । सर्वकल्याणकारकः ॥ ५६ ॥ इति संतोषाधिकारे ताराचंद्राभिधश्रेष्ठिकथा परिसमाप्ता. ॥ इति पंचमोऽधिकारः समाप्तः ॥

अथ संसाराधिकारः षष्ठः प्रारभ्यते, अस्य चायमभिसंबंधः—पूर्वं संतोषवतां प्रशंसा कृता, संतोषत्वं च संसारासारताभावनात एव जायते, इत्यतः संसारासारतात्र प्रोच्यते, इत्यनेन संबंधोऽयं व्याख्यायते, तत्रैते श्लोकाः—

॥ मूलम् ॥—यौवनं जरयाघ्रातं । रूपं रोगैरभिद्रुतं ॥ जीवितं यमराजस्य । वशवर्ति क्व सारता ॥ १ ॥ पर्वता अपि शीर्यंते । शुष्यंति च जलाशयाः ॥ यत्र तत्रान्यवस्तूनां । सारता कुत्र कल्प्यते ॥ २ ॥ एवं सांसारिकाः सर्वे । भावा वैरस्य हेतवः ॥ रंभास्तंभोपमाः प्रायो । निस्साराः क्षणभंगुराः ॥ ३ ॥ जीवेनानंतशः क्षुण्णे । चतुर्गतिगतागतैः ॥ तथाप्यलब्धपर्यंते । ह्यनादौ भवसागरे ॥ ४ ॥ अलब्धांतःपरिस्पंदे । दुःखश्वापदसंकुले ॥ व्याधिजन्मजरामृत्यु—वारिवारभयंकरे ॥

॥ ५ ॥ प्रमादमदिरामूढो । विचेता नष्टसद्गतिः ॥ कः प्राणी पतितो नात्र । व्यूढो विषयवीचिभिः
॥ ६ ॥ त्रिभिर्विशेषकं ॥ नानायोनिसमाकीर्णे । जीवः कर्मविनिर्मितां ॥ त्रैलोक्यरंगे नटव—च्छ-
त्तेऽनेकस्वरूपतां ॥ ७ ॥ क्वचिन्नारकभावेन । क्वचित्तिर्यग्योनिकः ॥ क्वचिच्च जायते मर्त्यो । दिवि
देवः कदाचन ॥ ८ ॥ क्वचिद्राजा क्वचिद्रंकः । क्वचिद्दुःखी क्वचित्सुखी ॥ क्वचिन्निंद्यः क्वचिद्वंद्यः ।
क्वचिद् ज्ञानी क्वचिज्जडः ॥ ९ ॥ सुरूपः सुभगः क्वापि । कुरूपो दुर्भगः क्वचित ॥ क्वचिद् द्वेष्यः
प्रियः क्वापि । जीवो जगति जायते ॥ १० ॥ प्रियाप्रयोजने केचि—त्केचिच्चापत्यचिंतया ॥ नी-
रोगताकृते केचित् । केचिद्धनजिगीषया ॥ ११ ॥ खिद्यंते सर्वदा जीवा । असंपूर्णमनोरथाः ॥ रा-
गद्वेषग्रहग्रस्ता । विवदंतः परस्परं ॥ १२ ॥ शुक्रशोणितसंभूते । सप्तधातुमलाश्रये ॥ त्वङ्मात्रप्रावृ-
ते पुंसां । काये का रमणीयता ॥ १३ ॥ रमणी या रमणीया । निगद्यते काममोहितमनोभिः ॥
तस्या अपि निस्सारं । शरीरकं पूतिमलगंधि ॥ १४ ॥ संसारासारता येषा—मेषा नो मनसि स्थि-
ता ॥ भ्रमंति ते सदा त्रस्ता । भवारण्ये मृगा यथा ॥ १५ ॥ जनयित्री जनी यत्र । जनी च ज-
निका भवेत् ॥ कुबेरदत्तया दत्तो । दृष्टांतोऽत्र जिनागमे ॥ १६ ॥ संसारासारतामेनां । विभाव्य

निजमानसे ॥ ते धन्या येऽत्र संसारे । कुर्वते न रतिं जनाः ॥ १७ ॥

व्याख्या—इति श्लोका अष्टादश प्रायः पाठसिद्धा एव, तथापि किंचिद्व्याख्यायते—तत्र यौवनं जरयाघ्रातमिति तरुणत्वं वृद्धत्वेन क्रोडीकृतं, रूपं रोगैरभिद्रुतमिति सुगमं, जीवितं यमराजस्य वशवर्तीत्यायुष्कं मृत्योरायत्तं, अतः कारणात्क सारता. न कुत्रापीत्यर्थः. पर्वता अपि शीर्यंते इति श्लोकः सुगमः, एवं सांसारिकाः सर्वे भावाः, इत्येवममुना प्रकारेण सांसारिकाः संसारोद्भवाः सर्वे समस्ता भावाः पदार्था वैरस्यहेतव इति विरसताकारणं, रंभास्तंभोपमा इति कदलीस्तंभसदृशाः प्रायो निःसारा इति, प्रायेण साररहिताः, क्षणभंगुरा इति क्षणविनश्वराः. जीवेनानंतशः क्षुण्ण इत्यादिश्लोकत्रयः, तत्र कः प्राणी पतितो नावगूढो विषयवीचिभिरिति संबंधः. जीवेन जंतुनानंतशोऽनंतवाराः क्षुण्णे व्याप्ते, चतुर्गतिगतागतैरिति नारकतिर्यग्नरामरलक्षणे गतिचतुष्टये गमनागमनैः. तथापि तेनापि प्रकारेणानंतकृत्वः परिभ्रमणलक्षणेनाप्राप्तावसानेऽनादावादिरहिते भवसागरे संसारसागरेऽलब्धांतःपरिस्पंदेऽप्राप्तमध्यविभागे. दुःखश्वापदसंकुलेऽशर्मदुष्टजलचरजीवाकुले, व्याधिजन्मजरामृत्युवारिवारभयंकरे इति व्याधिजन्मजरामृत्यव एव वारिवारो जलव्रातस्तेन भयंकरे भयानके,

प्रमादमदिरामूढ इति प्रमाद एव मदिरा सुरा तया मूढो विगतकृत्याकृत्यविवेको, विचेता नष्टचित्तः, नष्टसद्गतिर्नष्टसन्मार्गः, कः प्राणी पतितो नात्र संसारे? व्यूढः प्रेरितो विषयवीचिभिः शब्दादिविषयकल्लोलैः? अपितु सर्वोऽपीत्यर्थः. तथा नानायोनिसमाकीर्णेऽनेकजीवोत्पत्तिस्थानाकुले जीवः प्राणी कर्मनिष्पादितां त्रैलोक्यरंगे त्रिभुवनरंगभूमौ, रंगश्च नर्तनस्थानं, नटवन्नट इव धत्ते धारयत्यनेकरूपतां नानाप्रकाररूपतामिति. एतदेव व्यनक्ति, क्वचिन्नारकभावेनेत्यादिश्लोकास्त्रयः सुगमा एव. किंच संसारवर्तिनो जीवाः सर्वदा दुःखिता एवेति दर्शयन्नाह—प्रियाप्रयोजने केचिदित्यादिश्लोकास्त्रयः सुगमा एव. तथा शरीरेषु सारताबुद्धिं निरस्यन्नाह—शुक्रशोणितसंभूत इत्यादि, शुक्रं पितुः संबंधिरेतः, शोणितं मातुः संबंधि रक्तं, ताभ्यां संभूते निष्पन्ने सप्तधातुमलाश्रये त्वग्रक्तमांसमेदास्थिमज्जाशुक्रलक्षणमलस्थाने त्वङ्मात्रावृते छविमात्राच्छादिते पुंसां पुरुषाणां काये शरीरे का? न काचिदित्यर्थः, रमणीयता रम्यत्वमिति. तथा रमणीया रम्या रमणी कामिनी या यका निगद्यत उच्यते काममोहितमानसैस्तस्या अपि चारुत्वेनाभिमताया अपि रमण्या निःसारं साररहितं पूतिमलगंधि कुत्सितमलयुक्तं. अथोपसंहरन्नाह—संसारासारता येषामित्यादिश्लोकास्त्रयः सुगमा एव.

कुबेरसेनादृष्टांतः पुनरयं—अस्तीह भारते क्षेत्रे । धरारामावतंसकः ॥ सरःसरित्पुरग्राम—विहारारामराजितः ॥ १ ॥ सूरसेनाभिधो देशो । जनतानंदकारकः ॥ प्रमोदकारकानेक—वस्तुस्तोमसमाकुलः ॥ २ ॥ युग्मं ॥ बभूव तत्र विख्याता । कुबेरपुरसन्निभा ॥ नित्यं पुण्यजनाकीर्णा । मथुरानामसत्पुरी ॥ ३ ॥ रेजुर्यत्र सपद्मानि । मनोहारीणि सर्वतः ॥ मध्ये शुभ्रोच्चगेहानि । बहिश्चारुसरांसि च ॥ ४ ॥ प्रियालपनसाराणि । सुमनःशोभितानि च ॥ यत्रांतः साधुवृंदानि । काननानि बहिर्बभुः ॥ ५ ॥ परं प्रार्थयते लोकं । यत्र साधुजनो भृशं ॥ दुःखैरेव गुणो यत्र । दोषाय खलु कल्प्यते ॥ ६ ॥ गुणस्य बाधिका वृद्धि—र्यत्रेष्टा शब्दशासने ॥ आगमस्यापि नित्यत्वं । यत्र तत्रैव संमतं ॥ ७ ॥ स्त्रीलोचनेषु लोलत्वं । कृशत्वं यदि विग्रहे ॥ पक्षपातः पतंगेषु । पत्रचिंता च नारीषु ॥ ८ ॥ कामिनां दूतसंचारो । रात्रेर्दोषाभिधेयता ॥ भ्रूलतासु विलासिन्याः । कौटिल्यं यत्र बिभ्रती ॥ ९ ॥ आसीत्तत्र विशालाक्षी । विदग्धा कामिनां प्रिया ॥ नाम्ना कुबेरसेनेति । सुप्रसिद्धा विलासिनी ॥ १० ॥ या सर्वकामशास्त्रेषु । सकलासु कलासु च ॥ निःशेषरतचेष्टासु । प्राविण्यमधिकं दधौ ॥ ११ ॥ शृंगाररसभृंगारो । विलासरसकूपिका ॥ सद्भावपण्यपयःकुंभं । सारसौंदर्यमं-

दिरं ॥ १२ ॥ सच्चंदनद्रुमालीव । भुजंगौघनिषेविता ॥ प्रावृट्कालनभःश्रीवद्—घनोत्तुंगपयोधरा ॥ १३ ॥ भुजंगराजराजीव । महाभोगविराजिनी ॥ मीनकेतुपताकेव । जगन्मोहविधायिनी ॥१४॥ समग्रकामशास्त्रोक्ता—लिंगनादिगुणव्रजे ॥ सर्वातिशायिनैपुण्यं । दधार चतुरानना ॥ १५ ॥ चतुर्भिः कलापकं ॥

एवं वेश्याजने प्राज्यं । प्राधान्यं प्रवितन्वती ॥ मान्या सा राजलोकस्य । पौरलोकस्य चाधिकं ॥ १६ ॥ नरेंद्रामात्यपुत्राद्यै—स्त्यागिभिर्भोगिभिः सह ॥ भुंजाना सुंदरान् भोगान् । निन्ये कालं यथासुखं ॥ १७ ॥ युग्मं ॥ अन्यदा जठरे तस्या । गर्भः प्रादुरभूत्किल ॥ तेनासौ वर्धमानेन । नितरां पीडिता सती ॥ १८ ॥ स्वमातुः कथयामास । यथा मातर्ममाधुना ॥ संजाता दारुणा पीडा । जठरांतः सुदुःसहा ॥ १९ ॥ युग्मं ॥ तयाप्याशु समाहूय । वैद्यस्यासौ प्रदर्शिता ॥ तेनापि क्षणमालोक्य । पृष्टं रोगस्य कारणं ॥ २० ॥ यथेयं किं सदा भुंक्ते । पिबत्यंबु च कीदृशं ॥ स्थाने वा कीदृशे शेते । व्यापारं वा करोति कं ॥ २१ ॥ इत्यादि प्रश्निते कृत्स्ने । तेन वैद्येन सूत्रतः ॥ माता कुबेरसेनाया—स्तस्मै सर्वं न्यवेदयत् ॥ २२ ॥ ततश्चासौ परामृश्य । कराग्रेण सम·

ततः ॥ सम्यक्सम्यक् तदुदरं । गर्भदोषमबुध्यत ॥ २३ ॥ ततो निश्चित्य तां पीडां । बभाणैवं भि·
षग्वरः ॥ यथास्या जठरे पीडा । युग्मगर्भसमुद्भवा ॥ २४ ॥ तस्मादस्यै ददामीदं । नानाऽव्यं
शुभौषधं ॥ मनाक्संजायते येन । शरीरेऽस्याः सुखासिका ॥ २५ ॥ प्रदत्तं च तकं तेन । वैद्येन
विधिपूर्वकं ॥ ईषत्कुबेरसेनायाः । उपशांता च वेदना ॥ २६ ॥ ततः सन्मान्य तांबूल—पुष्पादि·
वरवस्तुभिः ॥ सस्नेहं सप्रणामं च । तया वैद्यो विसर्जितः ॥ २७ ॥ ततश्च कुट्टिनी प्राह । यथा
वत्से व्यथाकरं ॥ गालयामि प्रयोगेण । युग्मगर्भमिमं तव ॥ २८ ॥ अन्यथा तेऽस्य गर्भस्य । व·
र्धमानस्य दोषतः ॥ अत्यंतं दारुणा पीडा । भविष्यति सुदुःसहा ॥ २९ ॥ अतोऽयं गाल्यतां ग·
र्भः । क्रियतां मामकं वचः ॥ यद्यस्ति जीविताशा ते । नोचेत्पुत्रि विनंक्ष्यसि ॥ ३० ॥ कुबेरसे·
नयापीदं । श्रुत्वा मातुः प्रभाषितं ॥ दयार्द्रचित्तयावाचि । माभाणीर्मातरीदृशं ॥ ३१ ॥ महापात·
कमेतद्धि । विशिष्टजननिंदितं ॥ यद्गर्भपातनं नाम । भ्रूणहत्येति तद्विदुः ॥ ३२ ॥ तस्मान्न गाल·
याम्येनं । गर्भं प्राणात्ययेऽपि हि ॥ किं भूरिजल्पितेनाम्ब । यद्भाव्यं तद्भविष्यति ॥ ३३ ॥ अथो·
वाह तकं गर्भं । कुर्वंतमपि वेदनां ॥ दिवसेषु च पूर्णेषु । सासूत युगलं वरं ॥ ३४ ॥ दारको दा·

रिका चेति । सुरूपं डिंभकद्वयं ॥ कदलीगर्भसंकाशं । सर्वावयवसुंदरं ॥ ३५ ॥ अथांगाणि हि-
तार्थिन्या । जनन्या सा निजांगजा ॥ यथा डिंभकयुग्मं ते । नेदं सुंदरि सुंदरं ॥ ३६ ॥ यतस्ते
जनिता तेन । गर्भस्थेनापि वेदना ॥ अत्यंतं दुःसहा वत्से । तदिदं त्यज्यतामिति ॥ ३७ ॥ त-
यावाचि करिष्यामि । जननि तावकं वचः ॥ किंतु प्रपालयाम्येत—त्कतिचिद्दिवसानहं ॥ ३८ ॥
दशाहोत्सवमेतस्य । तावदंब करोम्यहं ॥ पश्चाच्च पूरयिष्यामि । सर्वांस्तव मनोरथान् ॥ ३९ ॥ एवं
तर्हि विधेहीति । प्रतिपन्ने तया ततः ॥ तदपत्ययुगं सापि । पालयामास यत्नतः ॥ ४० ॥ समग्रा-
भीष्टसंपत्त्या । हृद्यैर्मितहिताशनैः ॥ पालयंत्यास्ततस्तस्या । दिनानां दशकं गतं ॥ ४१ ॥ अथाका-
रि तयोः कृत्यं । दशाहोत्सवसंभवं ॥ सर्वं सर्वजनानंद—कारकं सुमहर्द्धिभिः ॥ ४२ ॥ ततः कुबेर-
दत्तेति । नामांकं मुद्रिकाद्वयं ॥ कारयित्वा तया बद्धं । कंठे बालकयोस्तयोः ॥ ४३ ॥ ततश्च चा-
रुमंजूषा । प्रत्यग्रा प्रगुणीकृता ॥ विस्तीर्णमध्यभागोरु—विन्यस्तमृदुतूलिका ॥ ४४ ॥ तूलिकोपरि
तद्युग्मं । शायितं च ततस्तया ॥ अश्रुपातं विमुंचंत्या । वरवस्त्रसमावृतं ॥ ४५ ॥ ततश्च पिहितद्वा-
रा । सा मंजूषा सुसंवृता ॥ नीरंध्रीकृतसर्वांगा । तालिता बद्धशृंखला ॥ ४६ ॥ ततश्चासौ समुत्पा-

ट्य । नीत्वा पुंभिः कृतादरैः ॥ यमुनायां महानद्यां । संध्याकाले प्रवाहिता ॥ ४७ ॥ वीचिवन्नीरपू-
रेण । महावेगप्रवाहिणा ॥ ऊह्यमानाथ सा प्रातः । प्राप्ता सौरिकपत्तने ॥ ४८ ॥ अथ शरीरचिं-
तार्थं—मागतौ सरितस्तटे ॥ सौरिकपुरवास्तव्यौ । श्रेष्ठिनौ श्रेष्ठचेष्टितौ ॥ ४९ ॥ नाम्नैको यक्षद-
त्ताख्यो । महेश्वराभिधोऽपरः ॥ नदीतीरोपकंठं च । यावच्छौचार्थमागतौ ॥ ५० ॥ तावत्तौ नीरपूरे-
ण । प्रेर्यमाणां मनोहरां ॥ दृष्टवंतौ नदीमध्ये । मंजूषां मंक्षुगामिनीं ॥ ५१ ॥ त्विभिर्विशेषकं ॥
समीक्षमाणयोरेव । तयोस्तत्र सकौतुकं ॥ हस्ताभ्यासे क्षणादेव । वेगेनैव समाययौ ॥ ५२ ॥
ततस्ताभ्यां धृता शीघ्रं । गच्छंती करपल्लवैः ॥ नीता च तीरदेशे सा । तथोद्घाट्य निरीक्षिता ॥
॥ ५३ ॥ ततोऽवलोकितं ताभ्यां । तन्मध्ये बालकद्वयं ॥ कंकेल्लिपल्लवच्छायं । सुकुमारशरीरकं ॥
॥ ५४ ॥ देहोद्भूतप्रभाजालै—रुद्योतयद्दिशो दश ॥ कुर्वद्रूपातिरेकेण । लोकानां लोचनोत्सवं
॥ ५५ ॥ ततो महेश्वरः प्राह । तद्रूपाक्षिप्तमानसः ॥ भो श्रेष्ठिन् पश्य पश्येदं । सुंदरं डिंभकद्वयं
॥ ५६ ॥ अहो लावण्यसंपूर्णो । रूपवानेष दारकः ॥ अहो समग्रसौंदर्य—राशिरेषापि दारिका ॥
॥ ५७ ॥ अथोक्तं यक्षदत्तेन । केनापीदं समुज्झितं ॥ म्रियतामापदं वापि । प्राप्नुयादिति वांछया ॥

॥ ५८ ॥ अतोऽनयोर्गृहाणैकं । यत्तव प्रतिभासते ॥ गृह्णाम्यहं द्वितीयं तु । श्रेष्ठिन् यत्त्वं विमुंच-
सि ॥ ५९ ॥ ततो महेश्वरः प्राह । बालिका मे भवत्विति ॥ बालकं त्वं गृहाणेम—मेवमस्त्विति
सोऽवदत् ॥ ६० ॥ तद्वाग्भिर्हृष्टसंतुष्टौ । लात्वा तड्डिंभयुग्मकं ॥ तदालोकनसन्निष्ठौ । गतौ गेहे
निजे निजे ॥ ६१ ॥ दारको यज्ञदत्तेन । स्वभार्यायै समर्पितः ॥ अयं पुत्रस्तवेत्युक्त्वा । यत्नतः
पाल्यतामिति ॥ ६२ ॥ महेश्वरोऽपि सस्नेह—मर्पयामास दारिकां ॥ गेहिन्यास्तव पुत्रीयं । यत्नेन
प्रतिपालय ॥ ६३ ॥ अथेदं वर्धते तत्र । धात्रीपंचकलालितं ॥ क्षीरपानाभिषेकांक—धारणक्रीड-
नादिभिः ॥ ६४ ॥ सद्भोज्यैर्लेह्यपेयाद्यै—र्नानालंकरणादिभिः ॥ तस्यैवं लाल्यमानस्य । वर्षाण्य-
ष्टौ क्रमाद्ययुः ॥ ६५ ॥ ततः शब्दादिविद्यानां । ग्रहणाय युगं ततः ॥ पुष्पालंकारवस्त्राद्यैः । प्रवि-
भूषितविग्रहं ॥ ६६ ॥ श्रेष्ठिभ्यां कृतपूजस्य । वरवस्त्रफलादिभिः ॥ एकस्यैव च सानंद—मुपाध्या-
यस्य ढौकितं ॥ ६७ ॥ युग्मं ॥ एकत्रैव प्रयत्नेन । गृह्णतः सकलाः कलाः ॥ परां कोटिं समारूढा ।
तस्य प्रीतिः परस्परं ॥ ६८ ॥ एवं स्नेहानुरक्तस्य । पठतः क्रमतस्तथा ॥ क्रमेणोपात्तविद्यस्य । सं-
जातं नवयौवनं ॥ ६९ ॥

अथ महेश्वरेणोक्तं । पश्याहो यक्षदत्तक ॥ परस्परमिदं युग्मं । जातं प्रेमानुरक्तकं ॥ ७० ॥
अयं कुबेरदत्ताख्यः । पुत्रस्तेऽतीववल्लभः ॥ मत्पुत्रिकावियोगेन । प्राणान्मुंचति निश्चितं ॥ ७१ ॥
इयं कुबेरदत्तापि । मत्पुत्री बंधुवत्सला ॥ निजात्मनो वियोगेन । नूनं प्राणैर्विमुच्यते ॥ ७२ ॥
तदहो यक्षदत्तात्र । संगतमिदमेव हि ॥ अन्योन्यमनयोरेव । यद्विवाहो विधीयते ॥ ७३ ॥ अथा-
नंदितचित्तोऽसौ । यक्षदत्तोऽब्रवीदिदं ॥ साधु साधु त्वया प्रोक्तं । श्रेष्ठिंस्तत्क्रियतामिति ॥ ७४ ॥
ततश्चोभयसंमत्या । निजकापत्ययोस्तयोः ॥ कारितं सर्वसामग्र्या । पाणिग्रहणमंगलं ॥ ७५ ॥ अ-
थैवं तिष्ठतोस्तत्र । संपादितविवाहयोः ॥ अन्योन्यं परमप्रेम—तंतुनिर्बद्धचेतसोः ॥ ७६ ॥ नित्यं
नानाप्रकाराभिः । क्रीडाभिः क्रीडतोरलं ॥ संपद्यमाननिःशेष—तुंगभोगोपभोगयोः ॥ ७७ ॥ अ-
खंडसुखसंदोह—समुद्रांतर्निमग्नयोः ॥ अतियाति तयोः कालः । स्वर्गे स्वर्गौकसामिव ॥ ७८ ॥
त्रिभिर्विशेषकं ॥ अन्यदा द्यूतसक्ताभ्यां । ताभ्यां ग्रहणके किल ॥ संचारिते स्वनामांके । स्वे मु-
द्रिके परस्परं ॥ ७९ ॥ ततः कुबेरदत्तोऽसौ । ददर्शाथ कथंचन ॥ सत्कां कुबेरदत्ताया—स्तां ना-
मांकितमुद्रिकां ॥ ८० ॥ ततो विचिंतयामास । यथेयं ननु मुद्रिका ॥ मन्मुद्रिकासमानैव । वर्णा-

कघटनादिभिः ॥ ८१ ॥ भाव्यं च कारणेनात्र । ननु केनापि निश्चितं ॥ अतः पृछामि गत्वाहं । वृत्तांतं पितरं निजं ॥ ८२ ॥ संचिंत्यैवं निजे चित्ते । द्यूतक्रीडां विमुच्य च ॥ गत्वा पितुः समीपेऽसौ । तं वृत्तांतमपृछत ॥ ८३ ॥ यक्षदत्तोऽपि निर्बंधं । ज्ञात्वा तस्या निवर्तकं ॥ मूलादारभ्य निःशेषं । तं वृत्तांतं न्यवेदयत ॥ ८४ ॥ ततः श्रुत्वा पितुः पार्श्वे । सर्वं व्यतिकरं निजं ॥ पाणिग्रहणपर्यंतं । मंजूषादर्शनादिकं ॥ ८५ ॥ स एवं चिंतयामास । नूनमेषा मम स्वसा ॥ भार्याभावोऽपि नैवास्या—मभून्मम कदाचन ॥ ८६ ॥ तदेव सुंदरं जातं । यदकृत्यं न सेवितं ॥ मया मोहविमूढेन । सहोदर्या तया सह ॥ ८७ ॥ अहो दुरंत एवायं । घोरः संसारसागरः ॥ यन्मध्यवर्तिनः सत्वाः । प्राप्नुवंति विडंबनां ॥ ८८ ॥ मातापि वत्सला भूत्वा । भार्या यत्र प्रजायते ॥ भार्यापि मातृभावेन । धिक्संसारविडंबनां ॥ ८९ ॥ स्वसा भूत्वा जनी यत्र । जनी भूत्वा स्वसा भवेत् ॥ माता सुता सुता माता । यत्रासौ निर्गुणो भवः ॥ ९० ॥ एवमादि विचिंत्यासौ । संसारासारतां गतः ॥ गत्वा कुबेरदत्तायाः । सर्वमाख्यद्यथा श्रुतं ॥ ९१ ॥ उक्तवांश्च यथा भद्रे । खेदं चेतसि माकृथाः ॥ यत ईदृश एवायं । नानानर्थभृतो भवः ॥ ९२ ॥ इत्यादिभिः प्रियैर्वाक्यै—र्निर्वैरस्य

दीपकैः ॥ प्रतिबोध्य पितुर्गेहे । प्रेषयामास तामसौ ॥ ९३ ॥ ततश्च पितरं पृष्ट्वा । द्रव्योपार्जनहेतवे ॥ कृत्वावशेषसामग्रीं । जगाम मथुरां पुरीं ॥ ९४ ॥ व्यवहरन्नसौ तत्र । विविधक्रयविक्रयैः ॥ भूतमर्जयामास । द्रव्यं पुण्यानुभावतः ॥ ९५ ॥ अथ कुबेरसेनाख्यां । वेश्यामपश्यदन्यदा ॥ ख्यातकीर्तिं स्वकामेव । जननीं पूर्ववर्णितां ॥ ९६ ॥ ततस्तस्याः सुरूपत्वा—त्कामाकुलितमानसः ॥ काले गछति तामेव । चक्रे च स्वपरीग्रहे ॥ ९७ ॥ तत्रैव विदधत्सर्वं । भोजनस्नपनादिकं ॥ पुत्रमुत्पादयामास । तस्यामेव स्वमातरि ॥ ९८ ॥ इतश्च—

अथ कुबेरदत्तापि । वसतिस्म पितुर्गृहे ॥ कुर्वंती धर्मकार्याणि । यथाकामं यथाबलं ॥ ९९ ॥ तमेव निजवृत्तांतं । चिंतयंती दिवानिशं ॥ संसारस्य च वैरस्यं । भावयंती क्षणे क्षणे ॥ १०० ॥ शुश्राव सुव्रताख्याया । गणिन्याश्चरणांतिके ॥ सर्वज्ञभाषितं धर्मं । भावतः प्रतिवासरं ॥ १ ॥ अन्यदा जातवैराग्या । संसारोछेदकारणं ॥ गणिन्याः सुव्रताख्यायाः । समीपे व्रतमाददे ॥ २ ॥ ततः श्रुतमधीयाना । संवेगातिशयादियं ॥ षष्टाष्टमादिकं तेपे । तपस्तीव्रं सुदुष्करं ॥ ३ ॥ एवं सर्वां प्रकुर्वत्याः । सामाचारीं यथोदितां ॥ संसारासारतां चैव । भावयंत्या विशेषतः ॥ ४ ॥ वर्धमानशु-

मात्यंत—परिणामातिरेकतः ॥ क्षयोपशमतश्चैव । सदाचरणकर्मणः ॥ ५ ॥ तस्याः कुबेरदत्तायाः । विशिष्टगुणहेतुकं ॥ अवधिज्ञानमुत्पन्नं । रूपिवस्तुप्रकाशकं ॥ ६ ॥ तेन प्रलोकयंती च । भारतं क्षेत्रमंजसा ॥ क्रमेणोपयुजे सर्वं । मथुरां नगरींप्रति ॥ ७ ॥ ददर्श भ्रातरं तत्र । कलत्रीकृतमातरं ॥ बालवत्सं तयोरेव । पुत्रं चाचिंतयत्ततः ॥ ८ ॥ अहो मुरौद्रमज्ञानं । महादुःखौघकारणं ॥ महाविडंबनाहेतु—र्महामूलं महापदां ॥ ९ ॥ अज्ञानोपहता जीवा । न बुध्यंते हिताहितं ॥ हेयोपादेयतां चैव । धर्माधर्मस्वरूपतां ॥ १० ॥ भक्ष्याभक्ष्यादिकं वस्तु । पेयापेयादिकं तथा ॥ कृत्याकृत्यविभागं च । गम्यागम्यं शुभाशुभं ॥ ११ ॥ अज्ञानेन हि जीवानां । दीर्घः संसारसागरः ॥ दीर्घा कर्मस्थितिश्चैव । दीर्घा दुःखपरंपरा ॥ १२ ॥ अज्ञानादेव कुर्वंति । जीवाः कर्मातिनिर्घृणं ॥ गोहत्यां भ्रूणहत्यां च । स्त्रीहत्यां ब्रह्मघातनं ॥ १३ ॥ जल्पंति च मृषावादं । परद्रव्यं हरंति च ॥ परदारांश्च सेवंते । लुभ्यंति च परीग्रहे ॥ १४ ॥ भक्षयंति च मांसानि । मद्यानि च पिबंत्यलं ॥ भुंजते च दिवारात्रौ । पशुवन्नियमं विना ॥ १५ ॥ तस्मादज्ञानमेवेह । सर्वानर्थप्रवर्तकं ॥ शिष्टसंमतनिःशेष—व्यवहारस्य बाधकं ॥ १६ ॥ एवं विचिंत्य सा चित्ते—ऽनुज्ञाप्य गणिनीं तथा ॥ क.

मेण सह साध्वीभि—र्जगाम मथुरां पुरीं ॥ १७ ॥ ततः कुबेरसेनाया । गेह एव गतस्मया ॥ य-
याचे सर्वदोषौघ—विनिर्मुक्तमुपाश्रयं ॥ १८ ॥ दत्तस्तयापि सानंदं । निरवद्य उपाश्रयः ॥ तस्थौ
तत्रैव सा तुष्टा । तत्प्रतिबोधहेतवे ॥ १९ ॥ अन्यदा च रुदंतं तं । वीक्ष्य स्वभ्रातृपुत्रकं ॥ गत्वा
वेगेन तद्देशे । जग्राह करसंपुटे ॥ २० ॥ तयोः समक्षमेवैनं । निवेश्यांके निजे ततः ॥ एवं प्रो-
वाच सा वाक्यैः । परस्परविरोधिभिः ॥ २१ ॥ यथा त्वं मम पुत्रोऽसि । भ्राता च मे सहोदरः ॥
भ्रातृव्योऽसि च मे वत्स । मम त्वं देवरोऽसि च ॥ २२ ॥ तव पितापि यो वत्स । स मे भ्राता पि-
ता पतिः ॥ ममायं श्वशुरश्चैव । भवत्येव न संशयः ॥ २३ ॥ येयं ते जननी वत्स । माता श्वश्रूः
स्वसा मम ॥ सपत्नी भ्रातृजाया च । भवत्येषा सुनिश्चितं ॥ २४ ॥ इत्थमुल्लापयंती तं । बालकं च
मुहुर्मुहुः ॥ श्रुत्वा कुबेरदत्तोऽपि । तदंतिकमुपागतः ॥ २५ ॥ उवाच च यथार्ये त्वं । किमित्येवं
प्रभाषसे ॥ वचनानि विरुद्धानि । मदीयं पुत्रकंप्रति ॥ २६ ॥

एवमुक्ता सती सापि । तंप्रत्याह प्रबुद्धधीः ॥ विरुद्धं नैव भाषेऽहं । धर्मशीला कदाचन ॥
॥ २७ ॥ यन्मया भाषितं भद्र । तदेतत्सत्यमेव हि ॥ यथा च सत्यमेवेदं । तथाकर्णय कथ्यते ॥

॥ २८ ॥ ततः प्रकथ्य वृत्तांतं । मूलतः सर्वमेव हि ॥ बलाण नालकाणां च । सा संबंधाभिधित्स-
या ॥ २९ ॥ येनाहं जनताध्यक्षं । परिणिन्ये त्वया किल ॥ तेनायं मे शिशुः पुत्रो । भवतीत्य-
वगम्यतां ॥ ३० ॥ मम मातुः सुतो येन । तेन भ्राता भवत्ययं ॥ येन पुत्रो मम भ्रातु—स्तेन मे
भ्रातृजोऽपि हि ॥ ३१ ॥ येन भ्राता मम भर्तु—स्तेनायं देवरो मम ॥ इत्येतैरेष संबंधी । चतु-
र्भिर्मम नात्रकैः ॥ ३२ ॥ पितापि पुनरेतस्य । मातुर्मे येन नंदनः ॥ तेनायं भवति भ्राता । येनो-
ढा तेन मे पतिः ॥ ३३ ॥ सपत्न्या जात इत्येष । पुत्रो मे तेन बालकः ॥ मन्मातुर्येन भर्तायं ।
जनकोऽपि च तेन मे ॥ ३४ ॥ माता या बालकस्यास्य । माता सैव ममापि हि ॥ येनैष जन-
नीभर्तु—स्तेन श्वश्रूरियं मम ॥ ३५ ॥ येन भ्रातुश्च भार्येयं । भ्रातृजाया च तेन मे ॥ येन भा-
र्या च मे भर्तुः । सपत्नीयं ततो मम ॥ ३६ ॥ ततः कुबेरदत्तोऽपि । समाकर्ण्यार्यिकावचः ॥ अ-
त्यंतं खेदमापन्न—श्चिंतयामास मानसे ॥ ३७ ॥ अरेरेऽहं महामूढो । महादुःकृतकारकः ॥ पापा-
नामप्यहं पापो । जघन्यानां जघन्यकः ॥ ३८ ॥ यन्मयेदमकर्तव्यं । लोके शास्त्रे च निंदितं ॥
मातर्यपि महापापं । महापापेन सेवितं ॥ ३९ ॥ अहो ह्यज्ञानमूढेन । कामाकुलितचेतसा ॥ कृ-

तं कुकर्म कीदृशं । मया दुर्गतिगामिना ॥ ४० ॥ एवंविधदुराचार—घोरावर्जितकर्मणः ॥ मन्ये
श्वभ्रेऽपि नैवास्ति । निवासो निर्घृणस्य मे ॥ ४१ ॥ केनोपायेन नो जाने । लोकधर्मविरोधिनः ॥
अमुतः पातकाद् घोरा—च्छुद्धिर्मम भविष्यति ॥ ४२ ॥ एवमात्मानमत्यंतं । निंदंतं पापभीरुकं ॥
कुबेरदत्तभार्यापि । वचो भूयोऽब्रवीदिदं ॥ ४३ ॥ किं त्वं महानुभावैवं । खेदं वहसि मानसे ॥ य-
तस्ते सर्वमेवेदं । जातमज्ञानदोषतः ॥ ४४ ॥ अज्ञानांधितबुद्धीनां । यज्जीवानां विडंबनाः ॥ भ-
वंत्येवंविधा घोरा—स्तदत्राहो किमद्भुतं ॥ ४५ ॥ कृत्याकृत्यमजानाना । जीवा अज्ञानदोषतः ॥
हिंसादिभ्यो न कुर्वंति । विनिवृत्तिं कदाचन ॥ ४६ ॥ अनिवृत्ताश्च ते तेभ्यो । विदधत्यसमंजसं
॥ तस्मादज्ञानतः सर्वा । जीवानां हि विडंबना ॥ ४७ ॥ यत्त्वया चिंतितं गाढ । पातकादमुतः क-
थं ॥ शुद्धिर्जायेत मे तत्र । तवोपायः प्रकथ्यते ॥ ४८ ॥ सर्वेषामपि पापानां । प्रव्रज्या शुद्धिका
रिका ॥ जिनोदिता ततः सैव । कर्तव्या शुद्धिमिच्छता ॥ ४९ ॥ ददति ब्राह्मणादिभ्य । एके पा-
पविशुद्धये ॥ गोदानं स्वर्णदानं च । भूमिदानान्यनेकधा ॥ ५० ॥ आत्मशुद्ध्यर्थमेवान्ये । कारयं-
ति व्रतान्यपि ॥ जुह्वत्यग्नौ पशूंस्तत्र । ह्यश्वादींश्च सहस्रशः ॥ ५१ ॥ अमेध्यभुग्गवामेके । पृष्ठभा-

गं स्पृशंति च ॥ गवां मूत्रं पिबंत्यन्ये । ह्यन्ये पंचगवं तथा ॥ ५२ ॥ शुद्ध्यर्थं स्नांति तीर्थेषु । विशंत्यन्ये हुताशने ॥ तथापि नैव शुद्ध्यंति । विना दीक्षां जिनोदितां ॥ ५३ ॥ किंच शौचं विना शुद्धि—र्जायते न कदाचन ॥ सत्वाहिंसादिकं तच्च । यतः प्राहुर्मनीषिणः ॥ ५४ ॥ सर्वजीवदया शौचं । शौचं सत्यप्रभाषणं ॥ अचौर्यं ब्रह्मचर्यं च । शौचं संतोष एव च ॥ ५५ ॥ कषायनिग्रहः शौचं । शौचमिंद्रियनिग्रहः ॥ प्रमादवर्जनं शौचं । ध्यानं शौचं तथोत्तमं ॥ ५६ ॥ दुष्टयोगजयः शौचं । शौचं वरविवेकिता ॥ तपो द्वादशधा चैव । शौचमाहुर्मनीषिणः ॥ ५७ ॥ सर्वज्ञोक्तेन वृत्तेन । तत्सर्वं च दयादिकं ॥ शौचं संपूर्णमेवास्ति । सदांतरात्मशुद्धिकृत् ॥ ५८ ॥ अथ कुबेरदत्तोऽपि । श्रुत्वा चैतत्तदंतिके ॥ जगाद संस्तुवन्नेवं । तां परमोपकारिणीं ॥ ५९ ॥ त्वमार्ये धर्ममातासि । त्वमेव मे सहोदरी ॥ कल्याणमालिका मूला । त्वमेव मम सद्गुरुः ॥ ६० ॥ अकृत्यागाधगर्तायां । दुर्गमायां निमज्जतः ॥ दत्तो हस्तावलंबो मे । त्वयैव हितकारिणि ॥ ६१ ॥ अकृत्यसेवनोपात्त—पापपंकमनंतकं ॥ धर्मोपदेशनीरेण । प्रक्षालितं त्वया मम ॥ ६२ ॥ त्वमज्ञानमहाध्वांत—ध्वंसनैकरविप्रभा ॥ कल्पपादपशाखेव । संकल्पितफलप्रदा ॥ ६३ ॥ समग्रसंपदां मूलं ।

दत्तं मेऽद्य त्वयैव हि ॥ ६४ ॥ अतो मे तावकं वाक्यं । कु-
सर्वदोषविषापहं ॥ सद्विवेकस्फुरद्दत्तं । दत्तं मेऽद्य त्वयैव हि ॥ ६४ ॥ अतो मे तावकं वाक्यं । कु-
चितं हितभाषिणि ॥ गृहीष्येऽहमिमां दीक्षां । सर्वपापप्रणाशिनीं ॥ ६५ ॥ ततस्तां च प्रणम्यासौ ।
समुत्थाय च सत्वरं ॥ गत्वा गृहे निजं लोकं । समाकारितवानथ ॥ ६६ ॥ ततस्तं सर्वमापृच्छ्य ।
सन्मान्य च यथोचितं ॥ कृत्वा चास्य कुटुंबस्य । सर्वस्यापि च सुस्थितं ॥ ६७ ॥ धर्मस्थानेषु निः-
शेषं । स्वं द्रव्यं विनियोज्य च ॥ दीनादिभ्यो यथाशक्त्या । दानं दत्वानुकंपया ॥ ६८ ॥ तथा कु-
बेरसेनां च । वचनैर्गुण्यदर्शकैः ॥ हितैः पथ्यैः प्रियैर्वाक्यैः । संतोष्य च सविस्तरं ॥ ६९ ॥ इत्या-
दि सकलं कृत्वा । कृत्यं तत्समयोचितं ॥ मित्रपुत्रकलत्रादौ । स्नेहं मोहं विमुच्य च ॥ ७० ॥ त-
तो जग्राह सद्दीक्षां । सर्वं संगं विमुच्य सः ॥ तथाविधसुसाधूनां । समीपे समतायुतः ॥ ७१ ॥ पं-
चभिः कुलकं ॥

अथ कुबेरसेनापि । तद्वियोगेन दुःखिता ॥ अनुभूतश्रुतासार—नानारूपविडंबना ॥ ७२ ॥
तस्याः कुबेरदत्ताख्य—व्रतिन्याश्चरणांतिके ॥ नित्यं शुश्राव सद्धर्मं । सर्वकल्याणकारकं ॥ ७३ ॥
सुगमं ॥ अन्यदा सा बभाणैवं । यतिधर्मोऽतिदुष्करः ॥ नाहमेनं क्षमा कर्तुं । गेहवासाज्जिनंदिता

॥ ७४ ॥ अतः श्रावकधर्मो मे । सुकरः प्रतिभासते ॥ तेनेदमेव मे देहि । कृत्वानुग्रहमंजसा ॥ ॥ ७५ ॥ ततः सम्यक्त्वमूलं सा । पंचाणुव्रतसंयुतं ॥ सप्तशिक्षाव्रतोपेतं । गृहिधर्मं सदुत्तमं ॥ ७६ ॥ ददौ तस्यै विधानेन । सापि जग्राह भावतः ॥ द्रव्याद्यभिग्रहांश्चैव । प्रतिपन्ना तदंतिके ॥ ७७ ॥ युग्मं ॥ गृहीत्वा ब्रह्मचर्यं च । यद्भुवनेऽपि दुष्करं ॥ पालयंती प्रयत्नेन । कामभोगेषु निःस्पृहा ॥ ॥ ७८ ॥ सस्पृहा मोक्षसौख्येभ्यः । सदनुष्ठानतत्परा ॥ संसारवासनिर्विण्णा । गमयतिस्म वासरान् ॥ ॥ ७९ ॥ ततः कुबेरदत्तापि । साध्वी साध्वीसमन्विता ॥ तत्रत्यभूरिलोकानां । कृत्वानुग्रहमुत्तमं ॥ ॥ ८० ॥ कुर्वंती चंद्रिकेवोच्चै—र्भव्यकैरवबोधनं ॥ परोपकारताहेतो—र्विजहार महीतले ॥ ८१ ॥ एनां समाकर्ण्य कुबेरसेना—वक्तव्यतां भव्यविवेकदात्रीं ॥ निरस्य निःशेषभवाभिनंदितां । सुसाधुधर्मे कुरुतादरं जनाः ॥ ८२ ॥ उक्तः संसारासारताधिकारः. ॥

॥ इति श्रीवर्धमानसूरिविरचितायां श्रीधर्मरत्नकरंडटीकायां प्रथमो भागः समाप्तः ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहं ॥
संसारकाननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे
पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीधर्मरत्नकरंडटीकायां प्रथमो भागः समाप्तः ॥

॥ श्रीजिनाय नमः ॥

# ॥ श्रीधर्मरत्नकरंडटीका भाग १. ॥

( कर्त्ता—श्रीवर्धमानसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )

वीरसंवत्—२४४१. विक्रमसंवत—१९७१. सने—१९१५.

कि. रु.-१-८-०

☞ श्रीजैनभास्करोदय प्रेस. जामनगर.

॥ श्रीजिनाय नमः ॥

॥ श्रीचारित्रविजयगुरुभ्यो नमः ॥

## ॥ अथ श्रीधर्मरत्नकरंडटीका प्रारभ्यते ॥

॥ द्वितीयो भागः ॥

( कर्ता—श्रीवर्धमानसूरिः )

छपावी प्रसिद्ध करनार—पंडित श्रावक हीरालाल हंसराज. ( जामनगरवाळा )

अथ शोकाधिकार उच्यते, तत्र श्लोकाष्टकं तावदाह—

॥ मूलम् ॥—अज्ञातभववैरस्याः। कील्यंते शोकशंकुना ॥ अतस्तदपनोदार्थं । किंचिदेवोपदिश्यते ॥ १ ॥ स्वबंधुनाशे जीवानां। हृदयं शोकशंकुना ॥ कील्यते कुशलस्यापि । निर्विवेकस्य किं पुनः ॥ २ ॥ तथापि निःप्रतीकारे । सर्वसाधारणे सदा ॥ किमर्थं क्रियते शोको । मरणे समुपागते ॥ ३ ॥ सममेव प्रवृत्तानां । गंतुमेकत्र पत्तने ॥ यद्येकः पुरतो याति । का तत्र प्रतिवेद-

ना ॥ ४ ॥ शोकोऽपि युज्यते कर्तुं । स्वस्य वा तस्य वा गुणं ॥ यदि कुर्यात्कृतः किंचि—न्नो चेदेष निरर्थकः ॥ ५ ॥ आयातः स कुतोऽपीह । स्थित्वाहानि कियंति च ॥ न ज्ञायंते गतः क्वापि । का तत्र प्रतिबंधधीः ॥ ६ ॥ यथैकत्र द्रुमे रात्रा—वुषित्वा पक्षिणः प्रगे ॥ दिशो दिशं प्रयांत्येव—मेकगेहेऽपि जंतवः ॥ ७ ॥ शक्रचक्रिसहस्राणि । राजरंकशतानि च ॥ मूर्खपंडितलक्षाणि । क्षुण्णानि समवर्तिना ॥ ८ ॥ व्याख्या—अज्ञातभववैरस्या अविदितसंसारनैर्गुण्याः कील्यंते नियंत्र्यंते शोकशंकुना शोककीलेन, अतः कारणात्तदपनोदार्थं शोकापनयनार्थं किंचित् स्तोकमुपदिश्यते उपदेशो दीयते, इति प्रथमश्लोकार्थः. शेषश्लोकसप्तकं सुगममेव. ॥ १–८ ॥ अथ मृत्योः समवर्तित्वलक्षणमुपदर्शयन् श्लोकमाह—

॥ मूलम् ॥—समं च वर्तते येन । सर्वेषां प्राणिनामयं ॥ समवर्त्युच्यते तेन । निर्गुणस्याप्ययं गुणः ॥ १ ॥ व्याख्या—समं च तुल्यं च वर्तते चेष्टते येन कारणेन समवर्त्युच्यते जल्प्यते कथ्यते तेन प्रकारेण निर्गुणस्यापि गुणरहितस्यापि मृत्योरयं गुणः समवर्तित्वलक्षण इत्युक्तं. ॥ तथा च—मेहाण जलं चंदाण । चंदणं दिणयराण करपसरो ॥ मरणं इट्ठवियोगो । सामन्नं स-

यत्नलोयस्स ॥ १ ॥ इति श्लोकार्थः. ॥ १ ॥ अथात्यंतशोककारिजनानुपालंभयन् श्लोकत्रयमाह—

॥ मूलम् ॥—आसतां बहवस्ताव—देकैकस्यापि देहिनः ॥ येऽतीताः पितरस्तेषां । संख्यां कः कर्तुमीश्वरः ॥ १ ॥ रे मूढाः किं समारब्धं । रुद्यते यदहर्निशं ॥ मृतः किं कोऽपि नो दृष्टः । स्वगृहेऽन्यगृहेऽपि वा ॥ २ ॥ आगच्छद्भिर्विगच्छद्भि—र्जीवैः कर्मकदर्थितैः ॥ न कदापि हि शून्यैषा । घोरा संसारवर्तिनी ॥ ३ ॥ व्याख्या—आसतां तिष्ठंतु बहवः प्रभूतास्तावदिति क्रमे एकैकस्यापि देहिनः शरीरिणो येऽतीताः पूर्वकाले मृताः पितरो जनकास्तेषां संख्यां परिमाणं कः? न कोऽपी·त्यर्थः, कर्तुं विधातुमीश्वरः समर्थ इति. ॥ १ ॥ रे इत्युपालंभे आमंत्रणे वा, इत्यादि सुगममिति श्लोकत्रयार्थः. ॥ ३ ॥ अथोत्तममध्यमजघन्यजना यद्विदधति तथा दर्शयन्नाह—

॥ मूलम् ॥—पंडिता नैव शोचंते । मुंचंत्यश्रूणि मध्यमाः ॥ नीचास्त्वर्थप्रदानेन । रोदयंति रुदंति च ॥ १ ॥ व्याख्या—पंडिता विवेकिनो नैव शोचंते शोकं न कुर्वंति महत्यपि शोकस्थान इति गम्यते. मुंचंत्यश्रूणि नयनवारिबिंदून् मध्यमा अविदितसंसारस्वरूपाः, नीचा निर्विवेकास्तु पुनरर्थे अर्थप्रदानेन इष्टे विनष्टे द्रव्यं दत्वान्यान् रोदयंति स्वयं च रुदंतीति श्लोकार्थः. ॥ १ ॥ अथ

शोककारिणामुपालंभपूर्वकं हितोपदेशमाह—

॥ मूलम् ॥—भो जना वोऽपि नैकट्ये । परलोकप्रयाणकं ॥ धर्मसंबलमादाय । प्रगुणैः किं न भूयते ॥ १ ॥ व्याख्या—भो अहो जना लोका वोऽपि युष्माकमपि नैकट्ये प्रत्यासन्ने परलोकप्रयाणकं परलोकगमनं मरणमित्यर्थः, वर्तत इति गम्यते. अतो धर्मसंबलं धर्मपाथेयमादाय गृहीत्वा प्रगुणैः प्रह्वैः किं न भूयते? भवद्भिरिति गम्यते. धर्मसंबलयुक्ता हि तत्र न सीदंति. यत उक्तं—धम्मं जिणपणियं धणु । जे संबल कर लेंति । ते परलोयपयाणडे । पहि य न दुक्खिय होंति ॥१॥ इति श्लोकार्थः. ॥ १ ॥ किंच स्वप्रयोजननिष्ठेषु सत्वेषु केयं बंधुबुद्धिरित्यावेदयन्नाह—

॥ मूलम् ॥—स्वकार्यासिद्धितः क्रुद्धः । पुत्रः शत्रूयतेतरां ॥ अतो बंधुरबुद्धीनां । बंधुबुद्धिरतात्विकी ॥ १ ॥ व्याख्या—स्वकार्यासिद्धितः स्वप्रयोजनेऽनिष्पन्ने क्रुद्धो रुष्टः पुत्रः सूनुः शत्रूयते शत्रुरिवाचरति. अतोऽस्मात्कारणाद्बंधुरबुद्धीनां सुंदरमतीनां बंधुबुद्धिः स्वजनबुद्धिरतात्विकी अपरमार्थिकेति श्लोकार्थः ॥ १ ॥ किं बहुनापि शोचितेन? न कोऽपि गुणः संपद्यते, इति दृष्टांतद्वयेनाह—

॥ मूलम् ॥—युगादिदेवनिर्वाणे । सह शक्रेण चक्रिणा ॥ भरतेन भूरिशब्देन । रुदता रोदिता मही ॥ १ ॥ तथापि वालितो नैव । तेन स्नेहवतापि हि ॥ श्रीमदादिजिनाधीशः । सर्वलोकैकबांधवः ॥ २ ॥ पुत्राणां मरणं श्रुत्वा । द्विजादाकस्मिकं नृपः ॥ प्रभुः प्रभूतमेदिन्याः । सगरः शोकविह्वलः ॥ ३ ॥ क्षणं च मूर्छितः स्थित्वा । महाक्रंदं चकार सः ॥ तथापि रुदता तेन । स्वौरसा नैव वालिताः ॥ ४ ॥ तस्माच्छोकं परित्यज्य । तत्कर्तव्यं मनीषिणा ॥ भूयो न भूयते येन । संसारे शुभकर्मणा ॥ ५ ॥ व्याख्या—युगादिदेवनिर्वाणे ऋषभजिनसिद्धिगमने सह सार्धं शक्रेणेंद्रेण चक्रिणा चक्रवर्तिना भरतेन भरताभिधेन भूरिशब्देन बृहद्ध्वनिना रुदता रोदनं कुर्वता रोदिता रोदनं कारिता मही पृथ्वी, तात्स्थ्यात्तद्व्यपदेश इति तत्रस्था लोकाः, तथेत्यादिश्लोकचतुष्टयं सुगममेव, नवरं स्वौरसाः स्वपुत्रा इति श्लोकपंचकार्थः. ॥ १–५ ॥ इह भरतचक्रवर्तिकथानकं सुप्रसिद्धमिति कृत्वा न लिख्यते, सगरचक्रवर्तिकथानकं पुनरिदं—

अस्तीह सुंदरानेक—वस्तुसंदोहसंकुला ॥ अयोध्यानामविख्याता । पुरी शक्रपुरोपमा ॥ १ ॥ तां च सर्वगुणोपेतौ । पालयामासतुर्नृपौ ॥ जितशत्रुसुमित्राख्यौ । भ्रातरौ प्रीतमानसौ ॥ २ ॥ य-

थासंख्येन सद्रूपे । तयोर्जायें बभूवतुः ॥ विजयावैजयंताख्ये । सौजन्यादिगुणान्विते ॥ ३ ॥ अन्यदा च सुखं सुप्ते । पर्यंके रत्नराजिनि ॥ दृष्टवत्यौ महास्वप्ना—निमान्निशि चतुर्दश ॥ ४ ॥ गजेंद्रं वृषभं सिंह—मभिषेकं सुमस्रजः ॥ चंद्रं सूर्यं ध्वजं कुंभं । रम्यं पद्मसरस्तथा ॥ ५ ॥ समुद्रं वरविमानं च । रत्नराशिं हुताशनं ॥ मुखेन विशतो दृष्ट्वा । स्वप्नानेतान्निजोदरे ॥ ६ ॥ प्रतिबुद्धे च ते सत्यौ । शिष्टवत्यौ यथाविधि ॥ भर्तृभ्यां परमानंदं । वहंत्यौ निजमानसे ॥ ७ ॥ त्रिभिर्विशेषकं ॥ ताभ्यामपि च ते उक्ते । यथा युवकयोः सुतौ ॥ भविष्यतो वराकारौ । सर्वलक्षणसंयुतौ ॥ ८ ॥ इत्थं ते पेशलैर्वाक्यैः । पतिभ्यामभिनंदिते ॥ जग्मतुर्निजकस्थाने । हर्षापूरितमानसौ ॥ ॥ ९ ॥ ततः प्रातः समाहूय । नृपतिः स्वप्नपाठकान् ॥ संपूज्य प्रश्नयामास । स्वप्नानां फलमादरात् ॥ १० ॥ तैरवाचि महाराज । महास्वप्नानिमान् किल ॥ पश्यंति मातरो नूनं । जिनानां चक्रिणां तथा ॥ ११ ॥ अतस्तावककांतायाः । भ्रातृजायाश्च ते नृप ॥ तीर्थेशश्चक्रवर्ती च । भवितेत्यवगम्यते ॥ १२ ॥ ततः संपूज्य तांबूल—पुष्पवस्त्रादिवस्तुभिः ॥ विसर्जिता नरेंद्रेण । सादरं स्वप्नपाठकाः ॥ १३ ॥ अथ स्थितिक्षयाच्च्युत्वा । विजयाख्यविमानतः ॥ उत्पन्नो विजयादेवी—गर्भेऽजि-

तज्जिनेश्वरः ॥ १४ ॥ वैजयंत्यास्तु संजज्ञे । चक्री सगरनामकः ॥ अथ स्वकं स्वकं गर्भ—मूहतु र्मुदितानने ॥ १५ ॥ अथातीतेषु मासेषु । नवस्वर्धाष्टमेषु च ॥ दिनेषु विजयादेवी । जनयत्यजितं जिनं ॥ १६ ॥ उद्योतयंतमंगोत्थ—प्रभाभिः सकला दिशः ॥ कुर्वन्नानंदसंपूर्णं । जीवलोकं चराचरं ॥ १७ ॥ ततश्च दिक्कुमारीभिः । सर्वाभिः सर्वसंपदा ॥ सर्वं सर्वप्रयत्नेन । जन्मकर्म व्यधीयत ॥ १८ ॥ ततो जन्माभिषेकश्च । चक्रे सानंदमानसैः ॥ देवेंद्रैः श्रीजिनेंद्रस्य । सुमेरौ सपरिच्छदैः ॥ १९ ॥ ततः शक्रो जिनं नीत्वा । मुमोच विधिपूर्वकं ॥ मातुः समीपके पश्चा—ज्जगामानंदितो दिवि ॥ २० ॥ राजापि सर्वसामग्र्या । समं सर्वैः स्वबंधुभिः ॥ सर्वर्ध्या सादरं चक्रे । वर्धापनकमुच्चकैः ॥ २१ ॥ येनेह श्रीनराधीशो । जिने गर्भस्थिते सति ॥ निःशेषनिजकारातीन् । प्रजयत्यजितानपि ॥ २२ ॥ तेन चक्रे स्वपुत्रस्य । नाम द्वादशमे दिने ॥ अजित इति व्याख्यातं । सन्महोत्सवपूर्वकं ॥ २३ ॥ अथासौ सुषुवे राज्ञी । वैजयंत्यपि चक्रिणं ॥ कुर्वंतं बंधुवर्गस्य । परमानंदमुच्चकैः ॥ २४ ॥ राजा तथैव तस्यापि । चकारोत्सवपूर्वकं ॥ सगर इति सन्नाम । सानंदो विश्वविश्रुतं ॥ २५ ॥ एवं तौ तत्र वर्धेते । सार्धं सर्वगुणश्रिया ॥ कुमारावद्भुतोल्लासि—लावण्य·

श्रीविभूषितौ ॥ २६ ॥ प्राप्तौ च क्रमतो लोक—लोचनानंददायकं ॥ यौवनं सर्वतो रम्यं । कामिनीजनमोहनं ॥ २७ ॥ ततो विशालवंशोत्थ—बालिकानां नराधिपः ॥ आहयामास तौ पाणिं । महर्ध्या शोभने दिने ॥ २८ ॥ एवं च तौ प्रभुंजाते । कामभोगान्निरंतरं ॥ प्रेयसीभिः समं ताभिः । पूर्णाशेषमनोरथौ ॥ २९ ॥ अन्यदालोक्य वृद्धत्वं । स्वस्यायातं क्रमान्नृपः ॥ जितशत्रुः स्वराज्यस्य । योग्यत्वं च कुमारयोः ॥ ३० ॥ राज्ये निवेशयामास । स्वपुत्रमजिताभिधं ॥ सगरं युवराजत्वे । सुमित्रनंदनं मुदा ॥ ३१ ॥ युग्मं ॥ अजितोऽपि जिनाधीशो । भुंक्ते राज्यवरश्रियं ॥ तीर्थप्रवर्तनाकाले । संजाते क्रमशस्ततः ॥ ३२ ॥ संस्थाप्य सगरं राज्ये । दत्वा दानं तथेप्सितं ॥ देवैर्लोकांतिकैः प्रोक्तो । यथा तीर्थं प्रवर्तय ॥ ३३ ॥ युग्मं ॥ द्वात्रिंशद्भिः सुराधीशैः । कृते निष्क्रमणोत्सवे ॥ स बाह्याभ्यंतरं ग्रंथं । त्यक्त्वा दीक्षां प्रपन्नवान् ॥ ३४ ॥ तप्यमानस्तपस्तीव्रं । शुक्लध्यानकृशानुना ॥ निर्दह्य घातिकर्माणि । प्रलेभे केवलश्रियं ॥ ३५ ॥ ततश्च केवलज्ञान—प्रभाभिः प्रतिबोधयन् ॥ भव्यपद्माकरानर्हन् । विजहार महीतले ॥ ३६ ॥ सगरोऽपि नराधीशो । सुविक्रमनयान्वितः ॥ चक्ररत्ने समुत्पन्ने । साधयामास मेदिनीं ॥ ३७ ॥ उत्पन्नानि च रत्नानि । शे-

षान्यपि त्रयोदश ॥ निधयश्च नवाप्यस्य । बभूवुर्वंशवर्तिनः ॥ ३८ ॥ मदोन्मत्तगजेंद्राणां । स्यंद-
नानां च जज्ञिरे ॥ चतुःसमन्विताशीति—लक्षाणि लक्ष्मधारिणां ॥ ३९ ॥ जाता अष्टादशोत्तुंग
—तुरंगाणां च कोटयः ॥ षणवतिर्वरग्राम—कोटीनामभवन्निति ॥ ४० ॥ चतुःषष्टिसहस्राणि । न-
वयौवनयोषितां ॥ क्षिपंतीनां स्वलावण्य—रूपलक्ष्माः सुरांगनाः ॥ ४१ ॥ इत्यादि सकले सिद्धे ।
षट्खंडेऽपि महीतले ॥ भुंक्तेस्म सगरो भोगान् । सुरासुरनृपार्चितः ॥ ४२ ॥ अथ षष्टिसहस्राणि ।
पुत्राणां जनयत्यसौ ॥ सर्वलक्षणयुक्तानां । रूपलावण्यशालिनां ॥ ४३ ॥ तेषां ज्येष्ठो गुणैः श्रेष्ठो
। जन्हुनामा कुमारकः ॥ गीतद्यूतादिनिःशेष—कलाकौशलसंयुतः ॥ ४४ ॥ अन्यदा क्रीडता ते-
न । द्यूतेन विजितः पिता ॥ ततस्तुष्टः सुतं ब्रूते । यथा वत्स वरं वृणु ॥ ४५ ॥ जन्हुः प्राह यथा
तात । यदि तुष्टोऽसि मेऽधुना ॥ तदत्र यदहं याचे । तद्देयं सर्वथा त्वया ॥ ४६ ॥ राजाप्योचदहो
वत्स । मनोऽभीष्टं प्रयाच्यतां ॥ स प्राह सर्वरत्नानि । चक्रादीनि प्रयच्छ मे ॥ ४७ ॥ येनाहं भ्रातृ-
भिः सार्धं । सर्वैः सर्वबलान्वितः ॥ पूजयन् वंदमानश्च । जैनबिंबानि भक्तितः ॥ ४८ ॥ पश्यन्ना-
नाविधान् देशान् । पुरग्रामादिसंकुलान् ॥ बंभ्रमीमि यथाकामं । षट्खंडेऽपि महीतले ॥ ४९ ॥

युग्मं ॥ ततस्तं प्राह राजेंद्रः । प्रमोदभरनिर्भरः ॥ एवं कुरु निजान् वत्स । संपूरय मनोरथान् ॥
॥ ५० ॥ ततस्तातप्रसादेन । इत्युक्त्वा पितरं निजं ॥ प्रणम्य च ययौ जन्हुः । कुमाराणां समीप-
के ॥ ५१ ॥ तानुवाच यथा भो भो । वयं सर्वेऽपि संहताः ॥ गृहीत्वा सर्वरत्नानि । पश्यामो मे-
दिनीतलं ॥ ५२ ॥ तैरुक्तं युक्तमेवेदं । क्रियतामविलंबितं ॥ ततः पितरमापृच्छ्य । बंधुवर्गं च सा-
दरं ॥ ५३ ॥ कृत्वा च सर्वसामग्रीं । सर्वे पुर्या विनिर्ययुः ॥ कुमाराः सहिता भूरि—सेनया चतु-
रंगया ॥ ५४ ॥ युग्मं ॥ प्रवृत्ताश्च परिभ्रांतुं । कौतुकाकुलमानसाः ॥ नदीगिरिपुरग्रामैः । संकुलं
मेदिनीतलं ॥ ५५ ॥ भ्राम्यद्भिश्च महीपीठे । सर्वास्तै रक्षिताः प्रजाः ॥ पालिताः शिष्टलोकाश्च ।
निर्जिताः सर्वशत्रवः ॥ ५६ ॥ पूजिताः पूजनीयाश्च । माननीयाश्च मानिताः ॥ दृष्टानि सर्वतीर्था-
नि । सद्भक्त्या वंदितानि च ॥ ५७ ॥ महर्ध्या सर्वचैत्येषु । कृता यात्रामहोत्सवाः ॥ वस्त्रपात्रादि-
भिः सर्वः । संघश्च प्रतिलंभितः ॥ ५८ ॥ प्रदत्तं च महादानं । दीनादिभ्यो यथेप्सितं ॥ कृताश्च
बहवो मित्र—बांधवः स्वजना जनाः ॥ ५९ ॥ अर्थिनामर्थदानेन । पूरिताश्च मनोरथाः ॥ एवं ते
कुमराः सर्वे । भ्राम्यंतः सर्वतो महीं ॥ ६० ॥ प्रपश्यंतः पुरग्राम—विहारनगराकरान् ॥ नानानग-

नदीकूप—वापीपद्मसरोवरान् ॥ ६१ ॥ खेटकर्बटकानि च । नानावेलाकुलानि च ॥ संग्रामाः सर्व-
तो रम्य—मष्टापदमहागिरिं ॥ ६२ ॥ त्रिभिर्विशेषकं ॥

नानाविधद्रुमाकीर्णं । नानागोकुलसंकुलं ॥ क्वापि रिष्टकवैडूर्य—सन्मरकतशोभितं ॥ ६३ ॥
क्वापींद्रनीलसंदोह—रश्मिराजिविराजितं ॥ कुत्रापि पद्मरागादि—रक्तरत्नचयांचितं ॥ ६४ ॥ कु-
त्रापि चंपकच्छाय—मणिमंमलभासुरं ॥ कुत्रापि चंद्रकांतांक—हीरकावलिनिर्मलं ॥ ६५ ॥ कुत्रापि
सुंदरानेक—निर्झरारावसंकुलं ॥ क्वापि स्वर्णमयानेक—शिलासीननभश्चरं ॥ ६६ ॥ क्वापि पुष्प-
फलोपेत—वराराममनोहरं ॥ क्वापि स्वच्छजलापूर्णैः । पद्मखंडादिमंडितैः ॥ ६७ ॥ नानारत्नमनो-
हारि—स्वर्णसोपानशोभितैः ॥ क्रौंचसारसहंसादि—नानापक्षिसमाकुलैः ॥ ६८ ॥ नानाद्रुमादि-
भी रम्यैः । सरोभिरभिशोभितं ॥ रत्नरंजितसौवर्ण—भित्तिसोपानराजिभिः ॥ ६९ ॥ विस्तीर्णा-
भिरनेकाभि—र्वापीभिः समलंकृतं ॥ क्वापि संगीतकासक्तै—र्विद्याधरकदंबकैः ॥ ७० ॥ समध्या-
सितसौवर्ण—सुविशालशिलातलं ॥ क्वापि स्वर्गागतैर्युक्तै—र्नानालंकारधारिभिः ॥ ७१ ॥ सुरूपैः
सुरसंदोहै—र्देहद्युतिप्रभासुरैः ॥ चिक्रीमद्भिर्यथाकामं । सप्रमोदमनेकधा ॥ ७२ ॥ स्वर्गखंडमिवा-

भाति । हारिभिर्भूरिवस्तुभिः ॥ इत्यादिसुमनोहारि—नानाश्चर्यसमाकुलं ॥ ७३ ॥ पश्यंति कुमराः
शैलं । विस्मयोत्फुल्ललोचनाः ॥ समारूढाः क्रमात्तस्य । गिरेः शृंगं मनोहरं ॥ ७४ ॥ कुलकं ॥
दृष्टं चांतश्च तत्रोच्चं । रम्यं जैनेंद्रमंदिरं ॥ चतुर्विंशतिजैनेंद्र—बिंबसंदोहसुंदरं ॥ ७५ ॥ स्वर्णरत्न-
मयं दिव्यं । भरतेन विधापितं ॥ पद्मरागमयोदार—तारसोपानराजितं ॥ ७६ ॥ श्वेतरत्नमयोत्तुंग
—वेदिकासमलंकृतं ॥ सूर्यकांतमयोत्प्रेंख—दुत्तुंगशिखरान्वितं ॥ ७७ ॥ नानारत्नचयाकीर्ण—
सौवर्णस्तंभभित्तिकं ॥ सन्मरकतमाणिक्य—मंभिनोद्भटकुट्टिमं ॥ ७८ ॥ चंद्रकांतमयोद्भास्व—त्तुंग-
प्राकारराजितं ॥ चारुचामीकरोदार—निर्यूहकशतान्वितं ॥ ७९ ॥ पंचभिः कुलकं ॥ तस्मिंश्च पं-
चवर्णाभ—मणिखंडाभिमंडिताः ॥ स्वर्णरत्नमयाः कांताः । शांताः शांतिप्रदायिकाः ॥ ८० ॥ च-
तुर्विंशतिजैनेंद्र—प्रतिमाः सुमनोहराः ॥ कारिता वर्णमानैश्च । युक्ताः सर्वैर्निजैस्तथा ॥ ८१ ॥ यु-
ग्मं ॥ बाहुबलेश्च राज्ञश्च । चक्रिणो भरतस्य च ॥ सुंदर्याश्च तथा ब्राह्म्याः । स्वकभ्रातृशतस्य च
॥ ८२ ॥ कारिताः पर्युपासीनाः । प्रतिमास्तत्र सुंदराः ॥ मणिरत्नविराजिन्यः । कांतकांचननिर्मि-
ताः ॥ ८३ ॥ युग्मं ॥ चतुर्योजनविस्तीर्णे । योजनाष्टकमुच्छ्रिते ॥ भरतेन गिरौ तत्र । कारितं जि-

नमंदिरं ॥ ८४ ॥ नानास्तंभसमाकीर्णं । नानोत्तुंगसुतोरणं ॥ नानारूपकसंकीर्णं । नानाध्वजपटा·
कुलं ॥ ८५ ॥ इत्यादिपरमाश्चर्य—कारिभिर्भूरिकौतुकैः ॥ देवानां मानवानां च । नेत्रानंदविधा·
यकं ॥ ८६ ॥ ततस्ते विस्मयापन्नाः । सानंदाः सकुतूहलाः ॥ मध्ये च कुमरास्तत्र । प्रविष्टा जिन·
वेश्मनः ॥ ८७ ॥ दृष्टाश्च प्रतिमा रम्या—श्चतुर्विंशतिरर्हतां ॥ ऋषभादिमहावीर—पर्यंतानां मनो·
हराः ॥ ८८ ॥ सद्गंधपुष्पवस्त्राद्यैः । पूजिता भक्तियोगतः ॥ संस्तुताश्च स्तुतिस्तोत्रैः । संवेगरसदा·
यिभिः ॥ ८९ ॥ ततस्ते प्रश्नयामासु—र्विस्मिता मंत्रिणो निजान् ॥ यथेदं कारितं केन । जिन·
मंदिरमीदृशं ॥ ९० ॥ सर्वरत्नमयं तुंगं । तुंगतोरणसंयुतं ॥ कस्येयं शाश्वती कीर्ति—श्चरत्यद्यापि
निर्मला ॥ ९१ ॥ ततश्च मंत्रिभिः प्रोक्तं । यथा भो भो कुमारकाः ॥ वदामः श्रूयतां सम्य—ग्यु·
ष्माभिः सावधानकैः ॥ ९२ ॥ आसीदाद्यजिनेंद्रस्य । ज्येष्टः पुत्रो गुणालयः ॥ अस्यामेव महा·
पुर्यां । चक्रेशो भरताधिपः ॥ ९३ ॥ तेनेदं कारितं तुंगं । सुंदरं जिनमंदिरं ॥ सर्वरत्नमयानेक—
बिंबसंदोहसंकुलं ॥ ९४ ॥ श्रुत्वेदं जन्हुना प्रोक्त—मस्माकमिति भूरियं ॥ स्वायत्ताः सर्वरत्नानि ।
ते सर्वे निधयोऽपि हि ॥ ९५ ॥ तदेव चक्रवर्तित्वं । तथैवाज्ञाकराः सुराः ॥ तस्मादन्विष्यतां तूर्णं

—मष्टापदसमं गिरिं ॥ ९६ ॥ येनाहमपि विस्फूर्ज—न्मणिरत्नविनिर्मितं ॥ कारयामि समुत्तुंग-
मीदृशं जिनमंदिरं ॥ ९७ ॥ आकर्ण्येदं ततो दिक्षु । सकलास्वपि मंत्रिभिः ॥ गिरेर्गवेषणार्थाय ।
प्रेषिताः पुरुषा निजाः ॥ ९८ ॥ ततस्तेऽपि गताः शीघ्रं । भ्रांताश्चाखिलभूतले ॥ न चाष्टापदसं-
काशः । शैलः कोऽपि विलोकितः ॥ ९९ ॥ ततो जन्हुकुमाराय । तैरागत्य निवेदितं ॥ यथा ना-
स्तीदृशः शैलो । यस्तुल्योऽष्टापदाद्रिणा ॥ १०० ॥ ततो जन्हुर्वदत्येवं । तान् सर्वांश्च नराधिपान् ॥
यद्यन्यो नास्त्यहो क्वापि । शैलोऽष्टापदसन्निभः ॥ १ ॥ ततोऽस्यैव गिरेः श्रीम—ज्जिनवेश्मयुत-
स्य भोः ॥ रक्षां कुर्मः प्रयत्नेन । वयं सर्वेऽपि संहताः ॥ २ ॥ यतः श्रेयस्करं लोके । दानात्तत्परि-
पालनं ॥ भविष्यंति च निर्धर्माः । प्रायः पापपरा नराः ॥ ३ ॥ तद्यावन्मर्त्यलोकोऽयं । यावच्चैष
धराधरः ॥ अस्माकमपि सत्कीर्ति—स्तावन्नूनं भविष्यति ॥ ४ ॥ इत्युक्त्वा नृपतीन् जन्हु—र्दंडर-
त्नमुपाददे ॥ अष्टापदस्य रक्षार्थं । सार्धं सर्वैः स्वबंधुभिः ॥ ५ ॥ ततः खातुं समारब्धा । दंडरत्नेन
मेदिनी ॥ परितस्तस्य शैलस्य । त्वरितं खातिकाकृते ॥ ६ ॥ दंडरत्नं च तत्तीक्ष्णं । द्विधा कुर्वन्म-
हीतलं ॥ योजनानां सहस्रं तु । पातालं विशति द्रुतं ॥ ७ ॥ ज्वलनप्रभसंज्ञस्य । नागराजस्य

मेदिनीं ॥ संप्राप्तं भवनान्युच्चै—र्भनक्त्याशु समंततः ॥ ८ ॥ मह्यां विदार्यमाणायां । दंडरत्नेन सत्वरं ॥ निपेतुर्लोष्टवस्तत्र । सपाषाणाः सपांशवः ॥ ९ ॥ सर्वतो नागवेश्मानि । समं पृथ्व्या चकंपिरे ॥ प्रससार समुद्योतो । भानुरश्मिसमुद्भवः ॥ १० ॥ अथ नागकुमारास्ते । दृष्ट्वाकस्मिकविप्लवं ॥ अत्यंतादृष्टपूर्वं च । भीताः संभ्रांतलोचनाः ॥ ११ ॥ संक्षुब्धाः कंपमानांगा । नश्यंतिस्म दिशोदिशः ॥ किमेतदिति जल्पंत्यः । संत्रस्ताश्च तदंगनाः ॥ १२ ॥ त्यक्त्वा मानं भयोद्भ्रांता । आश्लिष्यंति निजान् पतीन् ॥ रक्षत रक्षतेत्याशु । कुर्वत्यः करुणारवं ॥ १३ ॥ जज्ञिरे च समुल्लापाः । नागलोके समंततः ॥ किं किं किमिदमित्येवं । तुमुलारवसंकुलाः ॥ १४ ॥ अथालोक्य महारौद्र—मुपप्लवमुपस्थितं ॥ संभ्रांतं नागलोकं च । नागेंद्रो ज्वलनप्रभः ॥ १५ ॥ संप्रयुक्तावधिज्ञात्वा । कुमाराणां विचेष्टितं ॥ तूर्णं रोषभरापूर्णो । विनिष्क्रांतो रसातलात् ॥ १६ ॥ संप्राप्तः कुमराभ्यासे । साक्षेपं सोऽब्रवीदिदं ॥ यथा भो भो किमारब्ध—मस्मल्लोकव्यथाकरं ॥ १७ ॥ युष्माभिर्दंडरत्नेन । भिंदानैर्मेदिनीतलं ॥ कृत्वा पूर्वस्थितेर्लोपं । किं लब्धं कथ्यतां मम ॥ १८ ॥ अथ चात्मवधायैव । जायते तुच्छतांगिनां ॥ मानापूरितचित्तानां । बलं बलवतामपि ॥ १९ ॥ यतः—

—मष्टापदसमं गिरिं ॥ ९६ ॥ येनाहमपि विस्फूर्ज—न्मणिरत्नविनिर्मितं ॥ कारयामि समुत्तुंग-
मीदृशं जिनमंदिरं ॥ ९७ ॥ आकर्ण्येदं ततो दिक्षु । सकलास्वपि मंत्रिभिः ॥ गिरेर्गवेषणार्थाय ।
प्रेषिताः पुरुषा निजाः ॥ ९८ ॥ ततस्तेऽपि गताः शीघ्रं । भ्रांताश्चाखिलभूतले ॥ न चाष्टापदसं-
काशः । शैलः कोऽपि विलोकितः ॥ ९९ ॥ ततो जन्हुकुमाराय । तैरागत्य निवेदितं ॥ यथा ना-
स्तीदृशः शैलो । यस्तुल्योऽष्टापदाद्रिणा ॥ १०० ॥ ततो जन्हुर्वदत्येवं । तान् सर्वांश्च नराधिपान् ॥
यद्यन्यो नास्त्यहो क्वापि । शैलोऽष्टापदसन्निभः ॥ १ ॥ ततोऽस्यैव गिरेः श्रीम—ज्जिनवेश्मयुत-
स्य भोः ॥ रक्षां कुर्मः प्रयत्नेन । वयं सर्वेऽपि संहताः ॥ २ ॥ यतः श्रेयस्करं लोके । दानात्तत्परि-
पालनं ॥ भविष्यंति च निर्धर्माः । प्रायः पापपरा नराः ॥ ३ ॥ तद्यावन्मर्त्यलोकोऽयं । यावच्चैष
धराधरः ॥ अस्माकमपि सत्कीर्ति—स्तावन्नूनं भविष्यति ॥ ४ ॥ इत्युक्त्वा नृपतीन् जन्हु—र्दंडर-
त्नमुपाददे ॥ अष्टापदस्य रक्षार्थं । सार्धं सर्वैः स्वबंधुभिः ॥ ५ ॥ ततः खातुं समारब्धा । दंडरत्नेन
मेदिनी ॥ परितस्तस्य शैलस्य । त्वरितं खातिकाकृते ॥ ६ ॥ दंडरत्नं च तत्तीक्ष्णं । द्विधा कुर्वन्म-
हीतलं ॥ योजनानां सहस्रं तु । पातालं विशति द्रुतं ॥ ७ ॥ ज्वलनप्रभसंज्ञस्य । नागराजस्य

मेदिनीं ॥ संप्राप्तं भवनान्युच्चै—र्मनक्त्याशु समंततः ॥ ८ ॥ मह्यां विदार्यमाणायां । दंडरत्नेन सत्वरं ॥ निपेतुर्लोष्टवस्तत्र । सपाषाणाः सपांशवः ॥ ९ ॥ सर्वतो नागवेश्मानि । समं पृथ्व्या चकंपिरे ॥ प्रससार समुद्योतो । भानुरश्मिसमुद्भवः ॥ १० ॥ अथ नागकुमारास्ते । दृष्ट्वाकस्मिकविप्लवं ॥ अत्यंतादृष्टपूर्वं च । भीताः संभ्रांतलोचनाः ॥ ११ ॥ संक्षुब्धाः कंपमानांगा । नश्यंतिस्म दिशोदिशः ॥ किमेतदिति जल्पंत्यः । संत्रस्ताश्च तदंगनाः ॥ १२ ॥ त्यक्त्वा मानं भयोद्भ्रांता । आश्लिष्यंति निजान् पतीन् ॥ रक्षत रक्षतेत्याशु । कुर्वत्यः करुणारवं ॥ १३ ॥ जज्ञिरे च समुल्लापाः । नागलोके समंततः ॥ किं किं किमिदमित्येवं । तुमुलारवसंकुलाः ॥ १४ ॥ अथालोक्य महारौद्र—मुपप्लवमुपस्थितं ॥ संभ्रांतं नागलोकं च । नागेंद्रो ज्वलनप्रभः ॥ १५ ॥ संप्रयुक्तावधिर्ज्ञात्वा । कुमाराणां विचेष्टितं ॥ तूर्णं रोषभरापूर्णो । विनिष्क्रांतो रसातलात् ॥ १६ ॥ संप्राप्तः कुमराभ्यासे । साक्षेपं सोऽब्रवीदिदं ॥ यथा भो भो किमारब्ध—मस्मल्लोकव्यथाकरं ॥ १७ ॥ युष्माभिर्दंडरत्नेन । भिंदानैर्मेदिनीतलं ॥ कृत्वा पूर्वस्थितेर्लोपं । किं लब्धं कथ्यतां मम ॥ १८ ॥ अथ चात्मवधायैव । जायते तुच्छतांगिनां ॥ मानापूरितचित्तानां । बलं बलवतामपि ॥ १९ ॥ यतः—

अप्पवहाए निययं । होइ बलं जतुणाण नुवणंमि ॥ नियपरकबलेणं चिय । पमइ पयंगो पईवंमि ॥ २० ॥ होइ विणीउ गरुउ । गुरुत्तणं संपयाए पढमंगं ॥ अविणीउवि हु लहुउ । लहुत्तणं आवईए य ॥ २१ ॥ एसावि जये लबी । सोहइ मग्गठियाण पुरिसाण ॥ इयराणं पुण सिग्घं । नासइ आसयविणासेणं ॥ २२ ॥ जे हुंति महापुरिसा । ते ठिइन्नंगं कुणंति न कयाइ ॥ उवलद्धो किं केणइ । मग्गातित्तो रहो रविणो ॥ २३ ॥ ते हुंति सत्तवंता । ते संतो ते महायसा नुवणे ॥ जे नेंति सिरिं सु—पइठिएण सप्पुरिसमग्गेण ॥ २४ ॥ सगुणेहिं चिय पुरिसा । पयमा चूमामणीव विरकाया ॥ बुब्नंति सिरेण जए । सयलजणसलाहणिज्जा य ॥ २५ ॥ इयरे जंकिंचि गुणं । लहिऊण समुब्नलंति तुबप्पा ॥ दुब्बलपरकपरिग्गह—गहिआ सलहव नुवणंमि ॥ २६ ॥ इय नियचरिएहिं चिय । पुरिसा नज्जंति कुलगुणसमेया ॥ मज्जायक्कमणेण । जेण लहु इंति अप्पाणं ॥ २७ ॥ अन्यच्च विदिता यूयं । पुत्राः सगरचक्रिणः ॥ तन्नेदं नवतां युक्तं । कर्तुं गोत्रकलंकनं ॥ २८ ॥ यतः—ते पुत्ता जे पिउणो । चित्तेण पहेण सइ पयट्टंति ॥ तेसिं गुणगहणेणं । पियावि सलहिज्जइ जयंमि ॥ २९ ॥ डस्सीलेहिं सुएहिं । विलहइ वयणि

जायं पिया सयथं ॥ किरणा तवंमि नुवणं । लोउ सुरस्स रूसेइ ॥ ३० ॥ तद्यावद्भज्यते नैव । चूला मामकवेश्मनः ॥ तावद्विश्राम्यतां दंड—रत्नमेतत्समुद्यतं ॥ ३१ ॥ यतः—कज्जं कुणंति नियं । नवरोहं नेय कस्सइ जणंति ॥ गुणवंतयाण कप्पो । नमराणव होइ कमलेसु ॥ ३२ ॥ श्रुत्वेदं जन्हुना प्रोचे । नास्माभिस्तव वेश्मनः ॥ नंजनार्थमियं चक्रे । परिखा परितो गिरेः ॥३३॥ तदस्माकं न कोऽप्यत्र । दोषोऽस्ति नुजगाधिप ॥ रक्षाष्टापदशैलस्या—स्माभिरेषा कृता यतः ॥३४॥ तद्भो संहर संरंभं । न कुर्मः पुनरीदृशं ॥ श्रुत्वेदं शांतकोपाग्नि—र्गतोऽसौ निजकाश्रयं ॥ ३५ ॥ तस्मिन् गतेऽथ नूयोऽपि । ब्रूते जन्हुकुमारकः ॥ कृतापि खातिका दुर्गा । नेयं नाति जलं विना ॥ ३६ ॥ तदहो क्रियतां तूर्ण—मेतस्या नीरपूरणं ॥ इत्युक्ते दंमरत्नं तद् । गृहीतं राजसूनुनिः ॥ ॥ ३७ ॥ गत्वा च संहतैः सर्वै—र्दंडरत्नेन नूतलं ॥ निदानैर्हिमवच्छृंगा—न्निष्क्रांता निर्मलोर्मिका ॥ ३८ ॥ नानाजलचराकीर्ण—नीरपूरप्रवाहिनी ॥ समाकृष्टा महागंगा । परिखाभिमुखं जवात् ॥ ३९ ॥ युग्मं ॥ सा च रंगत्तरंगौघै—र्भुजगगतिगामिनी ॥ वेगतः परिखामध्ये । समानीय प्रवेशिता ॥ ४० ॥ तस्या नीरमहापूरं । संपूर्य परिखां भृशं ॥ प्लावयामास नागेंद्र—नवनानि रसातले

॥ ४१ ॥ दृष्ट्वा विशज्जलं नागै—र्भणितो भुजगाधिपः ॥ किमेष जृंभते स्वामि—न्नपूर्वः सलिलप्लवः ॥ ४२ ॥ यतः—

दृश्यते नागिनीवृंद—मुह्यमानं जलप्लवैः ॥ प्लाव्यमानानि चाशेष—भवनानि समंततः ॥४३॥ अथ प्रोवाच सावेशः । श्रुत्वेदं ज्वलनप्रभः ॥ विद्यंते सगराख्यस्य । चक्रिणो दुष्टसूनवः ॥ ४४ ॥ यैर्दंडरत्नमादाय । भित्वा दूरं रसातलं ॥ गंगानदीजलप्लावैः । प्लावितानि गृहाणि नः ॥ ४५ ॥ कृतमेव मया सामं । तेषां दुर्नयकारिणां ॥ नूनं दुष्टाशयत्वेन । तत्परिणतमन्यथा ॥ ४६ ॥ यतः—माणुन्नयाणवि फुडं । सामं गरुयत्तणं पयासेइ ॥ दंमसहायं इहरा । नराण दीणत्तणं कुणइ ॥ ॥ ४७ ॥ दो चेव न वर नीईउ । होंति पुरिसाण गुणमहग्घाण ॥ सामं च विणयपिसुणं । दंडोच्चपयावविब्भारो ॥ ४८ ॥ एभिस्तावत्समालोकि । सामनीतिर्मदीयका ॥ संप्रत्यदृष्टपूर्वा च । दंडनीतिं प्रदर्शये ॥ ४९ ॥ एवं संजल्प्य नागेंद्रो । रुषारुणितलोचनः ॥ आदिदेश महाघोरान् । दृष्टिविषमनोहरान् ॥ ५० ॥ यथातित्वरितं गत्वा । तान् सगरसुतानहो ॥ विनाशयत निःशेषान् । दूरं दुर्नयकारिणः ॥ ५१ ॥ ततस्तैर्विषपूर्णाक्षै—र्विनिर्गत्य रसातलात ॥ नीताः सर्वे क्षणादेव ।

भस्मपुंजावशेषतां ॥ ५२ ॥ एवं च भस्मपुंजेषु । जातेषु नृपसूनुषु ॥ जातो हाहारवो घोरः । क्षु-
ब्धं तद्राजसैन्यकं ॥ ५३ ॥ किंकर्तव्यतया मूढाः । प्रलपंतिस्म भूभृतः ॥ यथा भो कुत्र गच्छामः ।
कस्य वा कथयामहे ॥ ५४ ॥ युध्यामहे समं केन । सर्वथाऽदृष्टवैरिणा ॥ कथं वा दर्शयिष्यामो ।
मुखं सगरभूपतेः ॥ ५५ ॥ यावदेवं च तत्सैन्यं । निस्त्राणं शोकविह्वलं ॥ नानाविधकृताक्रंदं । जा-
तं संमूढमानसं ॥ ५६ ॥ तावद् ज्ञात्वा स्वभर्तृणां । मृत्युमाकस्मिकं क्षणात् ॥ प्रवृत्तं रोदितुं प्रो-
च्चै—रंतःपुरं महारवैः ॥ ५७ ॥ हाहा कृतांत निस्त्रिंश । निर्विवेकातिनिर्दय ॥ संहृत्य मामकान्
भर्तृन् । लब्धं मूढ किमु त्वया ॥ ५८ ॥ हा धातरेककाले किं । सर्वनाशस्त्वया कृतः ॥ किं वेद-
मिंद्रजालं वा । किं वास्मन्मतिविभ्रमः ॥ ५९ ॥ किंवापि सत्यमेवेदं । संजातं श्रूयते यथा ॥ कि-
मेकदैव वैधव्य—मस्माकमिदमागतं ॥ ६० ॥ तदहो किं वयं कुर्मः । क्व यामः कं श्रयामहे ॥ क-
स्येदं वा समाख्यामः । किं कृतं सुकृतं भवेत ॥ ६१ ॥ इत्यादि प्रलपंतीभि—रंतःपुरीभिरुच्चकैः ॥
ताम्यंतीभिरत्यर्थं । कराघातैरुरोऽभितः ॥ ६२ ॥ त्रोटयंतीभिरुद्दाम—मुक्ताहारान् कचांस्तथा ॥ व-
स्त्राणि पाटयंतीभि—र्लुठंतीभिर्महीतले ॥ ६३ ॥ मुंचंतीभिर्मुखाल्लोल—लालाजालानि भूरिशः ॥

सिंचंतीभिः कदंबाद्यै—रश्रुपातैरुरःस्थलं ॥ ६४ ॥ कुर्वतीभिर्महाक्रंदान् । भूरिशो रुदितं तथा ॥ यथा भो श्वापदान्युच्चै । रोदितानि वनांतरे ॥ ६५ ॥ चतुर्भिः कलापकं ॥

एवं च करुणारावै—रंतःपुरं रुदद्भृशं ॥ सैन्यं च दुःखितं सर्वं । संधीर्यतेऽथ मंत्रिभिः ॥ ॥ ६६ ॥ एवं प्रभाषमाणैश्च । यथा भो भो नराधिपाः ॥ भो भो स्वस्वामिनो भक्ता । योधाः सेनाधिपा जनाः ॥ ६७ ॥ कुमाराणां कृते भद्राः । किमर्थमिह रुद्यते ॥ यतस्तैः सर्वमेवोच्चैः । कर्तव्यं कृतमंजसा ॥ ६८ ॥ त्रिभिर्विशेषकं ॥ जैनेंद्रवेश्मयुक्तस्य । कृताष्टादशभूभृतः ॥ रक्षा स्वजीवितेनैवं । कुर्वद्भिः खातिकामिमां ॥ ६९ ॥ अस्माभिर्नो पुनस्तेषां । विश्वोपकृतिकारिणां ॥ नैवेहोपकृतं किंचि—द्वह्निप्रदानतोऽपि हि ॥ ७० ॥ तस्मात्प्रदीयतां भो भो । शीघ्रमेव प्रयाणकं ॥ प्रदत्तं च क्षणादेव । प्राप्ताश्च निजकां पुरीं ॥ ७१ ॥ ततः सचिवसामंतै—र्मिलित्वैकत्र मंत्रितं ॥ अहो सर्वकुमाराणां । जातं मरणमेकदा ॥ ७२ ॥ कथं नाम नरेंद्राय । दुःश्रव्यं कथयामहे ॥ सर्वथैव दुराख्येयं । दुर्घटं किमु कुर्महे ॥ ७३ ॥ युग्मं ॥ यतः—अहव ता नियपहुणो । परेण वा वायणं समक्खं ॥ जं कीरइ अन्नेसिं । पियमरणं न सहंति तं धीरा ॥ ७४ ॥ एवं निवेयणं पुण ।

पहुणो वा वायणस्स न हु जुत्तं ॥ हुंति चिय संसारे । कज्जाइं एव कुडिलाइं ॥ ७५ ॥ तं किंपि पम्हस कज्जं । पुवज्जियदहदेवजोएण ॥ मरणेवि जेण गरहा । जीयं पुण पावपरिणामो ॥ ७६ ॥ तदहो शक्यते नैव । संचिंतयितुमप्यदः ॥ किं पुनर्नृपतेः साक्षा—त्समाख्यातुं स्फुटाक्षरैः ॥७७॥ किंत्वस्माकमपि श्रेयो । वह्नौ ज्वालासमाकुले ॥ पतंगमरणं कर्तु—मेव दुःखप्रणाशकं ॥ ७८ ॥ न पुनः सर्वथा सर्व—पुत्रमृत्युनिवेदनं ॥ अथवा ज्ञाप्यमस्माक—मकीर्त्या स्फुटमेतया ॥ ७९ ॥ इ- त्थं मंत्रयतामेव । तत्र सामंतमंत्रिणां ॥ अत्यंताकुलचित्ताना—मेको विप्रः समागतः ॥ ८० ॥ उ- क्ताश्च मंत्रिणस्तेन । किमेवं जोः समाकुलाः ॥ विषादमिह मुंचध्वं । गृह्णीध्वं च सुधीरतां ॥८१॥ त्यज्यतां शोकसंभारो । ज्ञाप्यतां च भवस्थितिः ॥ संसारवर्तिजीवानां । कियन्मात्रमिदं यतः ॥ ॥ ८२ ॥ एतदपि च नात्यंत—माश्चर्यं प्रतिभासते ॥ यत्तु षष्टिसहस्राणि । पंचतामेकदा ययुः ॥ ॥ ८३ ॥ यतः—कालंमि अणाइए । जीवाणं विविहकम्मवसगाणं ॥ तं नत्थि संविहाणं । संसारे जं न संभवइ ॥ ८४ ॥ इत्युक्त्वा ब्राह्मणस्तूर्णं । मंत्रिवर्गसकाशतः ॥ अनाथमृतकं लात्वा । प्राप नृपस्य मंदिरं ॥ ८५ ॥ कुर्वाणः करुणारावान् । बृहच्छब्दैर्द्रुतं द्रुतं ॥ मुष्टो मुष्टोऽहमित्युच्चै—स्तव

राज्येऽपि नृपते ॥ ८६ ॥ आकर्ण्येदं ततो राज्ञा । शीघ्रमाकारितो द्विजः ॥ उक्तश्चैवं यथा केन ।
मुष्टोऽसि मम कथ्यतां ॥ ८७ ॥ द्विजः प्राह यथा राजन् । मुष्टोऽहं हतवेधसा ॥ पुत्रो मे एक ए-
वायं । दष्टो दुष्टमहाहिना ॥ ८८ ॥ निश्चेष्टो नृप संजातः । सर्वथा नष्टचेतनः ॥ तदमुं मामकं पु-
त्रं । जीवापय महीपते ॥ ८९ ॥ अत्रांतरे समायाता—स्तेऽपि सामंतमंत्रिणः ॥ आस्थाने राज-
राजस्य । शोकाकुलितचेतसः ॥ ९० ॥ कृत्वा विमनसो राज्ञः । प्रणामं नम्रमौलयः ॥ उपविष्टाश्च
ते सर्वे । सस्नेहं दापितासनाः ॥ ९१ ॥ अथादिष्टो महावैद्यः । श्रीमत्सगरचक्रिणा ॥ यथा द्विज-
स्य पुत्रोऽयं । निर्विषः क्रियतामिति ॥ ९२ ॥ ततः प्रभाषते वैद्यो । विज्ञातसुतमृत्युकः ॥ राजेंद्र
यदि यत्रेह । गृहे गोत्रे कुलेऽपि वा ॥ ९३ ॥ न मृतो जन्म संप्राप्य । कोऽपि कापि कदाचन ॥
तस्माद्गृहात्समानीत—मात्रेण भस्मना नृप ॥ ९४ ॥ सर्वथा निर्विषं कृत्वा । जीवापये द्विजांगजं
अथ प्राह नृपं मंत्री । सर्वनीतिविशारदः ॥ ९५ ॥ त्रिर्निर्विशेषकं ॥ किमस्ति देव संसारी । जी-
वः कोऽपि जगत्त्रये ॥ संजाते यस्य नैवेहा—नंतशो मृत्युजन्मनी ॥ ९६ ॥ मृत्यौ स्वर्वधूलोक-
स्य । नवं निंदंति मानवाः ॥ कियच्चिरं च शोचित्वा । स्वामिकार्याणि कुर्वते ॥ ९७ ॥ किं कोऽ-

पीह त्वया दृष्टः । श्रुतो वापि बहुश्रुतात् ॥ यस्य नो मृत्युजन्मानि । बन्नुवुर्भवसागरे ॥ ९८ ॥
अत एवंविधे घोरे । प्रकृत्या निर्गुणे नवे ॥ किं जायते गुणः कोऽपि । शोचितैर्बहुधापि हि ॥९९॥
श्रुत्वेदं स द्विजः प्राह । यद्येवं मनुजाधिप ॥ तथापि मामकं पुत्रं । जीवापयस्व सर्वथा ॥
॥ २०० ॥ अपि च—जे भण हयकयंतं । मझसुयं देवदेसुसयराहं ॥ तुह पोरसं महाजस । जे·
णामलिणं पविब्नरइ ॥ १ ॥ कज्जं विणावि भुवणे । अप्नुद्धरणं करेंति जे धीरा ॥ ते वंदणिज्ज·
चरिया । वरपहु तुम्मारिसा विरला ॥ २ ॥ दीणाण समुद्धरणं । नयंमि रक्का गुरूण तह विणर्ज
॥ दप्पुद्धराण समणं । दाणं दालिद्दतवियाणं ॥ ३ ॥ सवस्स पियं वयणं । बंधुसिणेहो कयंतु
या सवं ॥ सप्पुरिसाण महायस—ययं चिय होइ किं नणिमो ॥ ४ ॥ ततः प्राह नराधीशः । प·
रित्रातुं क ईश्वरः ॥ सततं प्राणिसंदोहं । मृत्युः संहरतः सतः ॥ ५ ॥ यत उक्तं—सो नत्थि चि·
य नुवणेवि । कोइ जो खलुइ तस्स माहप्पं ॥ सछंदचारिणो सव—वेरिणो हयकयंतस्स ॥ ६ ॥
सीयंति सवसत्थाइं । तत्थ न पहवंति मंतिणो मंता ॥ अदिट्ठपहरपहरं—तयंमि तंमि किं पोरुसं
कुणइ ॥ ७ ॥ न बलेण तस्स केणइ । पडियारो नेय तंतजुत्तिए ॥ आसेहिं रहवरेहिं च । अ

ह्वो निरब्भउ तह्व ॥ ८ ॥ इय अप्पडियारे हय—विहिमि संसारवत्तिणो जीवा ॥ वट्टंति तस्स आणाए । एब्ब को कीर उ उवाउ ॥ ए ॥ किंच–जइ तस्स चेव एकस्स । होज्ज संसारगोयरगयस्स ॥ मरणं न उणो अन्नस्स । जंतुणो हयकयंताउ ॥१०॥ ता जुज्जइ रोयणपिट्ट–णाइयं काउमस्स लोगस्स ॥ एकस्स जउ महपरि–ज्ञवोत्ति सयलंमि जियलोए ॥११॥ अह पुण ससुरनरासुर–विज्जाहरकिंनरेंदपमुहाणं ॥ सामन्नं चिय मरणं । ता इमिणा किं पलत्तेण ॥ १२ ॥ किंच–

संति षष्टिसहस्राणि । ममापि जितविद्विषां ॥ पुत्राणां रूपलावण्य—नवयौवनशालिनां ॥ ॥ १३ ॥ तेषामपि कृतांतेन । त्रैलोक्यस्यापि वैरिणा ॥ सततं ग्रस्यमानानां । त्राणं कः कर्तुमीश्वरः ॥ १४ ॥ तस्माच्छोकं विमुंचस्व । मा मारोदीर्द्विजोत्तम ॥ चिंतयस्व स्वकार्याणि । सर्वथात्महितं कुरु ॥ १५ ॥ यावत्त्वमपि नाद्यापि । ग्रस्यसे हतमृत्युना ॥ यतोऽयं सर्वजीवानां । वर्तते निकटे सदा ॥ १६ ॥ वैद्येन याचितं यच्च । जस्सामृत्युकुलोद्भवं ॥ संप्राप्तिस्तस्य नैवेह । विद्यते त्रिजगत्यपि ॥ १७ ॥ किंचास्मदीयवंशेऽपि । संख्यातीता नराधिपाः ॥ ग्रासीकृताः कृतांतेन । का वार्ता शेषजंतुषु ॥ १८ ॥ यतः—सव्वेवि हु नेरईया । तिरिया नरखयरसुरवरगणा य ॥ मरणं पावेंति जए

। निययं चिय नहि संदेहो ॥ १ए ॥ जंमाउ होइ मरणं । निययं मरणाउ तह य उप्पत्ती ॥ संसारे नहि थिरो । जाव न मोक्खं न उप्पत्तो ॥ २० ॥ तथा—सव्वस्सवि एस गई । होही कालेण जीवलोयम्मि ॥ नियकम्मज्जियवसगस्स । जंतुणो किंव रुन्नेण ॥ २१ ॥ सव्वस्स होइ समत्र्वि—उं य करणंमि पच्चलो धणियं ॥ संजोयं न उण कुणइ । पाणं पावपरिणामो ॥ २२ ॥ दुक्खं अवणाइ फुम्मं । राया जो तस्स गोयरे पडइ ॥ एयस्स ए देवेहिंवि । न तिरए नियममवणेउं ॥ २३ ॥ इत्यादि बहुधा त्रूपं । जल्पंतं प्राह स द्विजः ॥ किमहो सत्यमेवेदं । यद्भवताभिधीयते ॥ २४ ॥ ज्ञात्वा सत्यमिदं सर्वं । संसारस्य विजृंभितं ॥ माकुथास्तत्र जो शोकं । यदहं कथयामि ते ॥ २५ ॥ श्रद्धातुं वा कथं शक्यं । कथ्यमानमिदं मया ॥ यद्वा तन्नास्ति संसारे । संजवति यदत्र नो ॥ २६ ॥ हस्त्यश्वरथसामंत—योधैः परिवृता अपि ॥ सर्वे ते तावकाः पुत्रा । युगपत्पंचतां गताः ॥ २७ ॥ सर्वे दग्धाः फणींद्रेण । विषसंपूर्णचक्षुषा ॥ तद् ज्ञात्वाऽनित्यतामेनां । शोकः कार्यस्त्वयापि नो ॥ २८ ॥ श्रुत्वेदं मनुजेंद्रोऽपि । वज्राहत इव द्रुमः ॥ मूर्छया नष्टसच्चेष्टः । पपाताशु महीतले ॥ २ए ॥ ततोऽपि गतमूर्छश्च । क्षणात संप्राप्तचेतनः ॥ प्राकृतनरवत्प्रोच्चै

—राक्रंदमुखराननः ॥ ३० ॥ भूरिहाहारवैर्घोरै—र्व्याप्ताखिलदिगंतरः ॥ एवं सांतःपुरो राजा । प्रवृत्तो रोदितुं भृशं ॥ ३१ ॥ हाहा हतविधे पाप ! महापापविधायक ॥ अकर्तव्यं त्वयाकारि । यदहारि ममांगजाः ॥ ३२ ॥ अकर्तव्यतरं त्वेत—द्यन्नैकोऽपि ममांगजः ॥ तेभ्यो मुक्तस्त्वया क्रूर । किमु त्वं मम वैरिकः ॥ ३३ ॥ एकस्मिन्नपि नो पाप ! मत्पुत्रे पन्नगाधिप ॥ किं त्वया निरनुक्रोश । निर्लज्ज न कृता कृपा ॥ ३४ ॥ कथं ते मारयामीति । चिंतितं निजमानसे ॥ चिंतयित्वा कथं वाचा । घातयामीति जल्पितं ॥ ३५ ॥ जल्पितं च कथं व्यूढौ । करौ ते तेषु घातने ॥ कथं त्वयेदृशं कर्म । कृतं निर्घृण निर्घृणं ॥ ३६ ॥ अहो कथमकांडेऽपि । यमराजेन चेष्टितं ॥ यदेकदैव मे पुत्रा । नीताः सर्वेऽपि पंचतां ॥ ३७ ॥ किं विदधाम्यहं तत्र । शूरो वीरोऽपि बुद्धिमान् ॥ अत्यंतादृश्यमानेऽत्र । विधौ दुष्टविचेष्टिते ॥ ३८ ॥

इत्यादि विविधं राजा । प्रलपन् भूरिनिःस्वनैः ॥ उक्तस्तेन द्विजेनैवं । राजेंद्र कुरु धीरतां ॥ ॥ ३९ ॥ विमुंचैनं महाशोकं । धर्महानिकरं दृढं ॥ संभाषय निजं लोकं । कुरु धर्मपरं मनः ॥ ॥ ४० ॥ कुत्र ते तद्वरं ज्ञानं । कुत्र ते सा विवेकिता ॥ कुत्रोपदेशदातृत्वं । क वा सा तव धीर

ता ॥ ४१ ॥ अपि च—पत्वसणम्मि सुहेणं । संसारणिह्नियं कहइ लोए ॥ नियबंधुयणविणासे । सवस्स चलंति बुद्धिउ ॥ ४२ ॥ तुम्हारिसावि पुरिसा । जइवि उलिज्जंति दुक्खसोएण ॥ ता कस्स थिरं होही । धीरत्तमनिंदियं जुवणे ॥ ४३ ॥ वसणम्मि उ सवम्मि य । एगसहावा हवंति सप्पुरिसा ॥ जारिसउ चिय उदए । अत्थमणे तारिसो सूरो ॥ ४४ ॥ यथा—उदये सविता रक्तो । रक्तोऽस्तसमये तथा ॥ संपत्तौ च विपत्तौ च । महतामेकरूपता ॥ ४५ ॥ सप्पुरिसच्चिय वसणं । सहंति गरुयंपि निग्गयपयावा ॥ धरणिच्चिय सहइ जए । वज्जनिवायं न उण तंतू ॥ ४६ ॥ होइ गरूयाण वसणं । न उणो इयराण सुप्पसिद्धमिणं ॥ ससिसूरच्चिय घेप्पंति । राहुणा न उण ताराउ ॥ ४७ सप्पुरिसे चिय निवमंति । आवया न उण पयइ पुरिसंमि ॥ लक्खिज्जइ मलिणं सस—हरम्मि न उणो विमप्पंमि ॥ ४८ ॥ कुणइ वियारं कालो । विवेयपुरिसाण गुणमहग्घाणं ॥ सिसिरत्तणं न सिसिरो । विकुणइ जलणस्स पहवंतो ॥ ४९ ॥ वसणंमि समावडिए । पयइं न हु कहवि सुपुरिसो मुयइ ॥ राहुमुहगहियमुक्को—वि तवइ सूरो धरापीठं ॥ ५० ॥ इति विज्ञाय राजेंद्र । विरसं जवचेष्टितं ॥ विमुच्य सर्वथा शोकं । धीरवीरत्वमाश्रय ॥ ५१ ॥ श्रु

ष्मादृशां नृपाशेष—भवासारत्ववेदिनां ॥ शिक्षणं कः क्षमः कर्तुं । मुक्त्वान्ये स्वविवेकितां ॥५२॥ इत्युक्त्वाथ नृपं तेन । प्रोक्ताः सामंतमंत्रिणः ॥ यथा भो कथ्यतां सर्वं । यथावृत्तं महीभुजे ॥ ५३ ॥ तैरपि मूलतः सर्वं । खातिकाखननादिकं ॥ कुमारकविनाशांतं । समाख्यातं सविस्तरं ॥ ॥ ५४ ॥ अत्रांतरे च संप्रापु—र्लोका आसन्नवासिनः ॥ अष्टापदस्य शैलस्य । प्रणम्योचुर्नरेश्वरं ॥ ५५ ॥ अष्टापदमहाशैले । यानीता च तवांगजैः ॥ महागंगा तया भृत्वा । खातिकां भूरिवारिभिः ॥ ५६ ॥ प्रत्यासन्नाः पुरग्राम—गोकुलनगराकराः ॥ कदर्थ्यंते पयःपूरैः । सर्वतोऽपि विसर्पिभिः ॥ ५७ ॥ युग्मं ॥ तन्नाथ वार्यतां गंगा—नीरपूरः सुदुर्धरः ॥ आकर्ण्येदं ततो भूपो । भागीरथ्यभिधं सुतं ॥ ५८ ॥ आहूय प्रवदत्येवं । यथा त्वं वत्स सादरं ॥ नागराजं समाराध्य । सर्वैराराधनाक्रमैः ॥ ५९ ॥ दंडरत्नं समादाय । गंगां प्रापय सागरे ॥ ततो भागीरथिर्गत्वा—ष्टापदे मंत्रिभिः समं ॥ ६० ॥ त्रिभिर्विशेषकं ॥ ततश्चाष्टमभक्तेन । तेनाराधि फणिप्रभुः ॥ ततः सोऽपि विनिर्गत्य । क्षणादेव रसातलात् ॥ ६१ ॥ समायातः स्फुरत्स्फार—नानाभुजगभूषणः ॥ एवं भागीरथिं प्राह । वत्स ब्रूहि प्रयोजनं ॥ ६२ ॥ युग्मं ॥ तेनापि च स विज्ञप्तः । कृत्वा मूर्ध्नि करांजलिं

॥ नागेंद्र त्वदनुज्ञातो । गंगां सिंधौ नयाम्यहं ॥ ६३ ॥ फणींद्रेणापि स प्रोचे । सस्नेहं तुष्टचेत-
सा ॥ यथा वत्स निराशंको । विधेहि स्वसमीहितं ॥ ६४ ॥ ततो भागीरथिस्तूर्णं । कृत्वा साम-
ग्रिकां क्षणात् ॥ दंडरत्नेन भिंदानः । समुद्राभिमुखां महीं ॥ ६५ ॥ नानाविधपूरग्राम—नानाका
रमहीभृतां ॥ नानाजनपदानां च । मध्येनात्यंतवेगतः ॥ ६६ ॥ नानाजलचराकीर्ण—जलकल्लो-
लसंकुलां ॥ निनाय नीतिमानेवं । तदा गंगां महोदधौ ॥ ६७ ॥ त्रिभिर्विशेषकं ॥ आनीता ज-
न्हुना येन । हिमाद्रेर्जाह्नवी ततः ॥ यद्भागीरथिना नीता । भागीरथ्यपि तेन सा ॥ ६८ ॥ भा-
गीरथिस्ततस्तुष्टः । समं सामंतमंत्रिभिः ॥ पितुराज्ञां विधायाशु । समायातो निजां पुरीं ॥ ६९ ॥
जनकतनुजमृत्यौ चक्रतुः शोकमुच्चै—र्भरतसगरचक्रस्वामिनौ भूरिशब्दैः ॥ तदपि च न हि ता-
भ्यां सद्गुणः कोऽपि लेभे । परमजनि नितांतं धर्मकामार्थहानिः ॥ ७० ॥ इति सुकृतरिपुत्वं सुष्टु
शोकस्य मत्वा । त्यजत सकलशोकं सर्वथा बंधुनाशे ॥ श्रयत च जिनधर्मं श्रेयसामेकपात्रं । भ-
वजलनिधिमज्जद्देहिनां यानपात्रं ॥ ७१ ॥ इति सगरचक्रवर्तिकथानकं समाप्तं ॥

उक्तः शोकाधिकारः सप्तमः. अथ कषायाधिकारोऽष्टम उच्यते, अस्य चायमभिसंबंधः—पूर्व-

त्र शोकवतां शोकापनोदः कृतः, शोकश्च कषायवतामेव संभवति, तदत्र कषायस्वरूपमुच्यत इति, तत्र श्लोकानां सप्तविंशतिरियं —

॥ मूलम् ॥—शोकेन चाभिभूयंते । कषायवशवर्तिनः ॥ अतः फलं कषायाणां । तन्यमानं निशम्यतां ॥ १ ॥ वनवह्निर्यथा दीप्तो । भस्मसात्कुरुते वनं ॥ क्रोधानलस्तथा दीप्तो । भस्मसात्कुरुते नरं ॥ २ ॥ यस्मादुत्तिष्टते वह्नि—र्दहत्येव तदाश्रयं ॥ क्रोधोऽपि क्रोधिनं पूर्वं । दहत्येव न संशयः ॥ ३ ॥ जितरोषरयाः संतो । नीचाः कोपेन निर्जिताः ॥ जितेन ये जितास्तेषां । तैः समं का विरोधिता ॥ ४ ॥ अपकारिणि कोपश्चे—त्कोपे कोपो विधीयतां ॥ मित्रद्रुहि कृतोद्वेगे । चित्तसंतापकारिणि ॥ ५ ॥ सर्वकार्याणि सिध्यंति । ह्यर्थसाराणि तस्य नुः ॥ सुरंगाधूलिवत्कोपो । यस्य न प्रकटो भवेत् ॥ ६ ॥ बुध्या कार्याणि सिध्यंते । सा तु क्रुद्धस्य नश्यति ॥ तस्मात्क्षमा क्षमैवोच्चैः । सर्वकार्यप्रसाधिका ॥ ७ ॥ न नमस्यति देवेभ्यो । वरिवस्यति नो गुरून् ॥ अहंकारग्रहग्रस्तः । पितॄनपि न मन्यते ॥ ८ ॥ अहं दाता अहं भोक्ता । रूपवान् धनवानहं ॥ एवं सर्वगुणाधारं । स्वं मानी मन्यते स्वयं ॥ ९ ॥ अमानमानमारूढो । मन्यते तृणवज्जगत् ॥ मेरोरप्य·

धिकं मूढः । पश्यत्यात्मानमात्मना ॥ १० ॥ अहो मानस्य दौरात्म्यं । येन प्राप्तो न केवलं ॥ सुनंदानंदनः साधु—र्यावन्मानं न मुक्तवान् ॥ ११ ॥ अद्विजिह्वाः फणभृतो । बहिः श्लक्ष्णा भयंकराः ॥ अंतर्विषभृतो दूरं । वर्जनीयाः शठा जनाः ॥ १२ ॥ शठानि यस्य मित्राणि । शठा यस्य गृहे स्त्रियः ॥ उन्नतिस्तस्य दूरस्था । जीवितव्येऽपि संशयः ॥ १३ ॥ येषां योगत्रयस्यापि । संवादो नैव दृश्यते ॥ तेषां शठात्मनां कार्ये । संवादः केन मृग्यते ॥ १४ ॥ यदि मायाहतो धर्मो । हतं सत्यं शठात्मनः ॥ सर्वाविश्वासहेतुश्च । मायावी जायते नरः ॥ १५ ॥ निर्दोषोऽपि च मायावी । जनसंत्रासकारणं ॥ अथवाहेर्मृतस्यापि । किं न बिभ्रति देहिनः ॥ १६ ॥ ततो माया परित्याज्या । सर्वथा धार्मिकैर्जनैः ॥ ततो धर्मस्ततः सत्यं । ततः सर्वेऽपि सद्गुणाः ॥ १७ ॥ नदीनाथं तरंत्येके । विशंत्यन्ये रसातलं ॥ खनंत्येके खनिं लोका । लोभः सर्वत्र कारणं ॥ १८ ॥ रंगभूमौ च वंशाग्रे । कृतनानाविडंबनाः ॥ नृत्यंति यन्नराः केचि—ल्लोभस्तत्रापि कारणं ॥ १९ ॥ यत्सेवां कुर्वते केचि—त्खड्गव्यग्रकरा नराः ॥ जीव नंदेति जल्पंतो । हेतुस्तत्रापि नापरः ॥ २० ॥ वंचयति पिता पुत्रं । पुत्रोऽपि पितरं निजं ॥ यत्प्रलोभो न तत्रान्यो । धिग्धिग्लोभमहो जनाः ॥ २१ ॥ केवल-

ज्ञानकालेऽपि । लोभः कष्टेन वेद्यते ॥ शेषेष्वपि कषायेषु । तिलतैलमिव स्थितः ॥ २२ ॥ त्रैलोक्यगतजीवानां । चित्ते चित्ते व्यवस्थितः ॥ एकधा बहुधा लोभो । दृश्यते जलचंद्रवत् ॥ २३ ॥ अहो लोभस्य साम्राज्यं । यदधीनोऽखिलो जनः ॥ तत्र तत्र प्रयात्येव । यत्र कुत्रापि नीयते ॥ ॥ २४ ॥ यदटंति महीमेके । समारोहंति रोहणं ॥ तृषार्ताः क्षुधिता दीना । लोभस्तत्रापि जृंभते ॥ २५ ॥ ये नराः क्रोधसंदग्धा । ये नरा मानविह्वलाः ॥ ये च मायामयाः केचि—द्ये च लोभवशं गताः ॥ २६ ॥ तेषामिहैव दुःखानि । परलोकेऽधमा गतिः ॥ दृष्टांतोऽत्र कषायार्त्ते । रुद्रदेवकुटुंबकं ॥ २७ ॥

व्याख्या—इति श्लोकानां सप्तविंशतिः प्रायः सुगमैव, तथापि शिष्यहितार्थं किंचिद्विव्रीयते—शोकेन मनःसंतापेनाभिभूयंते बाध्यंते कषायवशवर्तिनः क्रोधादिकषायवशगाः, अतःकारणात्फलं विपाकं कषायाणां कथ्यमानं निशम्यतामिति सुगमं. ॥ १ ॥ वनवह्निर्दावानलो यथा येन प्रकारेण दीप्तो ज्वलितो भस्मसात्कुरुते वनं दहतीत्यर्थः, क्रोधानलः कोपवह्निस्तथा तेन प्रकारेण दीप्तः प्रज्वलितो दहत्येव तपोवनं तप एव वनमरण्यं तद्दहतीत्यर्थः. ॥ २ ॥ वह्निकोपयोः साम्यं दर्शयन्ना-

ह—यस्मात्स्थानादुत्तिष्टते प्रजवति वह्निरग्निर्दहत्येव तमाश्रयं निजस्थानं, क्रोधोऽपि कोपोऽपि क्रोधिनं क्रोधवंतं पूर्वं प्रथमं दहति जस्मसात्करोति, नात्र संशयः. स्वाश्रयादपरत्र बलवदादौ संदेहः. ॥ ३ ॥ न संतः कोपेन बाध्यंते, किंतु नीचा एवेति दर्शयन्नाह—जितरोषरया निर्जितक्रोधवेगाः संतः सत्पुरुषा जवंतीति गम्यते, नीचा जघन्याः कोपेन निर्जिताः, अतो विजितेन सत्पुरुषजितेन कोपेन ये जिता ये निर्जितास्तेषां जघन्यानां तैः सद्भिः सार्धं का विरोधिता? का प्रतिस्पर्धा? न काचिदित्यर्थः. ॥ ४ ॥ किंच—अपकारिणि कोपश्चेत्कोपे कोपो विधीयतां, किंविशिष्टे कोपे? मित्रद्रुहि सुहृल्लोकघातके, कृतोद्वेगे विहितसंत्रासे चित्तसंतापकारिणि. ॥ ५ ॥ इह विदुषा तावत्तथा यतितव्यं यथा क्रोध उदयमेव नागछति, ये तूदितमपि क्रोधं निरुंधंति तेषामर्थसिद्धिं दर्शयन्नाह—सर्वकार्याणि सर्वकर्तव्यानि सिध्यंति निष्पद्यंतेऽर्थसाराणि प्रयोजनप्रधानानि तस्य क्रोधनिरोधकस्य नुर्नरस्य, सुरंगाधूलिवत्प्रछन्नदरिरेणुरिव कोपो यस्य न प्रकटो जवेन्न प्रकाशीस्यादिति. ॥ ६ ॥ अन्यच्च—बुद्ध्या प्रज्ञया कार्याणि प्रयोजनानि साध्यंते विधीयंते, सा तु सा पुनर्बुद्धिः क्रुद्धस्य कोपवतो नश्यत्यपयाति, तस्मात्कारणात्क्षमा समर्था क्षमैव क्षांतिरेव सर्वकार्यप्रसाधिका सम

ज्ञानकालेऽपि । लोभः कष्टेन वेद्यते ॥ शेषेष्वपि कषायेषु । तिलतैलमिव स्थितः ॥ २२ ॥ त्रैलोक्यगतजीवानां । चित्ते चित्ते व्यवस्थितः ॥ एकधा बहुधा लोभो । दृश्यते जलचंद्रवत् ॥ २३ ॥ अहो लोभस्य साम्राज्यं । यदधीनोऽखिलो जनः ॥ तत्र तत्र प्रयात्येव । यत्र कुत्रापि नीयते ॥ ॥ २४ ॥ यदटंति महीमेके । समारोहंति रोहणं ॥ तृषार्ताः क्षुधिता दीना । लोभस्तत्रापि जृंभते ॥ २५ ॥ ये नराः क्रोधसंदग्धा । ये नरा मानविह्वलाः ॥ ये च मायामयाः केचि—द्ये च लोभवशं गताः ॥ २६ ॥ तेषामिहैव दुःखानि । परलोकेऽधमा गतिः ॥ दृष्टांतोऽत्र कषायाणां । रुद्रदेवकुटुंबकं ॥ २७ ॥

व्याख्या—इति श्लोकानां सप्तविंशतिः प्रायः सुगमैव, तथापि शिष्यहितार्थं किंचिद्विव्रीयते—शोकेन मनःसंतापेनाभिभूयंते बाध्यंते कषायवशवर्तिनः क्रोधादिकषायवशगाः, अतःकारणात्फलं विपाकं कषायाणां कथ्यमानं निशम्यतामिति सुगमं. ॥ १ ॥ वनवह्निर्दावानलो यथा येन प्रकारेण दीप्तो ज्वलितो भस्मसात्कुरुते वनं दहतीत्यर्थः, क्रोधानलः कोपवह्निस्तथा तेन प्रकारेण दीप्तः प्रज्वलितो दहत्येव तपोवनं तप एव वनमरण्यं तद्दहतीत्यर्थः. ॥ २ ॥ वह्निकोपयोः साम्यं दर्शयन्ना·

ह—यस्मात्स्थानादुत्तिष्ठते प्रजवति वह्निरग्निर्दहत्येव तमाश्रयं निजस्थानं, क्रोधोऽपि कोपोऽपि क्रोधिनं क्रोधवंतं पूर्वं प्रथमं दहति जस्मसात्करोति, नात्र संशयः. स्वाश्रयादपरत्र बलवदादौ संदेहः. ॥ ३ ॥ न संतः कोपेन बाध्यंते, किंतु नीचा एवेति दर्शयन्नाह—जितरोषरया निर्जितक्रोधवेगाः संतः सत्पुरुषा जवंतीति गम्यते, नीचा जघन्याः कोपेन निर्जिताः, अतो विजितेन सत्पुरुषजितेन कोपेन ये जिता ये निर्जितास्तेषां जघन्यानां तैः सद्भिः सार्धं का विरोधिता? का प्रतिस्पर्धा? न काचिदित्यर्थः. ॥ ४ ॥ किंच—अपकारिणि कोपश्चेत्कोपे कोपो विधीयतां, किंविशिष्टे कोपे? मित्रद्रुहि सुहृल्लोकघातके, कृतोद्वेगे विहितसंत्रासे चित्तसंतापकारिणि. ॥ ५ ॥ इह विदुषा ताव त्तथा यतितव्यं यथा क्रोध उदयमेव नागच्छति, ये तूदितमपि क्रोधं निरुंधंति तेषामर्थसिद्धिं दर्शयन्नाह—सर्वकार्याणि सर्वकर्तव्यानि सिध्यंति निष्पद्यंतेऽर्थसाराणि प्रयोजनप्रधानानि तस्य क्रोधनिरोधकस्य नुर्नरस्य, सुरंगाधूलिवत्प्रछन्नदरिरेणुरिव कोपो यस्य न प्रकटो जवेन्न प्रकाशीस्यादिति. ॥ ६ ॥ अन्यच्च—बुद्ध्या प्रज्ञया कार्याणि प्रयोजनानि साध्यंते विधीयंते, सा तु सा पुनर्बुद्धिः क्रुद्धस्य कोपवतो नश्यत्यपयाति, तस्मात्कारणात्क्षमा समर्था क्षमैव क्षांतिरेव सर्वकार्यप्रसाधिका सम

ज्ञानकालेऽपि । लोभः कष्टेन वेद्यते ॥ शेषेष्वपि कषायेषु । तिलतैलमिव स्थितः ॥ २२ ॥ त्रैलोक्यगतजीवानां । चित्ते चित्ते व्यवस्थितः ॥ एकधा बहुधा लोभो । दृश्यते जलचंद्रवत् ॥ २३ ॥ अहो लोभस्य साम्राज्यं । यदधीनोऽखिलो जनः ॥ तत्र तत्र प्रयात्येव । यत्र कुत्रापि नीयते ॥ ॥ २४ ॥ यदटंति महीमेके । समारोहंति रोहणं ॥ तृषार्ताः क्षुधिता दीना । लोभस्तत्रापि जृंभते ॥ २५ ॥ ये नराः क्रोधसंदग्धा । ये नरा मानविह्वलाः ॥ ये च मायामयाः केचि—द्ये च लोभवशं गताः ॥ २६ ॥ तेषामिहैव दुःखानि । परलोकेऽधमा गतिः ॥ दृष्टांतोऽत्र कषायार्त्ते । रुद्रदेवकुटुंबकं ॥ २७ ॥

व्याख्या—इति श्लोकानां सप्तविंशतिः प्रायः सुगमैव, तथापि शिष्यहितार्थं किंचिद्विव्रीयते—शोकेन मनःसंतापेनाभिभूयंते बाध्यंते कषायवशवर्तिनः क्रोधादिकषायवशगाः, अतःकारणात्फलं विपाकं कषायाणां कथ्यमानं निशम्यतामिति सुगमं. ॥ १ ॥ वनवह्निर्दावानलो यथा येन प्रकारेण दीप्तो ज्वलितो भस्मसात्कुरुते वनं दहतीत्यर्थः, क्रोधानलः कोपवह्निस्तथा तेन प्रकारेण दीप्तः प्रज्वलितो दहत्येव तपोवनं तप एव वनमरण्यं तद्दहतीत्यर्थः. ॥ २ ॥ वह्निकोपयोः साम्यं दर्शयन्ना-

ह—यस्मात्स्थानादुत्तिष्टते प्रजवति वह्निरग्निर्दहत्येव तमाश्रयं निजस्थानं, क्रोधोऽपि कोपोऽपि क्रोधिनं क्रोधवंतं पूर्वं प्रथमं दहति जस्मसात्करोति, नात्र संशयः, स्वाश्रयादपरत्र बलवदादौ संदेहः. ॥ ३ ॥ न संतः कोपेन बाध्यंते, किंतु नीचा एवेति दर्शयन्नाह—जितरोषरया निर्जितक्रोधवेगाः संतः सत्पुरुषा जवंतीति गम्यते. नीचा जघन्याः कोपेन निर्जिताः, अतो विजितेन सत्पुरुषजितेन कोपेन ये जिता ये निर्जितास्तेषां जघन्यानां तैः सद्भिः सार्धं का विरोधिता? का प्रतिस्पर्धा? न काचिदित्यर्थः. ॥ ४ ॥ किंच—अपकारिणि कोपश्चेत्कोपे कोपो विधीयतां, किंविशिष्टे कोपे? मित्रद्रुहि सुहृल्लोकघातके, कृतोद्वेगे विहितसंत्रासे चित्तसंतापकारिणि. ॥ ५ ॥ इह विदुषा तावत्तथा यतितव्यं यथा क्रोध जदयमेव नागच्छति, ये तूदितमपि क्रोधं निरुंधंति तेषामर्थसिद्धिं दर्शयन्नाह—सर्वकार्याणि सर्वकर्तव्यानि सिध्यंति निष्पद्यंतेऽर्थसाराणि प्रयोजनप्रधानानि तस्य क्रोधनिरोधकस्य नुर्नरस्य, सुरंगाधूलिवत्प्रछन्नदरिरेणुरिव कोपो यस्य न प्रकटो जवेन्न प्रकाशी स्यादिति. ॥ ६ ॥ अन्यच्च—बुद्ध्या प्रज्ञया कार्याणि प्रयोजनानि साध्यंते विधीयंते, सा तु सा पुनर्बुद्धिः क्रुद्धस्य कोपवतो नश्यत्यपयाति, तस्मात्कारणात्क्षमा समर्था क्षमैव क्षांतिरेव सर्वकार्यप्रसाधिका सम

स्तप्रयोजनविधायिकेत्यर्थः. ॥ ७ ॥ दर्शितः कोपविपाकः, अथ मानविपाकं दर्शयन्नाह—न नमस्यति देवेभ्यो देवानपि न नमति. वरिवस्यति नो गुरून् गुरूनपि न पर्युपास्ते, अहंकारग्रहग्रस्तो मानग्रहगृहीतः पितॄनपि जनकानपि न मन्यते न गणयति. ॥ ८ अनम्रः पर्वताकार इति श्लोकः सुगमः. ॥ ९ ॥

अहं दातेत्ययमपि सुगमः, नवरं स्वंमानीति स्वमात्मानं मन्यते इत्येवंशीलः स्वंमानी मन्यते बुध्यते स्वयमात्मना, अमानमानमप्रमाणाहंकारमारूढ आश्रितस्तृणतुल्यं तृणसदृशं मन्यते गणयति जगद् भुवनं, मेरोरपि सुरगिरेरप्यधिकमर्गलं मूढो मोहवान् पश्यति वीक्षते आत्मानं स्वात्मना स्वयमेव. ॥ १० ॥ मानस्य दुष्टतां प्रकटयन्नाह—अहो इत्याश्चर्यं मानस्याहंकारस्य दौरात्म्यं दुष्टता, येन कारणेन न प्राप्तो न लब्धवान् केवलं केवलाख्यं ज्ञानं सुनंदानंदनो बाहुबलिः साधुर्यतिरिति यावन्मानं यावदहंकारं न मुक्तवान्न त्यक्तवानिति. ॥ ११ ॥ उक्तो मानविपाकः, इदानीं मायाविनां स्वरूपमाह—अद्विजिह्वा एकजिह्वाः फणभृतः सर्पा बहिः श्लक्ष्णा बहिः सुकुमारा भयंकरास्त्रासजनका अंतर्विषभृतो मध्ये विषधारिणो दूरं दूरादेव वर्जनीयाः परिहरणीयाः शठा मा-

यात्रिनो जना लोकाः ॥ १२ ॥ शठसंगतिकारिणामिहैव दोषमाह—शठानि यस्य मित्राणीति श्लोकः सुगमः ॥ १३ ॥ किंच—येषां शठानां योगत्रयस्यापि मनोवाक्कायव्यापारत्रिकस्यापि संवादो मीलनं नेह दृश्यते नात्रावलोक्यते तेषां शठात्मनां कार्ये प्रयोजने संवादमीलनं केन मृग्यते? केन निभाल्यते? न केनापीत्यर्थः. ॥ १४ ॥ अन्यच्च—यदि माया यदि शाठ्यं हतो विनाशितो धर्मः सदनुष्ठानं, हतं सत्यं सत्यवचनं शठात्मनोऽशुद्धपरिणामस्य, सर्वाविश्वासहेतुश्च सर्वाविश्रंभका- रणं च मायावी जायते नर इति. ॥ १५ ॥ निर्दोषोऽपि निरपराधोऽपि च मायावी जनसंत्रासका- रणं लोकोद्वेगहेतुः, किं चाहेः फणिनो मृतस्यापि न बिभ्यंति भयं कुर्वंति? कुर्वंत्येव. ॥ १६ ॥ येनैवंविधदोषवती माया, अतः परित्याज्येति श्लोकः सुगमः, न वरं खनिः सुवर्णाद्याकरः ॥ १७ ॥ ॥ १८ ॥ रंगभूमौ वंशाग्रे चायमपि श्लोकः सुगमः, न वरं रंगभूमौ नर्तनस्थाने ॥ १९ ॥ यत्सेवां कुर्वंत इति श्लोकद्वयं सुगमं ॥ २० ॥ २१ ॥

अथ लोभस्य दुर्जयत्वमाह—स ज्ञानलाभकालेऽपि पंचमज्ञानप्राप्तिसमयेऽपि कष्टाद् दुःखेन लोभश्चतुर्थः कषायः प्रलीयते प्रलयं नीयते, शेषेष्वपि कषायेषु तिलतैलमिव स्थितः, शेषांस्त्रीन्

पि कषायान् व्याप्य व्यवस्थित इत्यर्थः, अस्यैव सामर्थ्यमाह—अहो इति विस्मये लोभस्य चतु· र्थकषायस्य साम्राज्यं, आज्ञेश्वरत्वं यस्य लोभस्याधीन आयत्तोऽखिलः समस्तः जनो लोकः, कोऽ· र्थः? लोभायत्तः संस्तत्र तत्र प्रयात्येव यत्र कुत्रापि नीयत इति सुगमं. इदमेव समर्थयति—यदटं· ति महीमेक इति सुगमः, नवरं रोहणाभिधानं रत्नाधारधराधरं. तृडार्ता तृषिता बुभुक्षिता दीना दै· न्योपेताः. कषायाधिकारं निगमयन्नाह—ये नराः क्रोधसंदग्धा इति श्लोकद्वयं सुगममेव. इति श्लो· कसप्तविंशतेः समासार्थः. ॥ २२–२७ ॥ इह च बाहुबलिकथानकं सुप्रसिद्धमिति कृत्वा न कथ्यते, रुद्रदेवकथानकं पुनरिदं—

इह द्वीपसमुद्राणां । सर्वेषां मध्यवर्तिनि ॥ जंबूद्वीपाभिधे द्वीपे । जंबूवृक्षविराजिते ॥ १ ॥ भरताभिधसुक्षेत्रे । पवित्रे धर्मयोगतः ॥ सुक्षेत्रे गुणशस्यानां । चक्रवर्त्यादिभूषिते ॥ २ ॥ अस्त्य· नेकजनाकीर्णं । देवेंद्रपुरसन्निभं ॥ विबुधानंददं रम्यं । प्रवृत्तसततोत्सवं ॥ ३ ॥ समाकीर्णं महा· भोगैः । पातालमिव भोगिभिः ॥ महेश्वरकृतावासं । कैलाशमिव सर्वतः ॥ ४ ॥ नानावर्णसमाकी· र्णं । चित्रकर्मोरुतुष्टिकृत् ॥ पुरपौरगुणोपेतं । नाम्ना विजयवर्धनं ॥ ५ ॥ पंचभिः कुलकं ॥ समट·

ष्टिजनानंदैः । सन्मार्गैः सुप्रविस्तरैः ॥ सुदीर्घैर्यत्र मूनागो । भाति साधुजनस्तथा ॥ ६ ॥ प्राकारो यत्र सद्वृत्त—स्तुंगश्च सुमनोहरः ॥ लब्धसाधुप्रतिष्ठश्च । सज्जनश्च विराजते ॥ ७ ॥ सत्वयुक्ता तिगंभीरा । सुसंवृत्तपयोधरा ॥ सीतेव परदुर्लंघ्या । परितः परिखा बभौ ॥ ८ ॥ नंदनाराममद्भांति । काननानि समंततः ॥ हिमाद्रिशृंगतुल्यानि । रेजुर्देवकुलानि च ॥ ९ ॥ यस्मिंश्च सागरायंते । विस्तीर्णानि सरांस्यलं ॥ पुष्पायुधप्रियायंते । नवयौवनयोषितः ॥ १० ॥ किंबहुना—

पुरंदरपुरस्पर्धि । तत्पुरं सत्समृद्धितः ॥ नरवृंदारकाकीर्णं । कीर्णरत्नोपराजितं ॥ ११ ॥ रुद्रदेवाभिधस्तत्र । बभूव प्रवरो द्विजः ॥ ब्राह्मणीयसमाचार—समासेवनतत्परः ॥ १२ ॥ ऋग्वेदयजुर्वेद—सामवेदविशारदः ॥ तथाथर्वणवेदादि—श्रुतसागरपारगः ॥ १३ ॥ यजनयापनाध्याया—ध्यापनादिकृतादरः ॥ जलज्वलनभस्मादि—सदाशौचपरायणः ॥ १४ ॥ एवमादिद्विजातीय—गुणग्रामविराजितः ॥ पिंगाक्षः पिंगकेशश्च । पिंगच्छविशरीरकः ॥ १५ ॥ परं वह्निरिवात्यंतं । क्रुद्धः स्वपरतापकः ॥ यस्मादसौ स्वभावेन । रोषणो दारुणस्तथा ॥ १६ ॥ यद्वा तद्वा समाकर्ण्य । यद्वा तद्वा समीक्ष्य च ॥ यद्वा तद्वा समासृत्य । रुष्यत्येष मुहुर्मुहुः ॥१७॥ यत्र वा तत्र वा स्थाने । ये-

न वा तेन वा सह ॥ कार्यं विनैव रोषेण । युध्यमानः प्रदृश्यते ॥ १८ ॥ समं स्वमित्रपुत्रैश्च । बं-
धुसंबंधिभिस्तथा ॥ व्यर्थं कलहयत्येष । कोपकंपितविग्रहः ॥ १९ ॥ ग्रहग्रस्त इवात्यंत—मद्यावा-
तास्तधीरिव ॥ धर्मलोकविरुद्धानि । भाषते च करोति च ॥ २० ॥ अतस्तस्य गुणग्रामः । शशां-
कधवलोऽपि हि ॥ एकेन रोषदोषेण । समग्रोऽपि तिरोहितः ॥ २१ ॥ द्विजस्य तस्य संजज्ञे । य-
ज्ञकार्यविचक्षणा ॥ विशालशीलसंपन्ना । विशालवरवंशजा ॥ २२ ॥ अग्निशिखेति विख्याता ।
नामतः कर्मतस्तथा ॥ सर्वदार्याजवोपेता । प्रवरप्रीतिमंदिरं ॥ २३ ॥ सद्योगभोगसत्याग—भाग्य-
सौभाग्यसंगता ॥ स्त्रीजनोचितकृत्येषु । सर्वेषु प्रविशारदा ॥ २४ ॥ देवानां ब्राह्मणानां च । भ-
क्तिकृद्भर्तृवत्सला ॥ सा ब्राह्मणकुलाचार—समासेवनतत्परा ॥ २५ ॥ चतुर्भिः कलापकं ॥ परं सा-
पि स्वभावेन । रोषदोषविदूषिता ॥ अनेकगुणयुक्तापि । प्रशंसामाप नो जने ॥ २६ ॥ रोषविषभ-
रापूर्णा । सर्पिणीवातिदारुणा ॥ रुष्टा सती दुरालोका । जनतोद्वेगकारिणी ॥ २७ ॥

एवं समानशीलौ तौ । दंपती बत वेधसा ॥ निर्मितौ येन कोपांधौ । द्वावपि कलहप्रियौ ॥
॥ २८ ॥ द्वावपि त्यक्तमर्यादा—वसमंजसभाषिणौ ॥ जानंतावपि संमूढौ । वर्तेते सर्वकर्मसु ॥२९॥

द्वावपि दुष्टवाक्यानि । प्रभाषेते निरर्थकं ॥ द्वावपि रुष्यतो नित्य—मेवमेव परस्परं ॥ ३० ॥ क
दाचिद्युध्यमानौ तौ । प्रकुर्वाते छजेमनं ॥ द्वावपि कुरुतोऽकस्मा—त्केशाकेशिं कदाचन ॥ ३१ ॥
मुष्टामुष्टिं विधत्तश्च । दंभादंभिं तथैव च ॥ एवं च कुर्वतस्तस्य । कालो याति द्वयस्य च ॥ ३२ ॥
नूनं तस्य द्वयस्यापि । समानगुणकर्मणः ॥ आनुरूप्यं समालोक्य । विधिना संगमः कृतः ॥ ३३ ॥
वैषयिकसुखासक्तौ । प्रीत्या तौ किल दंपती ॥ एकस्वभावमापन्नौ । निन्यतुः कालमंजसा ॥ ३४ ॥
तयोः सांसारिकं सौख्य—मेवमासेवमानयोः ॥ पुत्रत्रयं समुत्पन्नं । सुंदराकारधारकं ॥ ३५ ॥ प्रथ-
मः पर्वतो नाम । कुरंगाख्यस्तथापरः ॥ तृतीयः सागरो नाम । सर्वे शाश्वतनामकाः ॥ ३६ ॥ तत्र
पर्वतनामासौ । स्तब्धः सन् पर्वतायते ॥ अनम्रः सर्वलोकाना—मुच्चैःशिरा मदोद्धतः ॥ ३७ ॥ अ-
हं ज्ञानी च मानी च । त्यागी भोग्यहमेव च ॥ सुरूपः सुचिरं चेत्त—महंकारं चकार सः ॥३८॥
देवानप्येष नो नौति । गुरूनपि पितॄनपि ॥ किंबहुना न कस्यापि । स्वकं नामयते शिरः ॥३९॥
द्वितीयस्तु कुरंगाख्यो । यः कुटिलः कुरंगवत् ॥ मायामय इवात्यंतं । विधिनैष विनिर्मितः ॥४०॥
स्थानं कपटकूटानां । वंचनानां च मंदिरं ॥ निकृतिशब्दसद्धाम । महामायामहाश्रयः ॥ ४१ ॥

सागरस्तु महालोभो । यस्य वांछामहाह्रदः ॥ अर्थांभसातिदुःपूरो । नदीभिरिव सागरः ॥
॥ ४२ ॥ चक्रवर्तिसमृध्यापि । स्वर्गस्वामिश्रियापि च ॥ सर्वत्रैलोक्यलक्ष्म्यापि । यस्तृप्तिं नाप्तवा-
निति ॥ ४३ ॥ स्वगृहेऽन्यगृहे वापि । वीक्ष्य वस्तु शुभाशुभं ॥ वांछितवान् महावांछ—स्तन्मे सं-
पद्यतामिति ॥ ४४ ॥ एषा पुनरिमा भार्या । यथासंख्येन जज्ञिरे ॥ शीलेति निकृतिश्चैव । संच-
येति च नामभिः ॥ ४५ ॥ तत्र शीलाभिधा येयं । गृहिणी पर्वतस्य सा ॥ तथा विनयहीना च ।
भूरिगर्वा स्वभर्तृवत् ॥ ४६ ॥ या पुनर्निकृतिर्नाम । सा कुरंगस्य गेहिनी ॥ सर्वत्रानतिगूढात्मा ।
घनवंशकुरंगवत् ॥ ४७ ॥ या चेयं संचयानाम । सागरस्य तु गेहिनी ॥ स्वभर्तेव महालोभा ।
लुब्धा सर्वेषु वस्तुषु ॥ ४८ ॥ एवं समानशीलत्वं । द्वंद्वे द्वंद्वे विनिर्मितं ॥ तुल्यवस्तुसमायोग—
विशेषज्ञेन वेधसा ॥ ४९ ॥ तदिदं संहतं सर्वं । रुद्रदेवकुटुंबकं ॥ कुर्वन्निजनिजाचारं । गमयतिस्म
वासरान् ॥ ५० ॥ अन्यदा रुद्रदेवेन । वृद्धभावमुपेयुषा ॥ अग्निशिखा निजा भार्या । भणिता श्रू-
यतां प्रिये ॥ ५१ ॥ अत्यंतजरयाक्रांता—वावां विगतविक्रमौ ॥ लोचने श्यामलीभूते । न श्रोतुं
श्रोतसी क्षमे ॥ ५२ ॥ पुत्राश्च यौवनारूढाः । स्वछंदप्रविचारिणः ॥ भ्रमयंति यथाकामं । मयो-

पार्जितसंपदं ॥ ५३ ॥ न कुर्वंति मदीयाज्ञां । वीक्षंते मामवज्ञया ॥ तत्प्रिये नैव पश्यामि । सुंदरं
पुत्रचेष्टितं ॥ ५४ ॥ तदहं ते प्रयच्छामि । दीनाराणां सहस्रकं ॥ सम्यक्संगोप्यनामेत—दाशाबं-
धस्य हेतवे ॥ ५५ ॥ एवमस्त्विति संकल्पा । समादाय ततस्तकत् ॥ निष्क्रम्य च ततः स्थाना—
देकांते निचखान सा ॥ ५६ ॥ द्वे दीनारसहस्रे तु । निखाते चात्र तिष्ठतः ॥ मृतस्य मे प्रिये द-
द्या—द्धर्माय विधिपूर्वकं ॥ ५७ ॥ एतत्सर्वं च शुश्राव । कुमंगो निकृतिस्तथा ॥ ततो निकृतिरा-
गत्य । संचयायै न्यवेदयत ॥ ५८ ॥ संचयाप्यर्थसंलुब्धा । निकृतिं प्रत्यभाषत ॥ सकिंचना च नः
श्वश्रूः । कथंचिन्मुष्यतामिति ॥ ५९ ॥ निकृतिः प्राह सानंदा । नानानिकृतिकारिणी ॥ किं सु-
गमेऽपि संमूढा । भगिन्यत्र प्रयोजने ॥ ६० ॥ विषमकार्यलक्षेषु । निर्व्यूढाया ह्यनेकशः ॥ स्वश्व-
श्रूवंचनोपायो । न मे भाति सुदुःकरः ॥ ६१ ॥ हे संचये महामुग्धे । द्रविणसंचयार्थिनि ॥ तत्कु-
रु यदहं भाषे । कार्यं येन प्रसिध्यति ॥ ६२ ॥ यं हि जरसाघ्राता । स्नेहाभ्यंगादिकांक्षिणी ॥ क-
र्कशक्रियययाराध्या । सद्भावं नौ प्रयास्यति ॥ ६३ ॥ इत्यादिकं समालोच्य । गत्वा श्वश्रूसमीपके ॥
ऊचतुः स्वयमेवैते । तामेवं प्रियया गिरा ॥ ६४ ॥ यथा त्वमंब वृद्धासि । न च ते कोऽपि पा-

लकः ॥ अतस्त्वां वारकेणावां । पालयावः स्वशक्तितः ॥ ६५ ॥ सा प्रोवाच यथैवोक्तं । युवाभ्या· मेवमेव तत् ॥ जराक्रांतं शरीरं मे । पालयेथं तदादरात् ॥ ६६ ॥ ततो द्वे अपि यत्नेन । तामा· सेवितुमुद्यते ॥ उचिताभ्यंगनस्नान—भोजनाच्छादनादिभिः ॥ ६७ ॥ एवं च नित्यमेताभ्या—म· तिकर्कशसेवया ॥ सेव्यमाना च सा वृद्धा । परं तोषमुपागता ॥ ६८ ॥ ततः सा चिंतयामास । ताभ्यामाराधिता सती ॥ अहो मदीयके वध्वौ । मद्भक्ते च विनीतके ॥ ६९ ॥ अहो गुरुजने भ· क्ति—रहो गुरुषु नम्रता ॥ अहो लज्जा त्वहो शील—महो लोकज्ञता तयोः ॥ ७० ॥ एते हि मम शुश्रूषां । कुरुतः सर्वयत्नतः ॥ तदहं बाढमेताभ्यां । सद्विनयेन रंजिता ॥ ७१ ॥ एवं गमयते काल—मत्यंतप्रीतमानसा ॥ निजवधूगुणग्रामं । चिंतयंती मुहुर्मुहुः ॥ ७२ ॥ अथान्यदा तया प्रो· क्तं । ते समाहूय सांजसं ॥ यथाहं किंचिदाख्यामि । भवतीभ्यां रहस्यकं ॥ ७३ ॥ ते आहतुः प्र· सादो नौ । कथ्यतां कथ्यतामिति ॥ वृद्धाह पुत्रिके अन्यः । कश्चिदत्र न तिष्ठति ॥ ७४ ॥ ते ऊचतुर्न कोऽपीति । श्रूयतां तर्हि सादरं ॥ कथयामि युवयोर्यच्च । वृद्धोवाचेति सांजसं ॥ ७५ ॥ आशाबंधकृते मह्यं । दीनाराणां सहस्रकं ॥ भर्त्रा दत्तं मया तच्च । गृहीतं परितुष्टया ॥ ७६ ॥ मं·

चकस्यास्य वामस्य । पादस्याधः प्रयत्नतः ॥ दूरं रसातले सम्यक् । निखानमवतिष्ठते ॥ ७७ ॥ अ
तो यदि ममाकस्मा—दज्ञातं मरणं भवेत् ॥ ततस्तद्द्रविणं ग्राह्यं । युवाभ्यामेव मामकं ॥ ७८ ॥
इति श्रुत्वा निकृत्योक्तं । निकृत्यैव सविस्मयं ॥ मावोचदीदृशं वाक्यं । चिरं जीव ममाम्बिके ॥७८॥
इत्यादिमधुरैर्वाक्यैः । श्वश्रूं संबोध्य सादरं ॥ स्वस्वव्यापारनिष्टे च । जाते निकृतिसंचये ॥ ७९ ॥
अन्यदा च समालोच्य । ताभ्यां कृत्वा च निश्चयं ॥ उत्खातं तत्ततो ऽव्यं । विजनं वीक्ष्य सत्वरं
॥ ८० ॥ नीत्वान्यत्र निखातं च । दूरैकांतमहीतले ॥ आवयोरेव चास्त्वेत—दित्यकारि च निश्च-
यः ॥ ८१ ॥ श्वश्रूंप्रति च निःशेषो । ह्रासितो विनयः किल ॥ क्रमेणाभ्यंगनस्नान—भोजनाभ्वा-
दनादिकः ॥ ८२ ॥

अथ पूर्वप्रयुक्तस्य । हानिं विनयकर्मणः ॥ स्थविरा समीक्ष्य साशंका । मनस्येवं व्यचिंतयत्
॥ ८३ ॥ वध्वावेते यथाकालं । पूर्वं सर्वप्रयत्नतः ॥ चक्रतुर्विनयं सर्वं । चरणक्षालनादिकं ॥८४॥
सांप्रतं सर्वकृत्येषु । मयि मंदादरे भृशं ॥ संजाते नैव जानामि । किमत्र बत कारणं ॥ ८५ ॥ हुं
ज्ञातं च यदाख्यातं । स्वद्रव्यं मुग्धया मया ॥ मन्ये तल्लब्धमेताभ्यां । तेनैवायमनादरः ॥ ८६ ॥

एवमाशंकमाना च । यावत्तत्र निरीक्षते ॥ तावन्नैवेक्ष्यते किंचि—त्ततोऽत्यर्थं शुशोच सा ॥
॥ ८७ ॥ पृष्टे च ते तया वध्वौ । यथा तन्मामकं वसु ॥ नेक्ष्यते स्थानके तत्र । कथ्यतां किमु का-
रणं ॥ ८८ ॥ ते आहतुर्विदीनास्ये । निकृत्या साश्रुलोचने ॥ यथावां नैव जानीवः । शपथश्च त-
वोपरि ॥ ८९ ॥ एवं कलुषितस्वांता । विश्वासस्नेहवर्जिताः ॥ श्वश्रूर्वध्वौ च तिस्रोऽपि । जाताः सा-
शंकमानसाः ॥ ९० ॥ इतश्च पितृवृत्तांतो । निखातद्रव्यगोचरः ॥ निवेदितः कुरंगेन । सागराय
सविस्तरः ॥ ९१ ॥ पर्वताय च निःशेषो । यथापूर्वमुपश्रुतः ॥ ततस्ते द्रव्यलोभेन । प्रोचुरेवं पर-
स्परं ॥ ९२ ॥ स द्रव्य एव नस्तात । तस्मादाराध्यतामिति ॥ एवमिति प्रतिज्ञातं । सर्वैः सानंद-
मानसैः ॥ ९३ ॥ कपटेनार्थलोभेन । पादप्रधावनादिकं ॥ कुरंगसागरौ सर्वं । विशेषात्कुरुतः पि-
तुः ॥ ९४ ॥ पर्वतः पर्वत इव । स्तब्धो लोहकुशीव सः ॥ स्वपितुर्विनयं किंचि—न्न करोति क-
दाचन ॥ ९५ ॥ कुरंगसागराभ्यां च । नित्यं कर्कशसेवया ॥ परवंचनदक्षाभ्यां । पितुरावर्जितं म-
नः ॥ ९६ ॥ ततश्च रुद्रदेवेन । बाढं रंजितचेतसा ॥ कुरंगसागरौ द्रव्यं । सर्वमेव प्रदर्शितं ॥९७॥
पर्वतः पुनरत्यंत—मनम्रत्वादुपेक्षितः ॥ निर्गुणेषु हि लोकेषु । नूनं युक्तमुपेक्षणं ॥ ९८ ॥ अ-

न्यदा च कुसंगेन । सार्धं सागरबंधुना ॥ तत उत्पाट्य तद् द्रव्यं । गृहीत्वान्यत्र गोपितं ॥ ९९ ॥ क्रमेणैव पितुः सर्वं । त्यक्तं विश्रामणादिकं ॥ तेनापि च सशंकेन । द्रव्यस्थानं निजालितं ॥ ॥ १०० ॥ न दृष्टं तत्र तद्द्रव्यं । पृष्टौ तेन निजांगजौ ॥ तावाहतुर्न जानीवो । हृतं केनापि पापिना ॥ १ ॥ श्रुत्वेदं रुद्रदेवोऽपि । जाताशंकः सुतानभि ॥ आकारसंवरं कृत्वा । तूष्णीभावमुपागतः ॥ २ ॥ अन्यदाग्निशिखायै स । रुद्रदेवेन मूलतः ॥ स्वद्रव्यनाशवृत्तांतः । समग्रोऽपि निवेदितः ॥ ३ ॥ अग्निशिखापि वृत्तांतं । द्रव्यप्रणाशगोचरं ॥ रुद्रदेवाय संत्रस्ता । समाख्यच्च सविस्तरं ॥ ४ ॥ श्रुत्वेदं च ततः क्रुद्धो । रुद्रदेवो जनीं प्रति ॥ अत्यंतासत्यदुर्वाक्यै—स्तामाक्रोशितवांश्च सः ॥ ५ ॥ हे मूर्खे मुग्धके पापे । ज्ञानविज्ञानवर्जिते ॥ वधूभ्यां किं त्वया द्रव्यं । मामनापृच्छ्य दर्शितं ॥ ६ ॥ एतत् श्रुत्वातिरोषेण । सापि तं प्रत्यभाषत ॥ त्वयापि किं स्वपुत्राभ्यां । स्वकं द्रव्यं प्रकाशितं ॥ ७ ॥ एवमादि मिथो बाढ—मसमंजसभाषणैः ॥ चिरं वाक्कलहं घोरं । दंडादंडि च चक्रतुः ॥ ८ ॥ रुद्रदेवो वदत्येक—मग्निशिखा द्वयं ततः ॥ यदि घातं ददात्येष । तदा सापि जिघांसति ॥ ९ ॥ एवं च युध्यमानेन । रुद्रदेवेन रोषतः ॥ ताडिताग्निशिखा क्वापि । गाढघातेन

मर्मणि ॥ १० ॥ मृता च दैवयोगेन । मृत्वा तत्रैव मंदिरे ॥ आर्तध्यानवशादेषा । जाता घोरभु-
जंगिनी ॥ ११ ॥ अधिष्टितं च मूर्छात—स्तया स्वं तन्निधानकं ॥ आस्ते तत्रैव सा नित्यं । विष-
संभृतदंष्ट्रिका ॥ १२ ॥ अन्यदा निकृतिः शाठ्या—दंचित्वा किल संचयां ॥ गृह्णामीति निधानं
त—त्खनंती द्रुतं द्रुतं ॥ १३ ॥ संदष्टा दुष्टसर्पिण्या । विषवेगातुरा सती ॥ मृत्वा तत्रैव संजाता
। नकुलिर्धनगृद्धितः ॥ १४ ॥ युग्मं ॥ ततो द्वे अपि कोपांधे । प्रयुध्येतां प्रतिक्षणं ॥ तस्यैव स्व·
निधानस्य । प्रत्यासन्ने परस्परं ॥ १५ ॥ संचयापि विसर्पंती । निधानासन्नमन्यदा ॥ दष्टा तया भु-
जंगिन्या । दृढं द्रविणलुब्धया ॥ १६ ॥ तस्मिन्नेव निजे गेहे । महामोहविमोहिता ॥ मृत्वार्तध्या·
नयोगेन । शुनिका समजायत ॥ १७ ॥

इतश्च सागरेणापि । निधानाबद्धगृद्धिना ॥ मारितो विषयोगेन । कुसंगो दुष्टबुद्धिना ॥१८॥
मृत्वाजनि भुजंगोऽसौ । तस्मिन्नेव निजे गृहे ॥ अधितस्थौ च लोभेन । तदेव स्वं निधानकं ॥
॥ १९ ॥ सागरोऽपि च निःशंको । गृह्णामीति खनंस्तकत् ॥ दष्टस्तेन भुजंगेन । मृत्वा च नकु·
लोऽजनि ॥ २० ॥ ततस्तौ च निधानार्थं । द्वावप्याबद्धमत्सरौ ॥ प्रत्यहं कृतसंयुद्धौ । कथंचिन्न वि·

रेमतुः ॥ २१ ॥ अन्यदा रुद्रदेवोऽपि । बहिष्टादागतो गृहे ॥ कृतपर्यस्तिकं पुत्रं । ददर्श पर्वताभि
धं ॥ २२ ॥ ततः प्रयोजने क्वापि । सत्वरं तमुवाच सः ॥ रेरे उत्तीयतां शीघ्रं । क्रियतां मामकं
वचः ॥ २३ ॥ सोऽप्यत्यंतमनम्रत्वा—त्सगर्वत्वान्निसर्गतः ॥ मूकक इव तूष्णीको । न ददौ पितुरु-
त्तरं ॥ २४ ॥ ततः पित्रा सुदुर्वाक्यै—र्निर्भर्त्सितो मुहुर्मुहुः ॥ रेरे जघन्य निश्चेष्ट । व्यवसायविव-
र्जित ॥ २५ ॥ नैवात्मापि च रे भर्तुं । त्वयका पाप पार्यते ॥ आस्तामन्यस्य कस्यापि । कार्यं किं-
चित्करिष्यसि ॥ २६ ॥ सोऽपि प्रोवाच हे तात । त्वयापि क्रियते न किं ॥ कोपावेशेन येनैवं ।
रारटीसि निरर्थकं ॥ २७ ॥ ममाज्ञाभंगकारीति । प्रत्युवाच च सन्मुखं ॥ रुद्रदेवस्ततः क्रुद्धः । सा-
वेशः पर्वतंप्रति ॥ २८ ॥ एवं च पितृपुत्राभ्यां । स्वपरक्लेशकारकः ॥ वर्धितः कलहो दूरं । जल्पि-
तप्रतिजल्पितैः ॥ २९ ॥ अथ प्रयुध्यमानौ च । भुजंगनकुलावुभौ ॥ गृहांगणे समायातौ । बद्धा-
मर्षौ परस्परं ॥ ३० ॥ अनेनैव प्रकारेण । सर्पिणी नकुली तथा ॥ युध्यमाने समायाते । तस्मि-
न्नेव गृहांगणे ॥ ३१ ॥ अथ कार्येण केनापि । निधानासन्नमागता ॥ शिलापि तत्र तिष्टंत्या । द-
ष्टा शुनिकया तया ॥ ३२ ॥ शिलयापि च सा रोषा—ल्लकुटेनाहता दृढं ॥ मुक्त्वारारटिं ततो नंष्ट्वा

। गता तत्र गृहांगणात् ॥ ३३ ॥ शिलापि शुनिकादंश—वेदनार्दितमानसा ॥ आक्रंदंती समागत्य । तस्मिन्नेवाजिरेऽपतत् ॥ ३४ ॥ अथ तादृशमाश्चर्यं । विलोक्यादृष्टपूर्वकं ॥ प्रभूतो मिलितो लोकः । कौतुकाक्षिप्तमानसः ॥ ३५ ॥ अत्रांतरे वरज्ञानी । भिक्षां भ्राम्यन् समागतः ॥ ज्ञानगांभीर्यधिः साधुः । साधुधर्मे कृतोद्यमः ॥ ३६ ॥ पृष्टोऽसौ रुद्रदेवेन । तदाश्चर्यनिबंधनं ॥ यथा भो कथ्यतां मह्यं । किमेवमसमंजसं ॥ ३७ ॥ युध्यमानौ विलोक्येते । द्वावेतौ नकुलोरगौ ॥ सर्पिणी नकुली चैते । शुनिका च शिला तथा ॥ ३८ ॥ किमर्थं युद्धमेतेषां । साधो साधय साधय ॥ साधुराह महाभाग । कथ्यते ते निशामय ॥ ३९ ॥ ततः सर्वोऽपि वृत्तांतो—ऽग्निशिखामरणादिकः ॥ कथितो रुद्रदेवाय । मूलादारभ्य साधुना ॥ ४० ॥ तथा महाप्रबंधेन । तस्मै शेषजनाय च ॥ संवेगार्थं समाख्यातं । महामोहविजृंभितं ॥ ४१ ॥ तद्यथा—

कर्मणा मोहनीयेन । मोहितं सकलं जगत ॥ धन्या मोहं समुत्सृज्य । तपस्यंति विमुक्तये ॥ ४२ ॥ अहो मोहस्य माहात्म्यं । विद्वांसोऽपि यतो नराः ॥ मुह्यंति धर्मकृत्येषु । रताः कामार्थयोर्दृढं ॥ ४३ ॥ क्रोधो मानस्तथा माया । लोभश्चेति महाद्विषः ॥ बाधयंति सदा लोकं । निरा·

ल्लोकं निरुद्यमं ॥ ४४ ॥ एतैर्हि निर्जिता याव—त्तावत्सौख्यं कुतो नृणां ॥ धर्मवार्ता तु कौतस्त्या
। शरीरस्थैरिमैरहो ॥ ४५ ॥ एते हि तस्करा घोरा । भवाटव्यां प्रतिक्षणं ॥ मुष्णंति धर्मसर्वस्वं ।
शीघ्रमेव प्रमादिनां ॥ ४६ ॥ नास्ति क्रोधसमो वह्नि—र्नास्ति मानसमो खलः ॥ आपन्मायासमा
नास्ति । नोदधिर्लोभसन्निभः ॥ ४७ ॥ रागद्वेषातुरो जीवः । कामक्रोधवशं गतः ॥ लोभमोहमहा-
विष्टः । संसारे संसरत्यसौ ॥ ४८ ॥ संसारे पर्यटन् जंतु—र्योनिलक्षसमाकुले ॥ शारीरमानसं दुः-
खं । संप्राप्नोत्यतिदारुणं ॥ ४९ ॥ आर्त्तरौद्रमना मूढो । न करोत्यायतौ हितं ॥ तेनासौ सर्वतः क्ले-
शं । परत्रेह च गच्छति ॥ ५० ॥ कषायविषयार्तानां । देहिनां नास्ति निर्वृतिः ॥ तेषां च विगमे
सौख्यं । जायते सततं परं ॥ ५१ ॥ कषायविषयातंकै—रात्मायं पीडितः सदा ॥ चिकित्सनीयो
यत्नेन । जिनवाक्सारभेषजैः ॥ ५२ ॥ विषयोरगदष्टस्य । कषायविषवेगिनः ॥ संयमो हि महामं-
त्र—स्त्राता सर्वत्र देहिनां ॥ ५३ ॥ कषायकलुषो जीवो । रागाकुलितमानसः ॥ चतुर्गतिमहांभो-
धौ । पाषाण इव मज्जति ॥ ५४ ॥ विषयेषु रतो जीवः । कर्म बध्नाति दारुणं ॥ तेनासौ क्लेश-
माप्नोति । भ्राम्यन् भीमे भवोदरे ॥ ५५ ॥ कषायविजये सौख्य—मिंद्रियाणां च निग्रहे ॥ जाय-

ते परमं सात—मात्मनो जवछेदकं ॥ ५६ ॥ कषायान् शत्रुवत्पश्ये—द्विषयान् विषवत्तथा ॥ मोहं च परमं व्याधि—मेवमूचुर्जिनेश्वराः ॥ ५७ ॥ कषायशत्रवो बाढं । धर्मकार्यं जिघांसवः ॥ वैराग्यतीक्ष्णखड्गेन । खंडनीया महाबलैः ॥ ५८ ॥ इत्यादि जवसंवर्धि । कषायाणां सुदारुणं ॥ विपाकं कटुकास्वादं । कथयित्वा मुनिः स्थितः ॥ ५९ ॥ आकर्ण्येमां मुनेः पार्श्वे । महामोहविडंबनां ॥ लोकः संवेगमापन्नो । धर्मे बहु मनो ददौ ॥ ६० ॥ तथा बजुर्भुजंगश्च । नकुली च जुजंगिनी ॥ शुनी च शीलया चैव । सर्वाण्यपि विशेषतः ॥ ६१ ॥ गीतान्यतीवदुर्वार—कषायारातिसंहतेः ॥ संवेगरससंदोह—शीतीजूतवपूंषि च ॥ ६२ ॥ जातजातिस्मरण्युच्चै—स्त्यक्त्वा वैरानुबंधनं ॥ गृहीत्वानशनं मृत्वा । सर्वाण्यपि दिवं ययुः ॥ ६३ ॥ त्रिजिर्विशेषकं ॥ रुद्रदेवोऽपि संविग्नो । ह्युद्विग्नश्च जवभ्रमात ॥ सपुत्रः सह तेनैव । ज्ञानगर्वेण साधुना ॥ ६४ ॥ श्रुतसागरसंज्ञस्य । गत्वा सूरेः पदांतिके ॥ जग्राह भावतो दीक्षां । संसारोछेदकारिणीं ॥ ६५ ॥ साधुजिः शिक्ष्यमाणश्च । साधुकृत्येषु केषुचित् ॥ तेज्यः पूर्वप्रयोगेण । रुद्रदेवः प्रकुप्यति ॥ ६६ ॥ पर्वतोऽपि न कस्यापि । करोति प्रणतिं किल ॥ गाढं तु जाण्यमानौ तौ । कलहं कुरुतोऽधिकं ॥ ६७ ॥ अयोग्याविति वि-

ज्ञाय । ततस्तौ गुरुणा गणात् ॥ निष्कासितौ गतौ पश्चा—दन्यत्र च गणांतरे ॥ ६८ ॥ तत्रापि च तथैवैतौ । वर्त्तेते प्रतिवासरं ॥ निष्कासितौ च तौ गब्बा—त्तथैव गुरुणा निजात् ॥ ६९ ॥ एवमनेकगब्बेषु । कृतसंक्रमनिष्क्रमौ ॥ कालेनैकाकिनौ जातौ । सुखशीलौ विशेषतः ॥ ७० ॥ अन्यदाग्निशिखादेवः । प्रतिबोधकृते तयोः ॥ कृत्वा चाग्निशिखारूपं । निशि तत्र समाययौ ॥ ७१ ॥ पृष्टा च रुद्रदेवेन । कुतोऽसि त्वमिहागता ॥ स्वर्गमनादिवृत्तांतं । सापि तस्मै न्यवेदयत् ॥ ७२ ॥ स प्राहाविरतापि त्वं । किमित्यावां न वंदसे ॥ सा बभाण न वंदेऽहं । संयमविकलान्मुनीन् ॥ ॥ ७३ ॥ रोषदोषेण दुष्टस्त्वं । मानदोषेण पर्वतः ॥ कुतो युवकयोः क्षांतिः । कुतो वा बत मार्दवं ॥ ७४ ॥ कुतस्तपः कुतो धर्मः । कुतो वा वरसंयमः ॥ तद्भो युवां समीहेथे । वंदनं केन हेतुना ॥ ॥ ७५ ॥ दया क्षांतिस्तपः सत्यं । संयमश्चैव वंद्यते ॥ युवयोश्च न संत्येते । वंदे वां तदहं कथं ॥ ७६ ॥ इत्यादि बहु संजल्प्य । जगामाग्निशिखासुरः ॥ रुद्रदेवोऽपि संविग्नः । पर्वतंप्रत्यभाषत ॥ ॥ ७७ ॥ रेरे आवां न कस्यापि । कदापि क्वापि संगतौ ॥ स्वकीयेनैव दोषेण । मानी त्वं क्रोधवानहं ॥ ७८ ॥ तस्मादेतौ परित्यज्य । गत्वा स्वगुरुसन्निधौ ॥ मलादालोचनां कृत्वा । कुर्वः संय-

ममुत्तमं ॥ ७९ ॥ तथैव कृतवंतौ तौ । जातौ च गुरुसंमतौ ॥ साधूचितेषु कृत्येषु । वर्तते शुद्धभावतः ॥ ८० ॥ समाराधितवंतौ च । क्षमया विनयेन च ॥ तपःसंयमशीलैश्च । सबालस्थविरं गणं ॥ ८१ ॥ अन्यदोल्लासितोद्दाम—विशुद्धध्यानवह्निना ॥ निर्दह्य घातिकर्माणि । प्रापतुः केवलश्रियं ॥ ८२ ॥ पालयित्वा चिरं चारु । चारित्रं च यथोदितं ॥ भवोपग्राहिकर्माणि । क्षपयित्वा शिवं गतौ ॥ ८३ ॥ एवं च गुणहीनौ तौ । पूर्वं भूत्वा तथाविधौ ॥ पश्चात्सर्वगुणोपेतौ । जातौ सर्वजनोत्तमौ ॥ ८४ ॥ यतोऽत्यंतमचिंत्येयं । शक्तिर्जीवस्य विद्यते ॥ द्रागेव सर्वकर्माणि । येनासौ क्षपयत्यलं ॥ ८५ ॥ इति मत्वा न कर्तव्या । हीला कस्यापि देहिनः ॥ निर्गुणोऽपि यतो भूत्वा । जायते सगुणो नरः ॥ ८६ ॥ इति रुद्रदेवकथानकं समाप्तं ॥ कषायविपाकवेदिभिर्लोकविरुद्धान्यपि परिह्रियंते, अतस्तदनंतरं लोकविरुद्धाधिकार उच्यते—

॥ मूलम् ॥—लोकः सर्वोऽप्ययं लोको । ध्यांध्यादंधीयतेतरां ॥ सन्मार्गपदन्यासे च । प्रस्खलन्नापराध्यति ॥ १ ॥ राजानो न प्रजापाला । मंत्रहीनाश्च मंत्रिणः ॥ आचार्या नाममात्रेण । वाचका वाचनां विना ॥ २ ॥ इत्येवं सर्वलोकस्य । निंदको निंद्यते जने ॥ राजादिहीलकः कोऽपि

। कारागारे प्रवेश्यते ॥ ३ ॥ ऋजुधर्मस्य कर्तारं । प्राणिनं वीक्ष्य पापभाक् ॥ हसत्येव यथा तस्य
। धर्मभ्रंशः प्रजायते ॥ ४ ॥ सर्वलोकविरुद्धेन । नरेण सह संगतिं ॥ कुरुते सोऽपि तत्तुल्यो—
ऽशेषलोकेन गाण्यते ॥ ५ ॥ यत्रावासस्तदाचार—चातुर्यं शस्यते जने ॥ अतीवोल्बणवेषो हि ।
विरुद्धः प्रतिभासते ॥ ६ ॥ पुरग्रामप्रवेशेषु । निर्गमेषु च दीयते ॥ यद्दानं कीर्तिकामेन । लोके
तदपि हस्यते ॥ ७ ॥ साधूनां व्यसनं दृष्ट्वा । हस्यते तन्न संगतं ॥ प्रतीकारं तु सामर्थ्ये । सति न
कुरुतेऽपि यः ॥ ८ ॥ साधुभक्ता जना ये न । तन्निंदा नैव संगता ॥ ये तु तामपि कुर्वंति । ते
नूनमधमाधमाः ॥ ९ ॥ समस्ति जीवनोपायो । येषामन्योऽपि कोऽप्यहो ॥ स्वस्तुतिं परनिंदां च ।
कथं कुर्वंति ते जनाः ॥ १० ॥ महापापवतामेत—न्महल्लिंगं प्रकीर्तितं ॥ एकं परजने निंदा । स्व-
प्रशंसा द्वितीयकं ॥ ११ ॥ यो धर्मः कर्तुमारब्धः । स एव क्रियतां जनाः ॥ परनिंदामहापापा ।
कथ्यतां कोपयुज्यते ॥ १२ ॥ अनुष्ठानानि तान्येव । स एव च जिनागमः ॥ परमाजीविकाहेतो—
र्दंभादंडिसमर्गलं ॥ १३ ॥ यो यथा कुरुते पुण्यं । स तथा लभते फलं ॥ किमिदं क्रियते लोकाः
। केशाकेशि निरर्थकं ॥ १४ ॥ स्वपक्षपरपक्षाभ्यां । संबद्धाः क्षेत्रभूमयः ॥ बहुभिर्बहुधा तत्र । व-

सतामेषणा कथं ॥ १५ ॥ अन्यत्रान्यत्र तत्रैव । तिष्ठतां कारणं विना ॥ का वैदग्धी कुतो धर्मो । मुक्त्वैकं मुग्धमोहनं ॥ १६ ॥ सर्वलोकविरुद्धानि । जल्पंते दुर्जना जनाः ॥ धार्मिकाः कथमुच्यंते । स्वपरोद्वेगकारिणः ॥ १७ ॥ एतस्मिन् दुःषमाकाले । विप्रकीर्णवचस्विनां ॥ तत्पक्षपातिनां चैव । पर्यंतोऽपि न लभ्यते ॥ १८ ॥ संक्लेशपरिहारेण । धर्मो वीरेण दर्शितः ॥ तापसाश्रममुत्सृज्या —समयेऽन्यत्र गच्छता ॥ १९ ॥ धर्मलोकविरुद्धानि । शक्त्या यः परिवर्जयेत् ॥ सोऽर्थसिद्धिं सुकीर्तिं च । लभते शुभसंगवत् ॥ २० ॥ धर्मलोकविरुद्धानि । निःशंको यः समाचरेत् ॥ सोऽर्थहानिमकीर्तिं च । लभतेऽत्र कुसंगवत् ॥ २१ ॥ तस्माल्लोकविरुद्धानां । त्यागो हि पुण्यकारणं ॥ तत्रादरो महान् कार्यो । विदुषा धर्ममिच्छता ॥ २२ ॥ व्याख्या—इति श्लोकद्वाविंशतिः प्रायः सुगमैव, तथापि शिष्यहितार्थं किंचिदुच्यते—तत्र लोको जनः प्रायशः प्राचुर्येण बोको जन्मो ध्यांध्यान्मतिमांद्यादंधायते अंध इवाचरतितरामतिशयेन सन्मार्गपदन्यासे प्रस्खलन्नापराध्यति. ॥ १ ॥ लोकविरुद्धवाचकत्वमेव दर्शयति—राजानो महीपतयो न प्रजापाला न जनाचिंतकाः, मंत्रहीना मंत्रविकला मंत्रिणो मंत्रकर्तारः, आचार्याः सूरयो नाममात्रेण नाम्नैव, वाचका उपाध्याया वाचनां

पाठनां विनांतरेणापि, ॥ २ ॥ इत्येवममुनोल्लेखेन निंदको दूषको निंद्यते दूष्यते जने लोके, किं-
च सर्वजननिंदकस्येहैव दोषमाह—राजादिनिंदको नृपादिहीलक इहैवास्मिन्नेव जन्मनि कोऽप्य-
तिमुखरः कारागारे गुप्तिगृहे प्रवेश्यते प्रक्षिप्यते. ॥ ३ ॥ ऋजुधर्मस्य प्रांजलधर्मस्य कर्तारं विधा-
तारं प्राणिनं देहिनं वीक्ष्यावलोक्य पापप्रकृतिर्हसत्येवं प्रकटया गिरा, यथा तस्य ऋजुधर्मकर्तुर्धर्म-
भ्रंशो धर्मापगमो जायते भवति. ॥ ४ ॥ सांप्रतं लोकविरुद्धवादिना सह संगोऽपि न कार्य इति
दर्शयन्नाह—सर्वलोकविरुद्धेनेति सुगमं, नवरं गण्यते मन्यते तत्तुल्यो विरुद्धवादिनः समानः ॥५॥
किंच—यत्रावासो यत्र निवसनं तदाचारचातुर्यं नैपुण्यं शस्यते श्लाघ्यते जने लोके, अतीवातिश-
येनोल्बणवेषः षिङ्गवेषो विरुद्धः प्रतिभासतेऽसंगतः प्रतिभासते. ॥ ६ ॥ अन्यच्च—पुरग्रामप्रवेशे-
ष्वित्यादि सुगमं, नवरं कीर्तिकामेन कीर्तिवांछया, येन जनो जानात्ययमत्र दातेति. ॥ ७ ॥ सा-
धूनां शिष्टानां व्यसनमापदं दृष्ट्वावलोक्य हृष्यते हृष्टो भवति तन्न संगतं न युक्तं, प्रतीकारं च प्र-
तिविधानं च न कुरुते न विदधाति सति सामर्थ्ये सत्यां संगतौ तदपि न संगतमित्यर्थः. ॥ ८ ॥
साधुभक्ताः शिष्टभक्ता जना लोका येन कारणेन तन्निंदा नैव संगता नैवोचिता, ये तु तामपि कु-

वंति ते नूनं निश्चितमधमाधमाः, जघन्यानामपि जघन्या इत्यर्थः. ॥ ९ ॥ समस्ति विद्यते जीवनोपायः प्राणनोपायः, स्वस्तुतिमात्मश्लाघां परनिंदां च परदोषग्रहणात्मिकां कथं कुर्वंति ते जनाः? न संगतमेतदिति. ॥ १० ॥ एतद् द्वयमप्यत्यंतदुष्टमिति दर्शयन्नाह—महापापव्रतां कल्मषाकुलचेतसां लिंगं चिह्नं देवकुलस्येव पताकिका प्रकीर्तितं जणितं, एकं प्रथमं परजने ह्यात्मव्यतिरिक्तलोके निंदा दोषग्रहणलक्षणा, स्वप्रशंसात्मश्लाघा द्वितीयकमपरं. ॥ ११ ॥ किंच—यदि धर्मः कर्तुमारब्धो विधातुमारब्धः स एव क्रियतां स एव विधीयतां जना लोकाः, परनिंदा महापापा महापापजनयोग्यत्वात् क्वोपयुज्यते? न क्वापीत्यर्थः. ॥ १२ ॥ अन्यच्च—अनुष्ठानानि क्रियाकांडानि तान्येव तुल्यानि यान्येकस्य द्वितीयस्यापि तान्येव, परं केवलमाजीविकाहेतोः स्वोदरजरणकृते दंडादंडिसमर्गलं दंडैर्दंडैश्च प्रहृत्य युद्धप्रवर्तनं दंडादंडि समर्गलं समधिकं. ॥ १३ ॥ यो यथा जघन्यमध्यमोत्कृष्टभेदेन कुरुते विधत्ते पुण्यं श्रेयः स पुमांस्तथा तदनुसारेण लभते फलं विपाकं शुभाशुभकर्मणामिति शेषः. तदेवं व्यवस्थिते भो जना भो लोकाः किमिदं क्रियते केशाकेशि निरर्थकं, केशेषु च केशेषु च गृहीत्वा युद्धप्रवर्तनं केशाकेशि, निरर्थकं निःप्रयोजनं, अयमप्यव्ययी

भाव एव समासः ॥ १४ ॥ स्वपक्षः साधुसाध्वीलक्षणः, विपक्षस्तापसादिः, ताभ्यां संबद्धाः संकीर्णाः क्षेत्रभूमयः क्षेत्रविभागाः, बहुपरिवारैर्बहुधानेकधा तत्र क्षेत्रे वसतां निवसतामेषणा कुतः? न कुतोऽपीत्यर्थः. ॥ १५ ॥ किंच ये मुग्धविप्रतारणायात्मनि पात्रबुद्धिं समारोपयंतो विनापि कारणमपरपरिग्रहाणि प्रत्युपेक्षंते तानुपालंभयन्नाह—का वैदग्धी का विदग्धता? कुतो धर्मः? न कुतोऽपीत्यर्थः, मुक्त्वा विहाय मुग्धमोहनमज्ञजनविप्रतारणं. ॥ १६ ॥ परमार्थतस्ते धार्मिका एव न भण्यंते इति दर्शयन्नाह—सर्वलोकविरुद्धानीति सुगमः श्लोकः. ॥ १७ ॥ किंच—एतस्मिन् दुःषमाकाले पंचमारकलक्षणे विप्रकीर्णवचस्विनामर्दवितर्दवादिनां तत्पक्षपातकारिणां पर्यंतोऽपि सीमापि न लभ्यते न प्राप्यते, बहुत्वादेवंविधवादिनां तत्पक्षपातिनां च कालदोषादिति हृदयं. ॥ १८ ॥ सांप्रतं कृत्यमुपदिशन्नाह—संक्लेशपरिहारेण चित्तखेदपरित्यागेन धर्मः पुण्यं वीरेण चरमतीर्थंकरेण दर्शितः प्रतिपादितस्तापसाश्रमं तापसकुटीरकमुत्सृज्य परित्यज्यासमयेऽप्यप्रस्तावेऽप्यन्यत्र वर्धमानपुरे गच्छता विहरता. ॥ १९ ॥ अथ लोके विरुद्धवर्जनावर्जनयोर्गुणदोषौ दर्शयन् श्लोकद्वयमाह—धर्मलोकविरुद्धानीत्यादि सुगमावेतौ, नवरं शुभसंगवदिति शुभसंगाख्यवणिक्पुत्र इव, तथा कुसंगव-

दिति कुसंगाद्भिधवणिक्सुत इव. ॥ २० ॥ २१ ॥ अथ लोकविरुद्धाधिकारं निगमयन्नाह—तस्माल्लोकविरुद्धानां परिहार इत्यादि श्लोकः सुगम एव. ॥ २२ ॥ इति श्लोकद्वाविंशतिसमासार्थः, अत्र च पराप्रीतिकपरिहारार्थं वर्षास्वेव तापसाश्रयमुत्सृज्य भगवान् श्रीमन्महावीरस्वाम्यस्थिकग्राममुपगतवानिति कथानकादवसेयं, तच्चैवं—

जिनः श्रीमन्महावीरो । वीरितांतरशात्रवः ॥ प्राज्यं राज्यं परित्यज्य । प्रव्रज्यां प्रत्यपद्यत ॥१॥ निःसंगोऽपि महासत्वः । सत्वानां रक्षणोद्यतः ॥ ग्रामादिसंकुलां पृथ्वीं । छद्मस्थो विहरन्नसौ ॥ २ ॥ मयूराकाभिधं ग्रामं । संप्राप्तस्तत्र चाश्रयः ॥ दूयमानाभिधानानां । पाखंडिगृहिणामभूत् ॥ ३ ॥ तेषां कुलपतिर्मित्र—मासीद्भगवतः पितुः ॥ महावीरमसौ दृष्ट्वा । संभ्रमेण समुत्थितः ॥ ४ ॥ स्नेहादालिंगनार्थाय । श्रीजिनस्य ततो जिनः ॥ बाहुं प्रसारयामास । तंप्रति प्राक्प्रयोगतः ॥ ५ ॥ सोऽवोचत्संति वेश्मानि । योग्यान्यत्राश्रमे तव ॥ ततः कुमार तिष्ठ त्व—मत्रार्थं जिननायकः ॥ ६ ॥ एकां तत्र स्थितो रात्रि—मन्यत्र गतवांस्ततः ॥ गच्छंतं च प्रभुं स्नेहा—दवोचत्तापसाधिपः ॥ ७ ॥ यदत्र रोचते तुभ्यं । तदागत्य विधीयतां ॥ वर्षावासो जनस्यास्या—नुग्रहार्थं त्वया मुने ॥ ८ ॥

मासानष्टौ विहृत्याथ । तं ग्राममागमज्जिनः ॥ उपागतासु वर्षासु । मठं चैकमुपाश्रितः ॥ ९ ॥
प्रारंभे प्रावृषस्तत्रा—प्राप्नुवंति नवं तृणं ॥ गोरूपाणि मठानां त—मचखादुः पुरातनं ॥ १० ॥
तापसा वारयंतिस्म । तानि ते दंभपाणयः ॥ भट्टारकः पुनस्तानि । निःसंगत्वादुपेक्षते ॥ ११ ॥
ततस्ते तापसाः स्वस्य । नायकस्य न्यवेदयन् ॥ यथैष भवतामिष्टो । गोभ्यो नावति ते मठं ॥
॥ १२ ॥ ततः कुलपतिर्गत्वा । बभाण श्रीजिनंप्रति ॥ कुमार भो न युक्तं ते । मठस्योपेक्षणं यतः
॥ १३ ॥ शकुंतोऽपि निजं नीडं । रक्षत्येव यथा बलं ॥ त्वया गावो निवार्यास्त—न्नाशयंत्यो मठं
स्वकं ॥ १४ ॥ इत्येवं शिक्षयामास । तापसः सोऽथ तं जिनं ॥ ततः स्वामी तदप्रीतिं । ज्ञात्वा
निर्गतवांस्ततः ॥ १५ ॥ प्रावृषोऽतिगते पक्षे । सोऽस्थिकग्राममाययौ ॥ अप्रीतिपरिहाराय । यतेतैवं
यथा जिनः ॥ १६ ॥ एवं विज्ञाय सर्वत्र । पराप्रीतिकमुच्चकैः ॥ विवेकिभिः परित्याज्य—मात्मनो
हितकांक्षिभिः ॥ १७ ॥ अथ शुभसंगकुसंगदृष्टांतः कथ्यते, स चायं—अस्तीह सर्वतो रम्यं । पुरं
जयपुराभिधं ॥ तत्र श्रेष्ठी सदाचारो । बभूव मतिसागरः ॥ १ ॥ शुभसंगकुसंगाख्यौ । तस्य पुत्रौ
बभूवतुः ॥ अन्यदा तौ हितैर्वाक्यैः । श्रेष्ठिना शिक्षितौ यथा ॥ २ ॥ भो भो वत्सौ सदा कार्यं ।

कार्यं सद्बुद्धिपूर्वकं ॥ सद्बुद्ध्या स्वार्थसंसिद्धिः । स्वार्थहानिः कुबुद्धितः ॥ ३ ॥ सद्बुद्धियोगतो यातः । सर्वकल्याणभाजनं ॥ सुविद्यो वैद्यसत्पुत्रः । पूर्वमेवं मया श्रुतं ॥ ४ ॥ आसीदत्र सुविख्यातः । पुरे शंखपुराभिधे ॥ शुभचंद्राभिधो वैद्य—श्चिकित्साशास्त्रकोविदः ॥ ५ ॥ सुभद्रानाम तत्पत्नी । सुविद्यो नामतः सुतः ॥ पाठ्यमानोऽपि पितासौ । न पपाठ कथंचन ॥ ६ ॥ परं चित्ते सुबुद्धित्वाद् । दृष्टमात्रमपि स्फुटं ॥ दृष्टश्चानेकधा तेन । पिता कुर्वन् चिकित्सनं ॥ ७ ॥ व्याधिमज्जंतुजातानां । नानाशास्त्रवरौषधैः ॥ अथान्यदा सुविद्यस्य । लघोरपि मृतः पिता ॥ ८ ॥ युग्मं ॥ कृतानि मृतकृत्यानि । सुविद्यस्तत्पदे स्थितः ॥ अथ तं मूर्खमालोक्य । सुभद्रा निजनंदनं ॥ ९ ॥ स्मृत्वा सर्वगुणान् भर्तू । रुरोद प्रतिवासरं ॥ सुविद्योऽपि विलोक्यैवं । रुदंतीं निजमातरं ॥ १० ॥ पृच्छतिस्म यथा मातः । किमेवं रुद्यते त्वया ॥ सा प्राह ते पिता वत्स । सर्वशास्त्रविशारदः ॥११॥ त्रिभिर्विशेषकं ॥ बभूव त्वं पुनर्मूर्ख—स्तेनाहं वत्स रोदिमि ॥ तेनोचे माकृथाः खेदं । संप्रत्यपि पठाम्यहं ॥ १२ ॥ सा प्राह वत्स यद्येवं । गच्छ त्वं श्रीपुरे पुरे ॥ तत्रास्ते सुंदरो नाम । सुप्रसिद्धो भिषग्वरः ॥ १३ ॥ राज्ञोऽमात्यः पितृव्यस्ते । चिकित्साशास्त्रकोविदः ॥ श्रुत्वेदं वचनं मातु—र्ग-

तोऽसौ श्रीपुरं क्रमात् ॥ १४ ॥ प्रणम्य सुंदरं तत्र । निषण्णो दर्शितासने ॥ सुंदरेण ततः पृष्टः ।
क्षेमवार्ता प्रजल्पितं ॥ १५ ॥ निवेदयाथ मे वत्स । किमागमनकारणं ॥ तेनापि कथितं सर्वं ।
ततः प्रोवाच सुंदरः ॥ १६ ॥ सुंदरं ते कृतं वत्स । यदायातो ममांतिकं ॥ ममांते वैद्यपुत्राणा—
मधीते शतपंचकं ॥ १७ ॥ तदधीष्व त्वमप्यत्र । निश्चितः स्वगृहे यथा ॥ ततस्तत्र पपाठैष । सुवि-
द्यः सुंदरांतिके ॥ १८ ॥ समं वैद्यसुतैर्नित्यं । ययौ च नृपमंदिरे ॥ श्रीविलासो नृपस्तत्र । भूरि-
श्रीकुलकेतनं ॥ १९ ॥ प्रत्यहं वैद्यपुत्राणां । दर्शयति निजं वपुः ॥ एवं च कुर्वतो राज्ञो । गतः
कालः कियानपि ॥ २० ॥ अन्यदा च समायातो । रात्रौ व्याधिर्नृपांतिकं ॥ स ब्रूते तव देहेऽहं ।
प्रविशामि कदाचन ॥ २१ ॥ यदि ते रोचते नृप । संप्रत्यपि विशाम्यहं ॥ वृद्धत्वे तु प्रविक्ष्यामि ।
त्वच्छरीरे न संशयः ॥ २२ ॥ नृपः प्राह समालोच्य । ददामि तव निर्णयं ॥ स प्राहैवं विधेहीति ।
ततो राज्ञी महीभुजा ॥ २३ ॥ पृष्टा सा च बभाणैवं । संप्रत्येव नरेश्वर ॥ विशत्वेष महाव्याधि-
र्विदधातु समीहितं ॥ २४ ॥ युग्मं ॥ यतस्ते वैद्यपथ्यादि—सामग्री विद्यतेऽधुना ॥ आदेशकारि-
णः सर्वे । वैद्यामात्यादयो जनाः ॥ २५ ॥ राज्ञीवाक्यं प्रपद्यैवं । व्याधिरुक्तो महीभुजा ॥ संप्रत्येव

मदीयांगे । प्रविश त्वं यथारुचि ॥ २६ ॥ तेनापि च तथा चक्रे । ततः प्रातर्विशेषतः ॥ दर्शितं वैद्यपुत्राणां । कीदृशं मे शरीरकं ॥ २७ ॥ तैरूचे कांचनच्छायं । सर्वरोगविवर्जितं ॥ ततस्तत्सर्वतो वीक्ष्य । सुवैद्येन प्रजल्पितं ॥ २८ ॥ राजन् सर्वरुजाघ्रातं । लक्ष्यते ते शरीरकं ॥ वैद्यपुत्रैस्ततः प्रोचे । किं त्वं जानासि रे शिशो ॥ २९ ॥ येनैवं पुरतो राज्ञः । पांडित्यं नाटयस्यहो ॥ एवमादि प्रजल्पंतः । सुविद्यं वैद्यपुत्रकाः ॥ ३० ॥ राज्ञा निष्कासिताः सर्वे । निर्भर्त्स्य कटुकोदितैः ॥ गत्वैकांते ततः पृष्टः । सुविद्यो हृष्टचेतसा ॥ ३१ ॥ साध्यः किं तेऽस्त्ययं व्याधिः । साध्य एवेति सोऽवदत ॥ परं लक्षद्वयं राजन् । दीनाराणां प्रयास्यति ॥ ३२ ॥ राज्ञोक्तं च गृहाण त्वं । द्रव्यजातं सुबह्वपि ॥ विधेहि मामकं देहं । सर्वथा रोगवर्जितं ॥ ३३ ॥ सुविद्योऽपि ततो द्रव्यं । गृहीत्वा ससहायकः ॥ गत्वा नानाप्रकारेषु । पर्वतेषु वनेषु च ॥ ३४ ॥ भ्रांत्वा लात्वा समायातः । कंदमूलवरौषधीः ॥ ततः पक्वं वरं तैलं । लक्षपाकाभिधानकं ॥ ३५ ॥ कृत्वा कचोलके राज्ञः । सुविद्येन तदर्पितं ॥ भक्तश्चासौ यथा राजन् । जिघ्रेदं वरतैलकं ॥ ३६ ॥ त्रिभिर्विशेषकं ॥ नृभुजापि तथा चक्रे । ततो व्याधिरजायत ॥ नाहं शक्तोऽस्य तैलस्य । सोढुं गंधं सुदुःसहं ॥ ३७ ॥

ततो राजेंद्र यास्यामि । मुक्त्वा तव शरीरकं ॥ राजाह यदि मे देहे । पश्चादपि प्रवेक्ष्यसि ॥ ३८ ॥ तन्मायासीरहो व्याधे । तिष्ठ तिष्ठ निराकुलः ॥ स प्राह सर्वथा नैव । त्वच्छरीरे विशाम्यहं ॥ ३९ ॥ युग्मं ॥ ततो मुत्कलितो राज्ञा । कृत्वा शपथशापितः ॥ गतो व्याधिर्नरेंद्रोऽपि । नीरोगोऽजनि तत्क्षणात ॥ ४० ॥ ततो राज्ञा सुतुष्टेन । सुवैद्यो वैद्यनायकः ॥ कृतो दत्तं बहु द्रव्यं । सद्वस्त्राभरणादि च ॥ ४१ ॥ महती च कृता वृत्ति—र्गतोऽसौ पूज्यतां जने ॥ आनीता च निजा माता । तत्र बंधुजनस्तथा ॥ ४२ ॥ श्लाघ्यमानो जनैः सर्वै—र्बुभुजे निजसंपदं ॥ सर्वेषामपि तत्रत्य—सुवैद्यानां धुरि स्थितः ॥ ४३ ॥ तदेवं यो सुवैद्योऽसौ । सर्वकल्याणभाजनं ॥ जातः सद्बुद्धियोगेन । सुबुद्धिस्तेन मन्यते ॥ ४४ ॥ कुबुद्ध्या तु निजा लक्ष्मी—र्नाशिता श्रेष्ठिसूनुना ॥ यथा तथा समाख्यामि । पुत्रकौ श्रूयतामिति ॥ ४५ ॥ अस्त्यत्र मेदिनीपीठे । पुरं कुंभपुराभिधं ॥ आसीत्तत्र गुणश्रेष्ठः । श्रेष्ठी भूरिधनालयः ॥ ४६ ॥ धनेश्वर इति ख्यातः । ख्यातकीर्तिः सुधीरधीः ॥ धनचंद्र सुतस्तस्य । सर्वदाज्ञाविधायकः ॥ ४७ ॥

अन्यदा जनकेनैष । प्रोक्तः शिक्षां प्रयत्नतः ॥ मदुपदेशमेकाग्रः । शृणु वत्स क्षणांतरं ॥ ४८ ॥

त्वया वत्स सदा कालं । भोक्तव्यमिष्टभोजनं ॥ सुप्तव्यं च सुखेनैव । यथा निद्रा समेति ते ॥ ॥ ४९ ॥ दत्वा कलांतरेण स्वं । याचितव्यं धनं न हि ॥ वृत्तिर्दंतमया कार्या । पार्श्वतो निजवेश्मनः ॥ ५० ॥ रुष्टेन यदि हंतव्या । निजा भार्या कथंचन ॥ तदा बध्ध्वा दृढैर्बंधै—र्हंतव्या पुत्र नान्यथा ॥ ५१ ॥ कारणीयास्त्वया वत्स । ग्रामे ग्रामे पुरे पुरे ॥ प्रासादाः सुंदरास्तुंगाः । सर्वलोकमनोहराः ॥ ५२ ॥ तथा त्वं खानयेर्वत्स । गंगावत्तान्महासरः ॥ एवं ते कुर्वतो नित्यं । सर्वं श्रेष्टं भविष्यति ॥ ५३ ॥ इत्थं कृतेऽपि हे पुत्र । यदि नश्यति ते धनं ॥ तदा गछेः पितृव्यस्य । पार्श्वे स्वर्णपुरे पुरे ॥ ५४ ॥ एवं शिक्षयतः पुत्रं । श्रेष्टिनो यांति वासराः ॥ अन्यदा च मृतः श्रेष्टी । पुत्रस्तस्य पदेऽजनि ॥ ५५ ॥ कालेनापेतशोकश्च । गृहचिंतां चकार सः ॥ ततः स्मृत्वा पितुर्वाक्यं । कारयामास सुंदरं ॥ ५६ ॥ आहारं घृतपूर्णाढ्यं । बुभुजे भूरिशः सदा ॥ जीर्यते च न तत्तस्य । बुभुक्षापि न जायते ॥ ५७ ॥ ततो रोगैः समाघ्रातः । क्षीयते प्रतिवासरं ॥ सुष्वाप च सुखस्पर्शे । चारुतूलीषु संततं ॥ ५८ ॥ न च निद्रामतिस्वापा—ल्लभतेऽसौ सुखप्रदां ॥ दत्ते कलांतरेणैष । स्वं द्रव्यं याचते न हि ॥ ५९ ॥ गछद्भिर्दिवसैरेवं । स्तोकीभूतं ततस्तकत ॥ वृत्तिर्दं·

तमया तेन । कारिता निजवेश्मनः ॥ ६० ॥ सर्वतोऽपि समुत्तुंगा —स्तत्र द्रव्यं गतं बहु ॥ रुष्टेन प्रहता भार्या । बध्ध्वा निबिडरज्जुभिः ॥ ६१ ॥ युग्मं ॥ बहुधा हन्यमाना सा । गता रुष्टा पितुर्गृहे ॥ कारिताश्च समुत्तुंगाः । प्रासादा नगरादिषु ॥ ६२ ॥ क्रियमाणेषु तेष्वेवं । जातो भूरिधनक्षयः ॥ खानितं तेन विस्तीर्णं । गंगाधस्तान्महासरः ॥ ६३ ॥ तच्च गंगांबुपूरेण । प्लाव्यते प्रतिवासरं ॥ एवं खानयता तेन । प्रतिवर्षं च तत्सरः ॥ ६४ ॥ क्वायं नीतं निजं द्रव्यं । जातो दरिद्रशेखरः ॥ ततोऽभिभूयते दुःखं । सदा तेन बुभुक्षया ॥ ६५ ॥

अथासौ चिंतयामास । विषण्णो दीनमानसः ॥ अहो मया पितुर्वाक्यं । सर्वं निःसंशयं कृतं ॥ ६६ ॥ नष्टा तथापि मे लक्ष्मीः । कुलक्रमसमागता ॥ पिता च मेऽभवद् दूरं । सद्बुद्धिः पुत्रवत्सलः ॥ ६७ ॥ हितश्च सर्वलोकानां । मामाश्रित्य विशेषतः॥ कृतं च तद्वचः सर्वं । धनं च निधनं गतं ॥ ६८ ॥ कारणेनात्र भो भाव्यं । यन्मुक्तोऽहं निजश्रिया ॥ एवं चिंतयतस्तस्य । पितुर्वाक्यं हृदि स्थितं ॥ ६९ ॥ यथाहं निर्धनीभूतः । पित्रा संप्रेषितः किल ॥ समीपे स्वपितृव्यस्य । पुरे स्वर्णपुराभिधे ॥ ७० ॥ तदेतदपि निःशंकः । पितुर्वाक्यं करोम्यहं ॥ गच्छामि तत्र पश्यामि ।

पितृव्यं बुद्धिबंधुरं ॥ ७१ ॥ विचिंत्यैवं गतस्तत्र । स्थितोऽसौ कानने बहिः ॥ दृष्टश्चापि पितृव्येन ।
नीतो गेहे सगौरवं ॥ ७२ ॥ स्नापितो भोजितस्तेन । पृष्टश्चैकांतमाश्रितः ॥ तेनापि कथितः सर्वः
। स्ववृत्तांतः सविस्ततरः ॥ ७३ ॥ कुर्वन्नपि पितुर्वाक्यं । ताताहं दुर्गतोऽभवं ॥ आकर्ण्येदं शिरो धु
न्वन् । बभाषे बुद्धिबंधुरः ॥ ७४ ॥ यथा मद्भ्रातृवाक्यार्थः । सम्यग्बुद्धो न हि त्वया ॥ तत्तदर्थं त-
वाख्यामि । शृणु श्रुत्वावधारय ॥ ७५ ॥ यदुक्तं तव तातेन । भोक्तव्यं मिष्टभोजनं ॥ तस्यार्थोऽयं
यथा वत्स । भुज्यते यद्बुभुक्षितैः ॥ ७६ ॥ सरसं विरसं वापि । तत्सर्वं मिष्टमेव हि ॥ सुप्यते च
सुखेनेह । यदा निद्रा समेत्यहो ॥ ७७ ॥ यत्र वा तत्र वा स्थाने । सुखमेव न संशयः ॥ भूरि-
कोमलतूलीषु । सततं शायिनां न हि ॥ ७८ ॥ यच्च दत्वापि नो याच्य—मस्यार्थोऽयं विबुध्यते ॥
कदाचिदपि नो देयं । द्रव्यं ग्रहणकं विना ॥ ८० ॥ वृत्तिर्दंतमयी कार्या । यदुवाच पिता तव ॥
तस्यार्थोऽयं वृत्तिः कार्या । सत्सुभटमया गृहे ॥ ८१ ॥ हंतव्या यज्जानी बध्ध्वा । तस्यार्थः कथ्यते
तव ॥ पुत्रबंधनबद्धा हि । हंतव्या निजका जनी ॥ ८२ ॥ प्रासादाः कारणीयाश्च । ग्रामे ग्रामे पु-
रे पुरे ॥ यदुक्तं तव तातेन । तस्यार्थोऽयं प्रकथ्यते ॥ ८३ ॥ सर्वत्र स्वजनाः कार्या । दानस-

न्मानपूजिताः ॥ तत्प्रासादा अपि स्वीया । मंतव्याः परमार्थतः ॥ ८४ ॥ यदुक्तं स्वानयेर्वत्स । गंगाधस्तान्महासरः ॥ तस्यार्थं न विजानेऽह—माख्यास्यामि विमृश्य ते ॥ ८५ ॥ तदहो तव सद्बुद्धि—र्दत्ता पित्रा सुखावहा ॥ त्वया तु बुद्धिहीनेन । सान्यथैवावधारिता ॥ ८६ ॥ तद्वत्स माकृथाः खेदं । सर्वं श्रेष्टं भविष्यति ॥ सुष्टु श्रेष्टं त्वयाकारि । यदायातो मदंतिके ॥ ८७ ॥ एवं संस्थाप्य तं श्रेष्टी । सद्वाक्यैर्बुद्धिबंधुरः ॥ तत्रैव धारयामास । मासमेकं सगौरवं ॥ ८८ ॥

ततो विज्ञप्य राजानं । याचित्वाश्वरथादिकं ॥ सामग्रीं महतीं कृत्वा । गतः कुंभपुरे पुरे ॥ ८९ ॥ धनचंद्रो धृतो द्वारि । गतो राजकुले स्वयं ॥ दत्तं राज्ञो धनं भूरि । विज्ञप्तश्च यथा नृपः ॥ ९० ॥ श्रेष्टिनो धनदत्तस्य । धनचंद्राभिधः सुतः ॥ उपार्ज्य भूरिवित्तौघ—मायातो द्वारि तिष्टति ॥ ९१ ॥ सुप्रसादं मनः कृत्वा । तदायातु नरेश्वरः ॥ सन्मुखं तस्य येनासौ । पुरमध्ये प्रवेश्यते ॥ ९२ ॥ तथा कृतं नरेंद्रेण । ततोऽत्यंतं महर्द्धितः ॥ गजारूढो ददद्दानं । पुरमध्ये प्रवेशितः ॥ ९३ ॥ वाद्यमानैर्वरैस्तूर्यै—र्गीयमानैः सुमंगलैः ॥ इत्थं भूत्या गतो गेहे । राज्ञा शेषजनैः सह ॥ ९४ ॥ पूजितो वरवस्त्राद्यै । राजा शेषजनस्तथा ॥ ततः सन्मान्य नत्वा च । नरनाथो

विसर्जितः ॥ ९५ ॥ यथार्हं शेषलोकश्च । गतो गेहे निजे निजे ॥ ततो गेहं समारब्धं । सुधया धवलीकृतं ॥ ९६ ॥ मंडितं चित्रितं चित्रै । राजवेश्मसमं कृतं ॥ गवाक्षजालिकायुक्तं । स्तंजमंडलमंडितं ॥ ९७ ॥ ततो येज्यो धनं लभ्यं । ते समाहूय सत्वरं ॥ एवमुक्ता यथा जो जो । श्रूयतां मामकं वचः ॥ ९८ ॥ येन यावद्धनं देयं । सोऽधुना सकलांतरं ॥ स्वयं ददातु मे नो चेद्दंडग्राह्यो भविष्यति ॥ ९९ ॥ एवं श्रुत्वा जनैः सर्वैः । स्वयमेव जयातुरैः ॥ यद्दातव्यं तदानीय । प्रदत्तं सकलांतरं ॥ १०० ॥ एवं जूयोऽपि स श्रीमान् । बुद्धिबंधुरबुद्धितः ॥ जातः कीर्तिं परां प्राप । लोकमध्ये च पूज्यतां ॥ १ ॥

अन्यदा धनचंडं तं । बभाषे बुद्धिबंधुरः ॥ किं जो तव गृहे पूर्वं । काचिद्गंगाभिधानिका ॥ २ ॥ बजूव महिषी गौर्वा । कुंजिका घोटिकापि वा ॥ वाटिका क्षेत्रिका वापि । गंत्रिका चापरापि वा ॥ ३ ॥ युग्मं ॥ स प्राह मेऽभवत्तात । गंगाख्या वरघोटिका ॥ श्रेष्ठी प्रोवाच सा कुत्र । बध्यमाना बभूवाथ ॥ स्थाने पूर्वमबध्यत ॥ ४ ॥ तेनोदीरितमेतस्यां । श्रेष्ठिन् कुट्यां सदैव सा ॥ श्रेष्ठी प्रोवाच जो सेयं । जनानंदविधायिनी ॥५॥ श्रेष्ठी प्रोवाच जो सेयं । पित्रा ते यदधः किल ॥ खानितस्त्वं सरो वत्स ।

न सा गंगांबुवाहिनी ॥ ५ ॥ तदत्र विद्यते द्रव्यं । निखातमिति तर्कये ॥ तद्गृह सर्वतः कुड्याः । खान्यते मेदिनीतलं ॥ ६ ॥ तथैव खानितं तूर्णं । निष्क्रांतं द्रविणं बहु ॥ तल्लाभे धनचंद्रोऽसौ । सानंदोऽजनि मानसे ॥ ७ ॥ तदेवं धनचंद्रस्य । सद्बुध्द्या बुद्धिबंधुरः ॥ सर्वत्र सुस्थतां कृत्वा । जगाम निजके पुरे ॥ ८ ॥ तदहो पुत्रकौ नृणां । सद्बुद्धिः कार्यसाधिका ॥ कुबुद्धिः किल लोकेऽस्मिन् । सर्वकार्यविनाशिनी ॥ ९ ॥ मत्वेदं सर्वदा वत्सौ । युवाभ्यां सर्वकर्मसु ॥ सम्यगालोच्य सद्बुध्द्या । वर्तितव्यं हि नान्यथा ॥ १० ॥ तथा पुत्रौ न कर्तव्या । निंदा कस्यापि देहिनः ॥ निंद्यमानो जनो येन । सुस्निग्धोऽपि विरुध्यते ॥ ११ ॥ मत्वेदं सर्वदा वत्सौ । गुणरत्नविभूषिताः ॥ निंदनीया जना नैव । यन्निंदा धर्मनाशिनी ॥ १२ ॥ तथा भो पुत्रकौ नित्य—मुपहासो न कस्यचित् ॥ कार्यः स्वपरयोर्येन । स प्रद्वेषविधायकः ॥ १३ ॥ न चावज्ञा विधातव्या । लोकपूज्ये जने सदा ॥ सा हि लोकद्वयेऽप्युच्चै—र्धर्मार्थप्रतिघातिनी ॥ १४ ॥ बहुलोकविरुद्धेन । लोकेन सह संगतिः ॥ न कार्या सर्वदा सा हि । सर्वानर्थनिबंधनं ॥ १५ ॥ विधातव्यं सदा नैव । देशाद्याचारलंघनं ॥ सुप्रशांतः सदा वेषो । धारणीयो न चोद्भटः ॥ १६ ॥ धर्मे भोगे निधौ भृत्ये

। देयं लाभोचितं धनं ॥ एवं तौ शिक्षयन् श्रेष्ठी । गमयामास वासरान् ॥ १७ ॥ अन्यदा स मृतः श्रेष्ठी । जातौ तौ गृहचिंतकौ ॥ शुभसंगकुसंगाख्यौ । प्रीतियुक्तौ सहोदरौ ॥ १८ ॥ तत्र च स शुभसंगः स्वभावेनैव सुशीलः शुद्धसमाचारः शिष्टजनसंसर्गप्रियः सलज्जो धर्मलिप्सुः पापभीरुर्दयादानदाक्षिण्यसौजन्यसदौदार्यगांभीर्यधैर्यादिसद्गुणकलापकलितः प्रकृत्यैव शुभप्रशांतविमलविशालाशयः, शशीव सुभगसुप्रशांतमूर्तिः, सुसाधुरिव सुप्रशांतवेषधारी, सर्वदापि धर्मलोकविरुद्धानि परिहरन्, सदा शिष्टजनाचरितं देशाचारं कुलाचारं धर्माचारं च समाचरन्, निजकुलक्रमायातन्यायवृत्त्या व्यवहरन् कालमतिवाहितवानिति. कुसंगः पुनः स्वभावेनैव दुःशीलो दुष्टसमाचारो दुष्टजनसंसर्गकारकश्च. एवं च शुभसंगगुणास्तस्य विपरीता भावनीयाः. एकेनैव जनकेन जातावप्येकमातृकुक्षिसमुत्पन्नावपि तौ विषमशीलौ जातौ. कर्मानुसार्येव प्राणिनां गुणकलापो न प्रायो जात्यादिकमपेक्षते, यतः—एकोदरसमुत्पन्ना । एकनक्षत्रजातकाः ॥ न भवंति समाशीला । यथा बदरीकंटकाः ॥ १ ॥

एवं च तयोः सरति संसारे धनं निधनमुपगतं, दारिद्र्यं च समागतं, भोजनमात्रमपि कष्टेन

संपद्यते, ततस्तौ तत्र परप्रेष्यादिकर्तुमशक्नुवंतावनिर्वहंतौ च देशांतरं संप्रस्थितौ, गच्छंतौ च संप्राप्तावटवीमध्ये, तत्रैकत्र ताभ्यां दृष्टा बहवः पुरुषाः, तदासन्नं गोधनं च प्रभूतं, ते च गामेकां व्यापाद्य मांसं पक्तुमारब्धाः, ततः कुसंगः प्राह भ्रातरत्रैव तावत्क्षणांतरं विश्राम्यावः, शुभसंगेनोक्तं वत्सैवं ते पुरुषा न संगता मम प्रतिभासंते, नावयोः संगतमत्रावस्थानं, तदग्रतो व्रजावः, स प्राह किमेते करिष्यंति? किमेतेषां पातकमुत्पत्य लगिष्यति? तदत्रैव स्थास्याव इत्यादि लपन् भूयो भूयोऽपि शुभसंगेन स कुसंगो वार्यमाणोऽपि तत्रैव स्थितः, शुभसंगः पुनरग्रतो गतः, तत्रैव च तेन सुधनसार्थवाहस्यावासो दृष्टः, प्रविष्टश्च तत्र यावत्क्षणांतरं सार्थवाहसमीपे तिष्ठति तावत्ते पूर्वव्यावर्णितचौराः कुटिकैरागत्य बद्धाः, तेनांतेन च चालिताः, सोऽपि कुसंगस्तन्मध्यगत एव बद्धो नीयमानो दृष्टश्च शुभसंगेन, कथितं च सार्थवाहस्य यदुतायं निर्दोष एव बद्धो नीयते, श्रुत्वेदं मोचितस्तेन, मिलितो भ्रातुः, शिक्षितश्च तेन यथा वत्स कुसंसर्गस्तावदेवंविधानेकानर्थकारणमिति मत्वा न कर्तव्यस्त्वयेत्यादि. ततो द्वावपि प्रस्थितावग्रतो गंतु यावत्तावदेकत्र दृष्टापानमंडली. संति च तत्र मद्यं पिबंतो मांसं च भक्षयंतो बहवो मत्तपालकाः, ततो भणितं कुसंगेन भ्रातरत्रापि तिष्ठावः क्षण-

मात्रं, ततश्च गमिष्यावः, शुभसंगेनोक्तं न युक्तमत्रावस्थानं, गम्यतामग्रत इति वार्यमाणोऽपि स्थितः कुसंगः. गतः शुभसंगः, ततोऽसौ कुसंगस्तैर्मत्तपालकैः समाहूय निमंत्रितो मद्यमांसाभ्यां, ततस्तेनापि लौल्यवशेन पीतं मद्यं, भक्षितं मांसं, मत्तश्च क्षणांतरेण नष्टचित्तोऽसमंजसं चेष्टितुमारब्धः, कुरुते गीतं, दत्ते गालीः, समुत्तिष्ठति युद्धाय, प्रलपत्यसंबद्धं.

अथैवं तेषां मत्तपालानामसंबद्धप्रलापिनां परस्परं विवदमानानां लग्नं युद्धं, प्रवृत्ताश्च ते कर्तुं दंडादंडि केशाकेशि मुष्टामुष्टि. ततोऽसौ कुसंगस्तैर्मत्तपालकैः कदर्थ्यमानो नष्टः प्रवृत्तश्च गंतुं शुभसंगाभिमुखं, लग्नाश्च ते तत्पृष्टतः, गृहीतश्च तैः पश्चादागत्य केशेषु. ततस्तं सुचिरं कदर्थयित्वा गतास्ते मत्तपालकाः, कुसंगोऽपि साध्वसवशेन कंपमानांगयष्टिर्गतः शुभसंगसमीपं, पृष्टश्च तेन यथा किमहो भयातुरः? तेनोक्तं यत्त्वदीयं वचनं न कृतं तस्य फलमिदमिति. ततस्तौ द्वावपि संहतावेव गतौ सिंहपुरनगरं, स्थितौ च तत्र धनपालश्रेष्ठिनः समीपे, जाता च तेन सार्धं प्रीतिः, अर्पितश्च तयोरापण एकः, दत्तं च व्यवहारयोग्यं द्रविणजातं, प्रवृत्तौ च व्यवहर्तुं, आसादयतश्च यथोत्तरं लाभं. ततोऽसौ कुसंगस्तत्रापि कुर्वते चौरपारदारिकद्यूतकारादिभिः खिड्गलोकैः सह संगं, ततः का-

पि निर्दोषोऽपि स चौर इति कृत्वा कदर्थ्यते नगरारक्षकैः, क्वापि पारदारिक इति कृत्वा विडंब्यते, क्वापि द्यूतकार इति कृत्वा निंद्यते जनैः, कुत्रापि मद्यपालक इति कृत्वा जुगुप्सास्पदमास्कंदति. एवमनेकधा तत्र स कुसंगः कुसंसर्गदोषेण लोकविरुद्धान्याचरन् विविधं विडंबितः. अन्यदासौ मिलितश्चौराणां, गृहीतो नगरारक्षकेण, बध्ध्वा विडंब्य च प्रवेशितो गुप्तौ. तत्र दुरंतदुःखपरंपरामधिसहन् मृत्वा दुर्गतिं गत इति. शुभसंगः पुनः कुरुते शिष्टैः सह संगं, विधत्ते च तदुपदेशान्, वंदते वंदनीयान्, नमति नमनीयान्, किं बहुना? सर्वत्र सदाचारपर एव वर्तते, ततो राज्ञा राजलोकेन शेषलोकेन च मान्यते पूज्यते च. ततोऽसाविहलोक एव शिष्टसंगवशेन धर्मलोकविरुद्धपरिहारेण व्यवहरन् समं कीर्त्या भूरिसंपदमासाद्य विपुलकल्याणभाजनं जातः, दानादिधर्माचरणेन च पुण्यमुपार्ज्य मृत्वा सुगतिं गतवानिति. मत्वेदं सर्वदा सद्भिः । कर्तव्या शिष्टसंगतिः ॥ परित्याज्यः कुसंसर्गः । सर्वानर्थप्रवर्तकः ॥ १ ॥ इति लोकविरुद्धाधिकारः समाप्तः ॥ उक्तो लोकविरुद्धपरिहाराधिकारः, अथ दानादिचतुर्विधधर्माधिकार उच्यते, अस्य चायमभिसंबंधः—अनंतराधिकारे लोकविरुद्धपरिहार उक्तः, स च धार्मिकैरेव शक्यते कर्तुं, धर्मः पुनर्दानादिभेदश्चतुर्धेति, अतोऽत्र

दानादिचतुष्टयं प्रतिपाद्यत इति. तत्र तावदार्यदेशादिदुर्लभत्वप्रदर्शनपूर्वकं धर्मोपदेशं ददत श्लोकत्रयमाह—

॥ मूलम् ॥—धर्माधारार्यदेशेषु । मानुष्यं प्राप्य दुर्लभं ॥ तत्रापि शासनं जैनं । सद्रत्नमिव निर्मलं ॥ १ ॥ वातेनाहतवीचीव—चंचलं वीक्ष्य जीवितं ॥ कल्याणमित्रसत्साधु—सामग्रीं समवाप्य च ॥ २ ॥ विपदाकुलमालोक्य । वित्तं चित्तं च चंचलं ॥ पुण्यपुष्टिकरे धर्मे । किं सांप्रतमुदासितुं ॥ ३ ॥ व्याख्या—धर्मस्य श्रुतचारित्रलक्षणस्याधारभूताश्च ते आर्यदेशाश्च पंचदशकर्मभूमिलक्षणास्तेषु मानुषत्वं मनुष्यत्वं प्राप्य लब्धवा दुर्लभं दुःप्रापं, तत्रापि मानुषत्वेऽपि सति शासनं प्रवचनं जैनमार्हतं दुर्लभमिति वर्तते सद्रत्नमिव चिंतारत्नमिव निर्मलं मलरहितं, ॥ १ ॥ तथा वाताहतवीचीवत्पवनप्रेरितजलकल्लोलवच्चंचलं चपलं वीक्ष्यावलोक्य जीवितमायुष्कं, कल्याणमित्रसामग्रीं सत्साधुसामग्रीं हितकारिविशिष्टपरिजनपरिपूर्णतामवाप्यासाद्य च ॥ २ ॥ तथा विपदाकुलमालोक्य व्यापदाकीर्णं समीक्ष्य वित्तं द्रव्यं, चित्तं च मनश्च चंचलं, पुण्यपुष्टिकरे श्रेयोवृद्धिविधायके धर्मे सदनुष्ठाने किमित्युपालंभे सांप्रतं युक्तमुदासितुमुदासीनैः स्थातुमिति श्लोकत्रयार्थः. ॥३॥

अथ धर्मस्यैव भेदमाह—

मूलम्—सोऽपि दानादिभेदेन । चतुर्भेदो भवांतकृत् ॥ तत्रापि प्रथमं दानं । तीर्थनाथैः प्ररूपितं ॥ १ ॥ व्याख्या—सोऽपि धर्मो दानादिभेदेन वितरणादिप्रकारेण चतुर्भेदश्चतुर्विधो भवांतकृद्भवोच्छेदकारकः, तत्रापि भेदचतुष्टयेऽपि प्रथममाद्यं दानं वितरणं तीर्थनाथैः प्ररूपितं कथितमिति श्लोकार्थः. ॥ १ ॥ अथ दानस्यैव फलं भेदांश्चाह—

॥ मूलम् ॥—यद्गृहे पेशला संप—च्च लोकेषु मान्यता ॥ सत्पुत्राः सत्कलत्राणि । यदन्यदपि सुंदरं ॥ १ ॥ तदेतद्दानतः सर्वं । तच्च दानं त्रिधा मतं ॥ विज्ञानत्रयभेदेन । धर्मोपग्रहतस्तथा ॥ २ ॥ व्याख्या—यद्गृहे मंदिरे पेशला सुंदरा संपल्लक्ष्मीः, यच्च लोकेषु जनमध्ये मान्यता गण्यमानता, सत्पुत्राः प्रधानतनयाः, सत्कलत्राणि प्रवरभार्याः, यदन्यदपि सुंदरं यदपरमपि श्रेष्ठं, तदेतत्तदिदं दानतो दानेन सर्वं समस्तं लभ्यत इति शेषः, उक्तं च—दाणेणं भूरिभोगा पवरसुहसहा रायलच्छी मयच्छी । दाणेणं दिव्वलच्छी भुवणजरसहा सुद्धबुद्धिसमिद्धी ॥ दाणेणं दिव्वसत्ति धवलियभुवणा देहदित्तिसुकित्ति । दाणेणं कियकज्जा विपुलमणहरा होइ विज्जाणवज्जा

॥ १ ॥ दाणेणं जंति नासं गुविलगुरुतरा घोरवेराणबंधा । दाणेणं हंति सव्वे पयडमिहवसे वत्तिणो जूयसंघा ॥ दाणेणं चंम्डदंडा विसमिव विसमा हुंति सत्तूवि मित्ता । दाणेणं रायपुत्ता विणयनयसिरा किंकरायंति निच्चं ॥ २ ॥ किं तेन जातु जातेन । जीवितेनापि जंतुना ॥ जनानां यो न दीनानां । प्रदानप्रवणः सदा ॥ ३ ॥ कुलीनेनापि किं तेन । तेन किं शीलशालिना ॥ विशाखविभवेनापि । तेन किं यो न दायकः ॥ ४ ॥ तच्च दानं तत्पुनर्वितरणं त्रिप्रकारं मतं सम्मतं तद्विदामिति गम्यते. त्रैविध्यमेव दर्शयति, विज्ञानान्नयभेदेन ज्ञानाजीतिप्रकारेण धर्मोपग्रहतो धर्मोपग्रहमाश्रित्य तथा तेन प्रकारेणेति श्लोकद्वयार्थः. ॥ २ ॥ अथ ज्ञानदानफलमाह—

॥ मूलम् ॥—किं किं दत्तं न तेनेह । किं किं नोपकृतं नृणां ॥ येनागणितखेदेन । ज्ञानसत्रं प्रवर्तितं ॥ १ ॥ व्याख्या—किं किं दत्तं न? अपितु सर्वमेव तेनानिर्दिष्टनाम्ना जंतुनेह लोके किं नोपकृतं? अपितु सर्वमेव नृणां नराणां, येन केनचिदगणितखेदेनापहस्तितप्रयासेन ज्ञानसत्रं ज्ञानमयसत्रागारः प्रवर्तितं विहितमिति. उक्तं च—स्यादंधस्य यथा चक्षु—र्दिग्मूढस्य च दिग्यथा ॥ मार्गो मार्गच्युतस्येव । ज्ञानमज्ञानिनस्तथा ॥ १ ॥ इदं पुण्यं पापं भवति तदुपादान-

ममुतो । विजानीते सर्वं निहितगुरुविज्ञानबलतः ॥ प्रवृत्तः पुण्याय प्रसभमपवृत्तस्तदितरा—न्नरः संसाराब्धेरपसरति वेगात्प्लव इव ॥ २ ॥ न ज्ञानदानाधिकमत्र किंचि—द्दानं भवेद्विश्वकृतोपकारं ॥ ततो विदध्याद्धि पुनः स्वशक्त्या । विज्ञानदाने सततप्रवृत्तिं ॥ ३ ॥ पठति पाठयते पठतामसौ । वसनभोजनपुस्तकवस्तुभिः ॥ प्रतिदिनं कुरुते य उपग्रहं । स इह सर्वविदेव भवेन्नरः ॥ ४ ॥ १ ॥

अथाभयप्रदानदातुर्माहात्म्यमुपदर्शयन तत्वतस्तदेवाह—

॥ मूलम् ॥—सर्वजीवाभयं भावा—द्दत्तं येन दयालुना ॥ यद्दातव्यं तकत् सर्वं । दत्तं तेन महात्मना ॥ १ ॥ व्याख्या—सर्वजीवाभयं समस्तसत्वाभीतिर्भावाच्छुद्धांतःकरणाद्दत्तं वितीर्णं येन केनचिद्दयालुना कृपालुना, यद्दातव्यं यत्किंचिद्वितरणीयं तकत्सर्वं तत्सकलमेव दत्तं वितीर्णं तेनाभयदानदात्रा महात्मना बृहदांतरसत्वयुक्तेनेति. उक्तं च—वित्तव्ययो भवति नात्र न चात्मपीडा । नादीयते किमु मुधा पृथुः पुण्यराशिः ॥ यस्मादनेकविभवव्ययवस्तुदाने—भ्वेतद्विशिष्टतरमेव जिनैः प्रणीतं ॥ १ ॥ यो यत्रातिकठोरकर्मवशगो जातौ समुत्पद्यते । दुःखार्तोऽपि स तत्र नंदति चिरं जीवस्वभावो ह्ययं ॥ इत्थं यः करुणापरेण मनसा स्वस्मिन्निवैतेष्वपि । क्षेमार्थं यतते स एव भुवने

जातो जगद्रक्षकः ॥ २ ॥ मार्यमाणस्य हेमाद्रिं । राज्यं वाथ प्रयच्छतु ॥ तदनिष्टं परित्यज्य । जी-
वो जीवितुमिच्छति ॥ ३ ॥ रसातलं यातु यदत्र पौरुषं । कुनीतिरेषा शरणो ह्यदोषवान् ॥ प्रहन्यते
यद्बलिनापि दुर्बलो । हहा महाकष्टमराजकं जगत् ॥ ४ ॥ तथा च—गोभूमिसुवन्नहिरन्न—माइ-
दाणाइं दिंति बहुयावि ॥ जे दिंति अभयदाणं । ते वीरला जीवलोगम्मि ॥ ५ ॥ पढिया वया
चउरो । जठा जन्ना य तह तवो तविज्ज ॥ जइ नत्थि जीवरक्खा । ता तं तुसकंमणं सव्वं ॥ ६ ॥
तं नाणं तं दाणं । सोय तवो तं च परमकोसल्लं ॥ सव्वपयत्तेण सया । जीवाणं रक्खणं जत्थ ॥७॥
ता देह जहा सत्तिं । अभयपयाणं जियाण सव्वाणं ॥ जइ महह महंतसुहे । सव्वं सिद्धालये गं-
तुं ॥ ८ ॥ किंच—दीहाउज्ज सुरूवो । सुहिज्ज सव्वंगसुंदरायारो ॥ सव्वत्थ होइ जीवो । अभयप-
याणाणुभावेणं ॥ ९ ॥ धर्मोपग्रहदानं स्वरूपतो भेदतश्च बिभणिषुः श्लोकद्वयमाह, तद्यथा—

॥ मूलम् ॥—धर्मोपग्रहदानं । यदुपष्टंभात्करोति शुभकर्म ॥ तेन च तारयति यति—र्भवा-
ब्धेर्दायकं स्वं च ॥ १ ॥ तच्च चतुर्धा वीरैः । शिवसुखफलसाधकं समाख्यातं ॥ दातृग्राहकशुद्धं ।
शुद्धं कालेन भावेन ॥ २ ॥ व्याख्या—धर्मोपग्रहदानं धर्मोपकारकं वितरणं यदुपष्टंभाद्यद्बलेन क-

रोति विधत्ते शुभकर्म शोभनानुष्ठानं, तेन च शुभकर्मणा तारयति यतिः साधुर्भवाब्धेर्दायकं दातारं स्वं चात्मानं च, तच्च तत्पुनश्चतुर्धा चतुःप्रकारं वीरैस्तीर्थंकरादिभिः शिवसुखफलसाधकं मोक्षसौख्यफलनिवर्तकं समाख्यातं कथितं दातृग्राहकशुद्धं शुद्धं कालेन भावेन, दातृशुद्धं ग्राहकशुद्धं कालशुद्धं भावशुद्धं चेत्यर्थः. उक्तं च—दत्तेन येन यतिधर्मशरीरयात्रा । निस्तारमेति तदुपग्रहदानमुक्तं ॥ तच्चान्नपानसदनौषधवस्त्रपात्र—शय्याशनादि कथितं विधिवद्विचित्रं ॥ १ ॥ दायकशुद्धं तदपि । ग्राहकशुद्धं च कालशुद्धं च ॥ भावविशुद्धं दानं । विमुक्तये स्याच्चतुःशुद्धं ॥ २ ॥ अथ भेदचतुष्टयमेव वृएवन्नाह—

॥ मूलम् ॥—यः प्रयच्छति पुण्यार्थं । यतिभ्यः शुद्धभावतः ॥ सर्वाशंसाविनिर्मुक्तं । दातृशुद्धं तदुच्यते ॥ १ ॥ व्याख्या—स्पष्ट एवायं श्लोकः, उक्तं च—रोमांचांचितविग्रहोऽमदमतिर्यः शुद्धवस्तुप्रदः । प्रत्याशाविकलः कलंकविकलो ध्यायन्निदं चेतसि ॥ धर्माधारशरीरधारणकृते पात्रप्रदत्तेन मे । पूर्वोपार्जितकर्मणामनुदिनं स्यान्निर्जरानिर्वृतिः ॥ १ ॥ इदं पात्रमिदं वित्त—मिदं चित्तं निरंतरं ॥ संपन्नं यस्य मे सोऽहं । कृतार्थोऽस्मीति दायकः ॥ २ ॥ अथ ग्राहकशुद्धमाह—

॥ मूलम् ॥—चराचरजगज्जंतु—जातसंत्रासकारिणे ॥ ज्ञानदर्शनचारित्र—धारिणे ब्रह्मचारिणे ॥ १ ॥ एवंभूताय शांताय । गुप्ताय च तपस्विने ॥ दानं ग्राहकसंशुद्धं । जगाद जगतां गुरुः ॥ २ ॥ व्याख्या—चराचरा जंगमस्थावरास्ते च जगज्जंतवश्च विश्वजीवाश्च, तेषां जातानि संघातास्तेषां संत्राणं रक्षणं तत्कारिणे तत्करणशीलाय चराचरजगज्जंतुजातसंत्राणकारिणे, ज्ञानदर्शनचारित्रधारिणे ब्रह्मचारिणे चेति सुगमं. ॥ १ ॥ एवंभूतायैवंप्रकाराय शांताय कषायोपशमात्, गुप्ताय त्रिगुप्तियुक्ताय, चः समुच्चये, तपस्विने द्वादशविधतपोनिरताय, दानमन्नपानादिवितरणं, यद्दीयत इति शेषः, तद् ग्राहकशुद्धं, ग्राहकः साधुस्तमाश्रित्य शुद्धं निष्कलंकं. जगाद कथयामास जगतां भुवनानां गुरुर्धर्मप्रतिपादकः सर्वज्ञ इत्यर्थः, इति श्लोकद्वयार्थः ॥ २ ॥ अथ कालशुद्धमाह—

॥ मूलम् ॥—यत्काले दीयते दानं । तस्यार्थोऽपि न विद्यते ॥ अकाले तु वितीर्णस्य । ग्राहकोऽपि न संभवी ॥ १ ॥ व्याख्या—व्यक्तार्थ एवायं श्लोकः, कालशुद्धमाश्रित्यान्यैरप्युक्तं—यस्मिन्नेव हि काले । यतः शरीरोपकारकं भवति ॥ तस्मिन्नेव हि देयं । प्रतिदिवसं दानमनवद्यं ॥ ॥ १ ॥ तथा—काल दिन्नस्स पहे—णयस्स अप्पो न तीरए काउं ॥ तस्सेवाथक्कपणा—मियस्स

गिलंतया नहि ॥ १ ॥ १ ॥ अथ भावशुद्धमाह—

॥ मूलम् ॥—आत्मनः स्वधनादेश्च । साफल्यमिति चिंतयन् ॥ नो दत्ते शुद्धभावेन । भावशुद्धं तदीरितं ॥ १ ॥ व्याख्या—आत्मनः स्वस्य धनादेश्च अत्यादेश्चादिशब्दाज्जन्मजीवितपुत्रकलत्रादिपरिग्रहः. साफल्यं सफलतामित्यमुना प्रकारेण चिंतयन् तर्कयन् यः कश्चिद्दत्ते प्रयच्छति शुद्धभावेन निर्मलांतःकरणेन भावशुद्धमाशयविशुद्धं तद्दानमीरितं कथितमिति. उक्तं च—तदिदमुचितपात्रं पुण्यसंपत्तिसाध्यं । धनमपि रमणीयं तद्यदेतस्य योग्यं ॥ अहह गृहनिवासः सार्थको मेऽद्य जात । इति हृदयविशुद्धिर्यत्र तद्भावशुद्धं ॥ १ ॥ अथ दातारं प्रशंसयन्नाह—

॥ मूलम् ॥—आसन्नसिद्धिकः कोऽपि । दानधर्मे सदा रतः ॥ शेषस्य संकुचत्येव । मनो दानभयाद् द्रुतं ॥ १ ॥ शूराणां पंडितानां च । वाग्मिनां काव्यकारिणां ॥ सर्वेषामपि चैतेषां । दानदातातिदुर्लभः ॥ २ ॥ व्याख्या—श्लोकद्वयं सुगमं. ॥ १ ॥ २ ॥ अथ दानफलं दर्शयन् दृष्टांतानाह—

॥ मूलम् ॥—श्रेयांसश्चंदना धन्या । कृतपुण्यकवाणिजः ॥ इत्येवमादयो दृष्टा । दृष्टांता दा-

॥ मूलम् ॥—चराचरजगज्जंतु—जातसंत्रासकारिणे ॥ ज्ञानदर्शनचारित्र—धारिणे ब्रह्मचारिणे ॥ १ ॥ एवंभूताय शांताय । गुप्ताय च तपस्विने ॥ दानं ग्राहकसंशुद्धं । जगाद जगतां गुरुः ॥ २ ॥ व्याख्या—चराचरा जंगमस्थावरास्ते च जगज्जंतवश्च विश्वजीवाश्च, तेषां जातानि संघातास्तेषां संत्राणं रक्षणं तत्कारिणे तत्करणशीलाय चराचरजगज्जंतुजातसंत्राणकारिणे; ज्ञानदर्शनचारित्रधारिणे ब्रह्मचारिणे चेति सुगमं. ॥ १ ॥ एवंभूतायैवंप्रकाराय शांताय कषायोपशमात्, गुप्ताय त्रिगुप्तियुक्ताय, चः समुच्चये, तपस्विने द्वादशविधतपोनिरताय, दानमन्नपानादिवितरणं, यद्दीयत इति शेषः, तद् ग्राहकशुद्धं, ग्राहकः साधुस्तमाश्रित्य शुद्धं निष्कलंकं. जगाद कथयामास जगतां भुवनानां गुरुर्धर्मप्रतिपादकः सर्वज्ञ इत्यर्थः, इति श्लोकद्वयार्थः ॥ २ ॥ अथ कालशुद्धमाह—

॥ मूलम् ॥—यत्काले दीयते दानं । तस्यार्थोऽपि न विद्यते ॥ अकाले तु वितीर्णस्य । ग्राहकोऽपि न संभवी ॥ १ ॥ व्याख्या—व्यक्तार्थ एवायं श्लोकः, कालशुद्धमाश्रित्यान्यैरप्युक्तं—यस्मिन्नेव हि काले । यतः शरीरोपकारकं भवति ॥ तस्मिन्नेव हि देयं । प्रतिदिवसं दानमनवद्यं ॥ ॥ १ ॥ तथा—काल दिन्नस्स पहे—णयस्स अप्पो न तीरए काउं ॥ तस्सेवाथक्कपणा—मियस्स

गिह्नतया नह्नि ॥ १ ॥ १ ॥ अथ भावशुद्धमाह—

॥ मूलम् ॥—आत्मनः स्वधनादेश्च । साफल्यमिति चिंतयन् ॥ नो दत्ते शुद्धभावेन । भावशुद्धं तदीरितं ॥ १ ॥ व्याख्या—आत्मनः स्वस्य धनादेश्च अन्यादेश्चादिशब्दाज्जन्मजीवितपुत्रः कलत्रादिपरिग्रहः. साफल्यं सफलतामित्यमुना प्रकारेण चिंतयन् तर्कयन् यः कश्चिद्दत्ते प्रयच्छति शुद्धभावेन निर्मलांतःकरणेन भावशुद्धमाशयविशुद्धं तद्दानमीरितं कथितमिति. उक्तं च—तदिदमुचितपात्रं पुण्यसंपत्तिसाध्यं । धनमपि रमणीयं तद्यदेतस्य योग्यं ॥ अहह गृहनिवासः सार्थको मेऽद्य जात । इति हृदयविशुद्धिर्यत्र तद्भावशुद्धं ॥ १ ॥ अथ दातारं प्रशंसयन्नाह—

॥ मूलम् ॥—आसन्नसिद्धिकः कोऽपि । दानधर्मे सदा रतः ॥ शेषस्य संकुचत्येव । मनो दानभयाद् द्रुतं ॥ १ ॥ शूराणां पंडितानां च । वाग्मिनां काव्यकारिणां ॥ सर्वेषामपि चैतेषां । दानदातातिदुर्लभः ॥ २ ॥ व्याख्या—श्लोकद्वयं सुगमं. ॥ १ ॥ २ ॥ अथ दानफलं दर्शयन् दृष्टांतानाह—

॥ मूलम् ॥—श्रेयांसश्चंदना धन्या । कृतपुण्यकवाणिजः ॥ इत्येवमादयो दृष्टा । दृष्टांता दा-

नगोचराः ॥ १ ॥ व्याख्या—सुगमोऽयं श्लोकः ॥ १ ॥ अथ प्रकरणं निगमयन् प्रायो गृहिणो दानमेवैकं संसारोत्तारकारीति दर्शयन्नाह—

॥ मूलम् ॥—अमुं भवांभोधिमगाधमुल्बणं । गृही कथंकारमपारमुत्तरेत् ॥ निराश्रवे पोत इवाविनश्वरे । स दानधर्मे न कृतादरो यदि ॥ १ ॥ व्याख्या—अमुमिमं भवांभोधिं संसारार्णवमगाधमलब्धमध्यमुल्बणमुत्कटं गृही गृहस्थः कथं केन प्रकारेणापारमविद्यमानपरतीरमुत्तरेत्परतीरं गच्छेन्निराश्रवे निश्छिद्रे पोत इव बोहित्थ इवाविनश्वरे विनाशरहिते दानधर्मे न कृतादरो यदि दाने विहितोद्यमो न स्यादित्येकविंशतिश्लोकसंक्षेपार्थः. ॥ १ ॥ श्रेयांसचंदनार्यकृतपुण्यकादिकथानकान्यमूनि—

बभूव भारते क्षेत्रे । जंबूद्वीपसमाश्रिते ॥ कुरोर्जनपदस्यांतः । पुरं गजपुराभिधं ॥ १ ॥ कुंदेंदुशंखशुभ्रैश्च । यत्प्रासादैः समंततः ॥ शरदंभोदसंघातै—र्व्योमेव प्रविराजते ॥ २ ॥ यत्र प्रधानरत्नौघ—खचितोच्चगृहावलिः ॥ स्वर्णस्तंभयुता भासा । हसतीवामरीं पुरीं ॥ ३ ॥ यत्रेंद्रनीलवैदूर्य—पद्मरागमया रुचः ॥ अकालेऽपींद्रचापस्य । श्रियं तन्वंति जालकाः ॥ ४ ॥ रूपवंतः सुभो·

गाढ्या । आदेयाः सुभगास्तथा ॥ यत्र धर्मफलं शुद्धं । संचयंति स्फुटं नराः ॥ ५ ॥ क्रीडावाप्यः शुभा यत्र । सदारामा गृहे गृहे ॥ लीलाविलासयोग्यानि । शुभस्थानानि भोगिनां ॥ ६ ॥ तत्रे-क्ष्वाकुकुलोत्पन्नो । राजा सोमप्रभोऽभवत ॥ बाहुबलिनरेंद्रस्य । पुत्रो भूरिगुणालयः ॥ ७ ॥ नमन्न-नेकभूपाल—मौलिमालार्चितक्रमः ॥ समस्तभुवनव्यापि—कीर्तिसरिन्महोदधिः ॥ ८ ॥ यः के-लिमंदिरं नीतेः । पुण्यानामनघाश्रयः ॥ समुद्रो गुणरत्नानां । कलानां विपुलालयः ॥ ९ ॥ यो दुष्टनिग्रहव्यग्रः । शिष्टानुग्रहणाग्रही ॥ समग्रसुभगग्राम—ग्रामणीरग्रिमः सतां ॥ १० ॥ आसीत्तस्य नरेंद्रस्य । जनतानंदकारकः ॥ श्रेयसां सततस्थानं । श्रेयांस इति विश्रुतः ॥ ११ ॥ चंद्रमेव कला-धारः । सद्वृत्तो यशसोज्ज्वलः ॥ परं दोषाकरो नैव । न कलंककलंकितः ॥ १२ ॥ तथा तत्रैव वास्तव्यो । पुरश्रेष्ठी महर्द्धिकः ॥ बुद्ध्या निर्जितवागीशो—ऽभवत सुबुद्धिनामकः ॥ १३ ॥ एवं सो-मप्रभो राजा । बुभुजे प्रीतमानसः ॥ सार्धं स्वपुत्रमित्राद्यैः । प्राज्यसाम्राज्यसंपदं ॥ १४ ॥

अथैकदा सुधाशुभ्रे । प्रासादे सुमनोहरे ॥ रत्नराजिनि पर्यंके । कुमारः सुप्तजागरः ॥ १५ ॥ श्रेयांसाख्यः सतां मुख्यः । सुकृती सुंदराकृतिः ॥ रात्रौ सूचितकल्याण—मपश्यत्स्वप्नमुत्तमं ॥ १६ ॥

युग्मं ॥ यथा किल्लातिविछायो । ध्यामित इव वह्निना ॥ दवदग्ध इव स्थाणु—र्निःश्रीकः कनका-
चलः ॥ १७ ॥ मयकामृतकुंजेन । सिक्तः स तु विशेषतः ॥ सर्वतः शोजमानोऽसौ । दधौ चारुन-
रश्रियं ॥ १८ ॥ युग्मं ॥ तथा सुबुद्धिना स्वप्ने । नगरश्रेष्ठिना किल ॥ दृष्टं स्वस्थानतो भ्रष्टं ।
तिग्मांशो रश्मिमंडलं ॥ १९ ॥ समुध्धृत्य कुमारेण । स्वस्थाने तन्निवेशितं ॥ ततो नास्वद्रुचां च-
क्रं । दधानं शुशुभेऽधिकं ॥ २० ॥ सोमप्रनाभिधानेन । राज्ञापि ददृशे तथा ॥ शत्रुसैन्यसमार-
ब्धः । स्वप्ने कोऽपि महान्नरः ॥ २१ ॥ कुमारस्तस्य साहाय्यं । ददौ तेनापि विद्विषः ॥ हतविग्रह-
तान् कृत्वा । नाशितास्ते दिशोदिशि ॥ २२ ॥ ततः प्रातः समुत्थाय । स्वप्नदर्शनविस्मितौ ॥ श्रेयां-
सश्च सुबुद्धिश्च । जग्मतू राजमंदिरे ॥ २३ ॥ कृत्वा राज्ञः प्रणामादि—मुपविष्टौ तदंतिके ॥ तदा
चोक्तं कुमारेण । विस्मयोत्फुल्लचक्षुषा ॥ २४ ॥ यथा तात मया रात्रौ । दृष्टः स्वप्ने महाचलः ॥
सर्वतोऽपि गतश्रीको । विछायश्च विरूपकः ॥ २५ ॥ मयाभिषेचि सौवर्ण—कुंभैरमृतपूरितैः ॥ त-
तोऽतीव रराजासौ । विस्फुरद्रश्मिमंडलः ॥ २६ ॥ एवं स्वप्नो निजो राज्ञा । श्रेष्ठिना च निवेदितः
॥ ततश्च स्वस्वबुध्या ते । विचारयितुमुद्यताः ॥ २७ ॥ परं सम्यग्न जानंति । स्वप्नानां कीदृशं फलं

॥ ततो बभाण राजेंद्रो । भो भो आकर्ण्यतामिति ॥ २८ ॥ स्वप्नानामहमेतेषां । जाने सामान्य· तः फलं ॥ कुमारस्यैव कल्याणं । किमप्येतदुपस्थितं ॥ २९ ॥ एवं स्वप्नविचारं ते । कृत्वा विस्मि· तमानसाः ॥ तत उत्थाय सर्वे ते । ययुर्गेहे निजे निजे ॥ ३० ॥ अथ युगादिनृपालो । युगादिय· तिपुंगवः ॥ युगादिभिक्षुकश्चैव । युगादिश्रीजिनेश्वरः ॥ ३१ ॥ विंशतिपूर्वलक्षाणि । सुराधीशनत· क्रमः ॥ योऽद्भुतरूपसंपन्न—स्तस्थौ कौमारवासके ॥ ३२ ॥ सुरेंद्रकृतसाम्राज्या—भिषेको नरपुंग· वः ॥ आकरः सर्वनीतीनां । सर्वविद्यासमाश्रयः ॥ ३३ ॥ यश्च प्रदर्शयामास । प्रजानां हितवांछया ॥ कुंभकारादिशिल्पानि । लोकव्यवहारांस्तथा ॥ ३४ ॥ त्रिषष्टिपूर्वलक्षाणि । दर्शयन् सकलाः क· लाः ॥ प्रजानां यः प्रजापालः । प्राज्यं राज्यं प्रभुक्तवान् ॥ ३५ ॥ अथ विभज्य पुत्रेभ्यः । पृथ्वीः· ग्रामादिसंकुलं ॥ दत्वा संवत्सरं याव—न्महादानं यदृच्छया ॥ ३६ ॥ त्यक्त्वा प्राज्यं महाराज्यं । सं· पूर्णं सर्वसंपदा ॥ प्रतिपद्य च सद्दीक्षां । सर्वसत्वसुखावहां ॥ ३७ ॥ तथा कच्छमहाकच्छ—प्रमुखप्रौ· ढभूभुजां ॥ सार्धं चतुःसहस्र्या च । विनीतायाः पुरस्ततः ॥ ३८ ॥ निर्गत्य निर्जिताशेष—दुर्वारां· तरशात्रवः ॥ कच्छादिभिः परित्यक्तो । मौनस्थत्वादिति क्रमात् ॥ ३९ ॥ दिने दिने परिभ्राम्यन् ।

भिक्षाहेतोर्गृहे गृहे ॥ भिक्षां कदापि नो लेभे । वस्त्राद्यैश्च न्यमंत्रयन ॥ ४० ॥ पंचभिः कुलकं ॥ यतो भिक्षुकलोकस्या—भावादेव न जायते ॥ तदा भिक्षाप्रचारोऽपि । तेन भिक्षा न लभ्यते ॥ ॥ ४१ ॥ एवं च श्रीजिनाधीशो । नाभेयो भुवनप्रभुः ॥ नीरागो निरहंकारो । निःसंगो निःपरिग्रहः ॥ ४२ ॥ विजहार विनाहारं । मौनवृत्त्या निरुत्सुकः ॥ पूर्णसंवत्सरं याव—त्पुरग्रामाकुलां महीं ॥ ४३ ॥ युग्मं ॥ एवं विहरमाणोऽसौ । हस्तिनागपुरं गतः ॥ भिक्षार्थं च पुरे तत्र । प्रविवेश महाप्रभुः ॥ ४४ ॥ विनाहारेण विच्छायो । दवदग्ध इवाचलः ॥ शशीव घनसंछन्नः । सन्मणिवदसंस्कृतः ॥ ४५ ॥ अतीवजीर्णविच्छायो । महास्तूप इवोच्चकैः ॥ विवर्णीकृतसंस्कारः । सत्प्रासाद इवाथवा ॥ ४६ ॥ क्षेत्रं सद्गुणशस्यानां । सन्मित्रं सर्वदेहिनां ॥ धर्मसत्रं तु भव्यानां । पात्रं ततःतपःश्रियां ॥ ४७ ॥ पंचधाचारसंपन्नः । पंचाश्रवविवर्जकः ॥ महाव्रतानि पंचापि । दुर्धराणि दधद्भृशं ॥ ४८ ॥ पुण्यराशिरिवाध्यक्ष—श्चिंतामणिरिवातुलः ॥ श्रीमदादिजिनाधीशः । प्रविशन्निजमंदिरे ॥ ४९ ॥ दृष्टः स्वस्थोपविष्टेन । निजगेहगवाक्षके ॥ श्रीश्रेयांसकुमारेण । दिगालोकं प्रकुर्वता ॥ ५० ॥ कुलकं ॥ दृष्ट्वा भगवन्नेपथ्यं । कुमारोऽथ व्यचिंतयत् ॥ दृष्टपूर्वमिदं मन्ये । कथं कु-

त्र कदेति वा ॥ ५१ ॥ तस्येत्थं कुर्वतस्त्वीहा—पोहमार्गगवेषणं ॥ श्रेयांसस्य समुत्पन्नं । जातिस्म-
रणमुत्तमं ॥ ५२ ॥ तेनालोकि जिनेंद्रस्य । स्वस्यापि च भवाष्टकं ॥ अतीतकालसंबंधि । ततश्चैव-
मचिंतयत् ॥ ५३ ॥ प्रतिपितामहस्याद्य—रूपमालोकि यादृशं ॥ तादृशं च मया दृष्ट—मितस्तृ-
तीयके भवे ॥ ५४ ॥ पुर्यां च पुंडरिकिण्यां । जिनलिंगमुपेयुषः ॥ बहुधा वैरसेनस्य । श्रीमत्तीर्थ-
कृतस्तदा ॥ ५५ ॥ युग्मं ॥ तदेष भगवानत्र । भिक्षाहेतोर्गृहे मम ॥ समेत्यज्ञजने नित्य—मल-
ब्धाहारदुर्बलः ॥ ५६ ॥ स यावच्चिंतयत्येवं । तावदेको नरः किल ॥ आगतः कुंभमादाय । वरे-
क्षुरससंभृतं ॥ ५७ ॥ अत्रांतरे कुमाराय । रत्नशोभिगृहांगणे ॥ श्रीमदादिजिनाधीशः । कल्पवृक्ष-
मिवागतः ॥ ५८ ॥ श्रेयांसोऽपि समायात—स्तत्रानंदितमानसः ॥ तमीक्षुरससंपूर्ण—कुंभमादाय
सत्वरं ॥ ५९ ॥ न्यमंत्रयच्च सानंदं । रसकुंभेन तेन सः ॥ भगवन् कल्पते तेऽयं । ततो भगव-
तापि हि ॥ ६० ॥ सर्वलक्षणसंपूर्णो । निजपाणिः प्रसारितः ॥ तेनाक्षेपि रसस्तत्र । न पपात म-
हीतले ॥ ६१ ॥ युग्मं ॥

यतो यत्क्षिप्यते वस्तु । तीर्थनाथकरांजलौ ॥ अकैंडोस्तच्छिखा याति । न पतत्येव भूतले ॥

॥ ६२ ॥ ततोऽसौ तीर्थनाथेन । पारितो मधुरो रसः ॥ अरक्ताद्विष्टचित्तेन । सर्वत्रैलोक्यबंधुना ॥
॥ ६३ ॥ अत्रांतरे कुमारस्य । प्रासादप्रांगणेऽपतन् ॥ अर्धत्रयोदशस्वर्ण—कोट्यो देवेरितास्तदा ॥
॥ ६४ ॥ उल्ललास महानादः । सुरदुंदुभिसंभवः ॥ चेलोत्क्षेपश्च सानंदै—स्तदाकारि नरामरैः ॥
॥ ६५ ॥ सद्गंधोदकवृष्टिश्च । मुक्ता पांशुप्रशांतिकृत् ॥ दशार्धवर्णसद्गंध—पुष्पवृष्टिस्तथैव च ॥६६॥
धन्योऽयं पुण्यवानेष । कृतार्थोऽयं विवेकवान् ॥ जन्म सुलब्धमेतस्य । श्लाघामित्याप लोकतः ॥
॥ ६७ ॥ अहो दानमहो दान—मेवं दत्तं फलावहं ॥ अहो धन्यः सुपुण्योऽय—मित्येवं मुखरा-
ननः ॥ ६८ ॥ आगत्य मिलितो भूयान् । विस्मयोत्फुल्ललोचनः ॥ जनो नगरवास्तव्यः । श्रेयांस-
स्य गृहांगणे ॥ ६९ ॥ युग्मं ॥ तथा कच्छमहाकच्छ—प्रमुखास्ते च तापसाः ॥ जिनपारणकं श्रुत्वा
। श्रेयांसगृहमागताः ॥ ७० ॥ सोमप्रभमहीपाद्या । अन्ये च बहवो नृपाः ॥ श्रुत्वागता गृहे तत्र ।
सानंदाश्च सकौतुकाः ॥ ७१ ॥ पृष्टवंतश्च तत्सर्वे । कुमारमतिविस्मिताः ॥ यथैवं दीयते भिक्षा ।
कथं ज्ञातमिदं त्वया ॥ ७२ ॥ सोऽप्याह श्रूयतां भो भो । मद्वचः सावधानकैः ॥ यथैवंविधपात्रे-
भ्यो । भक्त्या भिक्षैव दीयते ॥ ७३ ॥ न हिरण्यसुवर्णानि । नो वस्त्राभरणानि च ॥ न चाश्वग-

जकन्यादि । कदाचिदपि दीयते ॥ ७४ ॥ दत्तया भिक्षयैवात्र । जायते पुण्यमुत्तमं ॥ सुसाधुभ्यः प्रदत्तेन । स्वर्णादिना न किंचन ॥ ७५ ॥ तथोक्तं यच्च युष्माभि—र्ज्ञातमेतत्त्वया कथं ॥ तदपि श्रूयतां सर्वं । कथ्यमानं मयाधुना ॥ ७६ ॥ मयालोक्य जगन्नाथं । जिनं भिक्षार्थमुद्यतं ॥ जातिस्मरणमुत्पन्नं । ज्ञातं पूर्वभवाष्टकं ॥ ७७ ॥ तद्यथा—अहं स्वयंप्रभा देवी । भगवान् ललितांगकः ॥ ईशानसंज्ञके कल्पे । देवोऽभवन्महर्द्धिकः ॥ ७८ ॥ च्युत्वा महाविदेहे नौ । श्रीमतीवैरजंघकौ ॥ आस्व सर्वर्द्धिसंपन्नौ । तत्परं मिथुनौ ततः ॥ ७९ ॥ देवौ सौधर्मकल्पे तु । केशवो वैद्यपुत्रकः ॥ जिनो जज्ञेऽभयसेनो—ऽहं जातः श्रेष्ठिनंदनः ॥ ८० ॥ ततश्चाच्युतकल्पे नौ । देवौ जातौ महर्द्धिकौ ॥ ततः पुंडरिकिण्यां च । सार्थिचक्रवर्तिनौ ॥ ८१ ॥ चक्रिणा वैरनाभेन । तदा प्रव्रजता सता ॥ प्रव्रजितः सहैवाहं । वैरसेनजिनांतिके ॥ ८२ ॥ श्रुतं च मयका तत्र । यथासौ वैरनाभकः ॥ प्रथमो भारते क्षेत्रे । तीर्थनाथो भविष्यति ॥ ८३ ॥ ततः कृत्वा चिरं कालं । तपःसंयममुत्तमं ॥ मृत्वा देवौ विमाने नौ । जातौ सर्वार्थनामनि ॥ ८४ ॥ तदेष भगवांस्तत्र । ततश्च्युत्वा जिनोऽजनि ॥ अहं श्रेयांसनामात्र । भवतामपि विश्रुतः ॥ ८५ ॥ इत्यादि सर्ववृत्तांतं । स्वभवाष्ट-

कगोचरं ॥ कुमारः कथयामास । यथा दृष्टं यथा श्रुतं ॥ ८६ ॥ आकर्ण्येदं जनः सर्वो । विस्मया-
कुलमानसः ॥ कुमारं श्लाघयामास । हृष्टचित्तो मुहुर्मुहुः ॥ ८७ ॥ धन्योऽयं पुण्यवानेष । कृतार्थो-
ऽयं किमुच्यते ॥ अस्य श्लाघ्यतमं मन्ये । गोत्रं जन्म च जीवितं ॥ ८८ ॥ यतो येनाङ्गलोकस्य
। मध्ये भिक्षां प्रयच्छता ॥ श्रीमदादिजिनेंद्रस्य । पंडितायितमुच्चकैः ॥ ८९ ॥ अथाह पुनरप्येवं ।
कुमारस्तं जनंप्रति ॥ पूर्वोपलब्धस्वप्नानां । श्रूयतामधुना फलं ॥ ९० ॥ यन्मयामृतकुंभेन । स्वप्ने
सिक्तः सुराचलः ॥ विच्छायः संस्ततोऽत्यर्थं । दधौ शोभां समंततः ॥ ९१ ॥ तस्यार्थोऽयं विनाहारं
। विच्छायः सन् जिनेश्वरः ॥ मयेक्षुरसकुंभेना—भिषिक्तः शुशुभेऽधिकं ॥ ९२ ॥ तातेनापि यदा-
लोकि । स्वप्ने महाप्रमाणतः ॥ युध्यमानो नरः सार्धं । शत्रुसैन्येन भूयसा ॥ ९३ ॥ तस्यार्थो यु-
ध्यमानस्य । सार्धं कर्मभिरष्टभिः ॥ जिनस्यादायि साहाय्यं । ददतेक्षुरसं मया ॥ ९४ ॥ श्रेष्ठिना-
पि यदालोकि । रवेः रश्मिसहस्रकं ॥ भ्रश्यत्तन्निजकस्थाने । मयोध्धृत्य निवेशितं ॥ ९५ ॥ त-
स्यार्थः केवलज्ञानं । भ्रस्यद्भुक्तादिना विना ॥ समुध्धृतं मयैवैतत । पारयता परमेश्वरं ॥ ९६ ॥
श्रुत्वेदं स्तोतुमारब्धः । कुमारं विस्मितो जनः ॥ ज्ञानदाक्षिण्यदानादि—सद्गुणाकृष्टमानसः ॥९७॥

अहो ते कुमर ज्ञान—महो ते सुविवेकिता ॥ अहो ते वाक्यचातुर्य—महो दानमहो यशः ॥
॥ ९८ ॥ यथा तीर्थकृतां मध्ये । वृषभो भुवनप्रभुः ॥ कुमार त्वं तथैवाद्यो । दातॄणामिह गीयसे
॥ ९९ ॥ त्रैलोक्यरंगमध्ये च । वरदानपताकिका ॥ सुरासुरनराध्यक्ष—महारि कुमर त्वया ॥
॥ १०० ॥ त्वया कुंदेंदुसंकाश—यशसा पूरितं जगत ॥ रसेन श्रीजिनाधीश—स्यात्मा न्यवेशि
निवृतौ ॥ १ ॥ इत्थं कुमारसंबंधि—सद्गुणग्रामसंपदं ॥ स्तुवन्नेवं गतो लोकः । सर्वो निजनिजगृहे
॥ २ ॥ भगवानपि निसंग—स्ततो निर्गत्य धीरधीः ॥ विजहार पुरग्राम—ग्रामाकुलमहीतलं ॥३॥
इति श्रीश्रेयांसकथानकं परिसमाप्तमिति.

अस्त्यत्रैव जगत्ख्याते । जंबूद्वीपे शुभालये ॥ प्रसिद्धे भारते क्षेत्रे । गंगासिंधुविभक्तके ॥
॥ १ ॥ अंगाजनपदे रम्ये । सरःशैलादिसंकुले ॥ अलकेव धनिस्थानं । चंपानाममहापुरी ॥ २ ॥
युग्मं ॥ तत्राभवद्धराधीशो । दातृवाहननामकः ॥ सूर इव प्रतापेन । य आक्रमन्महीतलं ॥ ३ ॥
बभूव तस्य रूपादि—गुणरत्नौघधारिणी ॥ धारिणी नामसद्देवी । चेटकराजपुत्रिका ॥ ४ ॥ अ-
न्यदा सा तमिस्रायां । सुप्ता चरमयामके ॥ कल्पवृक्षलतां स्वप्ने । समुल्लासिसुपल्लवां ॥ ५ ॥ पुष्प-

फलर्द्धिसंयुक्तां । त्रिलोकोपकारिणीं ॥ निजश्रीनिर्जिताशेष—साक्षिसंदोहसंपदं ॥६॥ समालोक्य प्रबुद्धा च । निजभर्त्रे न्यवेदयत् ॥ तेनावाचि यथा भद्रे । कल्पवृक्षलतेव ते ॥ ७ ॥ सर्वस्याश्रितलोकस्य । संपूरितमनोरथा ॥ नारीजनगुणग्राम—रत्नराजिविराजिता ॥ ८ ॥ सर्वसौंदर्यसंपूर्णा । पूर्णसौभाग्यशालिनी ॥ शास्त्रिसुकोमलालापा । भविष्यति सुपुत्रिका ॥ ९ ॥ कुलकं ॥ श्रुत्वा भर्तुरिदं वाक्यं । परमानंदनिर्भरा ॥ तं समुवाह सा गर्भं । कालेऽसूत च दारिकां ॥१०॥ कुलाचारविधानेन । निर्वृत्ते सूतिकर्मणि ॥ महर्ध्या विहितं नाम । वसुमतिरिति स्फुटं ॥ ११ ॥ इतश्च—वत्साजनपदस्योच्चैः । सारालंकारसन्निभा ॥ स्वश्रीजितसुरावासा । कौशांबीनामसत्पुरी ॥ १२ ॥ तत्र भग्नपरानीकः । शतानीको नृपोऽभवत् ॥ शौर्यवीर्यसदौदार्य—गांभीर्यादिगुणोदधिः ॥ १३ ॥ अभून्मृगावतीनाम । प्रीतिकृत्तस्य सत्प्रिया ॥ दुहिता चेटकस्यैव । रक्ता सर्वज्ञशासने ॥ १४ ॥ द्वयोरपि तयो वैरं । बभूवाबद्धरोषयोः ॥ दातृवाहनभूपाल—शतानीकाह्वयोर्मिथः ॥ १५ ॥

अन्यदा च शतानीको । गतश्चंपापुरीप्रति ॥ अवस्कंदेन बाधायै । दातृवाहनभूभुजः ॥ १६ ॥ ततो बाढं बलिष्ठोऽपि । शतानीकेन भूभुजा ॥ अलक्ष्यमागतत्वेन । नाशितो दातृवाहनः ॥ १७ ॥

चंपायां लुट्यमानायां । सर्वतो लुंटकैर्जनैः ॥ यो यद्गृह्णाति यद्ग्राहे । तत्तस्यैवेति घोषिते ॥१८॥
स्वगेहंप्रति धावंती । धारिणी सुतया सह ॥ एकेनौष्ट्रिकपुंसासौ । गृहीता दैवयोगतः ॥ १९ ॥
लात्वा चंपां शतानीके । निवृत्ते सह सेनया ॥ पप्रच्छ औष्ट्रिको मार्गे । केनाप्येवं कुतूहलात् ॥
॥ २० ॥ यथा भो भोः किमेताभ्या—मबलाभ्यां करिष्यसि ॥ स प्राह बृहती येयं । सा मे भा-
र्या भविष्यति ॥ २१ ॥ इमां तु बालिकां नीत्वा । विक्रेष्यामि स्वके पुरे ॥ ततो मे मनसोऽभीष्टं
। भूरिद्रव्यं भविष्यति ॥ २२ ॥ श्रुत्वेदं धारिणी देवी । तद्वचः श्रुतिदुःखदं ॥ शोकविह्वलसर्वांगा
। रुदंतीदमचिंतयत् ॥ २३ ॥ हाहा हतविधे नूनं । किं तव युक्तमीदृशं ॥ विधातुं कर्म निस्त्रिंश-
मस्मिन् जने निरागसि ॥ २४ ॥ हाहा हताश हे धातः । किं त्वया कृतमीदृशं ॥ यदेषोऽपि प-
दास्पृश्यः । कलत्रं मां चिकीर्षति ॥ २५ ॥ वियोजिता स्वबंधुभ्यो । भ्रंसिता राज्यसंपदः ॥ एताव-
ता न तुष्टोऽसि । शीलं मे भंक्तुमिच्छसि ॥ २६ ॥ एवं विचिंतयंत्याश्च । रुदंत्याश्च मुहुर्मुहुः ॥ ल-
पंत्या दीनवाक्यानि । शोचयंत्या ह्यनारतं ॥ २७ ॥ निंदंत्या निजकर्माणि । पूर्वजन्मकृतान्यलं ॥
दिशो दिशि क्षिपंत्याश्च । भीत्या तरललोचने ॥ २८ ॥ शीलभंगभयोद्भूत—दुःखसंतप्तचेतसः ॥

पश्यंत्या एव धारिण्याः । पुरतस्तेन पापिना ॥ २९ ॥ वसुमतिर्भयोद्भ्रांत्या । सुकुमारशरीरका ॥
मार्गे गंतुमशक्तासौ । ताडिता कंबया दृढं ॥ ३० ॥ चतुर्भिः कलापकं ॥

दृष्ट्वेदं धारिणी देवी । गाढं दूनितमानसा ॥ घ्नंतं वसुमतिं भूय—स्तं पुमांसमभाषत ॥ ३१ ॥
हे भ्रातर्हे महाभाग । हे बंधो बंधुवत्सल ॥ मत्पुत्रिकामिमामेवं । मामा हंसीर्दयापरः ॥ ३२ ॥ इ-
त्यादिचाटुवाक्यानि । लपंत्या एव सोऽधमः ॥ भूयोऽपि ताडयामास । तां बालां विगतत्रपः ॥३३॥
नराधमस्य तस्यैवं । दृष्ट्वा तद्दुष्टचेष्टितं ॥ संजातचित्तसंघट्टा । प्राणांस्तत्याज धारिणी ॥ ३४ ॥
अथासौ पुरुषो दृष्ट्वा । देवीमृत्युमतर्कितं ॥ निन्ये वसुमतिं मार्गे । संस्थापयन् प्रियोदितैः ॥३५॥
क्रमेण प्राप कौशांब्यां । गतवांश्च निजे गृहे ॥ भोजनादिक्रियां कृत्वा । ततो विक्रयहेतवे ॥३६॥
हसंती निजरूपेण । रूपश्रियं रतेरपि ॥ लावण्यांबुप्रवाहेण । प्लावयंती महीतलं ॥ ३७ ॥ पूरयंती
दिशां चक्रं । देहोत्थरुचिमंडलैः ॥ स्वसौंदर्यश्रिया सर्वाः । क्षिपंती सुरसुंदरीः ॥ ३८ ॥ संपूर्णपूर्णि-
माचंद्रं । निरस्यंती मुखश्रिया ॥ दंतद्युत्या सुगत्या च । हसंती हंसमंडलं ॥ ३९ ॥ चकितचंचल-
प्रांशु—प्रेंखच्चारुविलोकनैः ॥ सर्वाः पराभवंती च । भयद्रुतमृगांगनाः ॥ ४० ॥ आनीय तेन सा

बाला । दातृवाहनपुत्रिका ॥ तृणानि मस्तके दत्वा । हट्टमार्गेऽवतारिता ॥ ४१ ॥ ततस्तत्र तथाव-
स्थां । तामालोक्य जनो बहुः ॥ मिलितः कौतुकाक्षिप्तो । ययाचेऽथ यथेछया ॥ ४२ ॥ अथ ध-
नावहाख्येन । श्रेष्ठिना श्रेष्टचेतसा ॥ तत्रायातेन सा दृष्टा । दृष्टेरानंददायिका ॥ ४३ ॥ चिंतितं
च यथैतस्या । दृश्यते सुंदराकृतिः ॥ तथा महत्कुले कस्मि—न्नुत्पत्तिरनुमीयते ॥ ४४ ॥ तस्मादे-
नां यथालाभं । संगृह्णामि प्रयत्नतः ॥ सर्वलक्षणसंपूर्णा । सर्वावयवसुंदरां ॥ ४५ ॥ एतत्संग्रहणे
नूनं । प्रवरं प्रीतिकारणं ॥ अस्याः पित्र्यादिभिः सार्धं । संबंधो मे भविष्यति ॥ ४६ ॥ विचिंत्येदं
यथा लाभं । श्रेष्टिना जगृहे च सा ॥ नीत्वा वेश्मनि मूलायाः । श्रेष्टिन्याश्च समर्पिता ॥ ४७ ॥
उक्ता च श्रेष्टिना मूला । यथेयं बालिका प्रिये ॥ पुत्रिकेव मया तुभ्यं । प्रदत्ता पाल्यतामिति ॥
॥ ४८ ॥ तयाप्येवं करोमीति । प्रतिपन्नं सहर्षया ॥ ततो वसुमतिस्तत्र । ववृधे स्वगृहे यथा ॥४९॥
कोमलालापसौजन्य—विनयादिगुणश्रिया ॥ शीतलं कुर्वती लोकं । चंद्रिकेव महीतलं ॥ ५० ॥
यथार्थं गुणनिष्पन्नं । श्रूयमाणं सुखप्रदं ॥ प्राप चंदनबालेति । विख्यातं नाम चापरं ॥ ५१ ॥ यु-
ग्मं ॥ एवमीप्सितसंपत्त्या । वर्धमाना दिने दिने ॥ कलाभिः सह लावण्यं । सर्वांगेषु पुपोष सा

॥ ५२ ॥ अन्यदा बहिरायातो । पराह्नेऽसौ धनावहः ॥ गेहे च न तदा कोऽपि । विद्यते दैवयोगतः ॥ ५३ ॥ एका चंदनबालैव । क्रीडंती तत्र तिष्ठति ॥ पितरं बहिरायातं । दृष्ट्वा ततः समुत्थिता ॥ ५४ ॥ जलपात्रं समानीय । चरणक्षालनाय सा ॥ आसनं च तथायच्छ—न्निषण्णस्तत्र सोऽपि च ॥ ५५ ॥ ततस्तस्याः पितुः पादौ । क्षालयंत्याः कथंचन ॥ केशपाशस्तदायासात् । संजातस्त्यक्तबंधनः ॥ ५६ ॥ प्रलंबत्वान्महीपीठे । श्रेष्टिना प्लुठन्नसौ ॥ लीलायष्ट्या समुध्धृत्य । तत्पृष्टे विनिवेशितः ॥ ५७ ॥ मूलयालोकि निःशेष—मेतच्छ्रेष्टिविचेष्टितं ॥ तिष्टंत्या निजगेहस्य । रम्ये जालगवाक्षके ॥ ५८ ॥ चिंतितं च निजे चित्ते । यच्चेदं नैव सुंदरं ॥ दुहितेयममुष्याद्य । कल्ले भार्या भविष्यति ॥ ५९ ॥ अहं हि जरसाक्रांता । हीयमाना दिने दिने ॥ इयं तु नितरां रम्ये । समारोहति यौवने ॥ ६० ॥ तदयं नास्ति मे श्रेष्टी । न जनो न च मंदिरं ॥ इयमेतस्य गेहस्य । स्वामिनीति वितर्कये ॥ ६१ ॥ तद्यावन्नैव निःशेष—कार्यनाशः प्रजायते ॥ तावन्निपातयाम्येना—मुपायेनैव केनचित् ॥ ६२ ॥ चिकित्सितुं सतां युक्तो । व्याधिः कोमल एव हि ॥ प्रवृद्धस्य तु तस्येह । चिकित्सा हि सुदुःकराः ॥ ६३ ॥ चिंतयंत्या इदं चित्ते । मूलाया असमंजसं ॥ प्रयोज

नवशाच्छ्रेष्ठी । बहिर्भूयोऽपि निर्ययौ ॥ ६४ ॥ ततोऽवतीर्य साक्षेपं । शिरोगेहाद् द्रुतं द्रुतं ॥ वहंत्या मत्सरं घोरं । मूलयानर्थमूलया ॥ ६५ ॥ आकार्य नापितं तत्र । मुंडयित्वा च तच्छिरः ॥ क्षिप्ता च पादयोर्गाढं । बलवन्निगडावलिः ॥ ६६ ॥ युग्मं ॥ नीत्वापवरकेऽत्यंत—मंधकारे भयानके ॥ समुत्सार्यान्नपानादि । क्षिप्ता चंदनबालिका ॥ ६७ ॥ दत्तं च तालकं तत्र । जनः सर्वोऽपि वारितः ॥ यथा भो श्रेष्ठिनो नेदं । समाख्येयं कदाचन ॥ ६८ ॥ यः पुनः कोऽपि तस्येदं । कथयिष्यति मंदधीः ॥ अयमेव हि तस्यापि । दंडः कार्यो मया ध्रुवं ॥ ६९ ॥ एवं विधाय सा मूला । मूलं पातकसंततेः ॥ जाताऽस्वच्छस्वभावेन । निजव्यापारतत्परा ॥ ७० ॥ अथागते द्वितीयेऽह्नि । भोजनावसरे तथा ॥ संपृष्टः श्रेष्ठिना तत्र । सर्वः परिजनो निजः ॥ ७१ ॥ यथा भो दृश्यते नात्र । किमु चंदनबालिका ॥ कथ्यतां कथ्यतां मह्यं । क्रियते येन भोजनं ॥ ७२ ॥ न तस्य पृच्छतः कोऽपि । कथयामास मानवः ॥ अनर्थमूलमूलाया । भयसंत्रस्तमानसः ॥ ७३ ॥ चिंतितवांस्ततश्चित्ते । यथा सा रमते क्वचित् ॥ स्नानादि कुरुते किंचि—त्सुप्ता वा क्वापि तिष्ठति ॥ ७४ ॥ एवमेव तृतीयेऽपि । विगते खलु वासरे ॥ चतुर्थे च समायाते । श्रेष्ठिनाकारि निश्चयः ॥ ७५ ॥ अद्य चंदन·

बालायां । दृष्टयामेव भुज्यते ॥ नान्यथा कथ्यतां तथ्यं । तद्दर्शनकारणं ॥ ७६ ॥ श्रुत्वेदं चिंतयामास । वृद्धानारी दयापरा ॥ इयं हि सुचिरं बाला । जीवत्वेव ममासुभिः ॥ ७७ ॥ अहं तु जरसाघ्राता । किं करिष्यामि जीविता ॥ इत्यालोच्य तया सर्वं । सत्यमेव निवेदितं ॥ ७८ ॥

ततः शीघ्रं समागत्य । श्रेष्टिना तत्र कुंचिकां ॥ गृहीत्वोद्घाटितं द्वारं । तदंतः प्रविवेश च ॥ ॥ ७९ ॥ दृष्टा च सा तथावस्था । पृष्टा च स्निग्धया गिरा ॥ यथा ते बाधते किं नु । बुभुक्षेति बभाण सा ॥ ८० ॥ भोजनं ते ददामीति । वीक्षितं तत्र सर्वतः ॥ न किंचित्तादृशं दृष्टं । मूलयापहृतं यतः ॥ ८१ ॥ विशेषाद्वीक्ष्यमाणेन । तत्र स्थाने समंततः ॥ दृष्टाः पर्युषिता माषाः । सूर्पकोणौ व्यवस्थिताः ॥ ८२ ॥ आनीय श्रेष्टिना तूर्णं । ततस्तस्यै समर्पिताः ॥ एतेऽपि भुज्यतां ताव- त्क्रियतां प्राणधारणं ॥ ८३ ॥ इत्युक्त्वा तत्पदप्रोत—निगडोद्दलनहेतवे ॥ वेगेन गतवान् श्रेष्टी । लोहकारस्य मंदिरं ॥ ८४ ॥ अथ चंदनबालापि । दृष्ट्वावस्थां तथा निजां ॥ युवावस्थां च संस्मृत्य । चिंतयामास मानसे ॥ ८५ ॥ यदि मे निर्मितं जन्म । विशाले राजमंदिरे ॥ वरे सर्वर्द्धिसंपन्ने । संपूज्ये महतामपि ॥ ८६ ॥ धातस्ततः प्रमथ्यैवं । किं कृतेयं विडंबना ॥ महापराभवस्थानं ।

दासैरपि सुदुःसहा ॥ ८७ ॥ यदिदमीप्सितं कर्तुं । त्वया मामजि हे विधे ॥ तद्गर्भस्थापि किं ना-
हं । प्राणेभ्यो व्यपरोपिता ॥ ८८ ॥ किं न च्युतास्मि गर्भाद्वा । मृता वा किं न शैशवे ॥ किं वा
कृतं मया पूर्वं । दुष्कृतं व्यसनावहं ॥ ८९ ॥ येनेदृशं सतां शोच्यं । जनकानन्यकारणं ॥ निरा-
गसोऽपि संजातं । व्यसनं मम संप्रति ॥ ९० ॥ इत्यादि सा निजं जन्म । निंदित्वा बहुधा ततः
॥ क्षुत्क्षामं च कपोलं च । निधाय करपल्लवे ॥ ९१ ॥ तेषु सूर्पककोणस्थ—कुल्माषेषु निजां दृ-
शं ॥ पातयित्वा विशेषेण । शोचयामास चंदना ॥ ९२ ॥ षष्टस्य पारणे मेऽद्य । कुल्माषाः समु-
पस्थिताः ॥ बुभुक्षाबाधिता बाढं । तदेतानपि पारये ॥ ९३ ॥ यतः—सर्वेषामपि जंतूनां । बाधि-
तानां बुभुक्षया ॥ सरसं विरसं वापि । भोजनं प्रतिभासते ॥ ९४ ॥ परं यदा स्वगेहस्था । तप-
स्तेपेऽतिलघ्वपि ॥ तदाहं सर्वसंघाय । दत्ते चाश्नामि नान्यथा ॥ ९५ ॥ ततोऽद्य यदि कोऽपीह ।
समेति सगुणोऽतिथिः ॥ तस्मै माषानिमान् दत्वा । पारयामि सुनिर्वृता ॥ ९६ ॥ एवं चिरं विचिं-
त्यैषा । दानैकरसमानसा ॥ ऊर्ध्वंकृत्य शिरः किंचि—द्गेहद्वारं प्रलोकते ॥ ९७ ॥ इतश्च—
तस्यामेव हि कौशांब्यां । महावीरो जिनेश्वरः ॥ निर्जिताखिलदुर्वार—परीषहमहारिपुः ।९८।

विशेषतश्च जग्राह । चतुर्विधमभिग्रहं ॥ द्रव्यतः क्षेत्रतश्चैव । कालतो भावतस्तथा ॥ ९९ ॥ द्रव्यतः सूर्पकोणस्था । माषाः पर्युषिता मम ॥ कल्पंते नान्यथेत्येवं । प्रतिज्ञां कृतवानसौ ॥ १०० ॥ क्षेत्रतो यदि सा दात्री । गेहोडुंबरसंस्थिता ॥ एकं पादं बहिः कृत्वा । मध्ये चैकं प्रयच्छति ॥ १ ॥ कालतस्तु समायाते । दिवायामे तृतीयके ॥ भिक्षुकेषु निवृत्तेषु । सर्वेष्वपि समंततः ॥ २ ॥ भावतस्तु महाराज—विशालकुलसंभवा ॥ महादुर्गदशावस्था । व्यपनितशिरोरुहा ॥ ३ ॥ बलवन्निगडश्रेणि—नियंत्रितपदद्वया ॥ रुदंती शोचयंती च । निंदंती च स्वदुःकृतं ॥ ४ ॥ यद्येवं व्यसनं प्राप्ता । राजपुत्री प्रदास्यति ॥ तदा ग्राह्या मया भिक्षा । नान्यथेति कथंचन ॥ ५ ॥ इत्थं कृतप्रतिज्ञोऽसौ । वर्धमानो जिनेश्वरः ॥ बंभ्रमीति निराशंस—स्तस्यां पुरि दिने दिने ॥ ६ ॥ भिक्षां कदापि नो लेभे । निर्गूढाभिग्रहो यतः ॥ अन्यदा हिंम्र्मानस्तु । प्रविष्टो मंत्रिणो गृहे ॥ ७ ॥ सुगुप्ताख्यस्य तत्रास्मै । दास्या भिक्षोपढौकिता ॥ अगृहीत्वैव निष्क्रांत—स्तां भगवांस्ततो गृहात ॥ ८ ॥ दृष्टमिदममात्यस्य । सुनंदाभिधभार्यया ॥ पृष्टा च सा यथा भिक्षां । जिनः किं न गृहीतवान् ॥ ९ ॥ तयोक्तमेवमेवासौ । निर्गच्छति दिने दिने ॥ मासश्चतुर्थकश्चास्य । निराहारस्य व-

र्तते ॥ १० ॥ ततः सुनंदयाभाणि । कुर्वत्या खेदमुच्चकैः ॥ भगवतोऽभिग्रहः कोऽपि । भविष्यती-
ति मे मतिः ॥ ११ ॥ निवेदितममात्यस्य । सोपालंभमिदं तथा ॥ यथा किं सचिवत्वेन । किं वा
तव मनीषया ॥ १२ ॥ यदि त्वं नैव जानासि । जिनेंद्राभिग्रहागमौ ॥ मंत्री प्राह न मे ज्ञातो ।
विहरन् भगवानिह ॥ १३ ॥ तेन नाकारि तत्तप्ति—र्न च भक्तिर्जिनेश्वरे ॥ सुरासुरनराधीश—
पूजनीयपदांबुजे ॥ १४ ॥ सांप्रतं तु यथाशक्त्या । यतिष्ये निश्चितं प्रिये ॥ यथा विज्ञायते शीघ्रं
। जिनस्यायमभिग्रहः ॥ १५ ॥ मृगावतिप्रतीहारी । तत्र प्रयोजनागता ॥ विजयानाम श्रुत्वेदं ।
न्यवेदयन्मृगावतेः ॥ १६ ॥ अस्या अपि बभूवोच्चै—रधृतिर्जिनभक्तितः ॥ एतन्निवेद्य भूपाय । रा-
ज्ञी नृपोऽप्यभाषत ॥ १७ ॥ आयातमपि नो वेत्सि । यद्यत्र जिनपुंगवं ॥ यदि वाभिग्रहं तस्य ।
न पूरयसि किं त्वया ॥ १८ ॥ पूरयामि तमित्युक्त्वा । समुत्थाय नरेश्वरः ॥ आस्थानमंडपं गत्वा ।
समाकार्य च मंत्रिणं ॥ १९ ॥ बभाणेदं यथा मंत्रि—न्नाकारयाखिलानपि ॥ पाखंडिनोऽत्र वास्त-
व्यान् । मंत्रिणापि तथा कृतं ॥ २० ॥ अथ पाखंडिनः सर्वे । आयाता नृपसन्निधौ ॥ पृष्टा निय-
मसारूप्यं । तेऽप्याचख्युः सविस्तरं ॥ २१ ॥ ततो लोकः समग्रोऽपि । समादिष्टो महीभुजा ॥ एवं

प्रदातुमारब्धो । भक्तपानं पदे पदे ॥ २२ ॥ द्रव्यतश्चित्रद्रव्याणि । मंडकप्रभृतीन्यलं ॥ क्षेत्रतो वि·
विधस्थान—स्थायिनो दानदायिनः ॥ २३ ॥ कालतो दिवसस्याद्य—मुहूर्तप्रहरादिषु ॥ भावतो
हास्यगीतादि । कुर्वन्नाक्रंदनानि वा ॥ २४ ॥ प्रत्यहं ददतोऽप्येवं । लोकस्यासौ मुनीश्वरः ॥ न
किंचिदेव गृह्णाति । ततो लोकैर्विचिंतितं ॥ २५ ॥ अहो वयमिहाधन्या । नूनं पुण्यविवर्जिताः ॥
अस्माकं जीवितं जन्म । विभवोऽपि निरर्थकः ॥ २६ ॥ येनास्मदीयकं वस्तु । भक्तपानादि किंच·
न ॥ सद्गुणरत्नपात्रस्य । न जिनस्योपयुज्यते ॥ २७ ॥ एवं तत्र जनः सर्वः । पुरमंतःपुरं धनं ॥
जीवितं जन्म गोत्रं च । सर्वं व्यर्थममन्यत ॥ २८ ॥ अथ पंचदिनोने च । संपूर्णे मासषट्के ॥
अदीनो विहरन्नेवं । महावीरो महामुनिः ॥ २९ ॥ निःसंगो निरहंकारो । निर्विकारो निराश्रयः ॥
नीरागो निरलंकारो । निराहारो निरामयः ॥ ३० ॥ निर्मोहो निर्ममीकारो । निराकांक्षो निराश्रवः
॥ जगद्वीरो जगन्नाथो । जगदानंदकारकः ॥ ३१ ॥ जगद्वंद्यो जगज्ज्येष्ठो । जगज्जंतुदयापरः ॥
श्रीमद्धनावहश्रेष्टि—मंदिरेऽसौ प्रविष्टवान् ॥ ३२ ॥ चतुर्भिः कलापकं ॥

अथ सा चंदना पूर्व—व्यावर्णितदशांतरा ॥ समालोक्य महावीरं । प्रविशंतं व्यचिंतयत् ॥

॥ ३३ ॥ धन्याहं कृतपुण्याहं । कृतार्थी कृतलक्षणा ॥ यथा ममाष्टमस्यांते । आजगाम महामुनिः
॥ ३४ ॥ यद्येष कुरुते मह्यं । माषैरेभिरनुग्रहं ॥ तदा ददामि निःशेष—दुःखानां हि जलांजलिं
॥ ३५ ॥ यावद्विचिंतयत्येवं । तावत्तत्र समागतः ॥ वीरः समीरिताशेष—दुर्जयांतरशात्रवः ॥ ३६॥
कुत्र सर्वोत्तमं पात्रं । क्व च दातव्यमीदृशं ॥ इति साश्रु सखेदं च । चंदना गद्गदस्वरं ॥ ३७ ॥
बभाषे भगवन्नेते । कल्पंते तव माषकाः ॥ जिनोऽप्युपयुजे सम्यक् । स्वकीयाभिग्रहंप्रति ॥ ३८ ॥
पूर्यते सर्व एवायं । मदीयोऽभिग्रहोऽधुना ॥ एवं विचिंत्य वीरेण । ततः पाणिः प्रसारितः ॥ ३९ ॥
चंदनयापि सानंदं । विशुद्धाध्यवसायया ॥ तत्रस्थया समुद्भाय । भगवान् प्रतिलंभितः ॥ ४० ॥
अत्रांतरे च जातानि । पंच दिव्यानि तत्क्षणं ॥ स्वर्णवृष्टिः सुराकृष्टिः । सुरदुंदुभिनिःस्वनः ॥४१॥
पुष्पगंधोदवृष्टिश्च । चेलोत्क्षेपश्च पंचमः ॥ सुरैरकारि केशाश्च । तस्या मूर्ध्नि पुनर्नवाः ॥ ४२ ॥
कुर्वंति तारझंकारं । पादयोर्निगमान्यपि ॥ सर्वरत्नमयोत्प्रेंख—न्नूपुराणि प्रजज्ञिरे ॥ ४३ ॥ अ-
ध्यासितं विशेषेण । तद्वपुः सर्वतः श्रिया ॥ श्रुत्वेदमागतः श्रेष्ठी । राजा मंत्री जनस्तथा ॥ ४४ ॥
दृष्टं च श्रेष्ठिनो गेहं । स्वर्णवृष्ट्यादिशोभितं ॥ चंदना विलसत्कांत्या । सश्रीकं दधति वपुः ॥४५॥

राजा च वक्तुमारब्धो । विस्मयोत्फुल्ललोचनः ॥ यथा त्वमेव भो श्रेष्टिन् । धन्यः पुण्यः कृतार्थकः ॥ ४६ ॥ यस्येदृशी तवाशेष—गुणसंपूर्णपुत्रिका ॥ श्रीवीरस्य ययाकारि । पारणकं जगत्प्रभोः ॥ ॥ ४७ ॥ अहमत्र महीपाल—स्त्वं श्रेष्टी जनविश्रुतः ॥ तथापि श्रीजिनेंद्रेण । तवैवानुग्रहः कृतः ॥ ४८ ॥ स एव सकलश्रीभिः । सानंदमवलोक्यते ॥ यस्यैवं तुष्यते पादै—र्जैनचंद्रैर्गृहांगणं ॥ ॥ ४९ ॥ यावदेवं नृपस्तत्र । श्रेष्टिनमभिनंदति ॥ अंतःपुरमहल्लेन । तावद्दृष्टार्यचंदना ॥ ५० ॥ क्षणेन प्रत्यभिज्ञाता । पतित्वा पादयोस्ततः ॥ रोदितुं च प्रवृत्तोऽसौ । मनोदुःखौघनिर्भरः ॥ ५१॥ तथा रुदन्नसौ पृष्टो । राज्ञा विस्मितचेतसा ॥ यथा भो रुद्यते केन । हेतुना कथ्यतां मम ॥५२॥ स जगाद यथा राज—न्नियं वसुमतिः खलु ॥ चंपाधिपस्य सत्पुत्री । धारिणीदेहसंभवा ॥ ५३ ॥ अत्रायाता महीनाथ । न जाने केन हेतुना ॥ एतत्पूर्वतरावस्थां । स्मृत्वा स्नेहाच रोदिमि ॥५४॥ चंदनापि ततो राज्ञा । पृष्टा सर्वं तथापि हि ॥ निवेदितं नरेंद्राय । यावद्वीरस्य पारणं ॥ ५५ ॥ ततो राज्ञा निजोत्संगे । चंदनाभिनिवेशिता ॥ चुंबिता मूर्धदेशे च । मृगावत्या तथैव च ॥५६॥ अथ चंदनयावाचि । संसारभ्रांतिभीतया ॥ यथा राजंस्त्वया देव्या । तातेन च विशेषतः ॥ ५७ ॥

सखेहं समनुज्ञाता । संसारोच्छेदहेतवे ॥ धर्मं विधातुमिच्छामि । तन्मां मुंचत सांप्रतं ॥ ५८ ॥ युग्मं ॥ यतोऽयं घोरसंसारो । महादुःखो महाजयः ॥ सद्भिः सदैव संत्याज्यः । स्वात्मनः सुखमिच्छुभिः ॥ ५९ ॥ ततः प्रोक्तं नरेंद्रेण । धर्मो वत्से सुदुःकरः ॥ तदत्रैव यथाकामं । जोगान् जुंक्ष्व गृहे मम ॥ ६० ॥ इत्यादि वदतो राज्ञः । शक्रः प्राह यथा नृप ॥ इयं हि चंदना चारु—चंद्रचंदनशीतला ॥ ६१ ॥ आद्या श्रीवर्धमानस्य । जविष्यति प्रवर्तिनी ॥ तस्मात्तावत्त्वमेवैनां । पालयस्व नरेश्वर ॥ ६२ ॥ यावदुत्पद्यते ज्ञानं । लोकालोकप्रकाशकं ॥ केवलाख्यं जिनेंद्रस्य । त्रैलोक्यश्रीशिरोमणेः ॥ ६३ ॥ तथास्या एव निःशेषं । द्रव्यमेतन्महीपते ॥ स्वेच्छया यस्य कस्यापि । ददातु लातु वा स्वयं ॥ ६४ ॥ शक्रस्येदं समाकर्ण्य । वाक्यं श्रुतिसुखावहं ॥ प्रददौ श्रेष्ठिने सर्वं । द्रव्यं वसुमतिर्निजं ॥ ६५ ॥ ततो निन्ये शतानीक—श्चंदनां निजमंदिरे ॥ दीनादिज्यो महादानं । ददति हृष्टमानसा ॥ ६६ ॥ प्रवेशिता च नृपेन । कन्यांतःपुरमंदिरे ॥ समीहितार्थसंपत्त्या । पाल्यमाना च तिष्ठति ॥ ६७ ॥ युग्मं ॥ वीरस्य केवलज्ञाने । समुत्पन्ने च चंदना ॥ दीक्षामादाय संपूर्णां । संपाद्य च शिवं ययौ ॥ ६८ ॥ इति चंदनार्याकथानकं समाप्तं ॥ सांप्रतं कृतपुण्यकथान

कं कथ्यते—

अस्ति वरविजयकलितः । संपूर्णवाहिनीशतसहस्रैः ॥ पृथ्वीधरकृतसेवो । जंबूद्वीपो नरेंद्र इव ॥ १ ॥ तत्रास्ति भरतवर्षे । ग्रामाकरनगरसंकुलो रम्यः ॥ मगधाख्यजनपदः खलु । नानाविधपत्तनाकीर्णः ॥ २ ॥ तत्र च नगरं रम्यं । राजगृहं नाम वरगृहोपेतं ॥ तत्पालयति नरेशः । श्रेणिकनामा निहतशत्रुः ॥ ३ ॥ रूपेण रतिसमाना । इष्टाः कांताः प्रिया मनोज्ञाश्च ॥ तस्यासन् वरभार्याः । पतिभक्ताश्चेल्लणाप्रमुखाः ॥ ४ ॥ ताभिः सह वरभोगान् । भुंक्तेऽसौ निहितराज्यगुरुभारः ॥ मंत्रिप्रवरे मंत्रिणि । निजपुत्रेऽभयकुमाराख्ये ॥ ५ ॥ इतश्च जनपदे तस्मि—न्नेकस्मिन्नस्ति सुंदरे ग्रामे ॥ एका तर्णकपाली । गुरुतरदारिद्र्यदुःखार्ता ॥ ६ ॥ तस्याश्च सुतो बाल—स्तर्णकपरिरक्षणं प्रकुर्वाणः ॥ एकदारण्येऽसौ । यतिजनयोग्ये शुभे देशे ॥ ७ ॥ पश्यत्येकं साधुं । कायोत्सर्गेण संस्थितं संतं ॥ तपसा शोषितदेहं । तत एवमसौ विचिंतयति ॥ ८ ॥ अस्यैव जन्मजीवित—मानुष्यादीनि जगति सफलानि ॥ यश्चैवमरण्यस्थः । कुरुते विविधं तपःकर्म ॥ ९ ॥ मन्येऽस्ति पुण्यलेशो । ममापि येनैव दर्शनं प्राप्तः ॥ तस्मादभिवंद्यैनं । करोमि पूतं निजात्मानं ॥ १० ॥ सं-

चिंत्यैवं प्रणतो । मुनिवरपदपंकजं भक्तियुक्तः ॥ इत्थं दिने दिनेऽसौ । तं साधुं वंदते भक्त्या ॥
॥ ११ ॥ प्रतिदिवसं साधुदर्शन—वशेन शुभशुध्यमानभावस्य ॥ तस्यान्यदा कदाचि—ज्जातस्त-
त्रोत्सवः कोऽपि ॥ १२ ॥ अथ याचित्वा दुग्धा—दि तत्र नारीजनाच्च तन्मात्रा ॥ निजपुत्रकृते
राद्धा । दैरेयी प्रवररसयुक्ता ॥ १३ ॥ उपविष्टाय च भोक्तुं । सुताय गेहांगणे वरस्थालं ॥ दत्तं
घृतगुडसंयुत—वरपायससंभृतं कृत्वा ॥ १४ ॥ प्रविवेश च गृहमध्ये । यावत्प्रयोजनेन तज्जननी ॥
तावत्स मुनिः प्राप्तो । यः पूर्वं वंदितस्तेन ॥ १५ ॥ आलोक्य तमायातं । भक्तिवशोल्लसितबहल-
रोमांचः ॥ चिंतयितुं संवृत्तो । हर्षाश्रुजलप्लुतालोकः ॥ १६ ॥ कृतपुण्यसंचयोऽहं । त्रीण्यपि यस्ये-
ह ममाद्य मिलितानि ॥ सच्चित्तं सद्वित्तं । गुणरत्नयुतं च सत्पात्रं ॥ १७ ॥ अहमेव सकलकल्या-
ण—मालिकास्थानमद्य संजातः ॥ यस्येह ममेदृक्षा । जाता सामग्रिका सकला ॥ १८ ॥ एवं च
चिंतयित्वा । कृत्वा रेखाद्वयं निजस्थाले ॥ दास्यामीति त्र्यंशं । भावयन् समुत्थितो बालः ॥ १९ ॥
गत्वा साधुसमीपे । ब्रूते यदि कल्पते तदादत्स्व ॥ विज्ञाय शुद्धभावं । मुनिनापि धृतं ततः पात्रं
॥ २० ॥ तत्र त्रिभागमात्रं । क्षिप्त्वा भूयो विचिंतयत्येवं ॥ अत्यंतस्तोकमिदं । द्वितीयभागं पु-

नः क्षिपति ॥ २१ ॥ चिंतितमनेन पुनरपि । यद्यत्र पतेत्किंचिदंबुलादि ॥ एतत्तदा विनश्यति ।
दत्ते तदपि त्रिभागं सः ॥ २२ ॥ अभिवंद्य तमुपविष्टः । स्थाने तत्रैव पुनरपि तथैव ॥ साधौ गते
च जननी । गृहमध्यान्निर्जगाम बहिः ॥ २३ ॥ दृष्टं तदवस्थं त—न्नूनं भुक्तमनेन तत्सकलं ॥
एवं परिचिंत्य तया । पुनरपि परिपूरितं स्थालं ॥ २४ ॥ रंकत्वेन च भुक्तं । सर्वं तेनापि तस्मिन्न-
जीर्णे ॥ रात्रौ मृत्वा शुभभाव—योगतो राजगृहे नगरे ॥ २५ ॥

इभ्यधनपालगेहे । कुक्षौ भद्राभिधानभार्यायाः ॥ उपपादि ततो लोकः । प्रभाषते एष कृत-
पुण्यः ॥ २६ ॥ यश्चैवंविधगेहे । धनधान्यसमृद्धिबंधुरे कोऽपि ॥ उत्पत्स्यते महात्मा । प्रसूतिसम-
येऽथ संजाते ॥ २७ ॥ सूते भद्रा सर्वांग—सुंदरं दारकं प्रसृतकांतिं ॥ वर्धापितश्च दास्या । सु-
तोत्पादेन धनपालः ॥ २८ ॥ युग्मं ॥ अथ गीतनृत्यवादित्र—चित्रवस्त्रादिवस्तुविस्तारं ॥ श्रेष्ठिज-
नतुष्टिकरं । सुतजन्ममहोत्सवं कुरुते ॥ २९ ॥ कृतपुण्यक इति भणितो । लोकेनायं यदत्र ग-
र्भस्था ॥ तेन कृतमस्य जनकैः । कृतपुण्यक इति वरं नाम ॥ ३० ॥ क्रमशः प्रवर्धमानः । सक-
लकलाकौशलान्वितो जातः ॥ तरुणीजनमोहकरं । नवयौवनमथ समारूढः ॥ ३१ ॥ इभ्यवरबा-

...शस्तदिवसे । विधानतो आहितः पाणिं ॥ ३२ ॥
यावन्न ददाति मनो । विषयेषु कलासु रसिक इति कृत्वा ॥ भद्रा बभाण ताव—च्छनपालमनीदृ-
शं वचनं ॥ ३३ ॥ स्वामिन्नयमकृतार्थः । सर्वो धनविस्तरो यतश्चैषः ॥ पुत्रो निःस्पृहचित्तः । प्रह-
श्यते कामभोगेभ्यः ॥ ३४ ॥ तस्मान्नाथ तथा कुरु । यथा श्रयत्येष कामजसुखेषु ॥ अमुना ध-
नेन किं नो । विलसति यन्नेह कृतपुण्यः ॥ ३५ ॥ धनपालेनाभिहितं । भद्रे मा वाक्यमीदृशं
भाणीः ॥ यस्माद्विनापि शिक्षा—मेतानि भवंति यत उक्तं ॥ ३६ ॥ आहारभयपरिग्रह—मैथुन-
संज्ञा विनोपदेशेन ॥ गृह्णंति सर्वसत्वा—स्तदत्र किं शिक्षया भद्रे ॥ ३७ ॥ किंच स्वभावतोऽपि
हि । मदनाग्निरंगिनां ज्वलत्येव ॥ को वा नाम सकर्णो । दीप्तेऽग्नौ क्षिपति तृणभारं ॥ ३८ ॥ भा-
ऽपि ततो ब्रूते । यदपीदं प्रियं तथापि मम तोषः ॥ भवतीत्थमेव यस्मा—त्तदेतदविचारितं क्रि-
यतां ॥ ३९ ॥ निश्चयमवेत्य तस्या—स्ततोऽपि दुर्ललितगोष्ठिमध्येऽसौ ॥ क्षिप्तस्तेन कुमार—स्त-
या च सह सर्वतो भ्रमति ॥ ४० ॥ प्रेक्षणकमंडपादिषु । काननवापीसरोवरादिषु च ॥ भ्राम्यन्नसौ
प्रविष्टः । कदाचिद्वेश्याजनगृहेषु ॥ ४१ ॥ तत्र च वसंतसेना—गणिकाया रूपयौवनयुतायाः ॥ गे-

हे सुंदरसुरतो—पचारचातुर्ययुक्तायाः ॥ ४२ ॥ यावच्च तया क्षिप्तः । कामोत्कोचनकथाभिरत्यंतं ॥ तावत्तन्मित्रजनो । द्रागेव बहिर्विनिष्क्रांतः ॥ ४३ ॥ युग्मं ॥ स तया निजविज्ञानै—स्तथा तथा रंजितः सुरतकाले ॥ अजनि यथा तच्चित्तो । विनिवृत्त्य मनोऽन्यनः स्वीयं ॥ ४४ ॥ भुंक्ते तया च सार्धं । यथेच्छया विविधविषयवरसौख्यं ॥ द्रव्यं च यथाकामं । तत्पितरौ प्रेषितः सततं ॥ ४५ ॥ इत्थं तत्रावसतो । गतौ च पंचत्व तस्य पितरौ च ॥ ज्ञातौ च न तेन ततः । प्रेषयति धनं च त ज्जार्या ॥ ४६ ॥ अथ वर्षे द्वादशमे । धनदाश्रमसंनिभं तद्गेहं ॥ ऽव्ययक्षयेण जातं । दुर्गतगेहं यथा शून्यं ॥ ४७ ॥ क्षीणे द्रव्ये सर्वे । ततस्तया प्रेषितं निजाभरणं ॥ तद् दृष्ट्वा कुट्टिन्या । निजचित्ते चिंतितं चैवं ॥ ४८ ॥ नूनमयं निःसारः । संप्रति जातस्तया तदाभरणं ॥ रूपकसहस्रकलितं । पुनरपि संप्रेषितं तस्याः ॥ ४९ ॥ भणिता वसंतसेना । भद्रे परिमुंच कामुकमिमं तु ॥ आकृष्टाशेषधनो । यदेष जातोऽतिनिःसारः ॥ ५० ॥ अस्माकमेवमेव हि । कुलधर्मो यदुत निर्धनस्त्याज्यः ॥ तत्पुत्रि कुलाचारं । मा मुंच भजस्व धनवंतं ॥ ५१ ॥ सा जल्पति मा मात—र्भाणीरेवं यतोऽमुना मह्यं ॥ दत्तं प्रभूतवित्तं । को वान्यो दास्यते चैवं ॥ ५२ ॥ आसप्तमश्रेण्या अ

पि । पर्याप्तकं भविष्यतीदं नः ॥ परमप्यन्यद्दास्यति । मातरयं मामको नाथः ॥ ५३ ॥ न च कुलधर्मेणापि तु । निंद्यजनासेवितेन मम कार्यं ॥ किंचांब मतिप्रियोऽयं । गुणरत्नविभूषितो धनिकः ॥ ५४ ॥ दुहितुर्निश्चयमेनं । विज्ञायाकारसंवरं कृत्वा ॥ कार्यं हृदये धृत्वा । तूष्णीका संस्थिता धूर्ता ॥ ५५ ॥ रात्रौ तु जने सुप्ते । पर्यंके सुप्तमेव निजपुंभिः ॥ मोचयते देवकुले । वसंतसेनां समभिवंच्य ॥ ५६ ॥ निद्राक्षये विबुद्धो । विलोकयत्येष तत्र दिक्चक्रं ॥ ननु किमिदमिंद्रजालं । किंवा मतिविभ्रमो मेऽयं ॥ ५७ ॥ किं वापि स्वप्नोऽयं । जातः किं मे विपर्ययश्चैषः ॥ इति चिंतयंश्च भणितो । निकटस्थितदासचेट्यासौ ॥ ५८ ॥ मा कुरु विकल्पजालं । त्वं च तया स्वकुलधर्ममनुसृत्य ॥ निष्कासितो बलादपि । हे सुभग वसंतसेनायाः ॥ ५९ ॥ तस्याश्च निजे गेहे । येन गृहीत्वा व्रजामि पर्यंकं ॥ श्रुत्वेदं स विषण्णो । निजकंप्रति प्रस्थितो गेहं ॥ ६० ॥ तेन च विलोकितं त—न्मनुष्यवर्जितमरण्यमिव घोरं ॥ अप्रसुवर्णालंकारं । कुकविजनरचितमिव कार्यं ॥ ६१ ॥ पितृवनमिव भीषणं । वनमिव दवदग्धमपगतश्रीकं ॥ सर इव हिमहतकमलं । गतसारं सैन्यमिव राज्ञः ॥ ६२ ॥ एवंविधं प्रपश्यन् । यावदसौ विशति तत्र साशंकः ॥ तावदभ्युत्थितोऽसौ । विलोक्य

निजभार्यया शीघ्रं ॥ ६३ ॥ दत्तासन उपविष्टः । पादौ च क्षालितौ ततश्च सा पृष्टा ॥ जननीज·
नकगृहादिक—मशेषवृत्तांतकं निजकं ॥ ६४ ॥ कथितस्तयाश्रुपातं । कुर्वत्या मूलतः स वृत्तांतः ॥
श्रुत्वा तदस्य दुःखं । संजातं नरकगतिसदृशं ॥ ६५ ॥ संधीर्य चात्मानं । स्वयमेवापृछते ततो भा
र्यां ॥ किं किंचिदस्ति वित्तं । तथा तदाभरणमादर्शि ॥ ६६ ॥ तच्चैव भांडमूल्यं । प्रादाय प्रस्थितः
स दिग्यात्रां ॥ स्थित्वा कतिपयदिवसान् । गृह एव च मित्रलज्जातः ॥ ६७ ॥ कृत्वास्याः फलबंधं ।
सार्थे संप्रस्थिते ततः सोऽपि ॥ सार्थासन्ने सुप्तः । पर्यंके शून्यदेवकुले ॥ ६८ ॥ इतश्च—

तत्रैव पत्तनवरे । सुधननामा समस्ति वित्ताढ्यः ॥ भार्या च तस्य महिमा । मायासद्बुद्धिदु·
र्ललिता ॥ ६९ ॥ धनदत्तो नाम सुत—स्तस्या वररूपयौवनसमेतः ॥ पित्रा ततो विभूत्या । स·
मानवररूपकलितानां ॥ ७० ॥ इभ्यकुलबालिकानां । चतसृणां ग्राहितः करं यावत् ॥ तावज्जन·
कः पंच—त्वमुपगतो दैवयोगेन ॥ ७१ ॥ युग्मं ॥ धनदत्तोऽपि कदाचि—द्देशांतरगमनहेतवे नि·
त्यं ॥ लोभं दर्शयमानै—रिव निश्चयं कारितो मित्रैः ॥ ७२ ॥ शोभनदिने गृहीत्वा । चतुर्विधं
भांडमुदधितीरेऽसौ ॥ तैरेव समं मित्रैः । संप्राप्तः सुभटशतयुक्तः ॥ ७३ ॥ आरुह्य यानपात्रं । पर·

तीरं प्राप्य लब्धबहुलाभः ॥ स्वपुरंप्रति विनिवृत्तः । प्राप्तो यावज्जलधिमध्ये ॥ ७४ ॥ तावन्मृदुभाजनमिव । गिरिशिखरं प्राप्य यानपात्रं तत् ॥ भग्नं तस्मिन् सोऽपि च । धनदत्तः प्राप्तवान् निधनं ॥ ७५ ॥ उद्धरिते नैकेन च । गत्वा पुरुषेण तत्र महिमायै ॥ प्रछन्नमिदं गुह्यं । कथितं सम्यक्स च तयापि ॥ ७६ ॥ दानेन संगृहीतुं । भणितः प्रछन्नमेव गुह्यमिदं ॥ कर्तव्यं तेनापि च । प्रतिपन्नं झटिति तद्वचनं ॥ ७७ ॥ चिंतयति च सा चित्ते । मम वध्वो भर्तृविरहितास्तावत् ॥ अन्यमपि पतिमसूषां । करोमि सुतसंततिनिमित्तं ॥ ७८ ॥ इति संचिंत्य बहिष्ठा—द्रात्रौ नगराद्विनिर्गता साथ ॥ दृष्टश्च सुखं सुप्तः । कृतपुण्यो देवकुलिकायां ॥ ७९ ॥ उत्पाटि ततश्च तया । पर्यंकारूढ एव निजपुरुषैः ॥ मुक्तो निजगृहमध्ये । क्रमेण यावद्विबुद्धश्च ॥ ८० ॥ कंठे ततो लगित्वा । क्षणं रुदित्वा च सा वदत्येवं ॥ बालोऽपि हृतस्त्वमितो । मम वत्सक मंदपुण्यायाः ॥ ॥ ८१ ॥ अन्वेषितश्च सकले । भूपीठे पुरनगादिदेशेषु ॥ वार्तापि नैव लब्धा । तेनाहं दुःखिता पुत्र ॥ ८२ ॥ अद्य पुनर्मम कथित—स्त्वागमो वत्स मतिमता मुनिना ॥ गेहाच्च निर्गताहं । रात्रौ लब्धश्च सत्पुण्यैः ॥ ८३ ॥ दृष्टश्च कल्पवृक्षः । स्वप्ने गृहमागतो मया पुत्र ॥ तन्मे त्वयाद्य सा-

र्धे । संजातं दर्शनं पुण्यैः ॥ ८४ ॥ तत्कुत्र वर्धितस्त्वं । कालमियंतं स्थितश्च वा कुत्र ॥ किं चापि
सुखं दुःखं । त्वयानुभूतं तदाचक्ष्व ॥ ८५ ॥ अथवेदं मम हृदयं । वज्रशिलासंचयेन ननु घटितं ॥
यत्तव विरहेऽपि दृढं । न गतं शतखंडमेवेदं ॥ ८६ ॥ याहं तव विरहेऽपि तु । जीवामि सुनिर्घृणा
महापापा ॥ अवतारणकं तु कृता । गुणसागर तव शरीरस्य ॥ ८७ ॥ त्वं पुत्र देवगुरुभिः । का·
लमियंतं सुरक्षितो विधुरे ॥ मज्जीवितेन तदलं । कल्पायुर्भव महाभाग ॥ ८८ ॥ सत्तेजसा सती·
नां । प्रभावतः सर्वदेवतानां च ॥ परिवर्धय निजवंशं । विलस तथा विभवविस्तारं ॥ ८९ ॥ दे·
शांतरे विपन्नो । भ्रातृजनीनां च पतिरमूषां तु ॥ तच्चतसृणामपि त्वं । कुलभूषण भव चिरं स्वामी
॥ ९० ॥ इति तस्या मतिवैभव—वशरंजितमुणितगूढचरितोऽपि ॥ प्रतिपद्यते वचोऽस्या । विस्म·
यरसकौतुकापूर्णः ॥ ९१ ॥ अथ ता वध्वोऽपि तया । भणिता नीत्वा रहस्यके स्थाने ॥ एवं स्थि·
ते च कार्ये । विधत्त भर्तारममुमेव ॥ ९२ ॥ यद्वेदेष्वपि भणितं । क्लीबप्रव्रजितगतमृतेषु रमणेषु
॥ यौवनवतीरमणीनां । क्रियते पतिरन्यतम एव ॥ ९३ ॥ तत्क्षेत्रजमपि पुत्रं । जनयित्वा कुरुत
निजकुले रक्षां ॥ युष्मत्सत्कं द्रव्यं । मा राजकुले गच्छतु सर्वं ॥ ९४ ॥ कुंत्याश्च महासत्याः । पु·

त्रा अन्यान्यपतिभिरुत्पन्नाः ॥ श्रूयंते तद्वत्साः । प्रतिपद्यध्वं मम वचांसि च ॥ ९५ ॥ इत्यादि त·
या धूर्त्या । तथा तथा शास्त्रलोकयुक्त्यौघैः ॥ भणिता यथा तकाभिः । प्रतिपन्नं तन्निर्विचाराभिः
॥ ९६ ॥ अथ तस्य समं ताभि—र्निबिडतरप्रेमतंतुबद्धाभिः ॥ भुंजानस्य सुभोगान् । सुरलोके
सुरवरस्येव ॥ ९७ ॥ जाताः सुंदरपुत्रा—स्तासां चतसृणामपि सुरूपाः ॥ क्रमशः समतिक्रांता । द्वा·
दश संवत्सराश्चैवं ॥ ९८ ॥

अथ ता बभाष महिमा । परपुरुषमिमं हलाः परित्यजत ॥ सिद्धे स्वकीयकार्ये । संप्रति कि·
मनेन विधृतेन ॥ ९९ ॥ प्रतिभाषितं वधूभि—र्माभाणीर्मातरीदृशं वचनं ॥ येन वयं परिभुक्ताः
। कथमिव नो भवति भर्ता सः ॥ १०० ॥ रचिता च तया भृकुटि—स्तकाभिरपि तां विलोक्य सं·
रुष्टां ॥ भयकंपितहृदयाभिः । प्रतिपन्नं झगिति तद्वचनं ॥ १ ॥ पृष्टा च ततः श्वश्रू—र्यथांब तव
सम्मतेन संबलकं ॥ एतस्य किमपि कुर्मो । यथेप्सितं कुरुत सावोचत् ॥ २ ॥ ताभिस्ततः सहर्षं ।
सुंदररत्नानि मोदकेषु च ॥ क्षिप्तानि प्रच्छन्नं । सुखी भवत्विति विकल्पेन ॥ ३ ॥ कृत्वा मोदकपू·
र्णां । स्थपिकास्य निवेशिता शिरोदेशे ॥ श्वश्र्वा प्रपाय्य मद्यं । सुखसुप्तक एव कृतपुण्यः ॥ ४ ॥

उत्पाट्य खट्वया सह । नीत्वा तत्रैव पुनरपि स मुक्तः ॥ यत एव च देवकुला—दानीतः पूर्वमा· सीच्च ॥ ५ ॥ अत्रांतरे स सार्थः । समागतस्तत्र रात्रिरिति कृत्वा ॥ न विवेश नगरमध्ये । विहि· तावासश्च संतस्थौ ॥ ६ ॥ ज्ञात्वा समागतं तं । निजकांतोदंतबोधनार्थाय ॥ यावत्तत्र तदीया । भार्या शीघ्रं समायाता ॥ ७ ॥ तावत्तथैव सुप्तं । पश्यति पर्यंक एव निजकांतं ॥ सद्भावं च सुवेषं नितांतमुपचितशरीरं च ॥ ८ ॥ तं तदवस्थं दृष्ट्वा । सहर्षचित्ता भृशं समुत्थाप्य ॥ आदाय ततः ख· ट्वा—स्थपिकां च गता निजे गेहे ॥ ९ ॥ कृतपुण्यकोऽपि सुविदित—भावार्थो निजकमंदिरं प्रा· प्तः ॥ पश्यति वसंतसेनां । तत्र गतोऽबद्धवेणीकां ॥ १० ॥ यावद्भक्तपाकादिभि—र्व्यंजनमस्य क· र्तुमारब्धं ॥ तावत्तत्पुत्रः किल । समागतो लेखशालायाः ॥ ११ ॥ पतितश्च जनकपदयो—र्बुभु· क्षितो भोजनं च मार्गयति ॥ न च तत्र किंचिदन्नं । संसिध्यति तादृशं तावत् ॥ १२ ॥ दृष्ट्वा रु· दंतमेनं । वसंतसेना ततः समाकृष्य ॥ स्थपिकातो वरमोदक—मस्मै तोषाय दत्तवती ॥ १३ ॥ सोऽपि गतः संतुष्टो । मोदकमादाय लेखशालायां ॥ पश्यति च तस्य मध्ये । सुंदररत्नं महामूल्यं ॥ १४ ॥ दृष्ट्वा तदसावानंद—निर्भरो घुंटको मया लब्धः ॥ दर्शितवानन्येभ्यो । मणिरयमिति

निगदितं गतैः ॥ १५ ॥ तदमुं दम्नः कुल्लु—रिकाय वरमंम्कादि येनासौ ॥ दत्ते प्रतिदिनमस्म—भ्यमिति जणित्वा ददुस्तस्मै ॥ १६ ॥ प्रक्षिप्तस्तेनापि च । निकटस्थितनीरकुंडमध्येऽसौ ॥ तस्य प्रभावतस्त—त्स्थलमिव प्रतिभासते नीरं ॥ १७ ॥ तदसौ तेन ज्ञातो । यथैष जलकांतसन्मणि·र्नूनं ॥ संगोप्य ततः सम्यग् । दत्तं तेभ्यो यथायोग्यं ॥ १८ ॥ इतश्च—

कृतपुण्यकाय कथितं । प्रियंगुलतिकाभिधानया चेट्या ॥ स्वामिन् यदा विमुक्तो । वसंतसे·नाजनन्या त्वं ॥ १९ ॥ तदवेत्य सर्वतोऽपि च । गवेषितो न च प्रवृत्तिमात्रमपि ॥ युष्माकं वि·ज्ञातं । विदधाति ततः स्वामिनी चैतत ॥ २० ॥ वेणीबंधं सितवस्त्र—निवसनं माल्यगंधपरिहारं ॥ अतिदूर्धरगतपतिका—व्रतं चरंती स्थितवतीयं ॥ २१ ॥ कालमियंतं तव गेह—संस्थिता तुच्छका·न्नकृतवृत्तिः ॥ आकर्ण्येदं तामभि । भूयोऽजनि सानुरागोऽसौ ॥ २२ ॥ अथ चान्यदा प्रपातुं । नी·रं नद्या जले समवतीर्णः ॥ सेचनकराजहस्ती । तंतुकजीवेन निगृहीतः ॥ २३ ॥ पूत्कृतं नृपपुंभि—स्तत् श्रुत्वा व्याकुलो नृपो जातः ॥ ब्रूते चाभयकुमारो । देव क्षिप तत्र जलकांतं ॥ २४ ॥ यावद्भांभागारात । स कृष्यते लगति तावदुत्सूरं ॥ अत्याधिकं च करिणो । भवति दृढं ननु विम·

र्दैन ॥ २५ ॥ अथ शीघ्रप्रापणार्थं । जलकांतमणेर्मनुष्यनाथेन ॥ सकलनगरेऽपि तूर्णं । सहसैवं दापितः पटहः ॥ २६ ॥ भो भो जलकांतमणिं । शीघ्रमानीय यः समर्पयति ॥ तस्य नृपो राज्यार्धं । दत्ते वरकन्यकासहितं ॥ २७ ॥ आकर्ण्येदं वाक्यं । शीघ्रं कंदूयकस्तमानीतवान् ॥ क्षिप्तश्च नदीमध्ये । स्थलोऽयमिति तंतुको नष्टः ॥ २८ ॥ तदुपद्रवाद्विमुक्तः । सेचनककरी समागतो गेहे ॥ पृष्टं च ततो राज्ञा । केनैष मणिः समानीतः ॥ २९ ॥ कंदूयकः प्रकथित—स्ततश्च चिंतापरो नृपो ब्रूते ॥ अभय कथं दातव्या । कन्यास्माभिरस्य नीचस्य ॥ ३० ॥ अभयोऽपि प्रतिजल्पति । गेहेऽस्य न संभवंति रत्नानि ॥ अयमेव समुत्पत्तिं । पपृच्छ्यतामस्य रत्नस्य ॥ ३१ ॥ राज्ञापि ततः पृष्टः । सत्यं भो ब्रूहि कथमिव तवायं ॥ तेनापि नरेंद्रभया—द्यथास्थितं सर्वमाख्यातं ॥ ३२ ॥ अभयेन ततो भणितं । भवंति रत्नाकरेषु रत्नानि ॥ कंदूयकोऽपि राज्ञा । विसर्जितः समुचितं दत्वा ॥ ३३ ॥ आहूय ततो राज्ञा । दत्ता कृतपुण्यकाय सा कन्या ॥ राज्यस्यार्धेन समं । तेनाप्यूढा महर्ध्या तु ॥ ३४ ॥ भुंक्ते विशिष्टभोगा—नभयकुमारेण सह सदा विलसन् ॥ अन्यदिने वचनमिदं । ब्रूतेऽभयकुमारमनुसृत्य ॥ ३५ ॥

अत्रैव पुरवरेऽन्या—श्चतस्त्रः संति मम वरा भार्याः ॥ सुतवत्यः स्नेहपरा । न च गेहमहं विजानामि ॥३६॥ भक्तमभयेन कथमिव । कथितं तेनापि मूलतः सर्वं ॥ वयमपि बुध्ध्या विजिता—स्तयेत्यभयो वदत्येवं ॥ ३७ ॥ एवंविधमपि कार्यं । कृत्वैषात्रैव निवसते यस्मात् ॥ अस्माभिरपि न विदिता । अहो सुनैपुण्यमेतस्याः ॥३८॥ तत्तिष्ट निश्चिंतस्त्वं । संप्रति जानामि तव कलत्राणि ॥ इत्युक्त्वा देवकुलं । द्विद्वारं कारितं रम्यं ॥ ३९ ॥ यक्षप्रतिमा तत्र तु । कृतपुण्यकरूपधारिणी विहिता ॥ उद्घोषितं च नगरे । यथा सपुत्राः सकलनार्यः ॥ ४० ॥ यक्षस्य पूजनार्थं । पूर्वेणायांत्वपरतो यांतु ॥ विपरीतकृते तासां । भविता भवं घोर उपसर्गः ॥ ४१ ॥ एवं श्रुत्वा सर्वः । स्त्रीवर्गो बालडिंभपरिकीर्णः ॥ आगतवानथ ता अपि । तत्रायाताः समं डिंभैः ॥ ४२ ॥ अथ यक्षप्रतिमाया—स्तस्यास्ते डिंभकाः समुत्संगे ॥ आरूढा जल्पंत—स्तातस्तातोऽयमिति तुष्टाः ॥ ४३ ॥ एकांतदेशसंस्थौ । निष्क्रांतावभयकुमरकृतपुण्यौ ॥ अपि संप्रेक्ष्य तकौ ता । लज्जातोऽधोमुखा जाताः ॥ ४४ ॥ अभयेनाहूयासौ । वृद्धा निर्भर्त्सिता खरवचोभिः ॥ गाढं यथा तथा सा । पपात पदयोर्द्वयोरपि हि ॥ ४५ ॥ इति सप्तभिः प्रियाभिः । सह भुंजानस्य विषयसुखमुच्चैः ॥ भूयान् गतः

कालो । राजश्रीभूषितांगस्य ॥ ४६ ॥ अत्रांतरे च वीरः । सुरवरनरविसरविनतपदयुगलः ॥ गुणवत्साधुचतुर्दश—सहस्रपरिवारितः श्रीमान् ॥ ४७ ॥ वरविमलकेवलकरै—र्मथितमहामोहविततति-मिरौघः ॥ गुणशिलके सुरवर—कृतसमवसृतावागतो वीरः ॥ ४८ ॥ अथ वर्धापकपुंसा । शीघ्रमागत्य जिनवरागमनं ॥ आख्यातं नरपतये । कृतपुण्याभ्यसमेताय ॥ ४९ ॥

आकर्ण्य जिनागमनं । हर्षवशोल्लसितबहलरोमांचाः ॥ सर्वेऽपि समयविधिना—भिवंद्य तत्रैव जिननाथं ॥ ५० ॥ वर्धापकपुरुषाय च । दत्वा बहु पारितोषिकं दानं ॥ तत्समयसमुचितां ते । कृत्वा सामग्रिकां सर्वां ॥ ५१ ॥ सर्वर्ध्या संप्राप्ता । जिनांतिकं समभिवंद्य विधिपूर्वं ॥ उपविविशुरुचितदेशे । सर्वे शुश्रूषवो धर्मं ॥ ५२ ॥ त्रिभिर्विशेषकं ॥ अथ कर्णसुखदसलिल—जलधरगंभीरधीरघोषेण ॥ प्रारेभे भुवनगुरु—र्भवहरणां देशनामेवं ॥ ५३ ॥ भो भो भव्या भवसा—गरेऽत्र पततां शरीरिणामुच्चैः ॥ सद्धर्म एव कुरुते । तारणमिह सादरं विहितः ॥ ५४ ॥ धर्मः सर्वार्थानां। प्रसाधको मोक्षसौख्यलक्ष्म्याश्च ॥ धर्मो दारिद्र्यमहा—चलस्य निर्दलनवरकुलिशं ॥ ५५ ॥ धर्मेण पूर्वसुकृते-न सुंदरा भवति भोगसल्लक्ष्मीः ॥ तदहो स एव कार्यः । शिवसुखसंपत्तिमिच्छद्भिः ॥५६॥

श्रुत्वेदं सर्वापि च । पर्षत्संवेगमागता ह्यधिकं ॥ कृतपुण्यकोऽपि पृच्छति । शीर्षे संस्थाप्य करकम·
लं ॥ ५७ ॥ जगवन् किं पूर्वजवे । कृतं येन मया संपदीदृक्षा ॥ जोगाश्च सुंदरतराः । संजाताः
सांतराया मे ॥ ५८ ॥ जगवांस्ततस्तस्मै । कथयति निःशेषमेव तच्चरितं ॥ श्रुत्वेदं कृतपुण्य—स्त·
तो गतः परमसंवेगं ॥ ५९ ॥ संस्मृत्य पूर्वजातिं । जणति विशेषेण विस्मयापन्नः ॥ एवमिदं जु·
वनगुरो । जातिस्मरणान्मया ज्ञातं ॥ ६० ॥ संप्रत्यपि तत्स्वामिन् । पृष्ट्वा राजादिकान् गृहीष्येऽहं
॥ निःशेषसौख्यमूलं । प्रव्रज्यां जूरिभवहरिणीं ॥ ६१ ॥ माकार्षीः प्रतिबंधं । जिनेन जणिते ततो
गृहं गत्वा ॥ राजादीनापृच्छ्य च । कृत्वा सामग्रिकां सर्वां ॥ ६२ ॥ विनियोज्य निजं द्रव्यं । चैत्य·
संघादिके शुन्ने स्थाने ॥ तदसौ नृपादिलोकैः । सर्वैरनुगम्यमानश्च ॥ ६३ ॥ सप्तजिरपि प्रियाजिः
। सहैव शिबिकोत्तमां समजिरूढः ॥ संप्राप्तश्च जिनांते । प्रणम्य वीरं जणत्येवं ॥ ६४ ॥ त्रिजिर्वि·
शेषकं ॥ जवशतसहस्रमथनीं । जननीं स्वर्गापवर्गसुखलक्ष्म्याः ॥ ताजिः सह प्रियाजि—र्दीक्षां मे
दीयतां नाथ ॥ ६५ ॥ जगवानपि तां दत्ते । सहानुशिक्षां ततः समर्पयति ॥ तं गणधरस्य साधुं ।
व्रतिनीश्च चंदनार्यायाः ॥ ६६ ॥ तदनु गृहीत्वा शिक्षां । द्विविधामपि दुःकरं तपः कृत्वा ॥ संक्लि·

ख्य निजं देहं । समं कषायैर्विशेषेण ॥ ६७ ॥ अंते समाधिनासौ । मृत्वा सर्वार्द्धिसंगतविमाने ॥ सुरलोके शक्रसमः । समजनि देवो महातेजाः ॥ ६८ ॥ यदतुलधनयुक्ते जन्म जातं कुलेऽस्य । निरूपमगुणयुक्ता यच्च भार्या बभूवुः ॥ यदपि सुरसमाना जज्ञिरे भूरिभोगा—स्तदिह फलमशेषं साधुदानस्य तस्य ॥ ६९ ॥ यदकृत रसयुक्ते पायसस्थालकेऽसौ । मुनिवितरणकाले तत्र रेखाद्वयं सः ॥ झटिति घटितशुभ्रस्वीयभावानुभावा—ज्ञानविदितमभूवन् सांतरास्तेन भोगाः ॥ ७० ॥ इति विभवसुभोगाभोगसौभाग्यकारि । फलमविकलमेवं साधुदाने विलोक्य ॥ विपुलतरगुणश्रीपात्रपात्राय लोका । वितरत वरभक्त्या भक्तपानादि शुद्धं ॥ ७१ ॥ इति कृतपुण्यकथानकं परिसमाप्तं. ॥ उक्ताः प्रकरणकारसूचिताः श्रेयांसादिदृष्टांताः, आद्यादिशब्दसूचिताः शालिभद्रादिदृष्टांताः प्रदर्श्यंते, तत्र शालिभद्रदृष्टांतः संक्षेपतस्तावदयं—

अस्त्यत्र मगधादेशे । पुरं राजगृहाभिधं ॥ तत्रासीत् श्रेणिको राजा । चेल्लणा तस्य सत्प्रिया ॥ १ ॥ इतश्च धन्यका नाम । नारी व्युच्छिन्नवंशका ॥ संगमाख्यं सुतं लात्वा । शालिग्राममुपागता ॥ २ ॥ तत्र च वत्सरूपाणि । चारयति स संगमः ॥ तावद्यावद्ददौ भक्त्या । साधवे वरपा-

यसं ॥ ३ ॥ भूरि स्वयं च तद्भुक्त्वा । मृत्वा राजगृहे पुरे ॥ गोभद्रधनिभद्राख्य—भद्रागर्भे समा-
गतः ॥ ४ ॥ जातः पित्रा कृतं नाम । शालिभद्र इति स्फुटं ॥ द्वात्रिंशत्कन्यका याव—त्परिणीता
मनोरमाः ॥ ५ ॥ यावच्च तत्पिता मृत्वा । जातो देवो महर्द्धिकः ॥ सर्वांश्च शालिभद्रस्य । पूरय-
ति मनोरथान् ॥ ६ ॥ यावत्कंबलवृत्तांतात् । श्रेणिको तद्गृहे ययौ ॥ यावत्प्रभुरिति श्रुत्वा । शा-
लिभद्रो व्यचिंतयत ॥ ७ ॥ यावद्धर्मः श्रुतस्तेन । धर्मघोषपदांतिके ॥ यावदेकैकशो नित्यं । प-
त्नीनां प्रविमोचनं ॥ ८ ॥ दीक्षा यावच्च धन्यस्य । जाता वीरजिनांतिके ॥ यावच्च शालिभद्रोऽपि
। प्रवव्राज जिनांतिके ॥ ९ ॥ यावत्स्वमातृहस्तेन । संजातं तस्य पारणं ॥ विधायानशनं याव—
द्गत्वा वैभारपर्वते ॥ १० ॥ पादपोपगमं कृत्वा । शालिभद्रश्च धन्यकः ॥ स्थितौ तौ तत्र यावच्च ।
मातायाता नृपस्तथा ॥ ११ ॥ अथ द्वावपि तौ साधू । कालं कृत्वा समाधिना ॥ उत्पन्नावुत्तमौ दे-
वौ । सर्वार्थाख्यविमानके ॥ १२ ॥ सिद्धिसौख्योपमं तत्र । भुक्त्वा सौख्यं निरंतरं ॥ सागराणि त्र-
यस्त्रिंश—त्ततश्च्युत्वाथ सेत्स्यतः ॥ १३ ॥ इति परमपवित्रं शालिभद्रस्य साधो—श्चरितमिदमुदारं
सारसंवेगकारि ॥ विहितभविकमोदं सम्यगाकर्ण्य लोकाः । कुरुत विरतिमुच्चैर्गेहसंगं विमुच्य ॥१४॥

छेउवठ्ठावणं भवे बीयं ॥ परिहारविसुद्धीयं । सुहुमं तह संपरायं च ॥ १ ॥ तत्तो य अहक्खायं । खायं सव्वंमि जीवलोगम्मि ॥ जं चरिऊण सुविहिया । वच्चंति अयरामरं ठाणं ॥ २ ॥ सव्वमिणं सामइयं । छेयाइ विसेसओ पुणो भिन्नं ॥ अविसेसियसामइयं । चियमिह सामन्नसन्नाए ॥ ३ ॥ सावज्जजोगविरइत्ति । तह सामाइयं दुहा तं च ॥ इत्तरमावकहंचिय । पढमं पढमंतिमजिणाण ॥ ॥ ४ ॥ तित्थेसु मणारोविय—वयस्स सेहस्स थोवकालीयं ॥ सेसाण मावकहियं । तित्थेसु विदेहगाणं च ॥ ५ ॥ परियायस्स य छेओ—जुत्तोवठावणं वएसु च ॥ छेउवठावणमिह । तमणाइयारेयरं दुविहं ॥ ६ ॥ सेहस्स निरइयारं । तित्थकरसंकमेव तं होज्जा ॥ मूलगुणघाइणो सा—इयारमुभयं च ठियकप्पो ॥ ७ ॥ परिहारेण विसुद्धं । सुद्धोवतवो जहिं विसेसेण ॥ तं परिहारविसुद्धं । परिहारविसुद्धियं नाम ॥ ८ ॥ तं दुवियगप्पं निव्वि—समाणनिव्विठकाइयवसेण ॥ परियाणुपरिहारि—याण कप्पठियस्स चिय ॥ ९ ॥ परिहारो पुण परिहा—रियाण सो गिम्हसिसिरवासासु ॥ पत्तेयं तिविगप्पो । चउत्थयाई तवो नेओ ॥ १० ॥ गिम्हसिसिरवासासु । चउत्थयाईणि बारसं ताणि ॥ अट्ठोकं तीए जहन्न—मज्झिमुक्कोसयतवाणं ॥ ११ ॥ सेसाओ नियमत्ता ।

पायं भत्तं च ताणमायामं ॥ होइ नवएहवि नियमा । न कप्पए सेसयं सवं ॥ १२ ॥ परिहारिया·
णुपरिहा—रियाण कप्पठियस्स चिय जत्तं ॥ छम्मासा होइ तवो । अट्ठारसमासिओ कप्पो ॥ १३ ॥
कप्पसम्मत्तीए तयं । जिणकप्पं वा उवेंति गच्छं वा ॥ ठियकप्पे चिय नियमा । दोपुरिसजुयाइं ते
होज्जा ॥ १४ ॥ कोहाइसंपराओ । तेण जओ स परीइ संसारं ॥ तं सुहुमसंपरायं । सुहुमो जत्था·
वसेसो सो ॥ १५ ॥ सेढिं विलग्गओ तं । विसुज्झमाणं तओवयं तस्स ॥ तह संकिलिस्समाणं । प·
रिणामवसेण विन्नेयं ॥ १६ ॥ अह सद्दो जा हत्थो । आ अभिविहिणा कहियमक्खायं ॥ चरणम·
कसायमुइयं । तमहक्खायं जहक्खायं ॥ १७ ॥ तं दुविगप्पं छउमत्थ—केवलिविहाणओ पुणेक्केक्कं
॥ खयसमजसजोयाजोय । केवलिविहाणओ दुविहं ॥ १८ ॥ तथा पंचधाचारकारिणः पंचधा पंच-
प्रकारमाचारं कुर्वंतीत्येवंशीला ये ते तथा, आचारश्च पंचधा ज्ञानादिः प्रसिद्ध एव, तथा कालो-
चितक्रियासक्ताः कालानुरूपक्रियाकारिण इत्यर्थः, यतः—कालोच्चियजयणाए । मच्छररहियाण उ·
ज्जमंताणं ॥ जणजत्तारहियाणं । होइ जइत्तं जईण सया ॥ १ ॥ तथा—ता तुलियनियबलाणं
। सत्तीए जहागमं जयंताणं ॥ संपुन्नच्चियकिरिया । अज्झसगगाण साहूणं ॥ १ ॥ तथा सामाचा·

॥ इति शालिभद्रकथानकं समाप्तं ॥

एवमन्येऽपि विधिदानमाश्रित्य वसुतेजःप्रभृतयो द्रष्टव्याः, उक्तं च—वसुतेउधणधम्मो । धरणिधरो चेव बंधुधम्मो य ॥ पुव्हजणपसिद्धगाई । विहिदाणे होंति नायाइं ॥ १ ॥ इमानि ज्ञातानि पुनर्हरिभद्रसूरिकृतकथानककोशादवसेयानि ॥ इति दानाधिकारः परिसमाप्तः ॥ उक्तो दानाधिकारः, संप्रति शीलाधिकार उच्यते, अस्य चायमभिसंबंधः, पूर्वत्र दानं सप्रभेदं वर्णितं, दानं पुनरुदाराशयैरेव क्रियते, शीलमप्युदारचित्तैरेव पालयितुं शक्यते, नेतरैरतोऽत्र शीलमुच्यते, तत्र शीलं भेदतो दर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—शीलं चित्तसमाधानं । तच्च द्वेधा प्रकीर्तितं ॥ सर्वतो देशतश्चैव । सर्वतः साधुसत्क्रिया ॥ १ ॥ देशतः सदनुष्टानं । श्रावकाणां जिनोदितं ॥ अथवा शीलशब्देन । ब्रह्मचर्यं निगद्यते ॥ २ ॥ व्याख्या—तत्र शीलसमाधाविति धातुपाठात् शील्यते सर्वसत्वानामबाधया सूत्रानुसारेण प्रवर्तनादात्मा समाधये स्थाप्यतेऽनेनेति शीलं चारित्रं चित्तसमाधानं कषायतापविरहाच्चित्तनिर्वाणं, तच्च तत्पुनर्द्वेधा द्विप्रकारं प्रकीर्तितं कथितं, सर्वतः सर्वं हेयं वस्तु समाश्रित्य, देशतो

देशेन हेयमाश्रित्य, चैवेति समुच्चये, नत्व सर्वतः साधुसत्क्रिया साधुसदनुष्ठानमित्यर्थः, देशतो देशमाश्रित्य श्रावकाणां सदनुष्ठानं देशविरतिलक्षणं जिनोदितं जिनप्रणीतं, अथवेति प्रकारांतरसूचकः, शीलशब्देन शीलध्वनिना ब्रह्मचर्यं चतुर्थव्रतं निगद्यते कथ्यत इति श्लोकद्वयार्थः. ॥१॥२॥ अथास्य पर्यायशब्दानाह—

॥ मूलम् ॥—शीलं वृत्तं च चारित्रं । विरतिश्चरणं तथा ॥ धर्मः संयम इत्याद्याः । शब्दा एकार्थवाचकाः ॥ १ ॥ व्याख्या—श्लोकोऽयं सुगम एव. ॥ १ ॥ अस्यैव शीलस्य ये पालकास्तान् दर्शयन् श्लोकद्वयमाह—

॥ मूलम् ॥—पालयंति पुनश्चैत—द्विशुद्धं सर्वसाधवः ॥ पंचधा चरणोद्युक्ताः । पंचधाचारकारिणः ॥ १ ॥ कालोचितक्रियासक्ताः । सामाचारीत्रयोद्यताः ॥ परीषहोपसर्गाणां । जेतारो विजितेंद्रियाः ॥ २ ॥ व्याख्या—पालयंति सेवंते पुनश्चः समुच्चये, एतदिदं शीलं विशुद्धं सर्वोपाधिविशुद्धं सर्वसाधव इति, किंविशिष्टाः? पंचधा चरणोद्युक्ताः पंचधा पंचप्रकारे चरणे चारित्रे उद्युक्ता उद्यमवंत इति, चारित्रस्य पंचविधं पुनः सामायिकादिभेदेन, उक्तं च—सामाइयं च पढमं ।

छेउवठ्ठावणं भवे बीयं ॥ परिहारविसुद्धीयं । सुहुमं तह संपरायं च ॥ १ ॥ तत्तो य अहक्खायं । खायं सव्वंमि जीवलोगम्मि ॥ जं चरिऊण सुविहिया । वच्चंति अयरामरं ठाणं ॥ २ ॥ सव्वमिणं सामइयं । छेयाइ विसेसओ पुणो भिन्नं ॥ अविसेसियसामइयं । ठियमिह सामन्नसन्नाए ॥ ३ ॥ सावज्जजोगविरइत्ति । तह सामाइयं दुहा तं च ॥ इत्तरमावकहंचिय । पढमं पढमंतिमजिणाण ॥ ॥ ४ ॥ तित्थेसु मणारोविय—वयस्स सेहस्स थोवकालीयं ॥ सेसाण मावकहियं । तित्थेसु विदेहगाणं च ॥ ५ ॥ परियायस्स य छेउ—वट्ठावणं वएसु च ॥ छेउवट्ठावणमिह । तमणाइयारेयरं दुविहं ॥ ६ ॥ सेहस्स निरइयारं । तित्थंकरसंकमेव तं होज्जा ॥ मूलगुणाघाइणो साइयारमुभयं च ठियकप्पो ॥ ७ ॥ परिहारेण विसुद्धं । सुद्धोवतवो जहिं विसेसेण ॥ तं परिहारविसुद्धं । परिहारविसुद्धियं नाम ॥ ८ ॥ तं दुवियगप्पं निव्वि—समाणनिव्विट्ठकाइयवसेण ॥ परियाणुपरिहारि—याण कप्पट्ठियस्स चिय ॥ ९ ॥ परिहारो पुण परिहा—रियाण सो गिम्हसिसिरवासासु ॥ पत्तेयं तिविगप्पो । चउत्थयाई तवो नेओ ॥ १० ॥ गिम्हसिसिरवासासु । चउत्थयाईणि बारसं ताणि ॥ अट्ठोकं तीए जहन्न—मज्झिमुक्कोसयतवाणं ॥ ११ ॥ सेसाओ निययभत्ता ।

पाथं भत्तं च ताणमायामं ॥ होइ नवएहवि नियमा । न कप्पए सेसयं सव्वं ॥ १२ ॥ परिहारिया- णुपरिहा—रियाण कप्पट्ठियस्स चिय जत्तं ॥ छम्मासा होइ तवो । अट्ठारसमासिओ कप्पो ॥ १३ ॥ कप्पसम्मत्तीए तयं । जिणकप्पं वा उवेंति गछं वा ॥ ठियकप्पे चिय नियमा । दोपुरिसजुयाइं ते होज्जा ॥ १४ ॥ कोहाइसंपराओ । तेण जओ स परीइ संसारं ॥ तं सुहुमसंपरायं । सुहुमो जह्वा- वसेसो सो ॥ १५ ॥ सेढिं विलग्गओ तं । विसुज्झमाणं तओवयं तस्स ॥ तह संकिलिस्समाणं । प- रिणामवसेण विन्नेयं ॥ १६ ॥ अह सद्दो जा हत्थो । आ अभिविहिणा कहियमक्खायं ॥ चरणम- कसायमुइयं । तमहक्खायं जहक्खायं ॥ १७ ॥ तं डुविगप्पं छउमच्छ—केवलिविहाणओ पुणेक्केक्कं ॥ खयसमजसजोयाजोय । केवलिविहाणओ दुविहं ॥ १८ ॥ तथा पंचधाचारकारिणः पंचधा पंच- प्रकारमाचारं कुर्वंतीत्येवंशीला ये ते तथा, आचारश्च पंचधा ज्ञानादिः प्रसिद्ध एव, तथा कालो- चितक्रियासक्ताः कालानुरूपक्रियाकारिण इत्यर्थः, यतः—कालोचियजयणाए । मछररहियाण उ- ज्जमंताणं ॥ जणजत्तारहियाणं । होइ जइत्तं जईण सया ॥ १ ॥ तथा—ता तुलियनियबलाणं । सत्तीए जहागमं जयंताणं ॥ संपुन्नच्चियकिरिया । अज्झसरागाण साहूणं ॥ १ ॥ तथा सामाचा-

रीत्रयोद्यता इति, समाचारस्य भावः सामाचारी तस्यास्त्रयं तत्रोद्युक्ता उद्यमपरा इति, सामाचारी· त्रयं पुनरिदं—ओघसामाचारी दशविधसामाचारी पदविभागसामाचारी चेति. तत्रौघसामाचारीयं— पडिलेहणा १ पमज्जण २ । भिक्खिरिया ४ य लोय ५ भुंजणा ६ चेव ॥ पत्तगधुवण ७ वियारा ८ । थंडिल ९ मावस्सया १० ईया ॥ १ ॥ आदिशब्दात्कालग्रहस्वाध्यायादिपरिग्रहः. दशविधसामा चारी पुनरेवं—इच्छामिच्छा तहकारो । आवसिया य निसीहिया ॥ आपुच्छणा य पडिपुच्छा । छंद णा य निमंतणा ॥ १ ॥ उवसंपया य काले इत्यादि. पदविभागसामाचारी त्वेवं—आलोयण १ पडिक्कमणे २ । मीस ३ विवेगे ४ तहावि उस्सग्गे ५ ॥ तव ६ छेय ७ मूल ८ अणव—ठ्या य ९ पारंचिए चेव ॥ १ ॥ अस्य च सामाचारीत्रयस्य भावार्थः स्वस्वस्थानादेवावसेय इति. तथा प· रीषहोपसर्गाणां जेतार इति. तत्र परि समंतात् सह्यंत इति परीषहा अत्यंतं व्याकुलताहेतवोऽप्य· संयमभीरुतया आधाकर्माद्यप्राशुकानेषणीयभक्तपानादिवांछाविनिवर्तनेन सम्यक् सह्यंत इत्यर्थः, ते च क्षुधादयो द्वाविंशतिपरिमाणाः, उपसर्गा दिव्यादयः षोडश, तेषां जेतारो निहंतारः, तथा विजि· तेंद्रिया निगृहीतेंद्रियाः, तत्र द्वाविंशतिपरीषहा एवं—

॥ मूलम् ॥—खुहा १ पिवासा २ सी ३ उण्हं ४ । दंसा ५ चेला ६ रइ ७ इत्थी ८ ॥ चरिया ९ निसीहिया १० सेज्जा ११ । आक्कोस १२ वह १३ जायणा १४ ॥ १ ॥ अलाभ १५ रोग १६ तणफासा १७ । मल १८ सक्कार १९ परीसहा ॥ पन्ना २० अन्नाण २१ सम्मत्तं २२ । इई बावीसं परीसहा ॥ २ ॥ व्याख्या—सुगममिदं श्लोकद्वयं, नवरमरतिः संयमे कथंचिदुत्पन्ना भवेत्, सा च सम्यक् सोढव्या. स्त्री रामा तद्रूपालोकनेऽपि तदभिलाषनिवर्तनेन परिषह्यमाणत्वात् स्त्रीपरीषहः. चर्या ग्रामानुग्रामविहारात्मिका, नैषेधिकी श्मशानादिका स्वाध्यायभूमिः, शय्या उपाश्रयः, आक्रोशो दुर्वाक्यैः, वधो लकुटादिभिस्ताडनं, याचना प्रार्थना, अलाभोऽभीष्टवस्तुविषयः, रोगः कुष्ठादिः, तृणस्पर्शो दर्भादिस्पर्शः, मलः प्रतीतः, सत्कारो वस्त्रादिभिरुपलक्षणत्वात्पुरस्कारश्च द्रष्टव्यः, स चाभ्युत्थानादिसंपादनं, प्रज्ञा स्वयं विमर्शपूर्वको वस्तुपरिच्छेदः, ज्ञानं मत्यादि, तदभावादज्ञानं, सम्यक्त्वं दर्शनं तदेव क्रियादिवादिनां विचित्रमतश्रवणेऽपि सम्यग् परिषह्यमाणं निश्चलचित्ततया धार्यमाणं सम्यक्त्वपरीषह इति. तथा—समुयारो खलु दुविहो । पयमीपुरिसेसु चेव नायव्वो ॥ एएसिं नाणत्तं । वोच्छामि अहाणुपुव्वीए ॥ १ ॥ नाणे चरणे वेए । मोहंमि य अंतराइए चेव ॥ ए-

एसु कम्मेसु । बावीस परीसहा होंति ॥ २ ॥ पन्नानाणपरीसह । नाणावरणंमि होंति दोन्ने ए ॥ एको य अंतराये । अलाभपरीसहो होइ ॥ ३ ॥ अरई य चेल इत्थी । निसीहिया जायणा य अक्कोसे ॥ सक्कारपुरक्कारे । चरित्तमोहम्मि सत्तए ॥ ४ ॥ अरइ दुगंछा य पुं—वेयजयस्स चेव माणस्स ॥ कोहस्स य लोहस्स य । उदएण परीसहा सत्त ॥ ५ ॥ दंसणमोहे दंसण—परीसहो नियमतो भवे एको ॥ सेसा परीसहा खलु । एकारस वेयणिज्जंमि ॥ ६ ॥ पंचेव आणुपुवी । चरिया सेज्जा वहे तह य रोगे य ॥ तणफासजल्लमेव य । एकारस वेयणिज्जंमि ॥ ७ ॥ बावीसं बायरसंप—राए चउदस य सुहुमरागंमि ॥ छउमत्थवीयराए । चउद्दस एकारस जिणंमि ॥ ८ ॥ उपसर्गास्तु षोडशैवं—दिव्वा माणुस्सा तेरिच्छा आयसंवेयणिया, तत्थ दिव्वा चउव्विहा, तं जहा—हासा पउसा विमंसा पुढोविमाया, पृथग् विविधा मात्रा तत्रजवा वैमात्रिकाः, कोऽर्थः? यत्र हास्यप्रद्वेषविमर्शैर्वा उपसर्गाः क्रियंत इत्यर्थः. माणुस्सा चउव्विहा पन्नत्ता तं जहा—हासापउसावीमंसाकुसीलपडिसेवणाउ य, कुत्सितं शीलं कुशीलं तस्य प्रतिसेवना, अयमभिप्रायः—कश्चिदनंगातुरो बलादपि शीलभंगाय प्रवर्तत इत्यर्थः. तेरिच्छा चउव्विहा तं जहा—भया कोहा आहारहे-

क अवचलेण संरक्खणयाए. आयसंवेयणीया चउव्विहा पन्नत्ता तं जहा—पवडणया थंभणया ले· सणया घट्टणया, प्रपतनं भूम्यादौ, स्तंभो हस्तपादादेः, श्लेषणं पंकादौ खुप्पणंति वुत्तं हवइ, घट्ट· नं पाषाणादावात्मन इति. अथ ब्रह्मचर्यस्य शीलत्वेन लोकोत्तरव्यापित्वमाह—

॥ मूलम् ॥—ब्रह्मचर्यं पुनः सर्व—व्रतेष्वप्यतिदुश्चरं ॥ लोके लोकोत्तरे चैव । ख्यातं शी· लमिति स्फुटं ॥ १ ॥ व्याख्या—ब्रह्मचर्यं चतुर्थव्रतं पुनरिति विशेषद्योतकः, सर्वव्रतेषु समस्तप्रा· णातिपातविरमणादिष्वतिदुश्चरं नितरां दुःकरं, उक्तं च—अक्खाण रसणी कम्माण । मोहणं तह वयाण बंभवयं ॥ गुत्तीण य मणगुत्ती । दुक्खं चउरोवि जिप्पंति ॥ १ ॥ लोके लोकोत्तरे चैवेति व्यक्तं, ख्यातं प्रसिद्धं शीलमिति स्फुटं प्रकटमिति श्लोकार्थः. ॥ १ ॥ अथ शीलवतां स्वरूपं शी· लमाहात्म्यं च वर्णयन् श्लोकसप्तकमाह—

॥ मूलम् ॥—यौवनेऽपि समारूढा । वृद्धायंते विवेकिनः ॥ अनाचारे न वर्तंते । शीलमा· लिन्यभीरवः ॥ १ ॥ वधबंधनदुःखानि । नानाकाराः कदर्थनाः ॥ राजादिलोकतो नैव । लभंते शीलशालिनः ॥ २ ॥ विश्वासकारणं शीलं । शीलमुन्नतिकारणं ॥ सर्वसौख्यकरं शीलं । शीलं

कीर्तिकरं परं ॥ ३ ॥ ये नित्यं शीलभूषातः । सर्वांगेषु विभूषिताः ॥ किमन्यैर्भूषणैस्तेषां । भारभूतैर्निरर्थकैः ॥ ४ ॥ करिकेसरिशार्दूल—सर्पानलजलान्यमी ॥ स्तंभयंति क्षणादेव । सुशीलाः शीलसंव्रतः ॥ ५ ॥ सिंहासनायते शूला । कालकूटं सुधायते ॥ मालायंते च शस्त्राणि । येषां शीलं समुज्ज्वलं ॥ ६ ॥ शीलसारगुणाकृष्ट—चेतसोऽमृतभोजिनः ॥ आगछंति स्मृताः संतो । व्रजंति च विसर्जिताः ॥ ७ ॥ व्याख्या—यौवनेऽपि समारूढा इति व्यक्तं, वृद्धायंते वृद्धा इवाचरंति विवेकिनो विवेकवंतोऽनाचारे ब्रह्मचर्यभंगरूपे न प्रवर्तंते न सजंते शीलमालिन्यभीरवः शीलकलंकताभीता इत्यर्थः. ॥ १ ॥ वधबंधनेत्यादिश्लोकः सुगमः. ॥ २ ॥ विश्वासकारणमिति विश्वासो विस्रंभस्तस्य कारणं शीलमित्यादि सुगमं ॥ ३ ॥ तथा शीलभूषयेति शीलमेव भूषाभरणं तया नित्यमित्यादि स्पष्टं ॥ ४ ॥ तथा करीत्यादि करिकेसरिशार्दूलसर्पानलजलानि हस्तिसिंहव्याघ्रभुजगज्वलनपयांसि, अम्येते प्रत्यक्षाः शीलवंतः स्तंभयंति शक्तिभ्रंशेन दूरस्थान्येव नियंत्र्य धारयंति सुशीलाः शीलमंवत इति व्यक्तं. उक्तं च—थंभेइ सीहसद्दूल—गयवरे सप्पजलणगलिलाइं ॥ निम्मलसीलगुणड्ढो । पुरिसो वरसीलमंतेण ॥ ५ ॥ तथा सिंहासनमासनविशेषस्तद्वदा-

चरति शूला कीलकविशेषः प्रतीत एव, कालकूटं विषं सुधायतेऽमृतमिवाचरति, मालायंते मालाः पुष्पादिसृजस्ता इवाचरंति शस्त्राणि खड्गादीनि. उपचाराच्छस्त्रप्रहारा अत्र गृह्यंते, येषां प्राणिनां शीलं समुज्ज्वलमिति ॥ ६ ॥ तथा शीलेत्यादि शीलमेव सारगुणस्तेनाकृष्टचेतसः शीलसारगुणाकृष्टचेतसोऽमृतभोजिनो देवा आगछंत्यायांति स्मृता ध्याताः संतो व्रजंति गछंति, चः समुच्चये, विसर्जिता मुत्कलिताः संत इति. उक्तं च—देविंददाणविंदा । खयरिंदनरिंदचंददिणइंदा ॥ पणमंति भत्तिसारं । पयजुयलं सीलवंताणं ॥ १ ॥ इति श्लोकसप्तकार्थः. ॥ ७ ॥ अथ शील एव दृष्टांतद्वयं सूचयन् वृत्तमाह—

मूलम्—विशालशीले सखः सुरूपः । सुदर्शनः श्रेष्ठिसुतो निदर्शनं ॥ महासती पालितशुद्धशीला । ज्ञातं द्वितीयं त्विह शीलसुंदरी ॥ १ ॥ व्याख्या—वृत्तमिदं सुगमं, नवरं ज्ञातमिति दृष्टांत उदाहरण आहरणमिति पर्यायाः, इदं च दृष्टांतद्वयं ब्रह्मचर्यलक्षणं शीलमधिकृत्य वेदितव्यं, तत्र तावत् सुदर्शनश्रेष्ठिदृष्टांतः कथ्यते, तद्यथा—

अस्त्यत्र भारते वर्षे । पुरग्रामादिसंकुलः ॥ अंगानामवरो देशो । भूमिस्त्रीतिलकोपमः ॥१॥

तत्रास्ति सर्वतो रम्यै—रुत्तुंगैः सुरमंदिरैः ॥ रम्या सुरपुरीवोच्चै—श्चंपानाममहापुरी ॥ २ ॥ बभूव तत्र भूपालो । दातृवाहननामकः ॥ नम्राशेषमहीपाल—मौलिमालार्चितक्रमः ॥ ३ ॥ देवी तस्याभयानाम । धाम सौभाग्यसंपदां ॥ पदं कलाकलापस्य । रूपश्रीकुलमंदिरं ॥ ४ ॥ तस्याश्च पंडिता नाम । धात्री विज्ञानशालिनी ॥ पंडिता सर्वकार्येषु । दक्षा परप्रतारणे ॥ ५ ॥ आसीच्च तत्र जैनेंद्र—धर्मकर्मपरायणः ॥ श्रेष्ठी वृषभदासाख्यः । ख्यातः सर्वत्र सद्गुणैः ॥ ६ ॥ अर्हद्दासीति विख्याता—भवत्तस्य सुगेहिनी ॥ पत्यौ भक्ता गुणैर्युक्ता । रक्ता सर्वज्ञशासने ॥ ७ ॥ श्रेष्ठिवृषभदासस्य । महिषीरक्षकोऽभवत् ॥ धर्मप्रियः प्रकृत्यैव । सुभगाख्यः शुभाशयः ॥ ८ ॥ अन्यदासौ समादाय । महिषीर्गतवान् बहिः ॥ तत्रापश्यत्तपोलक्ष्म्या । युक्तं गुप्तजितेंद्रियं ॥ ९ ॥ कायोत्सर्गस्थितं शांतं । निशांतं गुणसंपदा ॥ पादैरस्पृष्टभूभागं । विद्याचारणसन्मुनिं ॥ १० ॥ युग्मं ॥ तं दृष्ट्वा चिंतयन्नेवं । धन्योऽयं पुण्यवानयं ॥ एतस्य श्लाघ्यते जन्म । जगाम मुनिसन्निधौ ॥ ११ ॥ आसन्नभविकत्वेन । प्रादुर्भूतशुभाशयः ॥ भक्त्याभिवंद्य तं साधुं । पर्युपास्ते क्षणांतरं ॥ १२ ॥ विकाल इति विज्ञाय । गृहीत्वा महिषीस्ततः ॥ स्मरन्नेव मुनिं चित्ते । गतोऽसौ निजमंदिरे ॥१३॥

विधाय निजकं कर्म । महिषीदोहनादिकं ॥ सुष्वाप स्वोचिते स्थाने । विबुद्धश्चिंतयत्यदः ॥ १४ ॥
अहोऽद्य पतत्युच्चैः । शीतं जीवितनाशकं ॥ गृहेऽपि प्रावृतस्यापि । येन मे कंपते वपुः ॥ १५ ॥
स पुनः सन्मुनिस्तत्र । शून्यारण्ये व्यवस्थितः ॥ अप्रावृतो निराधारः । कथं शीतं सहिष्यते ॥१६॥
इत्यादि ध्यायतस्तस्य । रात्रिः क्षयमुपागता ॥ तत उत्थाय कृत्वा च । कृत्यं तत्समयोचितं ॥ १७ ॥
गतः पूर्वक्रमेणासौ । साधोस्तस्य पदांतिकं ॥ भक्त्यावनतगात्रश्च । ववंदे तं मुनीश्वरं ॥ १८ ॥ यु-
ग्मं ॥ अत्रांतरे दिशां चक्रं । प्रद्योतयन् दिवाकरः ॥ समुद्गतस्तिरस्कृत्य । तमिस्रातिमिरोत्करं ॥
॥ १९ ॥ नमोऽर्हद्भ्य इति प्रोच्य । सोऽपि साधुः समाहितः ॥ सुभगस्येक्षमाणस्य । प्रोज्जगाम
विहायसा ॥ २० ॥ तेनाचिंति महामंत्र—मुच्चचार कमप्ययं ॥ गतस्तेन महावेगा—त्क्षणादेव
नभस्तलं ॥ २१ ॥ ममाप्यंबरचारित्वं । भवितास्य प्रभावतः ॥ नमोऽर्हद्भ्य इतीयंती । संजग्राहा-
क्षराणि सः ॥ २२ ॥ ततस्तद्घोषयत्युच्चै—र्यत्र वा तत्र वा स्थितः ॥ भोजनाद्यपि कुर्वाणो । नो
विरमति घोषणात् ॥ २३ ॥ अन्यदा श्रेष्ठिना प्रोक्तः । किमुच्छिष्टः पठस्यमुं ॥ महामंत्रं महाभाग ।
सर्वकल्याणकारणं ॥ २४ ॥ अयं हि सर्वमंत्राणां । विद्यानां शुभसंपदां ॥ कल्याणानां च सर्वेषां ।

परमं कारणं मतः ॥ २५ ॥ तदहो शोभने स्थाने । शुचीभूतेन यत्नतः ॥ ध्यातव्योऽयं महामंत्र
। आत्मनो हितमिच्छता ॥ २६ ॥ बलाण सुभगो नाहं । शक्नोमि चासितुं क्षणं ॥ विना श्रेष्ठिन्नमुं
मंत्रं । प्राणेभ्योऽप्यतिवल्लभं ॥ २७ ॥ तन्माभाणीः किमप्यत्र । कार्ये कार्यविचक्षण ॥ श्रेष्ठिना भ-
णितं वत्स । मनोऽभिरुचितं कुरु ॥ २८ ॥ अयमर्हन्नमस्कारः । पवित्रो मंगलालयः ॥ भविता श्रे-
यसे तुभ्यं । तन्मात्याक्षीः कथंचन ॥ २९ ॥

इत्युक्ते श्रेष्ठिना तूष्णी—भावं कृत्वा व्यवस्थितः ॥ ततः स्वपूर्वकार्याणि । सर्वाण्यपि करोत्य-
सौ ॥ ३० ॥ गृहीत्वा महिषीः सोऽपि । गतवानन्यदा बहिः ॥ कथंचित्ता चरंत्यश्च । गंगापरतीरं
ययुः ॥ ३१ ॥ तासां निवारणायाथ । तन्नमस्कारपूर्वकं ॥ ददौ गंगाजले झंपां । तरतः सुभगो ज-
वात् ॥ ३२ ॥ विद्धोऽतितीक्ष्णकीलेन । निपतन् क्वापि मर्मणि ॥ मृतश्च दैवयोगेन । स्मरन् पंच
नमस्कृतिं ॥ ३३ ॥ वृषभदासभार्यायाः । कुक्षौ समुदपादि सः ॥ अर्हद्दास्यभिधानायाः । सुंदरस्व-
प्नसूचितः ॥ ३४ ॥ अथ पंचसु मासेषु । गतेषु समजायत ॥ अर्हद्दास्या जिनाधीश—पूजाकरण-
दोहदः ॥ ३५ ॥ श्रेष्ठिनापि च विज्ञाय । स्वविभवानुसारतः ॥ अमारिघोषणार्थं च । भूरिदानं प्र-

यच्छता ॥ ३६ ॥ संघं पूजयता सर्वं । सर्वचैत्येषु संततं ॥ अष्टौ दिनानि संभूत्या । चक्रे महाम-
होत्सवं ॥ ३७ ॥ युग्मं ॥ इत्थं विदधता तेन । सर्वचैत्यमहामहं ॥ पूरिते दोहदे पश्चा—त्तुष्टा ग-
र्भमुवाह सा ॥ ३८ ॥ कालक्रमेण संजात—स्तस्याः शोभनवासरे ॥ दारकः स्वप्रभाजालैः । प्र-
द्योतयन् दिशो दश ॥ ३९ ॥ द्वादशाहे च संपूर्णे । महामहपुरस्सरं ॥ सुदर्शन इति ख्यातं । त-
स्य नाम प्रतिष्ठितं ॥ ४० ॥ वपुषा सत्कलाभिश्च । वर्धमानो दिने दिने ॥ शितपक्षे यथा चंद्रो ।
जनतानंदकारकः ॥ ४१ ॥ आरुरोह पुरस्त्रीणां । मनःसंक्षोभकारकं ॥ लोकनेत्रकृतानंदं । सुंदरं
नवयौवनं ॥ ४२ ॥ युग्मं ॥ अथ सागरदत्ताख्य—श्रेष्ठिनो वरकन्यकां ॥ मनोरमाभिधां पित्रा ।
विभूत्या परिणायितः ॥ ४३ ॥ श्रेष्ठिना गृह्णता दीक्षां । स्थापितो निजके पदे ॥ सुदर्शनः सतां
मान्यः । सर्वदैव सुदर्शनः ॥ ४४ ॥ यो बुद्ध्या त्रिदशाचार्यं । रूपेण मकरध्वजं ॥ सुविशुद्धचरि-
त्रेण । विचिक्षेप मुनीनपि ॥ ४५ ॥ लसल्लावण्यसंपूर्णं । सारसौंदर्यसंयुतं ॥ यदीयं वपुरालोक्य ।
संचुक्षुभुः पुरस्त्रियः ॥ ४६ ॥ यस्यास्यं सत्यवाक्येन । सद्विवेकेन मानसं ॥ शरीरं च मनोहारि ।
रूपलक्ष्म्या विभूषितं ॥ ४७ ॥ दाक्षिण्यादिगुणग्रामो । यस्य शंखसमुज्ज्वलः ॥ सर्वं धवलयत्युच्चैः ।

सुतरां रक्ततां नीता ।
परिभ्राम्यन् जगत्त्रयं ॥ ४८ ॥ सर्वज्ञशासनात्यंत—प्रेमरागेण भूयसा ॥ सुदर्शनं समं लक्ष्म्या ।
यस्यास्थिमिंजिका अपि ॥ ४९ ॥ अंतरंगमहाशत्रु—सैन्यसंत्रासकारकं ॥ संपूर्णं सर्वदा चक्रे । नि·
विष्णुरिव दधार यः ॥ ५० ॥ यश्च द्वादशधा धर्मं । सुश्रावकनिषेवितं ॥ राजादीनां महामान्यः ।
ष्कलंकं कृतादरः ॥ ५१ ॥ स इब्भ सुंदराचारः । सुशीलः प्रियभाषकः ॥ न नाम नामधेयेन ।
परां ख्यातिमवाप्तवान् ॥ ५२ ॥ तस्य भार्यापि जैनेंद्र—धर्मरत्नविभूषिता ॥ मनोज्ञाश्च दयादान—
वपुषापि मनोरमा ॥ ५३ ॥ तस्या मनोरमं शीलं । दाक्षिण्यं सुमनोरमं ॥ सर्वज्ञशासने रक्ता ।
सद्विवेकादिका गुणाः ॥ ५४ ॥ सापि सद्धर्मकर्माणि । विदधे सर्वयत्नतः ॥ शुचिकर्मसमाचारो ।
सक्ता साधुजनार्चने ॥ ५५ ॥ सुदर्शनस्य सन्मित्रं । बभूव कपिलाभिधं ॥ स्त्रीजनोचितविज्ञान—
नृपतेश्च पुरोहितः ॥ ५६ ॥ कपिला नाम तद्भार्या । रूपयौवनगर्विता ॥ सुदर्शनगुणग्राम—श्रा·
चतुरा चतुरानना ॥ ५७ ॥ अन्यदा वर्णितो बाढं । कपिलेन तदग्रतः ॥ दृढं जातानुरागा च ।
नुरूपादिकोऽखिलः ॥ ५८ ॥ कपिलापि समाकर्ण्य । तद्रूपादिगुणश्रियं ॥ मम वाक्येन गत्वैवं
दिदृक्षति सुदर्शनं ॥ ५९ ॥ अन्यदा प्रेषिता धात्री । श्रेष्ठिनो मंदिरे तया ॥

। प्रजल्पैवं सुदर्शनं ॥ ६० ॥ यथाद्य तव मित्रस्य । शरीरापाटवं दृढं ॥ तद्विलंबं विना तत्र । श्रे-
ष्ठिन्नागम्यतामिति ॥ ६१ ॥ गत्वा तस्मै तया सर्वं । तथैव च निवेदितं ॥ सुदर्शनोऽपि वेगेन ।
मित्रमंदिरमागतः ॥ ६२ ॥ पप्रच्छ कपिलां श्रेष्टी । भद्रः कुत्रावतिष्टते ॥ तयोदितं गृहस्यास्य । म-
ध्ये सुप्तः प्रतिष्टति ॥ ६३ ॥ भवानपि च तत्रैव । समागच्छतु सत्वरं ॥ इत्युक्ते गतवान् सोऽपि ।
न च पश्यति तत्र तं ॥ ६४ ॥ पृष्टा सा तेन भद्रेऽसौ । ब्राह्मणः किं न दृश्यते ॥ ततस्तस्मै सम
ग्रोऽपि । सद्भावः कथितस्तया ॥ ६५ ॥ यथाहं तव रूपादि—गुणानाकर्ण्य सुंदरान् ॥ तव दर्शन-
मिच्छंती । कष्टं तस्थावियच्चिरं ॥ ६६ ॥ सांप्रतं यदि नैव त्वं । मामिच्छसि दयापर ॥ मदनानल-
संतप्ता । मरिष्यामि तवाग्रतः ॥ ६७ ॥ निर्वापयस्व मे देहं । संगमामृतवारिणा ॥ यावत्कामहुता-
शेन । भस्मतां नीयते न हि ॥ ६८ ॥ तेनोक्तमयि मुग्धासि । भद्रे किं न श्रुतं त्वया ॥ यथाहं
नरवेषेण । बंभ्रमीमि नपुंसकः ॥ ६९ ॥

आकर्ण्येदं विरक्ता द्राग् । ब्रूते सा लज्जिता सती ॥ यदेवं गम्यतां गेहे । क्षांतव्यो मम दु-
र्नयः ॥ ७० ॥ स आत्मानं विमोच्यैवं । जगाम निजमंदिरं ॥ ततोऽचिंति च कीदृक्षे । संकटे प-

गत्वापि नैवमेवांतः । प्रवेष्टव्यं कदा-
तिता वयं ॥ ७१ ॥ गंतव्यं परगेहेषु । न मयातिप्रयोजनं ॥ गतः क्रीमितुमुद्याने । समं सामंतमं-
चन ॥ ७२ ॥ अन्यदा च महाभूत्या । दातृवाहननृपतिः ॥ द्विजैश्च शांतिकर्मज्ञैः । प्रभूतैः
त्रिभिः ॥ ७३ ॥ सुदर्शनादिभिः पौरै—र्नूरिलोकैः समन्वितः ॥ रथारूढाभयादेवी ।
कपिलादिभिः ॥ ७४ ॥ युग्मं ॥ तदनु प्रस्थिता गंतुं । कपिलाब्राह्मणीयुता ॥ सालंकारैः समं पुत्रै-
विभूत्या सपरिच्छदा ॥ ७५ ॥ मनोरमापि सश्रीक—सालंकारविशालिनी ॥ संजनितजनाक्षेपा । प्रत-
श्चतुर्भिः सुमनोहरैः ॥ ७६ ॥ मनोहारिरथारूढा । मनोहारिपरिच्छदा ॥ पप्रच्छ कपिलादेवीं । क-
स्थे गंतुमंजसा ॥ ७७ ॥ एवं च क्रमशस्तासां । गच्छंतीनां सुलीलया ॥ इत्यादि कथिते देव्या ।
स्येयं वरगेहिनी ॥ ७८ ॥ श्रेष्ठिसुदर्शनस्येयं । प्रियास्ति हि मनोरमा ॥ या नपुंसकज-
कपिला चाप्यभाषत ॥ ७९ ॥ अहो वणिग्गिणीनां तु । कीदृशं पश्य कौशलं ॥ सापि
न्योऽपि । जनयंत्येवमात्मजान् ॥ ८० ॥ अभया प्राह हे मुग्धे । ज्ञातं कथमिदं त्वया ॥ मूर्खा-
पूर्वं स्ववृत्तांतं । समाख्याति तदग्रतः ॥ ८१ ॥ ततोऽभया वदत्येवं । सहसा कपिलांप्रति ॥
णामपि मूर्खा त्वं । मुग्धानामपि मुग्धका ॥ ८२ ॥ सत्यं प्रेमगिणीव त्वं । कामज्ञानविवर्जिता ॥

यथैतदपि न ज्ञातं । प्रसिद्धं जगतीतले ॥ ८३ ॥ अयं हि परकीयासु । महिलासु नपुंसकः ॥ स-
र्वदापि न तु स्वेषु । दारेषु मनुजोत्तमः ॥ ८४ ॥ तद्धडे वंचितासि त्वं । छलात्तेन महात्मना ॥
ततः कपिलयाजल्पि । सख्यहं तावदीदृशी ॥ ८५ ॥ कामशास्त्रसुनैपुण्य—कलाकौशलवर्जिता ॥
स्वामिनि तादृशी चाहं । विज्ञाता यादृशी त्वया ॥ ८६ ॥ त्वं पुनः सर्वविज्ञान—कामशास्त्रविशा-
रदा ॥ कुशला सर्वकार्येषु । दक्षा सर्वकलास्वपि ॥ ८७ ॥ जानामि यद्यमु स्वामि—न्येकादपि सु-
दर्शनं ॥ रमयसे तदा त्वं तु । लोके पंडितपंन्डिता ॥ ८८ ॥ श्रुत्वेदमभयादेवी । साक्षेपं प्रत्यभा-
षत ॥ रमये यद्यहं नैनं । तदास्मि ब्रह्मचारिणी ॥ ८९ ॥ इत्थं विधाय सा गर्वं । प्रतिज्ञामतिदु-
र्वहां ॥ गतोद्याने यथाकामं । संक्रीड्य गृहमागता ॥ ९० ॥ ततश्च पंडिता नाम । स्वधात्री भ-
णिता तया ॥ जडे तथा कुरु शीघ्रं । शीघ्रं सर्वप्रयत्नतः ॥ ९१ ॥ सुदर्शनेन सार्धं मे । संगमो
जायते यथा ॥ तयोक्तं च यथा पुत्रि । न त्वया सुंदरं कृतं ॥ ९२ ॥ यतोऽसौ दृढसम्यक्त्वः । सु-
श्रावको दृढव्रतः ॥ सदा स्वदारसंतुष्टः । कथं त्वां कामयिष्यति ॥ ९३ ॥ कथं चेह स आनेयः ।
पुत्रीदमतिदुःकरं ॥ ततो देव्याभिधाय्येवं । प्रतिज्ञेयं मया कृता ॥ ९४ ॥ समं कपिलभट्टिन्या ।

निर्वोढव्या यथा तथा ॥ अतः कर्तव्यमेवेदं । निर्विचारं त्वमांबिके ॥ ९५ ॥ आख्यातुमपि ना·
न्यस्मै । शक्यतेऽदस्त्वया विना ॥ ततः सा क्षणमेकाग्रा । चिंतयित्वा च मानसे ॥ ९६ ॥ ब्रूते
यथैककस्ताव—न्मयोपायः समीक्षितः ॥ तयोक्तमंब कीदृक्षः । सा प्राह शृणु पुत्रिके ॥ ९७ ॥ यु·
ग्मं ॥ अयं हि पौषधं पूर्णं । कुरुते पर्ववासरे ॥ कायोत्सर्गेण रात्रौ तु । तिष्ठति चत्वरादिषु ॥
॥ ९८ ॥ तदृत्से तत्र गत्वाहं । चेटिकावृंदसंयुता ॥ तिष्ठंतं मूकभावेन । वस्त्रैः संवेष्ट्य सर्वतः ॥
॥ ९९ ॥ द्वारपालांश्च वंचित्वा । कंदर्पप्रतिमाछलात् ॥ तमुत्पाट्य ततः स्थाना—दानयामि तवां·
तिकं ॥ १०० ॥ एवं विधीयतां मात—र्देव्या प्रत्युदिते सति ॥ प्रस्तावमीक्षमाणासौ । नित्यं तिष्ठ·
ति पंडिता ॥ १ ॥ अन्यदा चाष्टमीरात्रौ । कायोत्सर्गे व्यवस्थितः ॥ वीक्षितो हट्टमार्गेऽसौ । तया
श्रेष्ठी सुदर्शनः ॥ २ ॥ नानाविधसुरार्चानां । नयनानयनछलात् ॥ मदनप्रतिबिंबस्य । व्याजेनासौ
प्रवेशितः ॥ ३ ॥ अंतःपुरे ततो हृष्टा—भयादेवी समीक्ष्य तं ॥ क्षोभितुं च समारब्धा । सामतो
दंभतस्तथा ॥ ४ ॥ युग्मं ॥ गृहीत्वा सोऽपि साकारं । प्रत्याख्यानं विशेषतः ॥ धर्मध्याने महास·
त्वो । बभूव सुविनिश्चलः ॥ ५ ॥ अभयापि यथाशक्त्या । रजनीं सकलामपि ॥ क्षोभयामास नै·

वासौ । क्षुभितश्च मनागपि ॥ ६ ॥ प्रभाते च निजो देहः । पाटितो नखकोटिभिः ॥ पूत्कर्तुं च समारेभे । महद्भिर्भूरिनिःस्वनैः ॥ ७ ॥ यथैष मां बलादेव । कामयते सुदर्शनः ॥ दारयति नखाग्रैश्च । शीघ्रं धावत धावत ॥ ८ ॥ श्रुत्वेदं तत्र वेगेन । समायातो महीपतिः ॥ पप्रच्छ तं प्रयत्नेन । वृत्तांतः खलु चैषकः ॥ ९ ॥ सोऽपि संशुद्धचित्तत्वा—न्मनागपि न भीतवान् ॥ निःप्रकंपः शुभध्यानः । स्वप्रतिज्ञां लुलोप न ॥ १० ॥ न ददावुत्तरं किंचि—त्ततो रुष्टेन भूभुजा ॥ वध्यत्वेन समादिष्टो । यथास्य छिद्यतां शिरः ॥ ११ ॥ राजादेशाद्गृहीतोऽसौ । पुंभिर्नगररक्षकैः ॥ गाढं विडंबयित्वा च । पुर्यां मध्ये समंततः ॥ १२ ॥ पश्चात्पितृवने नीत्वा । वध्यदेशे निवेश्य च ॥ वाहितः कंठदेशेऽस्य । खड्गो नगररक्षकैः ॥ १३ ॥ देवतायाः प्रभावेन । स प्रहारोऽसिसंभवः ॥ शोभां च कुर्वती कंठे । संजाता पुष्पमालिका ॥ १४ ॥ पुष्पगंधोदवृष्टिश्च । प्रपपात नभःस्थलात ॥ संजनितजनाश्चर्यः । संजज्ञे देवतागमः ॥ १५ ॥ आकर्ण्येदं ततो राजा । समारुह्य महागजं ॥ संयुक्तो भूरिलोकेन । शीघ्रं तत्र समागतः ॥ १६ ॥ पतितः पादयोस्तस्य । क्षामितश्च मुहुर्मुहुः ॥ हस्तिस्कंधं समारोप्य । नगर्यां च प्रवेशितः ॥ १७ ॥ संपूजितश्च वस्त्राद्यै—र्नरेंद्रेण सुदर्शनः ॥

पुरे देशे च सर्वत्र । साधुवादमवाप च ॥ १८ ॥ लोकैः संस्तूयमानश्च । जगाम निजमंदिरे ॥ कुटुंबसुस्थतां कृत्वा । चैत्यादिपूजनं तथा ॥ १९ ॥ राज्ञा स्वजनलोकैश्च । वार्यमाणोऽपि वीरधीः ॥ संवेगाददे दीक्षां । गीतार्थगुरुसन्निधौ ॥ २० ॥ युग्मं ॥

अथ सुदर्शनश्रेष्टि—प्रभावं विश्वविश्रुतं ॥ समाकर्ण्याभयादेवी । भयसंभ्रांतमानसा ॥ २१ ॥ आत्मानं दृढमुद्बध्य । तत्क्षणं सा मृता सती ॥ जाता पाटलिपुत्रस्य । श्मशाने व्यंतरी किल ॥ ॥ २२ ॥ युग्मं ॥ नरनाथभयोत्त्रस्ता । तथा धात्र्यपि पंडिता ॥ चंपापुर्या विनिर्गत्य । पाटलिपुत्रमाययौ ॥ २३ ॥ देवदत्ताभिधानाया । वेश्याया गृहमाश्रिता ॥ ततः सा देवदत्तायाः । स्ववृत्तांतं न्यवेदयत ॥ २४ ॥ एवमाख्यायमानासौ । प्रत्यहं तत्तदग्रतः ॥ यावत् सुखेन तत्रास्ते । तावदन्यत्र वासरे ॥ २५ ॥ अथ सोऽपि महासत्वो । मुनिः सुदर्शनाभिधः ॥ तपःशोषितसर्वांगो । विहरन् मेदिनीतले ॥ २६ ॥ तत्रैव च समायातः । क्रमेण वरपत्तने ॥ शांतमूर्तिर्लसत्कीर्तिः । सद्वृत्तो मुनिसत्तमः ॥ २७ ॥ त्रिभिर्विशेषकं ॥ आगमोक्तविधानेन । भिक्षार्थं पर्यटन्नसौ ॥ प्रविलोकितस्तया धात्र्या । देवदत्तासमेतया ॥ २८ ॥ कथितं च यथा सोऽयं । भगवान् श्रीसुदर्शनः ॥ ततः

स्तं देवदत्तापि । रूपं वीक्ष्य सुविस्मिता ॥ २९ ॥ चेटिकां प्रेषयामास । तदानयनहेतवे ॥ गत्वा तदंतिके सापि । नत्वा तंप्रति भाषते ॥ ३० ॥ यथा भो एहि मद्गेहे । भिक्षामादत्स्व सन्मुने ॥ सोऽप्यायातस्ततस्ताभि—र्गेहमध्ये प्रवेशितः ॥ ३१ ॥ दत्वा द्वारं च गेहस्य । क्षोभितः सकलं दिनं ॥ नानाप्रकारचेष्टाभिः । प्रकामं देवदत्तया ॥ ३२ ॥ सश्रृंगारैः सकामैश्च । जल्पितेङ्गितचेष्टितैः न शशाक च तं सर्वैः । क्षोभितुं कामशास्त्रगैः ॥ ३३ ॥ ततो रात्रौ स चेटीभि—स्त्यक्तो नीत्वा श्मशानके ॥ सोऽपि विशुद्धभावस्थः । कायोत्सर्गेण संस्थितः ॥ ३४ ॥ ततः सा व्यंतरी तस्य । चक्रे वैरानुबंधतः ॥ उपसर्गान् महाघोरान् । सप्ताहानि निरंतरं ॥ ३५ ॥ तस्यापि सहमानस्य । तांश्च मध्यस्थया धिया ॥ वासरे सप्तमे ज्ञान—मुत्पन्नं केवलाभिधं ॥ ३६ ॥ ततो भक्तिसमाकृष्टाः । समायाताः सुरासुराः ॥ चक्रिरे केवलज्ञान—महिमां तस्य सन्मुनेः ॥ ३७ ॥ आगतस्तत्र भूयांश्च । पौरो जानपदो जनः ॥ सद्भक्त्या वंदनार्थाया—नुवृत्त्या कौतुकेन च ॥ ३८ ॥ ततः पद्मासने रम्ये । सुखासीनो मुनीश्वरः ॥ प्रारब्धो देशनां कर्तुं । भव्यसत्वसुखावहां ॥ ३९ ॥ भो भो भव्या महाभीमः । संसारोऽयं शरीरिणां ॥ नानाविडंबनाहेतु—र्नानादुःखसमाकुलः ॥ ४० ॥ नानादुःखौ-

घरूपश्च । नानादुःखानुबंधकृत् ॥ रागादिमूलनिःशेष—कर्मसंताननिर्मितः ॥ ४१ ॥ युग्मं ॥ इह हि नारकतिर्यग्नरामरगतिलक्षणसंसारेऽनेकपुद्गलपरावर्ताचरणचतुरोऽयं जीवो महता क्लेशेन मानुषत्वमासाद्य तत्वार्थाश्रद्धानलक्षणमिथ्यात्वग्रहगृहीतविग्रहो न जानाति कार्याकार्यं; न लक्षयति भक्ष्याभक्ष्यविशेषं, न निरीक्षते पेयापेयं, नावधारयति गम्यागम्यविभागं, न गणयति सुगुणदोषांतरमित्येवं च भ्रांतमनाश्चिंतयत्यसौ नास्ति परलोकसत्ता, न विद्यते शुभाशुभकर्मणां फलसद्भावः, न संभवति पंचभूतातिरिक्तः कश्चिदात्मा, न युज्यते समस्तवस्तुविस्तारवेदी सर्वज्ञः, दूरत एव तदुपदिष्टकष्टानुष्टानप्राप्योऽपवर्ग इति. ततः परलोकासद्भावादेव दोदूयते चराचरजंतून्. जंजल्प्यते परोपतापकारिवचनानि, जरीगृह्यते रारक्ष्यमानानां परेषां धनानि, बोभुज्यते परकलत्राणि, बोभूयतेऽपरिमितधनकनकलंपटैः, आस्वादयेन्नितरां मांसानि. पिबत्यतिशयेन मांसरसमदिरादिकं, न जिघृक्षति मुमुक्षुभिक्षूपदेशं, ततः संचिनोति ज्ञानावरणादिक्लिष्टकर्मकदंबकं, पतति तत्परवशतया घोरांधकारनरकेषु, तत्र च पतितो विपाट्यते तीक्ष्णकरपत्रैः, आरोप्यते वज्रकंटकनिचितशाल्मलीषु. पच्यते कुंभीपाकेन, पाय्यते तप्तं त्रपु, भोज्यते स्वशरीरोत्कर्तितपिशितानि, तार्यते क्वथितपूयरुधि·

रादिजंबालपूर्णां वैतरणीं, छिद्यते पूर्वभवोपात्तकर्मवायुप्रेरितैरसिचक्रकुंतादिप्रहरणैरसिपत्त्रवनेष्विति. ततः पीडानुगतो हा मातर्हा भ्रातस्त्रायध्वं त्रायध्वमिति करुणमाक्रोशति, न चासौ तत्र त्राणमाप्नोति. ततोऽपि कथंचिदुध्धृतः स तिर्यक्त्वमासादयति, तत्रापि वाह्यते पृष्टारोपितं क्रंदन्महाभारं, भक्ष्यते स्वशरीरोद्भवैः कृमिजालैः, पीड्यते क्षुत्पिपासाशीतोष्णाद्युपद्रवशतैरिति. तस्मादपि कथंचिन्निर्गतो यद्यवाप्नोति मनुष्यभावं, तत्रापीष्टवियोगानिष्टसंप्रयोगादिजनितैः संतापैस्तापितशरीरो न लभते धृतिं, कार्यते प्रेष्यादिकं, कदर्थ्यते जराविकारैः, मार्यते परधनहरणादि कुर्वन्नधन्यतया, आक्रम्यते काशशोषभगंदरकुष्टज्वरादिरोगैः, उन्मूल्यते कतिपयदिनमध्ये समवर्तिना. ततोऽल्पितबहुकर्मतया कथंचिदवाप्तामरभावोऽप्याज्ञाप्यते पुरंदरादिभिः, क्लीयते प्रचुरापरर्द्धिदर्शनेन, जीर्यते पूर्वजन्मकृतप्रमादस्मरणेन, पीड्यते भविष्यद्भवगर्भसंभवाचिंतनेन, इत्येवं पर्यालोच्यमानं न किंचित् संसारे सुखमस्ति. एतस्य च मूलबीजं मिथ्यात्वं, अतः संसारसागरमुत्तितीर्षता तदुच्छेदाय यतितव्यं, कथं? प्रतिपत्तव्यार्हन् देवता, अंगीकर्तव्या तन्निदेशवर्तिसाधुदक्षिणा, न हंतव्याः प्राणिनः, न वक्तव्यं परपीडाकरं वचः, न लातव्यमदत्तं परकीयं, न भोक्तव्या परयुवतिः, विधातव्यं परिग्रहपरिमा-

णं, न भोक्तव्यं रजन्यां, प्रवर्तितव्यं दानादौ, परिहरणीयं पिशितलौल्यं, न पातव्यं मदिरादि, ततोऽनेन क्रमेणोत्तरोत्तरगुणप्रतिपत्त्या कर्मशत्रोर्गलपादिकयावाप्यते निरतिशयं शिवसुखमिति. ततः समाकर्ण्य कर्णामृतस्यंदिनीमिमां सुदर्शनमुनिदेशनां प्रबुद्धाः प्रभूतजंतवो यथार्हं प्रतिपद्य धर्मं निजस्थानमुपागताः, सापि व्यंतरी प्रशांतवैरानुबंधा प्रबुद्धा पंडितापि धात्री देवदत्ता च. सुदर्शनमहामुनिरपि तत्रैवमनेकभव्यसत्वोपकारं कृत्वा ततोऽन्यत्र विजहार. चिरं च परिपाल्य संपूर्णसंयमराज्यं, प्रबोध्य च प्रबलविपुलकेवलज्ञानपुरस्सरवागंशुजालैरंशुमालीव प्रभूतभव्यपद्माकरान्, समासाद्य शैलेश्यवस्थां, क्षपयित्वा भवोपग्राहिकर्मचतुष्टयं, परमानंदसुखसंपदास्वादसुंदरं शिवसदनशिखरमासादितवानिति. इमं समाकर्ण्य सुदर्शनस्य । शुद्धस्य शीलस्य महाप्रभावं ॥ निःशेषकल्याणकरे ततो जनाः । शीले विशुद्धे कुरुतादरं सदा ॥ १ ॥ इति सुदर्शनाख्यानकं समाप्तं. अथ शीलसुंदरीकथानकं कथ्यते, तद्यथा—

अस्तीह भारते क्षेत्रे । सुशर्माख्यं महापुरं ॥ तत्रासीद्धनचंडाख्यः । श्रेष्ठी श्रेष्ठश्रियां गृहं ॥ ॥ १ ॥ सुरूपा शीलसंपन्ना । तद्भार्या शीलसुंदरी ॥ लसल्लावण्यसंपन्ना । नवयौवनहारिणी ॥ २ ॥

अन्यदा धनचंद्रेण । देशांतरयियासुना ॥ द्रविणोपार्जनाहेतो—र्भणिता निजगेहिनी ॥ ३ ॥
यथा प्रिये निजं गेहं । रक्षणीयं प्रयत्नतः ॥ स्वकीयं शीलरत्नं च । देवानामपि दुर्लभं ॥ ४ ॥
इत्युक्त्वा गतः श्रेष्टी । संप्राप्तश्चेप्सितं पुरं ॥ निवासोऽजनि तत्रैव । कुर्वतः क्रयविक्रयं ॥ ५ ॥
शीलसुंदर्यपि स्वीयं । रक्षंती वेश्म यत्नतः ॥ सुंदरं शीलरत्नं च । गमयतिस्म वासरान् ॥ ६ ॥
अन्यदा च समायाते । वसंते चूतचारुणि ॥ उद्यानसंपदं दृष्टुं । चतुरंगबलान्वितः ॥ ७ ॥ ह-
स्तिस्कंधं समारूढो । नरेंद्रश्चंद्रशेखरः ॥ निर्गछन्नगरादुच्चै—रपश्यच्छीलसुंदरीं ॥ ८ ॥ युग्मं ॥ नि-
जगेहे गवाक्षस्थां । लसत्सर्वांगसुंदरीं ॥ दृष्ट्वैनां नृपतिर्बाढं । संजातो मदनातुरः ॥ ९ ॥ ततश्चा-
गमदुद्यानं । शून्येनैव हि चेतसा ॥ मित्रानुरोधतश्चैव । विलोक्य च वनश्रियं ॥ १० ॥ रमयि-
त्वा क्षणं तस्मि—न्नायातो निजमंदिरे ॥ ततो विसर्जयामास । सामंतादिपरिछदं ॥ ११ ॥ युग्मं.
निषण्णश्च ततो गत्वा । पर्यंके सुमनोहरे ॥ गृहीतश्च स कंदर्प—विकारैर्दुःखदायिभिः ॥ १२ ॥
ततश्च चिंतयामास । नराधीशः स्वमानसे ॥ यदिदं कथ्यते साक्षा—न्मंत्रिणां लाघवं तदा ॥१३॥
विचिंत्यैवं ततो राज्ञा । चंद्रनामा निजः पुमान् ॥ आकार्य विजनं कृत्वा । कृतोऽभिन्नरहस्यकः ॥

॥ १४ ॥ तेनोक्तं यदि सा राजन् । सानुरागा त्वयि स्फुटं ॥ कार्यसिद्धिस्ततो नूनं । सर्वा हस्तगतैव हि ॥ १५ ॥ समर्पयाथ मे देव । लेखं स्वाकूतसूचकं ॥ येन तस्या गृहं गत्वा । सादरं तं समर्पये ॥ १६ ॥ लिखितश्च नरेंद्रेण । लात्वा सोऽपि द्रुतं गतः ॥ पश्चिमद्वारतस्तत्र । प्रविष्टश्च क्रमादसौ ॥ १७ ॥ दृष्टा च चंद्रशालायां । स्थिता सा शीलसुंदरी ॥ लेखः समर्पितस्तेन । तस्याः प्रणामपूर्वकं ॥ १८ ॥ तयोक्तं भद्र केनायं । लेखः संप्रेषितो मम ॥ स प्राह किं विचारेण । लेखो हि कथयिष्यति ॥ १९ ॥ तत उद्वेष्टितो लेखो । गृहीत्वा नखकोटिभिः ॥ दृष्टा तया च तत्रैका । गाथेयं सुंदराक्षरा ॥ २० ॥ यथा—

न लहइ गेहम्मि । रइं न बाहिरे नवि य पवरपल्लंके ॥ सुंदरि तुज्झ समागम—समूसुयंतरप्पा मे ॥ २१ ॥ वाचिता च तया तूर्णं । गाथार्थोऽवगतस्तथा ॥ चंद्रेणापि ततः प्रोचे । सादरं व्यक्तया गिरा ॥ २२ ॥ लेखस्तावदयं राज्ञः । संदेशकं त्विमं शृणु ॥ यथा त्वां खलु दृष्ट्वाहं । विद्धो बाणैर्मनोद्भवा ॥ २३ ॥ हारो दहइ सरीरं । दहइ जलद्दावि देहसंलग्गा ॥ ससिकिरणा तणुतवणा । पल्लंको मुम्मुरग्गिसमो ॥ २४ ॥ ता तह करेसु जह कह—वि होइ महदंसणं तए

सर्द्धं ॥ एत्तियमेत्तं जाणिमो । जं जुत्तं तं करिज्जासु ॥ २५ ॥ तयाज्ञापि श्रुतो भद्र । संदेशको
महीपतेः ॥ तदद्यैव तमिस्राया—मेकाक्येव समेतु सः ॥ २६ ॥ इत्युक्त्वा शीलसुंदर्या । सन्मा-
न्य च यथोचितं ॥ चंद्रो विसर्जितः सोऽपि । गत्वावोचन्नराधिपं ॥ २७ ॥ यथा देव त्वमद्यैव । स-
माहूतस्तया निशि ॥ श्रुत्वेदं कृतसन्मान—श्चंद्रो राज्ञा विसर्जितः ॥ २८ ॥ स्वयं च कृतशृंगारो ।
रात्रावेकक एव हि ॥ जगाम शीलसुंदर्या । गेहे रत्नचयांचिते ॥ २९ ॥ आरूढश्चंद्रशालां च ।
रत्नराजिविराजिनीं ॥ ददर्श तत्र पर्यंके । प्रसुप्तां शीलसुंदरीं ॥ ३० ॥ सापि राजानमालोक्य ।
संभ्रमेण समुत्थिता ॥ दत्ते भद्रासनं तस्मै । नानारत्नप्रभासुरं ॥ ३१ ॥ राज्ञोक्तमिदमेवाहं । पर्यं-
ककं समाश्रये ॥ तयावाचि महाराज । मनोऽभीष्टं व्यधीयतां ॥ ३२ ॥ निषण्णस्तत्र राजेंद्र—स्तत-
स्तयापि सादरं ॥ प्रतिपत्तिः कृता सर्वा । पादप्रक्षालनादिका ॥ ३३ ॥ उपविष्टा ततस्तस्य । पुरतः
शुद्धभूतले ॥ राज्ञोक्तममुमेवाशु । पर्यंककं समाश्रय ॥ ३४ ॥ तया प्रोचे महीनाथ । कथं गोमा-
युगेहिनी ॥ मृगेंद्राध्यासितं स्थानं । निःशंकाश्रयति ध्रुवं ॥ ३५ ॥ राजा प्राह किमेतेन । विचा-
रेण कृतेन ते ॥ प्रतिपन्नं त्वमेवाशु । सांप्रतं कुरु सुंदरि ॥ ३६ ॥ तयोक्तं क्रियते देव । केवलं

श्रूयतां क्षणं ॥ यदहं ते समाख्यामि । महाराज कथानकं ॥ ३७ ॥ राजाह कथ्यतां भद्रे । सा-
प्याह श्रूयतामिति ॥ अस्तीह पुष्पचंगेरं । पुरं देवकुलाकुलं ॥ ३८ ॥ बभूव मालिकस्तत्र । कुंद-
केतुरभिधानकः ॥ तस्यारामो वरोऽनेक—वनराजिविराजितः ॥ ३९ ॥ अन्यदा वल्लफल्यर्थं । तस्य
गेहे निजः पुमान् ॥ श्रेष्टिना वसुसारेण । संप्रेषितो गतश्च सः ॥ ४० ॥ याचितो मालिकस्तेन ।
देहि वल्लफलीरिति ॥ मालिकः प्राह वल्लाना—मकालो वर्ततेऽधुना ॥ ४१ ॥ यद्यहो भद्र कालः
स्या—त्तदैति कस्तवांतिकं ॥ इत्युक्त्वा निजके गेहे । जगामाशु पुमानसौ ॥ ४२ ॥ ततो गतो
निजारामे । कुंदकेतुरपि द्रुतं ॥ आदिदेश निजान् वंठान् । युष्माभिर्नो यथाविधि ॥ ४३ ॥ निः-
पावा वृत्तिपर्यंतं । कूपीठे जप्यतां भृशं ॥ सिच्यतां च जलैर्नित्यं । तथैवाकारि तैरपि ॥ ४४ ॥
सिच्यमानाश्च तैर्नित्यं । जाताः पुष्पफलप्रदाः ॥ अन्यदा च मनाक् वल्लान् । फलितान् वीक्ष्य मा-
लिकः ॥ ४५ ॥ सर्वतोऽपि परिभ्राम्य—न्निजारामं व्यलोकयत् ॥ न चालोकि पदं तेन । गवादे-
स्तत्र कस्यचित ॥ ४६ ॥ द्वितीयेऽह्नि ततः सम्य—क्स्वयमेव व्यलोकयत् ॥ फलयंती भृशं वल्लान्
। वृत्तिरेव विलोकिता ॥ ४७ ॥ ततस्तेन विचिंत्यैवं । विस्मयाकुलचेतसा ॥ मया वृत्तिः कृता र-

द्दा—हेतवे वृषिकाजनि ॥ ४८ ॥ जे चेव रक्कगा द्धुं—पगावि ते चेव जह जायंति ॥ नयनीर्ज सरणह्वी । तह जणो कं समल्लियउ ॥ ४९ ॥ जा वल्लरक्कणकए । कहकहवि विणिम्मिया वाम्मी ॥ सच्चिय वल्लविणासं । करेइ हा कह वच्चामि ॥ ५० ॥ विचिंत्यैवं ततस्तस्थौ । विधायाकारसंवरं ॥ कुंदकेतुस्तदाश्चर्यं । जनानां कथयन्नृप ॥ ५१ ॥ तद्राजन् यादृशा वल्ला—स्तादृशो मादृशो जनः ॥ वृत्तिश्च यादृशा तव । तादृशस्त्वं महीपते ॥ ५२ ॥ निर्मितो वेधसा नूनं । प्रजानां परिपालकः ॥ यदि त्वमपि मर्यादा—व्यतिक्रांतं करिष्यसि ॥ ५३ ॥ तस्मादन्यस्य कस्येदं । कथयिष्यामि नृपते ॥ य एव रक्षको लोके । स एवाजनि जक्षकः ॥ ५४ ॥ स्थित्यतिक्रांतिनीरूणि । स्वस्थान्यकलितानि च ॥ तोयानि तोयराशीनां । मनांसि च मनस्विनां ॥ ५५ ॥ एवं स्थिते महाराज । तुभ्यं यदभिरोचते ॥ तद्विधेहि स्वयं चैव । नाषेऽहं किमतः परं ॥ ५६ ॥ आकर्ण्येदं ततो बिभ्रन् । पश्चात्तापं स्वमानसे ॥ तां ब्रवीति स्तुवन्नेवं । तद्गुणै रंजितो यथा ॥ ५७ ॥ धन्नासि तुमं सुंदरि । पत्तपडाया सईणमग्गंमि ॥ नियसीलरयणरक्कण—समुज्जमो जीय तुह एसो ॥ ५८ ॥ अज्जवि वहइ धम्मो । अज्जवि सच्चं वचंति पाणिगणा ॥ अज्जवि संति सईओ । सच्चवियमिणं

तए वयणं ॥ ५९ ॥ नियकुलकलंकजणयं । मज्जायाविलोयकारयं भणियं ॥ अविलंबिऊण का-
पुरिस—चेट्ठियं जं मए जणियं ॥ ६० ॥ तं सव्वं खमसु तुमं । संपइ सूरुग्गमो समासन्नो ॥ व-
च्चामि निययभुवणं । अलक्खिओ चेव लोएण ॥ ६१ ॥ ततश्च शीलसुंदर्या । भाषितं मृदुभाषया
॥ एवं विधेहि भो राजन् । निजं गेहमलंकुरु ॥ ६२ ॥ ततो यावन्निजगेहा—दुत्तरतिस्म भूपतिः
॥ तावद्देशांतराचत्र । धनचंद्रः समागतः ॥ ६३ ॥ एकाकी पश्चिमे भागे । द्वारेण प्रविशन् गृहं ॥
निजगेहान्नराधीशं । निर्गच्छंतं प्रपश्यति ॥ ६४ ॥ ततश्च धनचंद्रोऽपि । तस्य मार्गं विमुक्तवान् ॥
निर्गच्छतस्ततो राज्ञः । साशंकस्य द्रुतं द्रुतं ॥ ६५ ॥ नामांकं च पपाताशु । मुद्रारत्नमलंकृतं ॥
गतश्च स्वगृहे राजा । लज्जितो निजचेष्टितैः ॥ ६६ ॥ युग्मं ॥ धनचंद्रोऽपि तन्मुद्रा—रत्नमादाय
सत्वरं ॥ जगामोपरिवर्तिन्यां । भूमिकायां स्ववेश्मनः ॥ ६७ ॥ तत्र चालोकयामास । प्रतिस्तंभनि-
वेशितान् ॥ रत्नराशींस्तथा पुष्प—प्रकरांचितकुट्टिमं ॥ ६८ ॥ वासभवनं च तद्—वस्त्राद्युल्लोच-
सुंदरं ॥ भोगांगयुक्तपर्यंक—सुप्तां च शीलसुंदरीं ॥ ६९ ॥ ततोऽसौ विस्मयं चित्ते । विषादं च व-
हन् भृशं ॥ हाहा किमेतदित्येवं । तस्थौ तत्रैव चिंतयन् ॥ ७० ॥ धनचंद्रं तथालोक्य । शीलसुं-

दर्यपि द्रुतं ॥ ससंभ्रमं समुत्थाय । पर्यंकादासनं ददौ ॥ ७१ ॥ चरणक्षालनार्थं च । गृहीत्वा जलमागता ॥ विलोक्य च सहर्षां तां । धनचंडो व्यचिंतयत् ॥ ७२ ॥ जसु निमित्तु हयहीयडा । पइजलनिहि तरिज्ज ॥ तं कलत्तु एवंविह—दुन्नयसयसंभरिज्ज ॥ ७३ ॥ एउ अपुव्वु जं पेक्खे । विलज्जवि नवि करेइ ॥ हरिसुल्लसियमुहुल्लउ । मुहु अग्गइ धरेइ ॥ ७४ ॥ वरवेल्लिउ मातियवइ । दुसवइ जाह पलंति ॥ जो एक्कसि वेढेंति तरु । सो मरणेहि मुंचंति ॥ ७५ ॥ बहुविहकवमकुहेमय—संसयसयमंदिरं हवइ महिला ॥ कह मइलियं नियकुलं । नरवइणा पुरिससीहेण ॥ ७६ ॥

किमिदानीं प्रकुर्वेऽहं । किं कृतं सुकृतं भवेत ॥ किमित एव गछामि । गेहं मुक्त्वा वनांतरं ॥ ७७ ॥ किंवाहं तर्जयाम्येनां । नाम्नैव शीलसुंदरीं ॥ अथवेह न कर्तव्यं । मंदालोचितकं मया ॥ ७८ ॥ यतः—मंदालोइयकज्जे । सहसच्चिय जे नरा पयट्टंति ॥ बझंति ते वराया । दीवसिहाए पयंगव्व ॥ ७९ ॥ अतः कार्यमिदं सम्य—क्पूर्वापर्येण सर्वथा ॥ कृत्वा पश्चादहं सर्वं । करिष्यामि यथोचितं ॥ ८० ॥ विचिंत्यैवं तया दत्तं । स आसनमशिश्रियत् ॥ पृष्टा च सा यथैषा किं । गृहश्रीः

प्रकटीकृता ॥ ८१ ॥ द्वारेण पश्चिमेनैष । को वा विनिर्गतः पुमान् ॥ प्रोक्तस्तयापि वृत्तांतो । भूपा- लागमनादिकः ॥ ८२ ॥ श्रेष्टिनावाचि गंजीरं । कार्यमेतद्धि बालिके ॥ पूर्वापर्येण विज्ञातुं । सं- क्षेपेण न शक्यते ॥ ८३ ॥ बहिश्च मामकः सार्थः । संगोपितोऽवतिष्टते ॥ तस्मात्तत्र व्रजामीति । जणित्वा गतवानसौ ॥ ८४ ॥ स सार्थस्त्वरितस्तेन । नगरांतः प्रवेशितः ॥ दत्वा द्रव्यं निजं सर्वं । विससर्ज परिछदं ॥ ८५ ॥ ततः कृत्वा स्वके स्थाने । समग्रं द्रव्यसंचयं ॥ गृहीत्वा प्राभृतं जूरि— मुद्रारत्नेन संयुतं ॥ ८६ ॥ जगाम नृपतेर्गेहं । प्रविष्टश्चोपविष्टवान् ॥ राजापि चिंतयत्युच्चै । रजनी- व्यतिकरं यथा ॥ ८७ ॥ न कुलं न यावि सीलं । न पोरुसं न चिय कज्जसंसिद्धी ॥ हद्धि विमं- बणच्चिय । अपत्तपुव्वा मए पत्ता ॥ ८८ ॥ अवियारिऊण कज्जं । तं किंपि करेइ एस दुठप्पा ॥ जेणप्पणोवि लज्जइ । जाजीवं सुमरणेणावि ॥ ८९ ॥ संगोणंगेण जियो । लोहसरो कुसुमबाण- वसगोहं ॥ नियअप्पाणवि अ पहू । कहं पहू होमि अन्नाण ॥ ९० ॥ सच्चं वयंति विबुसा । न- बि पिउ जस्स सो जए सुहिउ ॥ पियसंगो जेण कउ । सो नणु दुक्खकणी जाउ ॥ ९१ ॥

यावत्क्षणांतरादूर्ध्वी—कृत्यास्यं वीक्षते नृपः ॥ मूर्ध्नि बद्धांजलिं तं च । धनचंद्रं व्यलोकयत्

॥ ९२ ॥ मुद्रारत्नयुतं भूरि—प्राभृतं च तदंतिके ॥ ततश्च लज्जितश्चित्ते । नरेंद्रश्चाब्रवीदिदं ॥९३॥
यथा भद्र चिराद् दृष्टः । कुत्र तस्थावियच्चिरं ॥ धनचंद्रस्ततः प्राह । राजानं विनयानतः ॥ ९४ ॥
राजेंद्र येन नैवास्ति । मनुष्येण प्रयोजनं ॥ पार्श्वेऽपि वर्तमानोऽत्र । दृश्यते स कथं विभो ॥९५॥
महती मे वर्तते वेला । देवदृष्ट्यभिलाषिणः ॥ राजाह सर्वमेवेदं । क्षंतव्यं भवता मम ॥ ९६ ॥
राज्यप्रयोजनेनाहं । व्यग्रस्तस्थौ क्षणांतरं ॥ तेन त्वमागतोऽप्यत्र । श्रेष्ठिन्नैव मयेक्षितः ॥ ९७ ॥
ततः कृतप्रणामेन । धनचंद्रेण भूपतेः ॥ ढौकितं प्राभृतं मुद्रा—रत्नयुक्तं प्रयत्नतः ॥ ९८ ॥ प्रा-
भृतोपरि तद् दृष्ट्वा । मुद्रारत्नं नृपोऽपि च ॥ लात्वांगुलौ प्रचिक्षेप । श्रेष्ठिनं चाब्रवीदिदं ॥ ९९ ॥
यथा भद्र त्वया भ्रांता । देशा नानाविधाश्चिरं ॥ किं तेषु वीक्षितं किंचि—दाश्चर्यं विस्मयावहं ॥
॥ १०० ॥ श्रेष्ठी प्राह यथा राजन् । दृष्टमत्रैव पत्तने ॥ एकत्र स्वच्छनीरौघ—परिपूर्णतडागिका ॥
॥ १ ॥ तस्यां सिंहो मया दृष्टः । प्रविष्टोंबुपिपासया ॥ निर्गच्छंश्च परं तत्र । तत्वं नावगतं मया ॥
॥ २ ॥ राज्ञाचिंति मनस्येव—मुपालंभो ह्ययं मम ॥ तस्मादुत्तारयाम्यस्य । शंकाविषं स्फुटोदितैः
॥ ३ ॥ एवं विचिंत्य स श्रेष्ठी । विहस्याभाणि भूभुजा ॥ अहो विज्ञातभावार्थो । वृत्तांतस्यास्य

निश्चितं ॥ ४ ॥ यतः—सिहो तह्व पविठो । खणं निविठो न चेव परितुठो ॥ तिसित्तवि य सासंको । विणिग्गत्त लज्जित्त चेव ॥ ५ ॥ तदहो न त्वया श्रेष्टिन् । शंका कार्यात्र वस्तुनि ॥ नामतो ह्यर्थतश्चैव । सत्यं सा शीलसुंदरी ॥ ६ ॥ श्रुत्वेदं भूपमानम्य । स श्रेष्ठी स्वगृहं गतः ॥ आनंदनिर्भरश्चैवं । भाषते शीलसुंदरीं ॥ ७ ॥ यथा त्वं सत्यमेवेह । सर्वथा शीलसुंदरी ॥ तवैव निर्मला कीर्ति—स्त्वमेव च महासती ॥ ८ ॥ इत्युक्त्वा रत्नराजीनि । प्रवराभरणान्यसौ ॥ ददौ तस्यै प्रभूतानि । स वेश्मप्रभुतां तथा ॥ ९ ॥ इत्थं सा निजगेहस्य । स्वामिनी भर्तृवल्लभा ॥ जाता शीलप्रभावेण । कालेन च शिवं ययौ ॥ १० ॥ इति शीलसुंदरीकथानकं समाप्तं. ॥ तदिह निखिलदोषव्रातघाते पटिष्टं । सकलगुणगणानां यद्गरिष्टं वरिष्टं ॥ तदमरनरवंद्यं सर्वकल्याणमूलं । स्वहितनिरतलोकाः पालयध्वं सुशीलं ॥ १ ॥ यतः—जह सुरगिरिणो चूला । जह सुरकरिणो कज्जलमयलेहा ॥ जह फणिवइणो य मणी । जियाण तह भूसणं सीलं ॥ २ ॥ दाणं धणस्स विणत्त । सुयस्स खंती तवोवहाणस्स ॥ सीलं पुण सव्वेसिं । गुणाण परमो अलंकारो ॥ ३ ॥ नाणं वरविन्नाणं । रूवं विणत्त नत्त य विहत्त य ॥ पवरो परक्कमो तह । सीलेण विणा न रेहंं

ति ॥ ४ ॥ सीलं कित्तिकरं जए जसकरं कल्लाणमालाकरं । सीलं सिद्धिकरं समीहियकरं निस्से-
ससोखाकरं ॥ सीलं संतिकरं कुलुन्नइकरं सव्वंगसोहाकरं । सीलं सोहिकरं परं पियकरं सोहग्गल-
च्छीकरं ॥ ५ ॥ सीलं दुठ्ठगरिठ्ठनिठ्ठुरमहारिठ्ठोहनिठ्ठवणं । सीलं दुग्गदुरंतदूसहमहादारिद्दविद्दावणं
॥ सीलं भूयपिसायजोइणमहावेत्तालवित्तासणं । सीलं दुत्तरदुग्गदुग्गइमहादुक्खाण विन्नासणं ॥
॥ ६ ॥ सीलं पावपयंगपूगदहणे चंडप्पईवोवमं । सीलं भीमभवोरुसिंधुतरणे सज्जाणवत्तोवमं ॥
सीलं कम्मकलंकपंकहरणे सन्नीरपूरोवमं । सीलं दोसगिरिंदवंददलणे दंभोलिजालोवमं ॥ ७ ॥
सीलं इंदनरिंदचंदपयवीसंपावणे पच्चलं । सीलं भूरिभयद्दुद्दुयाण परमं भवाणमं भीसणं ॥ सील
सव्वगुणाणमुत्तममहो सीलं परं भूसणं । सीलं सिद्धिपुरंधिसंगममहासोक्खाण संसाहणं ॥ ८ ॥
इति शीलाधिकारः समाप्तः. उक्तः शीलाधिकारः, अथ तपोऽधिकार उच्यते, अस्य चायमभिसंबं-
धः—अनंतराधिकारे शीलमुक्तं, शीलवतामेव तपोऽपि प्रशंसास्पदमास्कंदति, अतोऽत्र तप उच्य-
ते, तत्र तपोमाहात्म्यं सप्रशंसं श्लोकनवकेनाह—

॥ मूलम् ॥—तपः प्रतप्यमानस्य । क्षीयंते कर्मसंचयाः ॥ तत्क्षयाच्चास्ति निर्वाणं । परमानं-

दसुखं ततः ॥ १ ॥ षट्खंडमहीनाथा । यन्नमंति कृतादराः ॥ प्राकृतस्यापि सत्वस्य । तपस्या तत्र कारणं ॥ २ ॥ यन्नीचकुलजातोऽपि । देवानां पूज्यतां गतः ॥ हरिकेशबलः साधु—स्तपस्तत्र निबंधनं ॥ ३ ॥ हीनजातितयोत्पन्नौ । नानालब्धिसमन्वितौ ॥ चित्तसंभूतिनामानौ । तपसा पूज्यतां गतौ ॥ ४ ॥ तपस्विनस्तपस्येव । वसंतीह निरंतरं ॥ शापानुग्रहसामर्थ्यं । तेषां तदनुभावतः ॥५॥ भूरिभोगकरं दानं । शीलं श्लाघादिकारकं ॥ तपश्चाचिंत्यसामर्थ्यं । यस्माच्छक्रोऽपि शंकते ॥ ६ ॥ यथा तेपे तपः कोऽपि । महाटव्यां महातपाः ॥ क्षोभाय प्रेषयामास । भीत इंद्रः सुरस्त्रियः ॥ ७ ॥ येन तीव्रं तपस्तप्तं । संयम्येंद्रियपंचकं ॥ मनोऽपि मारितं येन । भवाब्धिस्तस्य गोःपदं ॥ ८ ॥ मोहं निहंत्यशुभतानवमातनोति । भित्ते च संसृतिभयं भविनां भविष्णु ॥ नागेंद्रचंद्रसुरराजपदं विधत्ते । तप्तं तपस्तनुभृतां किमु यन्न दत्ते ॥ ९ ॥ व्याख्या—इति श्लोकनवकं सुगममेव. तथापि किंचिदुच्यते—

तत्र प्रथमश्लोकः सुगम एव. ॥ १ ॥ षट्खंडमहीनाथाश्चक्रवर्तिनो यद्यस्मान्नमंति नमस्यंति कृतादरा विहितादराः प्राकृतस्यापि नीचस्यापि सत्वस्य तपस्या तपः कारणं निमित्तं ॥ २ ॥ यन्नीच-

कुलजात इति श्लोकद्वयं स्पष्टं ॥ ३ ॥ ४ ॥ तपस्विनस्तपोधनास्तपस्येव तपस्यायामेव वसंति निवसंति निरंतरं सततं, शापानुग्रहसामर्थ्यं, शापो म्रियस्वेत्यादिभणनं, अनुग्रहः पुनर्जीवेति भणनं, तयोः सामर्थ्यं शक्तिस्तेषां तपस्विनां तदनुभावतस्तपःप्रभावात् ॥ ५ ॥ भूरिभोगकरं दानमिति श्लोकः सुगमः, न वरं यस्माच्छक्रोऽपि शंकत इति लौकिकदृष्टांतमाह ॥ ६ ॥ तथा तेपे तप इति सुगमं ॥ ७ ॥ येन तीव्रं तपस्तप्तमिति व्यक्तं, न वरं मनो मारितमिव मारितं धर्मशुक्लध्यानाध्यासादेकाग्रतां नीतं, भवाब्धिर्भवसमुद्रस्तस्य जंतोर्गोःपदं नितरां लघुरित्यर्थः ॥ ८ ॥ मोहं मिथ्यात्वमोहनीयं चारित्रमोहनीयं च कर्म निहंति विनाशयति, अशुभतानवमशुभकर्मप्रकृतिकृशत्वमातनोति विस्तारयति, तथा संसृतिभयं संसारभीतिं भविष्णु भविष्यत्कालभावि भित्ते नाशयति, नागेंद्र इत्यादि स्पष्टमेव. ॥ ९ ॥ चित्रसंभूतिनाम्नोर्मातंगदारकयोश्चरितं हरिकेशमातंगचरितं च कथानकाभ्यामवसेयं, ते चेमे, तद्यथा—

अस्तीह विश्वविख्यातं । पुरं साकेतनामकं ॥ नानाकौतुकसंकीर्णं । संपूर्णं भूरिसंपदा ॥ १ ॥
बभूवाखिलभूपाल—मौलिमालार्चितक्रमः ॥ पुत्रश्चंद्रावतंसस्य । मुनिचंद्राख्यभूपतिः ॥ २ ॥ अथा-

सौ कामभोगेभ्यो । निर्विण्णो भवभीरुकः ॥ मुनेः सागरचंद्रस्य । समीपे व्रतमग्रहीत् ॥ ३ ॥ अ- न्यदा गुरुभिः सार्धं । कुर्वन्नुग्रतरं तपः ॥ संप्रवृत्तः सुसार्थेन । दूरदेशांतरंप्रति ॥ ४ ॥ अथासौ मुनिचंद्राख्यो । महाटव्यास्तटस्थितं ॥ ग्राममेकं तु भिक्षार्थं । प्रविवेश समाहितः ॥ ५ ॥ ततो भिक्षां समादाय । प्रस्थितः सार्थपृष्ठतः ॥ भ्रष्टस्ततो महाटव्या—मितश्चेतश्च पर्यटन् ॥ ६ ॥ चतु- र्भिः क्षुत्पिपासार्तो । दृष्टो गोपालदारकैः ॥ तत्कालोचितमाधाय । ततो भक्त्याभिवंदितः ॥ ७ ॥ कृता च देशना तेन । साधुना साधुधर्मगा ॥ प्रतिबुद्धास्ततः सर्वे । प्रव्रज्यां प्रतिपेदिरे ॥ ८ ॥ तप्यमानास्तपस्तीव्रं । विहरंतिस्म भूतले ॥ चक्रतुश्च मुनी द्वौ तु । जुगुप्सां धर्मगोचरां ॥ ९ ॥ पा- लयित्वा चिरं दीक्षां । ततस्तौ त्रिदिवं गतौ ॥ ततश्च्युत्वा पुरे रम्ये । दशार्णपुरनामनि ॥ १० ॥ सांभिव्यद्विजसंबंधि—दासीकुक्षावुपागतौ ॥ तस्यां द्विजेन तेनैव । जातौ यमलकौ तकौ ॥ ११ ॥ युग्मं ॥ क्रमाद्यौवनमापन्नौ । रम्यं रामाभिरामकं ॥ अन्यदा क्षेत्ररक्षार्थ—मटव्यां तौ गतौ किल ॥ १२ ॥ तत्राधो वटवृक्षस्य । रात्रौ सुप्तौ ततोऽहिना ॥ एको दृष्टः सुदुष्टेन । निष्क्रम्य वटकोटरात ॥ १३ ॥ सर्पोपलंभनार्थाय । भ्राम्यंस्तत्र प्रदेशके ॥ द्वितीयोऽपि हि तेनैव । दष्टः सर्पेण रोषतः ॥

॥ १४ ॥ तत्राकृतप्रतीकारौ । मृत्वा कालिंजरे नगे ॥ मृग्यां युगलभावेन । संजातौ मृगशावकौ ॥
॥ १५ ॥ एकत्रैव चरंतौ तौ । पूर्वसंप्रीतियोगतः ॥ व्याधेनैकशरेणैवा—न्यदा व्यापादितौ ततः ॥
॥ १६ ॥ गंगातीरे समुत्पन्नौ । युग्मत्वेनैव हंसकौ ॥ कालेन यौवनं प्राप्तौ । स्नेहादेकत्र चारिणौ
॥ १७ ॥ एकेन मत्स्यबंधेन । गृहीत्वा पाशकेन तौ ॥ कंधरां वालयित्वा च । रटंतौ विनिपातितौ
॥ १८ ॥ ततो वाणारसीपुर्यां । मातंगस्यार्थशालिनः ॥ भूतदत्ताभिधानस्य । संजातौ पुत्रकौ तकौ
॥ १९ ॥ चित्रसंभूतिनामानौ । तथैव प्रीतिसंयुतौ ॥ सर्वांगसुंदराकारौ । लावण्यामृतकूपकौ ॥२०॥
इतश्च—तस्यामेव महापुर्यां । शंखो नाम नरेश्वरः ॥ नमुचिर्नामतः मंत्री । राज्यकार्याण्यचिंतयत्
॥ २१ ॥ स चान्यदागसि क्वापि । राज्ञा रोषात्समर्पितः ॥ मातंगभूतदत्ताय । प्रछन्नं वधहेतवे ॥
॥ २२ ॥ मातंगस्तमुवाचैवं । यदि भो मामकौ सुतौ ॥ पाठयसि रहःस्थायी । तदा जीवसि नान्यथा ॥ २३ ॥ ततश्च जीविताकांक्षी । तद्वाक्यं प्रतिपद्य सः ॥ तिष्ठन् भूमिगृहे तस्य । पुत्रौ पाठितवानिति ॥ २४ ॥ एवं च तिष्ठते तस्मै । ददती भोजनादिकं ॥ गेहिनी भूतदत्तस्य । लग्ना तत्रैव मंत्रिणि ॥ २५ ॥ ज्ञात्वैवं भूतदत्तोऽपि । तं व्यापादितुमुद्यतः ॥ विद्यागुरुरिति ताभ्यां । दारकाभ्यां

स नाशितः ॥ २६ ॥ पश्चाच्च पुण्ययोगेन । पुरे गजपुराभिधे ॥ नमुचिः प्राप मंत्रित्वं । सनत्कुमारचक्रिणः ॥ २७ ॥

इतश्च तावपि प्रौढ—मारूढौ नवयौवनं ॥ चित्रसंभूतिनामानौ । मातंगवरदारकौ ॥ २८ ॥ प्रोल्लसल्लास्यगीतादि—कलासु सकलास्वपि ॥ जनतानंददात्रीषु । परं प्रकर्षमागतौ ॥ २९ ॥ गायंतौ सुस्वरं गेयं । वेणुवीणादिसंयुतं ॥ वाराणसीजनं सर्वं । चक्रतुर्हृतचेतसं ॥ ३० ॥ अन्यदा च जनानंदे । संजाते मदनोत्सवे ॥ प्रवृत्तासु प्रभूतासु । जनताचर्चरीष्वलं ॥ ३१ ॥ नृत्यंतीषु पुरंध्रीषु । तरुणीषु नरेषु च ॥ निर्गता चित्रसंभूत—वीणयोश्चापि चर्चरी ॥ ३२ ॥ ततः सातिशयं श्रुत्वा । गीतनृत्यादिकं तयोः ॥ वाराणसीजनः सर्व—स्तत्समीपमुपागतः ॥ ३३ ॥ विशेषेणागतास्तत्र । सानंदास्तरुणस्त्रियः ॥ प्रविशंतिस्म तन्मध्ये । निःशंकाः कौतुकाकुलाः ॥ ३४ ॥ ततश्चेर्ष्यालुकत्वेन । लोकेन ब्राह्मणादिना ॥ शंखाय नरनाथाय । वृत्तांतोऽयं निवेदितः ॥ ३५ ॥ यथा मातंगपुत्राभ्यां । देवायं नगरीजनः ॥ विटालितः समग्रोऽपि । यद्धि जानासि तत्कुरु ॥ ३६ ॥ ततस्तयोर्नृपेणापि । प्रवेशो वारितः पुरि ॥ एवं च विहिते तत्र । गतः कालः कियानपि ॥ ३७ ॥

अथान्यदा च संजाते । कौमुदीसुमहोत्सवे ॥ लोलेंद्रियतया बाढं । कौतुकाकुलमानसौ ॥ ३८ ॥
विस्मार्याज्ञां नरेंद्रस्य । विमुच्य च स्वभूमिकां ॥ प्रविष्टौ नगरीमध्ये । तौ चित्रकसंभूतकौ ॥ ३९ ॥
एकत्र प्रेक्षणं रम्यं । तयोः संप्रेक्षमाणयोः ॥ श्रुत्वान्यजंबूकध्वानं । जंबूकानामिवोच्चकैः ॥ ४० ॥
रसिकत्वान्मुखं भंक्त्वा । गीतं निर्गतमंजसा ॥ प्रगातुं च समारब्धौ । निजवस्त्रावृताननौ ॥ ४१ ॥
कर्णामृतरसस्यंदि । संगीतं सुमनोहरं ॥ श्रुत्वा तौ भूरिलोकेन । परितः परिवेष्टितौ ॥ ४२ ॥ गी-
तेनानेन नो नूनं । श्रवणामृतवर्षिणा ॥ बाढमुत्पादितं सौख्य—मित्युक्तं च जनैर्मिथः ॥ ४३ ॥
समाकृष्य ततस्तूर्ण—मुत्तरीयाणि तन्मुखं ॥ वीक्षितं तेन लोकेन । विज्ञातौ च तकौ ततः ॥ ४४ ॥
तावेवैतौ हि मातंग—दारकौ पापकारकौ ॥ अहो यष्ट्यादिभिर्बाढं । हन्यतां हन्यतामिति ॥ ४५ ॥
ततो लत्ता च पेटाद्यै—र्हन्यमानौ पदे पदे ॥ लोकेनाकृष्यमाणौ च । नगरीतो विनिर्गतौ ॥ ४६ ॥
प्राप्तौ च बहिरुद्याने । ततो दूनितचेतसौ ॥ संचिंतयितुमारब्धौ । निंदंतौ च निजं कुलं ॥ ४७ ॥
अहोऽत्यर्थो गुणग्रामः । समग्रोऽपि च मामकः ॥ रूपयौवनसौभाग्य—गीतनृत्यकलादिकः ॥ ४८ ॥
मातंगजातिदोषेण । येनायं दूषितोऽखिलः ॥ तेनैव च पराभूतौ । लोकेनावां पदे पदे ॥ ४९ ॥

युग्मं ॥ अनाख्यायैव बंधूनां । वैराग्यं दधतौ महत् ॥ दक्षिणां दिशमाश्रित्य । प्रवृत्तौ नृतिहेतवे ॥ ५० ॥ गतौ दूरतरं देशं । दृष्टश्चैको महागिरिः ॥ आरूढावथ तौ तस्मिन् । शैले तत्र शिलातले ॥ ५१ ॥ प्रलंबितभुजद्वंद्वं । ध्यायंतं ध्यानमुत्तमं ॥ कायोत्सर्गेण तिष्टंतं । मुनिमेकमपश्यतां ॥ ॥ ५२ ॥ युग्मं ॥ तं दृष्ट्वा जातहर्षौ तौ । गतौ तच्चरणांतिके ॥ सद्भक्त्या वंदितस्ताभ्यां । साधुः साधितसत्क्रियः ॥ ५३ ॥ ध्यानं समाप्य तेनापि । धर्मलाभं प्रदाय च ॥ पृष्टौ तौ भो युवामत्र । किमागमनकारणं ॥ ५४ ॥ ताभ्यामपि स्ववृत्तांत—रूमावर्णनपूर्वकं ॥ तस्मै सुसाधवे सर्वः । स्वाभिप्रायो निवेदितः ॥ ५५ ॥ यथा साधो मरिष्यावः । पतित्वातो महागिरेः ॥ श्रुत्वेदं साधुनाभाणि । संवेगरसपेशलं ॥ ५६ ॥ यथा भो भद्रकौ नेह—ग्युक्तं कर्तुं भवादृशां ॥ बाढं बंधुरबुद्धीनां । प्राकृतजनचेष्टितं ॥ ५७ ॥ शारीरमानसानेक—दुःखानलघनावली ॥ सर्वज्ञभाषिता दीक्षा । भवद्भ्यां क्रियतामिति ॥ ५८ ॥ ततो बृहत्तरव्याधि—पीडितैरिव रोगिभिः ॥ वैद्यस्येव मुनेस्तस्य । वाक्यं ताभ्यां प्रतीप्सितं ॥ ५९ ॥ योग्याविति च विज्ञाय । तेनापि तौ च दीक्षितौ ॥ कालक्रमेण गीतार्थौ । जातौ गुरुप्रसादतः ॥ ६० ॥ षष्टाष्टमादिरूपेण । विकृष्टतपसौ ततः ॥ भावयंतौ

निजात्मानं । विहरंतौ महीतले ॥ ६१ ॥ कालांतरेण संप्राप्तौ । पुरे गजपुराभिधे ॥ स्थिते च बहिरुद्याने । स्थाने साधुजनोचिते ॥ ६२ ॥

अन्यदा च पुरस्यांत—र्मासक्षपणपारणे ॥ संप्रविवेश भिक्षार्थं । मुनिः संभूतिनामकः ॥ ॥ ६३ ॥ अथोच्चनीचगेहेषु । तं भ्राम्यंतं पथांतिके ॥ स मंत्री नमुचिर्नाम । स्वगेहस्थो व्यलोकयत् ॥ ६४ ॥ विज्ञातश्च यथा सोऽय—महो मातंगदारकः ॥ कथयिष्यति मामेष । भूभुजेऽन्यजनाय च ॥ ६५ ॥ इत्याशंकितचित्तेन । तेन तस्य महामुनेः ॥ पुर्या निष्काशनार्थाय । प्रेषिताः पुरुषा निजाः ॥ ६६ ॥ गत्वा तैरपि तत्राशु । यष्टिमुष्ट्यादिभिर्भृशं ॥ स साधुः कटुवाक्यैश्च । नानाकारं कदर्थितः ॥ ६७ ॥ ततस्तैर्हन्यमानस्य । मुनेस्तस्य निरागसः ॥ तेषां वधाय निःक्रांता । तेजोलेश्या मुखांबुजात् ॥ ६८ ॥ ततश्च धूममालाभिः । कृष्णाभ्रपटलैरिव ॥ व्योमेव नगरं सर्वं । सर्वतोऽप्यंधकारितं ॥ ६९ ॥ अथागता जनाः पौराः । कौतुकेन भयेन च ॥ वंदित्वा पादयोर्लग्ना—स्तं शमयितुमुद्यताः ॥ ७० ॥ तथा सनत्कुमारोऽपि । चक्री तत्र समागतः ॥ तं मुनिं शमयत्युच्चै—र्यावन्नासौ प्रशाम्यति ॥ ७१ ॥ तावदाकर्ण्य लोकेभ्यो । नगरं च समंततः ॥ भूरिधूमाकुलं

दृष्ट्वा । चित्राख्यो मुनिरागतः ॥ ७२ ॥ तं मुनिं शमयत्युच्चै—र्यावन्नासौ प्रशाम्यति ॥ विध्यापितः
स चित्रेण । तस्य क्रोधदवानलः ॥ ७३ ॥ संभूतोऽपि ततो भूरि—वैराग्यातिशयं दधत ॥ निव·
र्तिनस्तदुद्देशा—त्तदुद्यानं ततो गतौ ॥ ७४ ॥ चिंतितं च मनस्याभ्या—मावां संलिखितांगकौ ॥
तस्मादनशनं कर्तुं । संप्रति युक्तमावयोः ॥ ७५ ॥ विचिंत्यैवं निजे चित्ते । स्थितावनशनेन तौ ॥
ज्ञात्वा नमूचिवृत्तांतं । सनत्कुमारचक्रिणा ॥ ७६ ॥ रुष्टेन रज्जुभिर्बद्धो । नीतोऽसौ मुनिसन्निधौ ॥
ताभ्यामपि भयोद्भ्रांतः । कारुण्यात्स विमोचितः ॥ ७७ ॥ युग्मं ॥ गत्वा सनत्कुमारोऽपि । ववंदे
तौ महामुनी ॥ सार्धमंतःपुरेणैव । सानंदो भक्तिपूर्वकं ॥ ७८ ॥ स्त्रीरत्नस्य सुनंदायाः । पतंत्याः
पादयोस्ततः ॥ वम्रवालकसंस्पर्शः । संभूतस्य पदद्वये ॥ ७९ ॥ ततश्चालकसंस्पर्श—मनुभूयाति·
कोमलं ॥ वार्यमाणोऽपि चित्रेण । मुनिः संभूतिनामकः ॥ ८० ॥ यद्यस्ति तपसोऽमुष्य । फलं ते·
न भवांतरे ॥ भूयासं चक्रवर्तीति । निदानमकरोदसौ ॥ ८१ ॥ ततो मृत्वा समुत्पन्नौ । सौधर्मे द्वा·
वपि सुरौ ॥ तत्रानुभूय देवर्द्धिं । चित्रजीवस्ततश्च्युतः ॥ ८२ ॥ पुरे पुरिमतालाख्ये । इभ्यपुत्रत·
याजनि ॥ च्युत्वा संभूतिजीवोऽपि । कांपिल्याभिधपत्तने ॥ ८३ ॥ राज्ञो ब्रह्माभिधानस्य । चुल·

नीगर्भसंभवः ॥ चतुर्दशमहास्वप्न—सूचितोऽजनि दारकः ॥ ८४ ॥ त्रिभिर्विशेषकं ॥ विभूत्या विहितं नाम । ब्रह्मदत्त इति स्फुटं ॥ देहोपचयतो वृद्धिं । कलाभिश्च समं ययौ ॥ ८५ ॥ तस्य च ब्रह्मभूपस्य । बभूवुः सुवयस्यकाः ॥ चत्वारश्चतुरालापा । विशालकुलशालिनः ॥ ८६ ॥ काशीजनपदाधीशो । भूपालः कटकाभिधः ॥ श्रीमत्कणेरदत्ताख्यो । राजा गजपुराधिपः ॥ ८७ ॥ कोशलाविषयाधीशो । दीर्घो नाम नरेश्वरः ॥ आसीच्चंपापुरीनाथः । पुष्पचूलाभिधानकः ॥ ८८ ॥ ते च परस्परं सर्वे । वियोगानभिकांक्षया ॥ वर्षमेकैककं याव—द्गाढस्नेहानुरागतः ॥ ८९ ॥ तस्थुर्निजनिजे राज्ये । क्रमतः समुदिताः किल ॥ भोगान् वरविलासांश्च । भुंजानाः सुमनोहरान् ॥९०॥ युग्मं ॥ अन्यदा तिष्टतां तेषां । सानंदं ब्रह्ममंदिरे ॥ समुत्पन्नः शिरोरोगो । दुःसाध्यो ब्रह्मभूपतेः ॥ ९१ ॥ ततस्तेन समाकार्य । कटकादीन् वयस्यकान् ॥ तेषामुत्संगके मुक्तो । ब्रह्मदत्तो निजांगजः ॥ ९२ ॥ उक्ताश्चैते यथा भो भो । युष्माभिः सर्वथाप्ययं ॥ यत्नेन कारयितव्यो । राज्यमात्मीयपुत्रवत् ॥ ९३ ॥ एवं कृत्वा निजे राज्ये । सौस्थ्यं कालगतो नृपः ॥ वयस्यैश्च कृतं तस्य । मृतकार्यं यथोचितं ॥ ९४ ॥

अथोक्तं कटकाद्यैश्च । यावदेष कुमारकः ॥ भवेद्राज्यधुरं धर्तुं । शक्तस्तावदिदं किल ॥ ९५ ॥ राज्यं पाल्यं च ह्यस्माभि—रेवमालोच्य मानसे ॥ दीर्घं तत्र च संस्थाप्य । स्वराज्येष्वितरे गताः ॥ ९६ ॥ युग्मं ॥ गतेषु तेषु दीर्घोऽपि । राज्यं पालयतेऽखिलं ॥ प्रपश्यत्यश्वहस्त्यादि । विशत्यं· तःपुरेऽपि सः ॥ ९७ ॥ चुलन्या च समं राज्य—कार्यं चिंतयते मिथः ॥ ततोऽतिदुर्निवारत्वा—दिंद्रियाणां स्मरस्य च ॥ ९८ ॥ अपाकृत्य च कौलिन्यं । मुक्त्वा च ब्रह्मसौहृदं ॥ संप्रलग्नश्चुलन्यैव । सार्धं कामविमोहितः ॥ ९९ ॥ युग्मं ॥ एवं च वर्धमानाति—प्रेम्णोर्विषयसक्तयोः ॥ व्रजंति वासरा गाढं । महामोहविमूढयोः ॥ १०० ॥ ततो ब्रह्मनरेंद्रस्य । धनुःसंज्ञितमंत्रिणा ॥ चुलनीदी· र्घवृत्तांतो । ज्ञातः सर्वः परिस्फुटं ॥ १ ॥ तेन चाचिंति यः पापः । करोत्यकृत्यमीदृशं ॥ स कथं ब्र· ह्मदत्तस्य । कल्याणं चिंतयिष्यति ॥ २ ॥ विचिंत्यैवं स्वपुत्रस्य । वरधनोर्निवेदितं ॥ यथा पुत्र कु· मारस्य । मातेयं दुष्टशीलका ॥ ३ ॥ तदस्य ज्ञापयस्वेमं । वृत्तांतं रहसि स्फुटं ॥ तेनापि स च निःशेषः । कुमाराय निवेदितः ॥ ४ ॥ कुमारोऽप्यसहन्नेत—त्स्वमातुर्दुष्टचेष्टितं ॥ तस्यास्तद्ज्ञाप· नायैव । क्रीडया कृतवानिदं ॥ ५ ॥ काककोकिलयोर्युग्मं । गृहीत्वा जननीपुरः ॥ रटत्थापदयामा·

स । दुश्चारीदं रुषा वदन् ॥ ६ ॥ अन्योऽपि कोऽपि यश्चैवं । मद्राज्ये प्रकरिष्यति ॥ तस्यैवं निग्रहं घोरं । करिष्येऽहं न संशयः ॥ ७ ॥ अथासौ वासरेऽन्यत्र । गृहीत्वा भद्रहस्तिनीं ॥ संकीर्णहस्तिना सार्ध—मायातो राजमंदिरे ॥ ८ ॥ ततस्तं हस्तिनं रुष्टो । व्यापादयितुमुद्यतः ॥ निवारितश्च तत्रस्थ—राजलोकैः कथंचन ॥ ९ ॥ ततो दीर्घो विदन्नेवं । बभाण चुलनीं यथा ॥ अहं काकः कृतोऽनेन । त्वं पुनः कोकिला प्रिये ॥ १० ॥ श्रुत्वेदं चुलनी प्राह । बालकोऽयं कुमारकः ॥ यद्वा तद्वा लपत्येवं । मान्यथा त्वं विचिंतय ॥ ११ ॥ दीर्घः प्रोवाच नैवेद—मन्यथा भवति प्रिये ॥ व्यापाद्यतां कुमारोऽयं । रतिसौख्यविघातकृत् ॥ १२ ॥ स्वाधीने मयि तेऽन्येऽपि । भविष्यंति हि पुत्रकाः ॥ ततस्तथापि तद्वाक्यं । प्रतिपन्नं विमूढया ॥ १३ ॥ तयोक्तं यद्ययं नाथ । व्यापाद्यते कुमारकः ॥ अलक्षितो जनैः सर्वै—स्तदेदं सुंदरं भवेत् ॥ १४ ॥ दीर्घेणोक्तमिदं कार्यं । स्तोककं सुकरं तथा ॥ क्रियतेऽत्र कुमारस्य । विवाहोऽतिप्रपंचतः ॥ १५ ॥ तत्सामग्र्या सहानेक—स्तंभराजिविराजितं ॥ महज्जतुगृहं गूढ—निर्गमादि विधाप्यतां ॥ १६ ॥ विवाहानंतरं तत्र । वह्निदानप्रयोगतः ॥ अलक्षितमिदं कार्यं । क्रियतामिति मे मतिः ॥ १७ ॥ समालोच्यैवमेकस्य । नृपस्य

दुहिता वृता ॥ प्रारब्धा च विवाहार्थं । ततः सामग्रिकाखिला ॥ १८ ॥
इतश्च ब्रह्मदत्तस्य । कार्यविहितचेतसा ॥ गत्वा दीर्घो नराधीशो । विज्ञप्तो धनुमंत्रिणा ॥
॥ १९ ॥ यथैष वरधनुर्जातः । समर्थो राज्यचिंतने ॥ अहं तु कर्तुमिच्छामि । धर्मं संप्रति भूपते ॥
॥ २० ॥ ततोऽसौ कैतवेनैव । बभाण धनुमंत्रिणं ॥ विधेहि धर्ममत्रैव । किमन्यत्र गतेन ते ॥
॥ २१ ॥ तेनापि प्रतिपद्येदं । गंगातीरे महाप्रपा ॥ कारिता दीयते तत्र । दीनादिभ्योऽन्नपानकं
॥ २२ ॥ ततः सद्दानसन्मान—संगृहीतैः स्वपौरुषैः ॥ सुरंगा खानिता भद्रा । गव्यूतद्वयगामिनी
॥ २३ ॥ नीत्वा जतुगृहे मुक्ता । समायाता च सा वधूः ॥ अभूद्विवाहनेपथ्या । महर्ध्या पुरमावि-
शत ॥ २४ ॥ सुमहर्ध्या च संवृत्तो । विवाहोऽतिमनोहरः ॥ विसर्जितस्तदायातो । लोकः सन्मा-
नपूर्वकं ॥ २५ ॥ तदूर्ध्वं च तया सार्धं । कुमारः प्रेषितो निशि ॥ तद्गृहे च गतः सोऽपि । विस-
र्जितपरिच्छदः ॥ २६ ॥ वधूवरधनुभ्यां च । सार्धं तत्रावतिष्ठतः ॥ कुमारस्य गतं यात्र—द्यामिनीप्रह-
रद्वयं ॥ २७ ॥ ततो दीर्घादितैः पुंभि—र्ज्वालितं जतुमंदिरं ॥ ततः प्रोच्छलितस्तत्र । रौद्रो हाहार-
वो भृशं ॥ २८ ॥ ततः किमु करोमीति । मूढचित्तकुमारकः ॥ किमेतदिति जो मित्र । वरधनुं स

पृष्टवान् ॥ २९ ॥ अभाणि तेन भो भद्र । नेयं सा राजपुत्रिका ॥ अन्या काचिदियं तस्मा—
न्माकृथाः संगमत्र भोः ॥ ३० ॥ पार्ष्णिदृढप्रहारेण । स्थानमेतद्धि हन्यतां ॥ निर्गच्छाव इतो ये-
न । तेनापि च तथा कृतं ॥ ३१ ॥ ततो भित्वांतरस्थानं । विनिर्गत्य सुरंगया ॥ वरधनुः कुमारश्च
। सुरंगाद्वारमागतौ ॥ ३२ ॥

इतश्च धनुना तत्र । पूर्वमेव नियोजितौ ॥ सुजात्यतुरगारूढौ । प्रछन्नौ पुरुषौ निजौ ॥ ३३ ॥
अथ संकेतकस्ताभ्यां । वरधनोः प्रमेलितः ॥ तत आरुह्य तावश्वौ । प्रवृत्तौ गंतुमुच्चकैः ॥ ३४ ॥
गतौ वेगविमुक्ताश्वौ । पंचाशद्योजनानि तौ ॥ अथ दीर्घाध्वखेदेन । मह्यामश्वौ निपेततुः ॥३५॥
संप्रवृत्तौ ततो गंतुं । पादाभ्यामेव सत्वरं ॥ प्राप्तौ कोट्यभिधानं च । ग्राममेकं क्रमादमू ॥ ३६ ॥
अथाभाणि कुमारेण । भो भो वरधनोऽधुना ॥ तृषा मां बाधते बाढं । परिश्रांतोऽस्मि सर्वथा ॥
॥ ३७ ॥ ततो वरधनुर्गत्वा । ग्राममादाय गंन्दकं ॥ समायातः कुमारस्य । ततो मुंडापितं शिरः ॥
॥ ३८ ॥ कषायरक्तवस्त्राणि । कुमारः परिधापितः ॥ श्रीवत्सालंकृतं वक्षः । पट्टेनाछादितं तथा ॥
॥ ३९ ॥ चक्रे वेषपरावर्तं । वरधनुरपि स्वयं ॥ ग्रामस्यांतः प्रविष्टौ तौ । यावत्तावद्द्विजालयात् ॥

॥ ६३ ॥ तावच्च वृषज्ञाह्लादी । शरत्कालः समाययौ ॥ निष्पन्नशस्यसंपद्भि—स्तोषिताशेषपामरः ॥
॥ ६४ ॥ अन्यदा च समाचेलु—स्ते तापसकुमारकाः ॥ कंदमूलफलाद्यर्थं । विकटामटवीमभि ॥
॥ ६५ ॥ तैश्च सार्धं कुमारोऽपि । वार्यमाणोऽपि तापसैः ॥ गतस्तत्र महारण्ये । कौतुकाक्षिप्तमान-
सः ॥ ६६ ॥ पुष्पफलसमृद्धानि । वीक्षमाणो वनानि सः ॥ तत्र हस्तिनमद्राक्षी—न्मत्तं वनप्रचा-
रिणं ॥ ६७ ॥ तं दृष्ट्वा दूरविस्तारि । चकार गलगर्जितं ॥ तत्समाकर्ण्य वेगेन । चलितस्तन्मुखं
गजः ॥ ६८ ॥ कुमारोऽपि ततस्तस्य । गजस्याभिमुखं जवात् ॥ कृत्वा विंटलिकां स्वीय—मुत्तरीय-
कमक्षिपत् ॥ ६९ ॥ करिणापि कराग्रेण । तत्समादाय सत्वरं ॥ व्योमनि क्षिप्तमत्यर्थ—मित्येवं स
पुनः पुनः ॥ ७० ॥ नीतः खेदं कुमारेण । यावत्कोपवशं गतः ॥ तावदुत्पत्य तत्स्कंध—मारूढः
प्रौढविक्रमः ॥ ७१ ॥ युग्मं ॥ ततो नानाप्रकाराभिः । क्रीडाभिः कुमरश्चिरं ॥ तं गजं श्रममानीय
। मुमोच गतकौतुकः ॥ ७२ ॥ ततः प्रतिपथेनैव । प्रविष्टो गंतुमुच्चकैः ॥ मूढपूर्वादिदिग्भाव । इ-
तश्चेतश्च पर्यटन् ॥ ७३ ॥ प्रेक्षतेस्म नदीतीरे । पुरमेकं पुरातनं ॥ पतितानेकगेहौघ—भित्तिमा-
त्रोपलक्षितं ॥ ७४ ॥ युग्मं ॥ यावच्च दर्शनोद्भूत—कौतुकः प्रविलोकयन् ॥ सर्वतो याति वेगेन

। कुमारस्तावदीक्षते ॥ ७५ ॥ पार्श्वमुक्तासिमुद्दाम—विस्फुर्जच्चंडखेटकं ॥ नीलाब्जं सुंदराकार—मेकं वंशकुडंगकं ॥ ७६ ॥

ततस्तेन तदादाय । खड्गरत्नं कुतूहलात् ॥ तत्रैव वाहितं वंश—कुडंगे लीलया किल ॥७७॥ एकेनैव प्रहारेण । छिन्ना सा वंशजालिका ॥ ततो वंशांतरस्थायि—वेपमानोष्ठसंपुटं ॥ ७८ ॥ पपातैकं मनोहारि । शिरःकमलमुद्भटं ॥ दृष्ट्वा च तज्जगौ सोऽथ । अरे दुष्टं मया कृतं ॥ ७९ ॥ त्रिनिर्विशेषकं ॥ धिग्मे व्यवसितेनेति । निंदति चात्मपौरुषं ॥ सखेदो दृष्टवांस्तत्र । वीक्षमाणः कबंधकं ॥ ८० ॥ ऊर्ध्वबद्धपदद्वंद्वं । धूमपानातिलालसं ॥ तदालोक्य च संजाता । तस्याधृतिर्विशेषतः ॥ ८० ॥ युग्मं ॥ पुनश्च भ्रमता तत्र । दृष्टमुद्यानमेककं ॥ तत्र प्रविशता तेना—शोकपादपवेष्टितं ॥ ८१ ॥ सप्तभूमिकमालोकि । प्रासादं च मनोरमं ॥ ततश्च तं समारूढो । यावत्सप्तमभूमिकं ॥ ८२ ॥ युग्मं ॥ दृष्टवांश्च मनोहारि—रूपां तत्र वरस्त्रियं ॥ पृष्टा च सा यथा भद्रे । का त्वं किं चात्र तिष्ठसि ॥ ८३ ॥ ततः ससाध्वसा सापि । वक्तुमेवं प्रचक्रमे ॥ यथा भो भो महाभाग । मामकी महती कथा ॥ ८४ ॥ त्वमेव तावदाचक्ष्व । कुतो वा यासि कुत्र वा ॥ सुतारमधुरोदार—

॥ ४० ॥ निर्गत्यैकेन दासेन । सादरं तौ प्रभाषितौ ॥ यथेहागत्य भो विप्रौ । भुज्यतां तातमंदिरे ॥ ४१ ॥ युग्मं ॥ ततो गतौ तकौ तत्र । भुक्तौ च प्रतिपत्तितः ॥ तदंते च वरैका स्त्री । ब्रह्मदत्तस्य मूर्धनि ॥ ४२ ॥ बंधुमतिं समुद्दिश्य । प्रक्षिपत्यक्षतान् वरान् ॥ ब्रवीति चैष भर्तास्याः । कन्यकाया भवत्विति ॥ ४३ ॥ युग्मं ॥ एतदाकर्ण्य साकूतं । ब्रूते वरधनुस्ततः ॥ किमेतस्य कृते मूर्ख-बटोरेवं प्रखिद्यसे ॥ ४४ ॥ ततः प्राह गृहस्वामी । श्रूयतां कथ्यते तव ॥ नैमित्तिकेन मे येन । समादिष्टं यथा किल ॥ ४५ ॥ यः पटाच्छादितोरस्कः । समित्रस्तव मंदिरे ॥ भोक्ष्यते च स एवैनां । कन्यकां परिणेष्यति ॥ ४६ ॥ इत्यादि सर्वमावेद्य । तस्मिन्नेव हि वासरे ॥ कुमारः कारितस्तेन । पाणिग्रहणमुच्चकैः ॥ ४७ ॥ ततो वरधनुर्ब्रूते । द्वितीये वासरे यथा ॥ गंतव्यं दूरमावाभ्यां । किं कुमार विलंब्यते ॥ ४८ ॥ बंधुमत्या निजं सर्व—मभिप्रायं निवेद्य च ॥ निर्गच्छावो यथाशक्त्या । स्वाभिप्रेतं दिगंतरं ॥ ४९ ॥ तथा कृत्वा गतौ तस्मा—त्स्थानाच्च ग्राममेककं ॥ प्रविष्टस्तत्र नीरार्थं । वरधनुस्ततः क्षणात् ॥ ५० ॥ आगत्य प्रवदत्येवं । ग्राममध्ये श्रुतं मया ॥ सुरंगया प्रयातस्य । ब्रह्मदत्तस्य सर्वतः ॥ ५१ ॥ दीर्घेण निजकैः पुंभि—र्मार्गा बंधापिताः किल ॥ तत्कुमारो-

त्पथेनावां । प्रगह्रावस्तथा कृतं ॥ ५२ ॥

उन्मार्गेणाथ गछंतौ । प्रविष्टौ तौ महाटवीं ॥ ततो न्यग्रोधवृक्षाधो । मुक्त्वातीव तृडर्दितं ॥ ॥ ५३ ॥ कुमारमगमन्नीर—हेतोर्वरधनुः स्वयं ॥ भ्राम्यंस्तत्र दिनस्यांते । दीर्घनिर्युक्तकैर्नरैः ॥ ५४ ॥ यमदूतैरिवालोकि । वरधनुस्ततस्तकैः ॥ हन्यमानश्च दूरस्थः । संकेतं कृतवानसौ ॥ ५५ ॥ त्रिभि-र्विशेषकं ॥ ब्रह्मदत्तस्ततस्तूर्णं । नष्टवांस्तत्प्रदेशतः ॥ पतितश्च महाभीम—मरण्यमतिदुर्गमं ॥५६॥ ततस्तृषाक्षुधाक्रांतो । व्यतिक्रम्य महाटवीं ॥ तृतीये दिवसेऽपश्य—त्तत्रैकं किल तापसं ॥ ५७ ॥ तद्दर्शनेन संजाता । जीविताशा ततस्तकं ॥ पप्रछ च यथा कुत्र । भगवन्नाश्रमस्तव ॥ ५८ ॥ ते-नाप्यावेद्य नीतश्च । पार्श्वे कुलपतेरसौ ॥ नतः कुलपतेः पाद—पद्मयुग्मं नतांगकः ॥ ५ए ॥ पृ-ष्टस्तेन यथा वत्स । कथमत्रागमस्तव ॥ तेनापि मूलतः सर्वो । वृत्तांतः कथितो निजः ॥ ६० ॥ ततः कुलपतिः प्राह । भो वत्सक पितुस्तव ॥ भवामि ब्रह्मनृपस्य । पितृव्योऽहं कनिष्टकः ॥ ६१ ॥ अतस्त्वदीय एवाय—माश्रमो वत्स सर्वथा ॥ तस्मात्तिष्ट त्वमत्रैव । सोऽपि तस्थौ तथैव च ॥ ६२ ॥ तिष्टंस्तत्र सुखेनासौ । धनुर्वेदादिका किल ॥ तापसस्वामिना तेन । ग्राहितः सकलाः कलाः ॥

॥ ६३ ॥ तावच्च वृषभाह्लादी । शरत्कालः समाययौ ॥ निष्पन्नशस्यसंपद्भि—स्तोषिताशेषपामरः ॥
॥ ६४ ॥ अन्यदा च समाचेलु—स्ते तापसकुमारकाः ॥ कंदमूलफलाद्यर्थं । विकटामटवीमधि ॥
॥ ६५ ॥ तैश्च सार्धं कुमारोऽपि । वार्यमाणोऽपि तापसैः ॥ गतस्तत्र महारण्ये । कौतुकाक्षिप्तमान·
सः ॥ ६६ ॥ पुष्पफलसमृद्धानि । वीक्षमाणो वनानि सः ॥ तत्र हस्तिनमद्राक्षी—न्मत्तं वनप्रचा·
रिणं ॥ ६७ ॥ तं दृष्ट्वा दूरविस्तारि । चकार गलगर्जितं ॥ तत्समाकर्ण्य वेगेन । चलितस्तन्मुखं
गजः ॥ ६८ ॥ कुमारोऽपि ततस्तस्य । गजस्याभिमुखं जवात् ॥ कृत्वा विंटलिकां स्वीय—मुत्तरीय·
कमक्षिपत् ॥ ६९ ॥ करिणापि कराग्रेण । तत्समादाय सत्वरं ॥ व्योमनि क्षिप्तमत्यर्थ—मित्येवं स
पुनः पुनः ॥ ७० ॥ नीतः खेदं कुमारेण । यावत्कोपवशं गतः ॥ तावदुत्पत्य तत्स्कंध—मारूढः
प्रौढविक्रमः ॥ ७१ ॥ युग्मं ॥ ततो नानाप्रकाराभिः । क्रीडाभिः कुमरश्चिरं ॥ तं गजं श्रममानीय
। मुमोच गतकौतुकः ॥ ७२ ॥ ततः प्रतिपथेनैव । प्रविष्टो गंतुमुच्चकैः ॥ मूढपूर्वादिदिग्भाव । इ·
तश्चेतश्च पर्यटन् ॥ ७३ ॥ प्रेक्षतेस्म नदीतीरे । पुरमेकं पुरातनं ॥ पतितानेकगेहौघ—भित्तिमा·
त्रोपलक्षितं ॥ ७४ ॥ युग्मं ॥ यावच्च दर्शनोद्भूत—कौतुकः प्रविलोकयन् ॥ सर्वतो याति वेगेन

। कुमारस्तावदीक्षते ॥ ७५ ॥ पार्श्वमुक्तासिमुद्दाम—विस्फुर्जच्चंडखेटकं ॥ नीलाजं सुंदराकार—मेकं वंशकुडंगकं ॥ ७६ ॥

ततस्तेन तदादाय । खड्गरत्नं कुतूहलात् ॥ तत्रैव वाहितं वंश—कुडंगे लीलया किल ॥७७॥ एकेनैव प्रहारेण । छिन्ना सा वंशजालिका ॥ ततो वंशांतरस्थायि—वेपमानोष्टसंपुटं ॥ ७८ ॥ पपातैकं मनोहारि । शिरःकमलमुत्कटं ॥ दृष्ट्वा च तज्जगौ सोऽथ । अरे दुष्टं मया कृतं ॥ ७९ ॥ त्रिभिर्विशेषकं ॥ धिग्मे व्यवसितेनेति । निंदति चात्मपौरुषं ॥ सखेदो दृष्टवांस्तत्र । वीक्षमाणः कबंधकं ॥ ८० ॥ ऊर्ध्वबद्धपदद्वंद्वं । धूमपानातिलालसं ॥ तदालोक्य च संजाता । तस्याधृतिर्विशेषतः ॥ ८० ॥ युग्मं ॥ पुनश्च भ्रमता तत्र । दृष्टमुद्यानमेककं ॥ तत्र प्रविशता तेना—शोकपादपवेष्टितं ॥ ८१ ॥ सप्तभूमिकमालोकि । प्रासादं च मनोरमं ॥ ततश्च तं समारूढो । यावत्सप्तमभूमिकं ॥ ८२ ॥ युग्मं ॥ दृष्टवांश्च मनोहारि—रूपां तत्र वरस्त्रियं ॥ पृष्टा च सा यथा जडे । का त्वं किं चात्र तिष्ठसि ॥ ८३ ॥ ततः ससाध्वसा सापि । वक्तुमेवं प्रचक्रमे ॥ यथा भो भो महाभाग । मामकी महती कथा ॥ ८४ ॥ त्वमेव तावदाचक्ष्व । कुतो वा यासि कुत्र वा ॥ सुतारमधुरोदार—

तद्वाक्याक्षिप्तचेतसा ॥ ८५ ॥ सर्वोऽपि निजवृत्तांतः । प्रोक्तस्तेन तदग्रतः ॥ सुंदरि ब्रह्मभूपस्य । पंचालाधिपतेरहं ॥ ८६ ॥ पुत्रोऽस्मि ब्रह्मदत्ताख्य । एवं यावदिहागतः ॥ ततो हर्षाश्रुपूर्णाक्षा । तदुक्त्वागनंतरं ॥ ८७ ॥ शीघ्रं साभ्युत्थिता बाला । पतिता तस्य पादयोः ॥ रोदितुं च प्रवृत्ता सा । वृहच्छब्देन तत्पुरः ॥ ८८ ॥ तेनापि मुखमुन्नाम्य । मारोदीरिति जल्पता ॥ संस्थापिता कृपातः सा । वचोभिरतिकोमलैः ॥ ८९ ॥

पृष्टा च का त्वमत्रेति । ततश्चेदं तयोदितं ॥ कुमारपुष्पचूलस्य । मातुलस्य तवैव हि ॥९०॥ दुहिताहं प्रदत्ता च । तुभ्यमेव गुणाकर ॥ गृहे प्रतीक्षमाणाह—मासं विवाहवासरं ॥ ९१ ॥ युग्मं ॥ गृहोद्याननदीरम्य—पुलिने क्रीडती सती ॥ दुष्टविद्याधरेणात्र । समानीता दुरात्मना ॥९२॥ स्वबंधुविरहेणाहं । यावत्तिष्ठामि दुःखिता ॥ तावदचिंत्यसौवर्ण—वृष्टितुल्यः समागतः ॥ ९३ ॥ जाता च जीविताशा मे । यत्त्वं दृष्टोऽसि सुंदर ॥ ततोऽवाचि कुमारेण । कुत्रासौ मम वैरिकः ॥९४॥ येनाहं तस्य पापस्य । परीक्षे भुजयोर्बलं ॥ तयोदितं गतो विद्या—साधनाय स ते रिपुः ॥९५॥ वंशकुडंगकेऽस्यैव । प्रासादस्य समीपके ॥ विद्यां प्रसाध्य मामेष । कुमारः परिणेष्यति ॥ ९६ ॥

विद्या च किल तस्याद्य । सेत्स्यतीति सुनिश्चितं ॥ श्रुत्वेदं ब्रह्मदत्तेन ॥ पुष्पवत्यास्ततोऽखिलः ॥ ॥ ९७ ॥ तद्व्यापादनवृत्तांतः । कथितो हृष्टचेतसा ॥ तयाप्यापि कृतं सुष्टु । त्वयेति यदसौ हतः ॥ ९८ ॥ युग्मं ॥ गंधर्वकविवाहेन । ततस्तां परिणीतवान् ॥ स्थितवांश्च तया सार्धं । कंचित्कालं प्रमोदतः ॥ ९९ ॥ अन्यदा च श्रुतस्तेन । संलापो वरयोषितां ॥ पृष्टा सानेन कस्यायं । शब्दः कर्णामृतोपमः ॥ २०० ॥ तयोक्तमार्यपुत्रैते । तस्य तावकवैरिणः ॥ खंम्भविशाखनाम्न्यौ च । स्वसारौ हि कुमारिके ॥ १ ॥ समादाय विवाहार्थ—मुपस्कारमिहागते ॥ अतो यूयमतः स्थाना—दपक्रामत सत्वरं ॥ २ ॥ भावोपक्रमणं याव—देतयोः प्रकरोम्यहं ॥ यदि प्रेमानयोः प्रौढं । युष्मान्नि भविष्यति ॥ ३ ॥ ततोऽहमार्यपुत्रस्य । प्रासादस्य शिरः स्थिता ॥ चालयिष्यामि रक्ताभां । पताकामन्यथेतरां ॥ ४ ॥ श्रुत्वा चेदमुपक्रांतः । कुमारः कियतीं भुवं ॥ ते अप्यागछतां तत्र । विद्याधरकुमारिके ॥ ५ ॥ लक्षितश्च तयोर्भावः । पुष्पवत्या ततो द्रुतं ॥ हर्षातिरेकतो भ्रांत्या । चेलं शुक्लपताकिका ॥ ६ ॥ तामालोक्य कुमारोऽपि । त्वरितं तत्प्रदेशतः ॥ अपसृत्य गतो दूरे । गंभीरे गिरिगह्वरे ॥ ७ ॥ गछता च ततो दृष्टं । रम्यमेकं सरोवरं ॥ प्रविष्टस्तत्र सानंदं । मज्जितश्च यथा-

विधि ॥ ८ ॥ पश्चिमेन च तीरेण । समुत्तीर्णो गतश्रमः ॥ दृष्टा च तेन तत्रैका । सुरूपा वरक· न्यका ॥ ९ ॥ चिंतितं च मनस्येव—महो मे पुण्यमालिका ॥ येनेयं बालिका दृष्टा । लोचनो· त्सवदायिनी ॥ १० ॥ प्रलोकितश्च सानंदं । तयापि कुमरश्चिरं ॥ पश्यंती तं ततः स्थाना—न्मंदं मंदं चचाल सा ॥ ११ ॥ क्षणांतरात्समायाता । तया प्रेषितचेटिका ॥ तांबूलवरपुष्पादि—वरवस्त्र· युगान्विता ॥ १२ ॥

अर्पयित्वा तकत्तस्मै । कुमारो भणितस्तया ॥ भो भो भद्र त्वया दृष्टा । कन्यका या सरस्त· टे ॥ १३ ॥ तयेदं प्रेषितं तुभ्यं । पुष्पाद्युक्तवती च मां ॥ हल्ले वनलते भद्रे । त्वं तस्याद्य महा· त्मनः ॥ १४ ॥ शयनादिस्थितिं सर्वां । कारयामात्यमंदिरे ॥ तदेहि गम्यतां तत्र । क्रियतां भोज· नादिकं ॥ १५ ॥ त्रिभिर्विशेषकं ॥ जगामासौ ततः प्रोक्त—स्तया मंत्री यथा ह्ययं ॥ प्रेषितो नृप· तेः पुत्र्या । श्रीकांतया त्वदालये ॥ १६ ॥ दृष्टव्यः सादरं चैष । मंत्रिणापि तथा कृतं ॥ द्वितीये च दिने नीतः । कुमारो नृपसन्निधौ ॥ १७ ॥ राज्ञाप्यभ्युत्थितः सम्य—ग्दापितं चासनं धुरि ॥ पृ· ष्टश्च सर्ववृत्तांतो । भोजितश्च सगौरवं ॥ १८ ॥ भुक्त्वा तेनोदितं राज्ञा । कुमार तव मादृशैः ॥

नान्यत्किंचित्तथारूपं । विधातुं शक्यतेऽधुना ॥ १९ ॥ इत्यावेद्य प्रदत्ता सा । श्रीकांता निजपुत्रिका ॥ प्रशस्तेऽहनि वृत्तश्च । विवाहो वरमंगलैः ॥ २० ॥ अन्यदा च कुमारेण । प्रश्निता सा यथा प्रिये ॥ किमर्थं त्वं प्रदत्तेह । मह्यमेकाकिनेऽपि हि ॥ २१ ॥ तयोक्तमार्यपुत्रायं । तातो मे निजगोत्रिकैः ॥ बलिष्टैः प्रेर्यमाणोऽस्यां । पल्ल्यां विषममाश्रितः ॥ २२ ॥ अयं च नगरग्रामान् । हत्वाश्रयति दुर्गकं ॥ श्रीमत्याख्या च तातस्य । प्रेयसी प्रेममंदिरं ॥ २३ ॥ पुत्रचतुष्टयस्योर्ध्व—महं जातैकपुत्रिका ॥ वल्लभा बंधुवर्गस्य । तातस्य तु विशेषतः ॥ २४ ॥ यौवनस्था च तातेन । प्रोक्ता वत्से नृपा मम ॥ सर्वे विरुद्धका येन । तिष्टंत्यास्तदिहैव हि ॥ २५ ॥ वरो मनोरमो यस्ते । स आवेद्यो मम त्वया ॥ ततः पल्ल्या विनिर्गत्य । गत्वा चैतन्महासरः ॥ २६ ॥ पश्यामि पुरुषान्नित्यं । यावत्त्वं पुण्ययोगतः ॥ दृष्टोऽत्र कामरूपश्री—स्तातो मां तेन ते ददौ ॥ २७ ॥ त्रिभिर्विशेषकं ॥ ततः संसारसौख्यानि । भुंजानस्य तया सह ॥ सुरलोके सुरस्येव । व्यतिक्रामंति वासराः ॥ २८ ॥ अन्यदा पल्लीनाथोऽसौ । भूरिसैन्यान्वितो गतः ॥ हंतुं ग्रामं कुमारोऽपि । तेनैव च समं गतः ॥ २९ ॥ तावद्वरधनुस्तेन । दृष्टो ग्रामस्य बाह्यतः ॥ रम्ये पद्मसरस्तीरे । प्रत्यभिज्ञातवा-

न कुर्यात् ॥ ३० ॥ सोऽपि तं प्रत्यभिज्ञाय । प्रवृत्तो रोदितुं ततः ॥ निवारितः कुमारेण । समीपे चोपवेशितः ॥ ३१ ॥ ततो वरधनुः प्राह । भो कुमार किमु त्वया ॥ मद्वियोगे समासादि । समावेदय मेऽधुना ॥ ३२ ॥ प्रोक्तस्तेन स्ववृत्तांतः । पृष्टो वरधनुस्ततः ॥ मत्परोक्षेऽनुभूतं किं । सुखदुःखं त्वयापि हि ॥ ३३ ॥ ततोऽसौ वक्तुमारब्धः । शृणु भो ब्रह्मनंदन ॥ त्वां न्यग्रोधतले मुक्त्वा । गतोऽहं जलहेतवे ॥ ३४ ॥ दृष्टं चाटाट्यमानेन । मया रम्यं महासरः ॥ ततोंऽभःपुटकैः कृत्वा । यावदेमि तवांतिकं ॥ ३५ ॥ तावच्च सहसा दृष्टो । भटैराबद्धकंकटैः ॥ रुष्टैर्निर्भर्त्सनापूर्वं । ताडितश्च मुहुर्मुहुः ॥ ३६ ॥ रेरे वरधनो क्वास्ते । ब्रह्मदत्तः प्रकथ्यतां ॥ एवं विवदमानेषु । न वेद्मीति मयोदितं ॥ ३७ ॥ ततस्तैस्ताड्यमानेन । भूयोभूयस्तरं मया ॥ उक्तं भो भक्षितो दुष्ट—व्याघ्रकेण कुमारकः ॥ ३८ ॥ यद्येवं तर्हि तद्देशं । दर्शयस्व ततो मया ॥ शाठ्येनेतस्ततो भ्रांत्वा । समेत्य च त्वदंतिकं ॥ ३९ ॥ नश्यतामिति संज्ञायां । कृतायां त्वं प्रणष्टवान् ॥ मयापि गुटिका क्षिप्ता । परिव्राजार्पिता मुखे ॥ ४० ॥ युग्मं ॥ जातश्च तत्प्रभावेण । काष्ठवद्गतचेतनः ॥ मृतोऽयमिति विज्ञाय । गतास्तेऽपि भटास्ततः ॥ ४१ ॥ मयापि सा समाकृष्टा । गुटिका मुखरंध्रतः ॥ अन्विष्टस्त्वं मया

भ्रांत्वा । न च क्वापि विलोकितः ॥ ४२ ॥ ततो मया महीपीठे । भ्राम्यता च विलोकितः ॥ परिव्राट् सुंदराकारो । गतश्चाहं तदंतिके ॥ ४३ ॥ उक्तं च तेन भो वत्स । वयस्योऽहं पितुस्तव ॥ वसुभागाभिधस्तस्मा—दागच्छात्रोपविश्यतां ॥ ४४ ॥ तथा न ज्ञायते वत्स । नष्टः क्वापि पिता तव ॥ माता च तव दीर्घेण । क्षिप्ता मातंगपाटके ॥ ४५ ॥ श्रुत्वेदं महता दुःख—प्राग्भारेण गृहीतवान् ॥ ततः कांपिल्यमागत्य । कृत्वा कापालिकाकृतिं ॥ ४६ ॥ वंचयित्वा च मातंगान् । संहृत्य जननीं ततः ॥ मुक्त्वैकत्र वरे ग्रामे । तातमित्रस्य मंदिरे ॥ ४७ ॥ देवशर्माभिधानस्य । ब्राह्मणस्य यथाविधि ॥ मातुः सौस्थ्यं विधायैवं । तदन्वेषणतत्परः ॥ ४८ ॥ महीपीठे भ्रमन्नद्य । कुमारेह समागतः ॥ इत्थं च सुखदुःखादि । तत्र चिंतयतोस्तयोः ॥ ४९ ॥ समायातः पुमानेक—स्तेन चेदमुदीरितं ॥ भोभो कुमारकावत्र । ग्रामे दीर्घमहीपतेः ॥ ५० ॥ आगता भटसंदोहा । युष्मदन्वेषणाकृते ॥ अतोऽत्रैव युवाभ्यां तु । स्थातव्यं सुष्टु गुप्तकं ॥ ५१ ॥ पंचभिः कुलकं ॥ श्रुत्वेदं तौ ततः स्थाना—द्विनिष्क्रांतौ शनैः शनैः ॥ भ्राम्यंतौ च महीपीठं । कौशांबीपुरमागतौ ॥ ५२ ॥ कियंत्यहानि तत्रापि । तिष्टद्भ्यां च श्रुतं यथा ॥ अहो कुमारमन्वेष्टुं । दीर्घयोधा इहागताः ॥

॥ ५३ ॥ ततश्चैतत्समाकर्ण्य । कौशांब्या अपि निर्गतौ ॥ भ्रमंतौ च क्रमात्प्राप्तौ । पुरे राजगृहा- भिधे ॥ ५४ ॥ तद्बाह्यभूमिभागस्थे । एकस्मिन् सन्निवेशके ॥ दृष्टं स्तंभशताकीर्ण—मेकं वेश्म सुधासितं ॥ ५५ ॥ प्रविष्टौ च तकौ तत्र । दृष्टे च द्वे वरस्त्रियौ ॥ प्रौढं यौवनमारूढे । रूपश्रीकुल- मंदिरे ॥ ५६ ॥ ताभ्यामपि समालोकि । सानंदं ब्रह्मनंदनः ॥ वक्तुं च ते समारब्धे । स्वोपालं- भकया गिरा ॥ ५७ ॥ युक्तं किं नु महापुंसां । भ्रांतुमेवं भवादृशां ॥ संत्यज्य मादृशं लोकं । प- त्यनुरक्तचेतसं ॥ ५८ ॥ अथोक्तं ब्रह्मदत्तेन । जनकोऽयमहो मया ॥ त्यक्तोऽनुरक्तकोऽप्युच्चै—र्भ्रा- म्यता मेदिनीतले ॥ ५९ ॥ ताभ्यामुक्तं महाभाग । कुर्वावयोरनुग्रहं ॥ आसनग्रहणाचाव—त्तेना- पि हि तथा कृतं ॥ ६० ॥ ततः कृत्वास्य सन्मानं । स्नानभोजनगोचरं ॥ भक्तं ततः स्ववृत्तांतं । कथयावोऽवधार्यतां ॥ ६१ ॥

अस्त्यत्र भारते क्षेत्रे । गिरिर्वैताढ्यनामकः ॥ तस्य च दक्षिणश्रेण्यां । नगरं शिवमंदिरं ॥ ॥ ६२ ॥ तत्र वह्निशिखो राजा । देवी विद्युच्छिखाभिधा ॥ तस्या द्वे पुत्रिके आवां । बंधुलोकस्य वल्लभे ॥ ६३ ॥ ज्येष्ठश्च ह्यावयोर्भ्राता । नाट्योन्मत्ताभिधानकः ॥ अन्यदा मत्पिता याव—त्सार्धं

मित्रेण तिष्ठति ॥ ६४ ॥ गोष्ट्या चाग्निशिखाख्येन । तावद्व्योमनि वीक्षते ॥ अमरासुरसंदोह—
मष्टापदाद्रिसन्मुखं ॥ ६५ ॥ वंदनार्थं जिनेंद्राणां । प्रगच्छंतमथ द्रुतं ॥ तं दृष्ट्वा सममावाभ्यां । ता-
तोऽपि मित्रसंयुतः ॥ ६६ ॥ चलितः क्रमतः श्रीमान् । संप्राप्तोऽष्टापदाचलं ॥ कर्पूरागुरुसत्पुष्प—
सद्गंधधूपनादिभिः ॥ ६७ ॥ संपूज्य जिनबिंबानि । वंदितानि विधानतः ॥ त्रिश्च प्रदक्षिणीकृत्य ।
हृष्टं निर्गच्छता ततः ॥ ६८ ॥ एकमशोकवृक्षाध—श्चारणप्रतियुग्मकं ॥ तत्संप्रणम्य सद्भक्त्या । स-
न्निषण्णास्तदंतिके ॥ ६९ ॥ षड्भिः कुलकं ॥ साधुभ्यां च ततो धर्म—लाभेनानंद्य पर्षदं ॥ संवेग-
जननीप्राज्या । प्रारब्धा धर्मदेशना ॥ ७० ॥ यथा भोभो जना एष । भीमः संसारसागरः ॥ ज-
न्ममृत्युजरारोग—जलकल्लोलसंकुलः ॥ ७१ ॥ नानाप्रकारदुःखौघ—नक्रचक्रभयानकः ॥ दूरपारो
दुरुत्तारो । दुःखदायी निराश्रयः ॥ ७२ ॥ तथेह देहिनामायु—र्वायुवेगातिचंचलं ॥ जरारोगाद्य-
पायौघैः । समाघ्रातं च यौवनं ॥ ७३ ॥ कायोऽपि निकटापाय—प्रतिध्वंसनकर्मठः ॥ किंपाकफल-
संकाशाः । कामभोगाश्च दारुणाः ॥ ७४ ॥ शक्रचापानुकारीदं । सौख्यं च विषयोद्भवं ॥ अस्थिरो
बंधुसंबंधः । संपदो विपदां पदं ॥ ७५ ॥ दुर्लभः सौख्यसंसर्गः । सुप्रापो दुःखसंगमः ॥ तदहो कि-

यतां नित्यं । जैनधर्मे समुद्यमः ॥ ७६ ॥ एवमाकर्ण्य संलब्ध—सत्सम्यक्त्वादिसद्गुणाः ॥ सर्वे नि-
जनिजस्थाने । गतवंतः सुरादयः ॥ ७७ ॥ ततः प्रस्तावमासाद्य । तातमित्रेण जल्पितं ॥ अग्निशि-
खाभिधानेन । संयोज्य करपल्लवं ॥ ७८ ॥ भगवन् कः पुमानेते । परिणेष्यति बालिके ॥ साधुः
प्राहैतयोर्भ्रातृ—घातं यः प्रकरिष्यति ॥ ७९ ॥ तत एवं समाकर्ण्य । तातः श्याममुखोऽभवत् ॥
अत्रांतरे सखेदाभ्या—मावाभ्यामपि जल्पितं ॥ ८० ॥ ताताधुनैव साधुभ्यां । प्रोक्तं संसारचेष्टितं
॥ तदलं कामसौख्येन । दुरंतेनेदृशावयोः ॥ ८१ ॥ कस्याप्यावां न दातव्ये । त्वयका तात सर्व-
था ॥ शुश्रूषां प्रकरिष्यावो । भ्रातुः स्वगृह एव हि ॥ ८२ ॥ तातेनाप्यावयोर्वाक्यं । प्रतिपन्नमिदं
मुदा ॥ ततश्चावां निजभ्रातृ—स्नेहतंतुनियंत्रिते ॥ ८३ ॥ तस्यैव प्रत्यहं स्नान—भोजनादितनु-
स्थितिं ॥ विदधत्यौ च तिष्टावो । यावदन्यत्र वासरे ॥ ८४ ॥ अस्मद्भ्रात्रा महीपीठे । भ्राम्यता प्र-
विलोकिता ॥ कन्यका पुष्पवत्याख्या । तव मातुलपुत्रिका ॥ ८५ ॥ त्रिभिर्विशेषकं ॥ तद्रूपादि-
गुणाक्षिप्त—स्तां हृत्वा द्रागिहागतः ॥ असहिष्णुश्च तद्दृष्टिं । विद्यां साधयितुं गतः ॥ ८६ ॥ अ-
त ऊर्ध्वं प्रविज्ञात—वृत्तांता यूयमेव हि ॥ तथा भो भो महाभाग । तस्मिन् काले त्वदंतिके ॥

॥ ७७ ॥ पुष्पवत्या समागत्य । सामपूर्वकमावयोः ॥ कथितो भ्रातृवृत्तांत—स्तं श्रुत्वा शोकनिर्भरे ॥ ७८ ॥ प्रवृत्ते रोदितुं प्रोच्चै । रोदयंत्यौ रिपूनपि ॥ संस्थापिते च सद्वाक्यैः । पुष्पवत्या सुकोमलैः ॥ ७९ ॥ त्रिभिर्विशेषकं ॥

तथान्यच्च तया प्रोचे । धर्मोपदेशपूर्वकं ॥ यथा संस्मर्यतां सख्यौ । सन्मुनेस्तस्य तद्वचः ॥ ॥ ८० ॥ मन्यतां भर्तृभावेन । ब्रह्मदत्तोऽधुना ध्रुवं ॥ ततो जातानुरागाभ्या—मावाभ्यां तत्प्रतिश्रुतं ॥ ८१ ॥ पुष्पवत्या ततो गत्वा । शीघ्रं हर्षातिरेकतः ॥ पताकायां सिताभायां । चालितायां मतिभ्रमात् ॥ ८२ ॥ प्रस्थितेषु ततः स्थाना—द्युष्मास्वन्यत्र कुत्रचित् ॥ नानाविधपुरग्राम—सरिच्छैलादिसंकुले ॥ ८३ ॥ चिरं महीतले भ्रांत्वा । युष्मदन्वेषणाकृते ॥ यदनालोकिता यूयं । तावदुद्विग्नमानसे ॥ ८४ ॥ अत्रायाते महाभाग । त्वद्विरहाग्नितापिते ॥ अत्र चातर्कितप्रेंख—द्दत्तदृष्टिसमप्रभं ॥ ८५ ॥ पूरिताशं जनस्यास्य । संजातं तव दर्शनं ॥ आनंददायकं चात्र । बहुकालविलोकितं ॥ ८६ ॥ कुलकं ॥ तदहो यत्तदाकाले । पुष्पवत्या प्रजल्पितं ॥ स्मर्यतां तन्महाभाग। पूर्यतां नौ मनोरथाः ॥ ८७ ॥ एवमाकर्ण्य सानंद—स्तदमंस्त कुमारकः ॥ परिणीन्ये च गंधर्व—

विवाहेन च ते द्रुतं ॥ ९८ ॥ स्थितो रात्रौ समं ताभ्यां । परमानंदनिर्भरः ॥ प्रभाते च बभाणैवं । कुमारस्ते वरांगने ॥ ९९ ॥ गच्छ पुष्पवतीपार्श्वे । इतः संप्रति गम्यतां ॥ स्थेयं तावच्च मे याव—द्राज्यलाभः प्रजायते ॥ ३०० ॥ एवं नाथ करिष्याव । इत्युक्त्वा ते अगच्छतां ॥ कुमारं प्रेक्ष्य-न्नेवं । ब्रूते वरधनुस्ततः ॥ १ ॥ यथा भो भो महासत्व । शौर्यरत्नमहोदधे ॥ कियंतं कालमेवेह । स्थातव्यं मुक्तविक्रमैः ॥ २ ॥ तयोश्चिंतयतोरेवं । परस्परमनेकधा ॥ गंतुमुत्सुकयोश्चैवं । मधुमासः समागतः ॥ ३ ॥ ततो महाप्रबंधेन । प्रवृत्ते मदनोत्सवे ॥ गते च नगरीलोके । रम्यारामवनादिषु ॥ ४ ॥ ततस्तावपि सानंदं । गतौ तत्र कुतूहलात ॥ अथ क्रीडारसोत्कर्षे । प्रवृत्ते सुष्टु निर्भरे ॥ ५ ॥ क्रीडत्यनेकधा लोके । नानाक्रीडाभिरुच्चकैः ॥ अत्रांतरे मदोद्रेका—द्राजहस्ती विलोठितः ॥ ६ ॥ त्रिभिर्विशेषकं ॥ आलानस्तंभमुन्मूल्य । पातयित्वा च मेंठकं ॥ ऊर्ध्वीकृतकरो हट्ट—गेहादीनि प्रभंजयन् ॥ ७ ॥ उन्मूलयंश्च वृक्षादी—न्मुन्नृंखलो निरंकुशः ॥ इतश्चेतश्च वेगेन । भ्राम्यंस्तत्र समागतः ॥ ८ ॥ जाते कोलाहले रौद्रे । नष्टो लोको दिशो दिशि ॥ इत्थं च संभ्रमे जाते । लोकानां तुमुले तथा ॥ ९ ॥

तत्रैका कन्यका रूप—लसल्लावण्यशालिनी ॥ भीतभीता प्रपश्यंती । चलच्चरलतारका ॥१०॥
त्राणं विमार्गयंती च । वेपमानांगयष्टिका ॥ गता तस्य यमस्येव । हस्तिनो दृष्टिगोचरे ॥ ११ ॥
त्रिभिर्विशेषकं ॥ ततो हाहारवो लोकैः । कृतस्तद्देशवर्तिभिः ॥ पूत्कृतं च बृहद्वृन्दै—स्तल्लोकेन
ससाध्वसं ॥ १२ ॥ अत्रांतरे मनाक् तस्यां । गृहीतायां स वारणः ॥ तर्जितः पुरतः स्थित्वा । कु-
मारेण सुनिष्ठुरं ॥ १३ ॥ विमोचिता च सा कन्या । ततो दुष्टमहागजात् ॥ वलितश्च कुमारस्या
—भिमुखं मत्सरी करी ॥ १४ ॥ ततः सपदि संपिंड्य । कुमारेणोत्तरीयकं ॥ क्षिप्तं सोऽपि तदा-
दायो—त्क्षिप्तवान् गगनांगणे ॥ १५ ॥ क्षणान्निष्पतिते भूमौ । तस्मिन् परिणते गजे ॥ कुमारो-
ऽप्यतिदक्षत्वा—दारूढस्तस्य कंधरे ॥ १६ ॥ बद्धासनेन साक्रोशं । कुंभदेशे स ताडितः ॥ ततश्च
मधुरैर्वाक्यै—र्मत्सरं च विमोचितः ॥ १७ ॥ साधुकारं ततः प्राप । स्तुतोऽसौ बंदिभिस्तथा ॥ निः-
शेषजनमध्येऽत्र । कुमारो जयवानिति ॥ १८ ॥ आलानस्तंभमानीतो । हस्ती मोचितमत्सरः ॥
आयातश्च नृपस्तत्र । विस्मयाबद्धमानसः ॥ १९ ॥ अनन्यरूपलावण्य—मनन्यवरविक्रमं ॥ राजा
कुमारमालोक्य । जगादेदं सुविस्मितः ॥ २० ॥ भोभो कोऽयं महासत्वो । महाभागो महायशाः

॥ गांभीर्यधैर्यशौर्यादि—गुणरत्नमहोदधिः ॥ २१ ॥ ततः कुमारवृत्तांत—मर्मविज्ञेन मंत्रिणा ॥ तदीयो नरनाथाय । प्रोक्तो व्यतिकरोऽखिलः ॥ २२ ॥ ततो राज्ञा सुतुष्टेन । स नीतो निजमंदिरे ॥ सगौरवं वरस्नान—भोजनादि च कारितः ॥ २३ ॥ ढौक्यंते च कुमाराय । राज्ञा दुहितरो निजाः ॥ दत्ता वृत्तो विवाहश्च । महर्ध्या शोभनेऽहनि ॥ २४ ॥ इत्थं संतिष्ठते याव—त्सवरधनुकः किल ॥ दिनानि कतिचित्तत्र । ब्रह्मदत्तो यथासुखं ॥ २५ ॥ तावदेका समागत्य । प्रौढा नारीदमब्रवीत् ॥ यथ भो भो कुमारास्ति । किंचिद्वक्तुं त्वया सह ॥ २६ ॥ कुमारेणोदितं ब्रूहि । ततः सापि प्रगल्भवाक् ॥ वक्तुमेवमुपक्रांता । सुष्टुपेशलया गिरा ॥ २७ ॥ अस्त्यत्रैव पुरे सार्थ—वाहो वैश्रमणाभिधः ॥ तत्सुता श्रीमतिर्नाम । सर्वावयवसुंदरा ॥ २८ ॥ आबालकालतः सा च । मयैव प्रतिपालिता ॥ कुमार या त्वया हस्ति—संभ्रमात्परिरक्षिता ॥ २९ ॥ तया च मुक्तया तस्माद्भयोपद्रवतस्तदा ॥ मम जीवितदातेति । सस्नेहं त्वं प्रलोकितः ॥ ३० ॥ कलाकौशलसद्भौर्य—रूपादिगुणसंपदां ॥ प्रकर्षोऽयमिति ज्ञात्वा । त्वयि तस्याः सुनिर्भरः ॥ ३१ ॥ अनुरागो दृढं जातस्ततस्त्वामभि सत्वरं ॥ स्निग्धैरनिमिषैर्नेत्रैः । पश्यंती क्षणमेककं ॥ ३२ ॥ लिखितस्तंभितेवासौ ।

स्थितैकाग्रमनास्ततः ॥ गेहं नीता स्वलोकेन । व्यतीते हस्तिसंभ्रमे ॥ ३३ ॥ त्रिभिर्विशेषकं ॥ त-
त्रापि कुरुते नैव । भोजनाछादनादिकं ॥ केवलं मौनवृत्ते सा । स्थितास्ति वरबालिका ॥ ३४ ॥
ततश्च सा मयाभाणि । किमप्रस्ताव एव हि ॥ मुक्तस्वाभाविका जाता । केन त्वं पुत्रि कोपिता ॥
॥ ३५ ॥ ममापि येन नैव त्वं । दत्से वत्से समुत्तरं ॥ ततश्चेदं तयावाचि । हसित्वा सविलक्षकं
॥ ३६ ॥ युष्माकमपि किं मातः । किंचिदस्ति रहस्यकं ॥ किंत्वहं लज्जाया वक्तुं । प्रशक्नोमि न
किंचन ॥ ३७ ॥ तस्माच्च श्रूयतामंब । स्वाकूतं कथ्यते तव ॥ येनाहं मोचिता हस्ति—हस्तग्रासा-
च्चुभंयुना ॥ ३८ ॥ स मे भर्ता महाभागो । यद्यंब न भविष्यति ॥ तदा त्वरितमेवाहं । मरिष्या-
मि न संशयः ॥ ३९ ॥ ततो मयेदमाकर्ण्य । तस्याः पित्रे निवेदितं ॥ तेनापि त्वत्समीपेऽहं । प्रे-
षिता राजनंदन ॥ ४० ॥ तत्तस्याः पूरयस्व त्वं । बालिकाया मनोरथान् ॥ प्रतिश्रुतं च तत्तेन ।
दाक्षिण्यैकहृदा तदा ॥ ४१ ॥ दंपत्योश्च तयोरेवं । ततोऽन्यदा शुभेऽहनि ॥ वृत्तं विवाहमांगल्यं ।
प्रवृत्तश्च महोत्सवः ॥ ४२ ॥ तथा सुबुद्ध्यमात्येन । दत्वा नंदाख्यकन्यकां ॥ रम्यं विवाहमांगल्यं ।
कृतं वरधनोरपि ॥ ४३ ॥

एवं द्वयोरपि प्राज्यं । वैषयिकं सुखं तयोः ॥ भुंजानयोर्यथाकामं । गतः कालः कियानपि ॥ ॥ ४४ ॥ विस्तृता च तयोर्वार्ता । सर्वदेशेष्वपि क्रमात ॥ ततो राजगृहादेतौ । गतौ वाणारसीं पुरीं ॥ ४५ ॥ ब्रह्मदत्तं बहिर्मुक्त्वा । स्वयं वरधनुर्गतः ॥ पुरीमध्ये समाख्यातुं । पार्श्वे कटकनृपतेः ॥ ४६ ॥ ततस्तुष्टो विनिष्क्रांतो । राजा सबलवाहनः ॥ उद्यानस्थकुमारस्य । समीपे वेगतो गतः ॥ ४६ ॥ आरोहितो गजस्कंध—मानीतो निजमंदिरे ॥ कुमाराय निजां पुत्रीं । ददौ स कटकाव- तीं ॥ ४७ ॥ अनेकरथहस्त्यश्व—भांडागारसमन्वितां ॥ प्रशस्तेऽहनि वृत्तश्च । विवाहः सुमहोत्सवः ॥ ४८ ॥ युग्मं ॥ एवं च तत्र संतिष्ट—न्नापृच्छ्य कटकादिकान् ॥ दूतं संप्रेषयामास । पुष्पचूलाय ब्रह्मभूः ॥ ४९ ॥ सोऽपि वाराणसीं शीघ्र—मागतः स्वबलान्वितः ॥ राजा कणेरदत्तश्च । सचिव- श्चागतो धनुः ॥ ५० ॥ अन्ये च भवदत्ताख्य—चंद्रसिंहादयो नृपाः ॥ प्रभूता आगतास्तत्र । कु- मारस्य सहायकाः ॥ ५१ ॥ ततो वरधनुं कृत्वा । महासैन्यस्य नायकं ॥ प्रेषितः सर्वसामग्री—यु- क्तो दीर्घनृपोपरि ॥ ५२ ॥ प्रवृत्तश्च ततो गंतुं । निरंतरप्रयाणकैः ॥ अत्रांतरे च दीर्घेण । दूतः सं- प्रेषितो निजः ॥ ५३ ॥ कटकादिनरेंद्राणां । स च निर्भर्त्सितस्तकैः ॥ ततस्ते गंतुमारब्धाः । कां·

पिल्यनगरंप्रति ॥ ५४ ॥ युग्मं ॥ चलंतश्चागतास्तत्र । वेष्टितं च समंततः ॥ कृत्वा निरुद्धसंचार—मनिर्गमप्रवेशकं ॥ ५५ ॥ ततो व्यचिंतयद्दीर्घो । यथा किल कियच्चिरं ॥ बिले प्रविष्टकैः स्थेयं । साहसं क्रियतेऽधुना ॥ ५६ ॥ इत्यालोच्य कृतोदग्र—सामग्रीको भृशं पुरात ॥ विनिर्गत्य परानीके । हेलया निपपात सः ॥ ५७ ॥ ततो जातं महद्युद्धं । द्वयोरपि हि सैन्ययोः ॥ क्षणांतरात् समालोक्य । संजग्नं निजसैन्यकं ॥ ५८ ॥ दीर्घराजः स्वयं चैव । संप्रहर्तुमुपस्थितः ॥ ततश्च तं समालोक्य । संधुक्षितक्रुधानलः ॥ ५९ ॥ सन्मुखं तस्य दीर्घस्य । चलितो ब्रह्मनंदनः ॥ लग्नमायोधनं भीमं । ततस्तयोः परस्परं ॥ ६० ॥ त्रिभिर्विशेषकं ॥

अथ प्रहृत्य तेनास्त्रैः । खड्गकुंतादिभिश्चिरं ॥ विमुक्तं ब्रह्मदत्तेन । चक्रं दीर्घनृपोपरि ॥ ६१ ॥ छिन्नं च तच्छिरस्तेन । त्रुटितं च महीतले ॥ ततो दीर्घबलं सर्वं । ब्रह्मदत्तमशिश्रियत् ॥ ६२ ॥ ततश्चायं जगत्यत्र । चक्रवर्तीति सर्वतः ॥ उल्ललास जनानंदं । ददज्जयजयारवः ॥ ६३ ॥ पुष्पवृष्टिस्ततो मुक्ता । सिद्धगंधर्वखेचरैः ॥ उद्घुष्टं च यथैषोऽत्र । चक्रेशो द्वादशोऽजनि ॥ ६४ ॥ ततो जानपदैर्लोकै—र्नागरीकजनैस्तथा ॥ नंद्यमानः सदाशीर्भिः । प्रविष्टः क्रमतः पुरं ॥ ६५ ॥ निजं

च मंदिरं पश्चा—त्तस्य सामंतमंत्रिभिः ॥ सर्वैश्चक्रे महाचक्र—वर्तिराज्याभिषेचनं ॥ ६६ ॥ ततश्च
पूर्वचक्रेश—नीत्या सर्वं प्रसाधितं ॥ हिमवत्सिंधुपर्यंतं । षट्खंडमपि भूतलं ॥ ६७ ॥ अंतःपुरं च
निःशेषं । पुष्पवत्याद्यमागतं ॥ एवं च चक्रवर्तित्वं । कुर्वतो यांति वासराः ॥ ६८ ॥ अन्यदा च
नटेनेदं । विज्ञप्तो नृपतिर्यथा ॥ नाट्यं मधुकरीगीत—नामकं तव दर्शये ॥ ६९ ॥ ततोऽपराह्न·
कालेऽसौ । प्रारब्धः कर्तुमुच्चकैः ॥ नाट्यं विभ्रमबिब्बोक—हावभावमनोहरं ॥ ७० ॥ अत्रांतरे न·
रेंद्राय । दासचेट्या समर्पितं ॥ सुगंधं सुंदराकार—पुष्पदामोरुगंमकं ॥ ७१ ॥ ततस्तत्प्रेक्षमाणस्य
। श्रव्यं गीतं च शृण्वतः ॥ विकल्पो ब्रह्मदत्तस्य । मनस्येवमजायत ॥ ७२ ॥ यथेदृशं वरं नाट्यं ।
मन्येऽहं दृष्टपूर्वकं ॥ कुत्र दृष्टमिदं कुत्रे—त्येवं चिंतयतः सतः ॥ ७३ ॥ उत्पन्नं ब्रह्मदत्तस्य । जा·
तिस्मरणमुत्तमं ॥ तेन ज्ञातं यथा कल्पे । मया सौधर्मनामनि ॥ ७४ ॥ विमाने पद्मगुल्माख्ये ।
तिष्ठतेदं प्रलोकितं ॥ एवं च चिंतयंस्तत्र । राजा मूर्छां जगाम सः ॥ ७५ ॥ त्रिभिर्विशेषकं ॥
पतितश्च महीपीठे । ततश्च पार्श्ववर्तिना ॥ मंत्रिसामंतलोकेन । सरसैश्चंदनादिभिः ॥ ७६ ॥
तालवृंतादिवातैश्च । स नीतः स्वस्थतां क्षणात् ॥ ततः पूर्वभवभ्रातु—श्चित्रस्यान्वेषणाकृते ॥७७॥

रहस्यं कुर्वता गुप्त—मुक्तो वरधनुर्यथा ॥ श्लोकस्यार्धमिदं मंत्रिन् । लिखित्वा वरपत्रके ॥ ७८ ॥
पुरस्यांतर्बहिष्टाच्च । लंबयित्वा त्रिकादिषु ॥ घोषयस्व निजैः पुंभि—र्यथा भो श्रूयतां जनाः ॥७९॥
चतुर्भिः कलापकं ॥ श्लोकस्यैतस्य यः पश्चा—दर्धं संपूरयिष्यति ॥ नरेंद्रस्तस्य राज्यार्धं । निश्चये-
न प्रदास्यति ॥ ८० ॥ ततो बहुप्रदेशेषु । लंबितं पत्रकं तकत ॥ सर्वत्राघोषणं कर्तुं । नित्यं प्रार-
ब्धमुच्चकैः ॥ ८१ ॥ अत्रांतरे स चित्राख्यः । पूर्वजन्मसहोदरः ॥ पुरे पुरिमतालाख्ये । भूत्वा स-
चिवपुत्रकः ॥ ८२ ॥ स्मृत्वा पूर्वभवं स्वीयं । प्रव्रज्यामभिगृह्य च ॥ कांपिल्यपुरमागत्यो—द्याने
मनोरमाभिधे ॥ ८३ ॥ शुद्धे च प्राशुकस्थाने । पात्रकादि विमुच्य सः ॥ कायोत्सर्गेण संतस्थौ ।
धर्मध्यानपरायणः ॥ ८४ ॥ त्रिभिर्विशेषकं ॥ अथारघटिकेनैवं । श्लोकार्धं पठ्यमानकं ॥ आकर्णि-
तमिदं तत्र । तेन तत्साधुना यथा ॥ ८५ ॥ आस्व दासौ मृगौ हंसौ । मातंगावमरौ तथा ॥ एवं
श्रुत्वा ततः साधुः । प्रोवाचेदं स्फुटाक्षरं ॥ ८६ ॥ एषा नौ षष्टिका जाति—रन्योन्याभ्यां वियुक्त-
योः ॥ ततः श्लोकार्धमेतद्धि । लिखित्वैकत्र पत्रके ॥ ८७ ॥ शीघ्रं राजकुले तुष्टः । स आरघटिको
गतः ॥ पठितस्तेन संपूर्णः । स श्लोको नृपतेः पुरः ॥ ८८ ॥ युग्मं ॥ ततः स्नेहातिरेकेण । ग-

तो मूर्छां महीपतिः ॥ लुठितश्च महीपीठे । ततस्तत्पार्श्ववर्तिना ॥ ८९ ॥ क्रुद्धेन राजलोकेन । सं-
लपतेदमुच्चकैः ॥ एतद्वाक्येन राजाय-मवस्थामीदृशीं ययौ ॥ ९० ॥ तदयं नष्टसच्चेष्टो । ह्येनं तु ह-
न्यतामिति ॥ ततो यष्टिचपेटाद्यैः । स आरघटिको हतः ॥ ९१ ॥ त्रिभिर्विशेषकं ॥ हन्यमानेन
तेनोचे । श्लोकोऽयं मयका न हि ॥ पूरितस्तत्किमर्थं मां । ताम्यत निरागसं ॥ ९२ ॥ तैरुक्तं
तर्हि केनायं । पूरितः कथ्यतामहो ॥ स प्राहोद्यानमध्यस्थो । मुनिरेवास्य पूरकः ॥ ९३ ॥ ततो-
ऽमात्यादिलोकेन । मोचितः स कदर्थनात् ॥ अथ श्रीखंडसेकाद्यै—र्नृपतिर्लब्धचेतनः ॥ ९४ ॥
विज्ञातमुनिवृत्तांतो । भक्तिस्नेहवशात्ततः ॥ हेलयोल्लसितस्फार—रोमांचांचितविग्रहः ॥ ९५ ॥ सा-
र्धं निजकलोकेन । जगाम मुनिसन्निधौ ॥ सद्भक्त्या वंदितः साधु—र्निषण्णश्च तदंतिके ॥ ९६ ॥
त्रिभिर्विशेषकं ॥ मुनिनापि समारब्धा । सुंदरा धर्मदेशना ॥ दर्शितं भवनैर्गुण्यं । वर्णिताः कर्म-
हेतवः ॥ ९७ ॥ श्लाघितो मोक्षमार्गश्च । ख्यापितं मोक्षजं सुखं ॥ ततः पर्षत्समस्तापि । संविग्ना
भाविता तथा ॥ ९८ ॥ ब्रह्मदत्तस्तु संवेग—निर्वेदादिकरैरपि ॥ वाक्यैर्वरमुनेस्तस्य । न मनागपि
भावितः ॥ ९९ ॥ ततः प्राह सविश्रंभं । सादरं विनयान्वितं ॥ करसंपुटमायोज्य । राजेंद्रस्तं मु-

निंप्रति ॥ ४०० ॥ यथा स्वसंगमेनाहं । भवतानंदितो मुने ॥ तथानंदं कुरुष्वाद्य । राज्यस्वीकरणेन मे ॥ १ ॥ पश्चाच्च सममेवावां । श्रयिष्यावस्तपःश्रियं ॥ निःशेषसुखसंदोह—कारणं करुणाकर ॥ २ ॥ मुनिराह यथा राजन् । युक्तं कर्तुमिदं मम ॥ युष्माकमुपकाराय । सततोद्यतचेतसः ॥ ३ ॥ किं त्वत्र प्राणिनां भूयो । मानुषत्वं सुदुर्लभं ॥ संध्यारागसमा लक्ष्मी । राज्यं सततपातुकं ॥ ४ ॥ ह्यनवस्थायिनी चैषा । धर्मबुद्धिश्च देहिनां ॥ विपाककटवः सर्वे । शब्दादिविषया नृप ॥ ॥ ५ ॥ ध्रुवश्च नरके पात—स्तदभिषक्तचेतसां ॥ दुःप्रापं मोक्षबीजं च । भूयोऽपि विरतिस्तथा ॥ ॥ ६ ॥ संयमं च परित्यज्य । घोरसंसारकारणं ॥ त्वद्राज्याश्रयणं नैव । रंजयति सतां मनः ॥७॥ तदयं मुच्यतां राजन् । विवेकेन कदाशयः ॥ स्मर्यतां पूर्वजन्मानु—भूतां दुःखपरंपरां ॥ ८ ॥ श्रवणांजलिभिर्नित्यं । पिब जैनवचोऽमृतं ॥ गच्छ तदुक्तमार्गेण । नृजन्म सफलीकुरु ॥ ९ ॥ श्रुत्वेदं भूपतिः प्राह । राज्ये मूर्छितमानसः ॥ यथा भो सन्मुने दृष्टं । त्यक्त्वेदं सुंदरं सुखं ॥ १० ॥ यददृष्टसुखे वांछा । सा मे भाति न सुंदरा ॥ तदहो गृह्यतां राज्यं । क्रियतां मे समीहितं ॥११॥ युग्मं ॥ मुनिः प्राह व्रतत्यागा—त्त्वद्राज्यं मे न रोचते ॥ एवमादि स भूपालो । जल्पितः प्रति-

जद्दिपतैः ॥ १२ ॥ यदा संबुध्यते नैव । तदा साधुर्व्यचिंतयत ॥ अहो चक्रे यदेतेन । निदानं पूर्वजन्मनि ॥ १३ ॥ मया निवारितेनापि । तदिदानीं विजृंभते ॥ अतो गुरुकर्माय—मसाध्योऽकालदष्टवत् ॥ १४ ॥ जैनेंद्रवाक्यसन्मंत्र—तंत्रादीनामिति स्फुटं ॥ गतो मुनिवरोऽन्यत्र । सिद्धः कालांतरेण च ॥ १५ ॥ युग्मं ॥ राज्ञोऽपि चक्रिसौख्यानि । भुंजानस्य यथेप्सितं ॥ कालः कश्चिदतिक्रांतः । प्रोवाचैकोऽन्यदा द्विजः ॥ १६ ॥ यथा भो राजराजेंद्र । श्रद्धा मे वर्ततेऽधुना ॥ जानामि यदि भुंजेऽहं । भोजनं नृप तावकं ॥ १७ ॥ राजा प्राह न मां मुक्त्वा । भोजनं मामकं द्विज ॥ तीव्रोदरानिलस्यापि । सम्यगन्यस्य जीर्यति ॥ १८ ॥ विप्रः प्राह नृपप्राज्य । राज्यलक्ष्मीं धिगस्तु ते ॥ यस्त्वं भोजनमात्रेऽपि । विकल्पाकुलमानसः ॥ १९ ॥ ततश्चाक्रमया राज्ञा—नुज्ञातं भोजनं निजं ॥ भोजितश्च कलत्रादि—तत्कुटुंबान्वितो द्विजः ॥ २० ॥ स च भुक्त्वा गतो गेहे। रजनी च समागता ॥ ईषत्परिणतिं याति । तस्मिंश्चक्रेशभोजने ॥ २१ ॥ सर्वमेवावशीभूतं । तद्ब्राह्मणकुटुंबकं ॥ उन्मादोद्रेकतः सर्व—कृत्याकृत्यविमूढकं ॥ २२ ॥ मुक्तमातृदुहितादि—शिष्टलोकव्यवस्थकं ॥ अकार्यं कर्तुमारब्धं । परस्परमशंकितं ॥ २३ ॥ जीर्णे चान्ने ततः प्रात—र्गते च मद-

नज्वरे ॥ रात्रिव्यतिकरं मत्वा । स विप्रो लज्जितो दृढं ॥ २४ ॥ परिजनस्तदीयश्च । समग्रो व्रीडया मिथः ॥ न शशाक स्वकीयानि । दर्शयितुं मुखान्यपि ॥ २५ ॥ ततोऽकीर्तिभयाद्विप्रो । नगरादपि निर्गतः ॥ विचिंतितं च तेनैवं । कथं नाम महीभुजा ॥ २६ ॥ लोकसमक्षमेवाह—मेतेन तु विडंबितः ॥ ततोऽतिरुष्टचित्तेन । कांतारे हिंडतान्यदा ॥ २७ ॥ तेन व्यलोक्यजापालो । हस्तन्यस्तशरासनः ॥ मृदुगोलिभिरेकत्रा—श्वत्थपत्राणि काणयन् ॥ २८ ॥ त्रिभिर्विशेषकं ॥ चिंतितं च ततस्तेन । यथायं पशुपालकः ॥ मद्विवक्षितकार्यस्य । भविष्यति प्रसाधकः ॥ २९ ॥ एवं विचिंत्य तद्योग्य—भोजनाच्छादनादिभिः ॥ उपचर्य निजाकूतं । तस्मै तेन निवेदितं ॥ ३० ॥ सोऽप्युपरोधतो विप्रा—भिप्रेतं प्रतिपन्नवान् ॥ अन्यदा पशुपालोऽसौ । कुड्यांतरितविग्रहः ॥ ३१ ॥ अमोघबाणघातस्य । ब्रह्मदत्तस्य चक्रिणः ॥ निर्गच्छतः पुरादेक—गोलिकयैव लोचने ॥ ३२ ॥ द्वे अप्युत्पाटयामास । हेलयैव स पापभाक् ॥ अहो दुर्बुद्धिलोकानां । विवेको नैव विद्यते ॥३३॥ त्रिभिर्विशेषकं ॥ ततो राज्ञापि निःशेषं । विज्ञाय द्विजचेष्टितं ॥ क्रुद्धेन स महापापः । सकुटुंबोऽपि घातितः ॥ ३४ ॥ अन्यानपि बहून् विप्रान् । घातयित्वाह मंत्रिणं ॥ यथा नेत्राणि विप्राणां ।

स्थाले कृत्वा निधेहि त्वं । येनाहं निजहस्तकैः ॥ मर्दयित्वा यथा-
समुत्पाद्य मदग्रतः ॥ ३५ ॥ युग्मं ॥ मंत्रिणाप्यतिसंक्लिष्ट—कर्मौघपरतंत्रतां ॥ ज्ञात्वा त-
कामं । करोमि सुखमात्मनः ॥ ३६ ॥ युग्मं ॥ ढौकितं स्थालकं सोऽपि । तानि चक्षुर्धिया ततः ॥
स्य ततः सार्ध—माखोटकफलान्वितं ॥ ३७ ॥ ढौकितं स्थालकं सोऽपि । तानि चक्षुर्धिया ततः ॥
प्रत्यहं मर्दयामास । रौद्रध्यानपरायणः ॥ ३८ ॥ युग्मं ॥ इत्थं स्वस्य सुखं कुर्वन् । गमयतिस्म वा-
सरान् ॥ ततश्च षोडशाग्राणि । सप्तवर्षशतानि सः ॥ ३९ ॥ अनुपाल्य निजायुष्कं । कृत्वा कर्म च
पापकं ॥ प्रवर्धमानदुर्वार—रौद्रध्यानवशं गतः ॥ ४० ॥ मृत्वा दुरंतसंसार—कारितः सप्तमक्षितौ
॥ उत्पन्नो नारकत्वेन । समुत्कृष्टकृतस्थितिः ॥ ४१ ॥ त्रिभिर्विशेषकं ॥ निदानं यत्तदा तत्र । चक्रे
सांभूतिके भवे ॥ तदिह ब्रह्मदत्तस्य । जातं दुर्गतिकारणं ॥ ४२ ॥ चक्रिणा चित्रसंभूती । मातं-
गावपि यत्तदा ॥ वंदितौ सावरोधेन । सपौरेण च भक्तितः ॥ ४२ ॥ तदहो सुप्रतप्तस्य । समग्रं
तपसः फलं ॥ इति ज्ञात्वा सदा सम्य—क्तप्यतां निर्मलं तपः ॥ ४३ ॥ इति चित्रसंभूतिकथानकं
परिसमाप्तं ॥ अथ हरिकेशकथानकं यथा—

अस्तीह मथुरानाम—पुरी शक्रपुरीसमा ॥ तस्यां शंखाभिधो राजा—शेषराजार्चितक्रमः ॥

॥ १ ॥ स च जैनेंद्रसद्धर्म—सदनुष्ठानसंयुतं ॥ त्रिवर्गसुंदरं भुक्त्वा । चिरं सांसारिकं सुखं ॥ २ ॥ सौस्थ्यं कृत्वा निजे राज्ये । कामभोगेषु निःस्पृहः ॥ अंतिके सद्गुरूणां तु । विभूत्या व्रतमग्रहीत ॥ ३ ॥ युग्मं ॥ कालक्रमेण संजातो । गीतार्थः कृतयौगिकः ॥ भ्राम्यंश्च भूतलं प्राप्तः । पुरे गजपुराभिधे ॥ ४ ॥ तत्र भिक्षाकृते भ्राम्यन् । सोमदेवपुरोधसं ॥ हुतवहाख्यरथ्यायाः । समीपस्कमपृछत ॥ ५ ॥ यथा भोभो किमेतेन । पथा विप्र व्रजाम्यहं ॥ तेनाप्यनेन मार्गेण । गछतं दह्यमानकं ॥ ६ ॥ पश्याम्यहमिमं साधुं । गछ गछेति जल्पितं ॥ प्रवृत्तो गंतुमत्यंत—मीर्यया समितो मुनिः ॥ ७ ॥ युग्मं ॥ ब्राह्मणोऽपि समारूढो । गत्वा प्रासादमूर्धनि ॥ ततोऽत्यंतोपयुक्तं तं । प्रगछंतं शनैः शनैः ॥ ८ ॥ मुनिं दृष्ट्वा गतस्तेन । यथा सोऽपि पुरोहितः ॥ यावन्मार्गः स संजात—स्तुषारकणशीतलः ॥ ९ ॥ युग्मं ॥ ततश्चिंतितमेतेन । मयाहो पापकर्मणा ॥ अतीवक्लिष्टचित्तेन । विहितं कर्म पापकं ॥ १० ॥ दृष्टव्यश्च महात्मायं । यत्तपसः प्रभावतः ॥ अग्नितुल्योऽप्ययं मार्गो । जातो हिमकणोपमः ॥ ११ ॥ विचिंत्यैवं गतस्तस्य । सन्मुनेरंतिके द्विजः ॥ वंदितश्च मुनिर्भक्त्या । कथितं च स्वचेष्टितं ॥ १२ ॥ मुनिनापि ततस्तस्य । दर्शिता भवतुछता ॥ प्रकाशितः क-

षायाणां । विपाकोऽत्यंतदारुणः ॥ १३ ॥ स्वर्गापवर्गदातृत्वं । जैनधर्मस्य शंसितं ॥ निंदितं दुर्गतौ दुःखं । श्लाघितं निर्वृतौ सुखं ॥ १४ ॥ सर्वथातिप्रबंधेन । शिष्टः सम्यक्त्वमूलकः ॥ साधुधर्मस्तदा· सेवि—सर्वकल्याणकारकः ॥ १५ ॥ ततोऽसौ देशनां श्रुत्वा । भवनिर्वेदकारिणीं ॥ संविग्नो भव· भीतश्च । जातोत्साहो व्रतंप्रति ॥ १६ ॥ कृत्वा कुटुंबसौस्थ्यादि—कृत्यं तत्समयोचितं ॥ मुनेस्त· स्यांतिके दीक्षां । जग्राह विधिपूर्वकं ॥ १७ ॥ गृहीता द्विविधा शिक्षा । पालितः संयमश्चिरं ॥ कृ· त्वा च कर्मदोषेण । जातिरूपादिकं मदं ॥ १८ ॥ मृत्वा समाधियोगेन । संप्राप्तस्त्रिदशालयं ॥ त· त्र भुक्त्वा सुरस्त्रीभिः । सार्धं भोगाननुत्तरान् ॥ १९ ॥ पल्योपमान्यनेकानि । ततश्च्युतश्च स्थितिक्ष· यात् ॥ गंगातीरेऽस्ति मातंगो । बलकोट्टाभिधानकः ॥ २० ॥ गौरी नाम जनी तस्य । तस्याः कु· क्षावजायत ॥ सर्वतः पुष्पितं चूतं । चैत्रलक्ष्म्या विशोभितं ॥ २१ ॥ स्वप्ने दृष्ट्वा प्रबुद्धा सा । स्व· स्मै भर्त्रे न्यवेदयत ॥ तेनापि कथितः स्वप्नः । स्वप्नशास्त्रप्रवेदिनां ॥ २२ ॥ तैरप्युत्तमपुत्रस्य । स· मुत्पत्तिर्निवेदिता ॥ कालक्रमाच्च सासूत । मातंगी वरदारकं ॥ २३ ॥ कुलकं ॥ अपिच—

जाइमयावलेवा । मायंगकुलम्मि एस उप्पन्नो ॥ सोहग्गरूवरहिओ । नियबंधूणंपि हसणि·

ज्ञा ॥ २४ ॥ तस्य बल इति प्राज्यं । कृतं नाम स्वबंधुभिः ॥ वर्धमानश्च कुर्वाणः । कलहं भंडनं वृथा ॥ २५ ॥ सर्वेषां विषशाखीव । जात उद्वेगकारकः ॥ अन्यदा च क्रमाज्जाते । रम्ये मधुमहोत्सवे ॥ २६ ॥ पानभोजननृत्यादि—सक्तस्वजनबंधुषु ॥ अकस्माद्भंडनं चक्रे । स मातंगो बलाभिधः ॥ २७ ॥ युग्मं ॥ ततो निष्काशितो रुष्टैः । स तैरापानभूमितः ॥ तानि च रममाणानि । दूरमास्ते विलोकयन् ॥ २८ ॥ क्षणांतराच्च तन्मध्ये । समायातो भुजंगमः ॥ व्यापादितः स तै रुष्टै—स्ततो दीवक आगतः ॥ २९ ॥ स तु व्यापादितो नैव । विलोक्येदं ततो बलः ॥ अचिंतयद्यथा भो भो । स्वदोषेणैव देहिनः ॥ ३० ॥ भवंति विपदां स्थानं । संपदां तु गुणोदयात् ॥ हतोऽहिः सविषो यस्मा—न्न तथा दीवकोऽविषः ॥ ३१ ॥ युग्मं ॥ स्वकैरेव गुणैर्दोषैः । संपदो विपदो यतः ॥ जायंते प्राणिनां तस्मा—दर्जयामि गुणानहं ॥ ३२ ॥ अपि च—एवं भावेमाणो । धम्मं सोऊण साहुमूलम्मि ॥ निद्दिाभवपवंचो । मायंगो महारिसी जाओ ॥ ३३ ॥ विधिनोपात्तनिःशेष—साधुक्रियाकलापकः ॥ षष्ठादितूर्यमासांतं । तपस्तीव्रं चकार सः ॥ ३४ ॥ तपसैवंविधेनाथ । कृषीभूतशरीरकः ॥ क्रमतो विहरन् प्राप्तः । पुरीं वाणारसीमसौ ॥ ३५ ॥ स्थितः साधूचिते स्थाने ।

उद्याने तिंडुकाभिधे ॥ तत्र चावसते यक्षो । गंडितिंदुकनामकः ॥ ३६ ॥ स च साधुगुणग्रामैः । समावर्जितमानसः ॥ तमेव प्रत्यहं साधुं । शुश्रूषन्नभितिष्ठति ॥ ३७ ॥ अन्यदान्येन यक्षेण । स यक्षः प्रश्नितो यथा ॥ भो भो किं दृश्यसे न त्वं । तेनोक्तं कथ्यते शृणु ॥ ३८ ॥ वयं भो पर्युपासीनाः । साधुमेवमिहास्महे ॥ त्रिलोकस्यापि संपूज्यं । व्रजामो न हि कुत्रचित् ॥ ३९ ॥ श्रुत्वेदं सर्वमत्यर्थं । साधोश्चरितमुत्तमं ॥ प्रतिबुद्धस्ततः सोऽपि । यक्षः साध्वनुभावतः ॥ ४० ॥ ततश्च तिंदुकं यक्षं । स प्रोवाच प्रहर्षितः ॥ धन्यस्त्वं कानने यस्य । वसत्येष महामुनिः ॥ ४१ ॥ अपिच—दट्ठुं मुणिस्स चरियं । पडिबुद्धो सोवि तिंदुगं भणइ ॥ तं चिय मित्त कयत्थो । जस्स वणे वसइ तव एसो ॥ ४२ ॥ मज्झवि वसंति मुणिणो । उज्जाणे ता खणंतरं एक्कं ॥ गंतूण तेवि सरिसा । वंदामो भाणिउं पत्ता ॥ ४३ ॥ दिट्ठा य तेहिं मुणिणो । कहवि पमाउ विगहमाणाउ ॥ ताहे गाढयरागं । अणुरत्ता तंमि ते जक्खा ॥ ४४ ॥ एवं तिंदुकयक्षस्य । स्तुवतस्तं महामुनिं ॥ सद्भक्त्याकृष्टचित्तस्य । व्यतिव्रजंति वासराः ॥ ४५ ॥ अपिच—भावेण वंदमाणस्स । महारिसिं तस्स पूयपावस्स ॥ वच्चइ सुहेण कालो । हरिणोव्व जिणं थुणंतस्स ॥ ४६ ॥ तत्र च पद्मपत्राक्षी ।

कौशलिकमहीपतेः ॥ भद्रा नाम वरा कन्या । रूपयौवनगर्विता ॥ ४७ ॥ समं सद्गंधपुष्पादि—प टलव्यग्रपाणिना ॥ चेटिकाचक्रपालेन । यक्षायतनमागता ॥ ४८ ॥ युग्मं ॥ तं यक्षं पूजयित्वा सा । प्रयच्छंती प्रदक्षिणां ॥ तन्महामुनिमद्राक्षी—न्मलक्लिन्नांगधारिणं ॥ ४९ ॥ अतीवमलिनस्यूत— जीर्णोपकरणान्वितं ॥ प्रणष्टरूपलावण्यं । तपःशोषितविग्रहं ॥ ५० ॥ युग्मं ॥ दृष्ट्वा च तं महासा धु—मतिबीभत्सदर्शनं ॥ तया निष्टीवितं तत्र । महामोहविमूढया ॥ ५१ ॥ पापा केयमहो कन्या । या निंदति महामुनिं ॥ एवं विचिंत्य यक्षेण । तच्छरीरमधिष्टितं ॥ ५२ ॥ ततोऽसमंजसैर्वाक्यैः । प्रलपंती विसंस्थुलं ॥ कथंचिदेव कष्टेन । नीता सा राजमंदिरे ॥ ५३ ॥ दृष्ट्वा तां तादृशीं राज्ञा— त्यंतमातुरचेतसा ॥ अनेके व्याहृता ज्योति—र्मंत्रतंत्रवादिवादिनः ॥ ५४ ॥ अपिच—जो विरडिं पि न जाणइ । नरवइणा सोवि तत्थ वाहरिओ ॥ नेहा जल्लाण अहवा । केत्तियमेत्तं व पुरिसाण ॥ ५५ ॥ ततस्तस्याः समारब्धा । धन्वंतरिसमप्रज्ञैः ॥ क्रिया चतुर्विधा वैद्यै—र्यथाज्ञानं प्रयत्नतः ॥ ५६ ॥ तथापि नैव संजातो । गुणः कोऽपि मनागपि ॥ पुनश्चानेकधा मंत्र—तंत्रयंत्रादयः कृ ताः ॥ ५७ ॥ तेऽप्यूषर इव न्यस्ताः । सर्वे विफलतां ययुः ॥ अथवा दैविके विघ्ने । किं करोतीह

जंपइ पत्तंमि ठि
मानवः ॥ ५८ ॥ अपिच—इय जाहेवि गुत्ता । सव्वे विज्जाइणो तओ जक्खा ॥ जंपइ पत्तंमि ठि
ओ । एयाए निंदिओ साहू ॥ ५९ ॥ ता जइ वरइ तस्सेव । देहं मुंचामि नन्नहा मोक्खो ॥ रन्ना·
वि जीविअत्ति य । पडिवन्नं जक्खवयणंति ॥ ६० ॥ ततः स्वस्थशरीरा सा । सर्वालंकारभूषिता ॥
विवाहयोग्यसद्वस्त्र—व्यग्रपाणिसखीयुता ॥ ६१ ॥ जगामातिमहाभूत्या । मुनेस्तस्य पदांतिके ॥
पतित्वा पादयोः स्वीयै—र्महल्लकैः समं ततः ॥ ६२ ॥ विज्ञप्तः स तया भक्त्या । यथा भो भो म·
हामुने ॥ स्वयंवरागताया मे । गृहाण करपल्लवं ॥ ६३ ॥ मुनिर्बभाण हे भद्रे । पर्याप्तं कथयान·
या ॥ निंदनीयं ध्रुवं लोके—स्तन्मावोचस्त्वमीदृशं ॥ ६४ ॥ अपि च—इत्थीइ समं वासंपि । जे
न इच्छंति एक्कवसहीए ॥ कह ते नियपकरेहिं । रमणीण करे गहिस्संति ॥ ६५ ॥ सिद्धिवहुब·
द्धराया । असुइपुन्नासु कहणु जुवईसु ॥ रज्जंति महामुणिणो । गेवेज्जयवासिदेवव्व ॥ ६६ ॥ त·
तो नानाप्रकाराणि । विकुर्व्य च रूपाणि सा ॥ प्रबाद्य साधुरूपं च । यक्षेणातीवधर्षिता ॥ ६७ ॥
विमानिता निशां सर्वां । नानाकारं यथेच्छया ॥ प्रभातसमये याव—दालोकयति तं मुनिं ॥ ६८ ॥
ततः स्वप्नमिवाशेषं । मन्यमानातिदुर्मनाः ॥ स्वलोकेनानुयाता च । जगाम निजमंदिरं ॥ ६९ ॥

अथ विज्ञपयामास । महीनाथं पुरोहितः ॥ राजन् मुनीशपत्नीयं । मुनिना प्रोज्झिता सती ॥७०॥
भवतु पत्नी विप्राणां । तस्मात्तेभ्यः प्रदीयतां ॥ प्राप्तकालमिदं चैवे—त्याकलय्य महीभुजा ॥७१॥
प्रदत्ता रुद्रदेवाय । तस्मै चैव पुरोधसे ॥ अलाहो खलु संसारे । कर्मणां गतिरीदृशी ॥ ७२ ॥
अपि च—पावनिमित्तं कालं । जा रिसिणा उज्झिया नरिंदसुया ॥ सावि पुरोहिएणं । गहिया
सुहकारणं कालं ॥ ७२ ॥ एवं पुरोधसस्तस्य । तया सार्धं यथेप्सितं ॥ भुंजानस्य महाभोगान् ।
कालः कोऽपि व्यतीतवान् ॥ ७३ ॥

अन्यदा रुद्रदेवेन । यज्ञं प्रयजता सता ॥ विहिता यज्ञपत्नी सा । विधिना राजपुत्रिका ॥
॥ ७४ ॥ तत्र च भट्टचट्टाद्या । नानादेशांतरागताः ॥ अनेके मिलिताः स्वर्ण—गोदानादिजिघृ-
क्षया ॥ ७५ ॥ इतश्च स मुनिर्भ्राम्यन् । भिक्षार्थं मासपारणे ॥ समितः सुष्टु गुप्तश्च । यज्ञपाटक-
मागतः ॥ ७६ ॥ प्रविष्टश्च मुनिस्तत्र । धर्मलाभपुरस्सरं ॥ भट्टादीनां पुरोभूय । देशे साधूचिते
स्थितः ॥ ७७ ॥ ततस्तपःकृशीभूत—देहं भूरिमलाविलं ॥ प्रणष्टरूपलावण्यं । प्रांतवस्त्रादिधारिणं ॥
॥ ७८ ॥ दृष्ट्वा तं मुनिमारब्धा । हसितुं ते द्विजादयः ॥ निंदागर्भैरसभ्यैश्च । दुर्वचोभिर्विरुद्धकैः

॥ ७९ ॥ अपिच—जंपिंति भट्टचट्टा । कीस तुमं एत्थ आगमो पाव ॥ ता तुरियं एयाओ । ठाणाओ वच्चसु हयास ॥ ८० ॥ एत्थंतरंमि जक्खो । रिसिणो देहंमि पविसिउं भणइ ॥ भिक्खत्थमागओहं । ता दिज्जउ मज्झ भो भिक्खा ॥ ८१ ॥ जाइकुलेसु विसिठा । वेयविहन्नू सकम्मसंतुठा ॥ ताण दियाणं तु इमो । दिज्जिस्सइ वच्च तं पाव ॥ ८२ ॥ हिंसालियचोरिक्के—मेहुन्नपरिग्गहाओहं विरओ ॥ समसत्तुमित्ततणु—लेठुकंचणो विगयहंकारो ॥ ८३ ॥ परिचत्तगिहावासो । उग्गमउप्पायएसणासुद्धं ॥ जाएमि भिक्खमित्तं । गिहे गिहे तेण पत्तोम्हि ॥ ८४ ॥ एसो य कओ पागो । विविहो तुम्हेहिं निययकज्जेण ॥ ता एयाओ मज्झवि । धम्मठा देह भो भिक्खं ॥ ८५ ॥ जाव दिएहिं न भुत्तो । पढमं जलणेवि जाव नोच्छुढो ॥ ताव न दिज्जइ एसो । सुद्धाणं वच्च तं समण ॥ ८६ ॥ जह कालम्मि सुखित्ते । विहिणा बीयं सुवात्रियं फलयं ॥ जायइ तह पिश्वंभण—जलणम्मि निवेसियं दाणं ॥ ८७ ॥ अह मुणिणा ते भणिया । जाइमित्तेण हुंति नो विप्पा ॥ तुम्हारिसव्वपावा । हिंसालियमेहुणा सत्ता ॥ ८८ ॥ जलणेवि पावहेऊ । तहं तम्मि निवेसियं सुहं कुणइ ॥ पिउणोवि परभवगया । इयदिन्नं कहणु गेण्हंतु ॥ ८९ ॥ ततश्च—प्रतिकूलविज्ञापीति ।

ब्राह्मणानामयं मुनिः ॥ तं साधुंप्रति ते चट्टा । गालिघातैरुपस्थिताः ॥ ९० ॥ लातलेष्टुलताय-ष्टि—कषाकंबादिलक्षणैः ॥ यक्षेण स्तंभिताः सर्वे । ते चित्रलिखिता इव ॥ ९१ ॥ अपि च— छिन्नतरुणोव्व ताणं । निवाडिया केवि तेण जक्खेण ॥ अन्ने पहरेहिं हया । अन्ने पुण वामिया रु-हिरं ॥ ९२ ॥ दट्ठूणं ते चट्टे । मुणिणो भद्दाइए तहारूवे ॥ भयवेपमाणहियया । भद्दा ते भ-णइ सह पइणा ॥ ९३ ॥ एसो सो जेण तया । सयंवरा भवणया अहं चत्ता ॥ सिद्धिवहुरागर-त्तो । नेच्छइ सुरसुंदरीओवि ॥ ९४ ॥ अइघोरतवपरिक्कम—वसीकयासेसतिरियनरदेवो ॥ तेलोक्क-पणयचलणो । नाणाविहलद्धिसंपन्नो ॥ ९५ ॥ जियकोहमाणमाओ । जियलोभपरीसहो महास-त्तो ॥ निद्दाविय पावपसरो । तियसासुरपणयपयकमलो ॥ ९६ ॥ जलणोव्व दहइ भुवणं । कुविओ तं चेव रक्खए तुट्ठो ॥ ता एयं तज्जिंता । वच्चिस्सह अंतयघरम्मि ॥ ९७ ॥ पाएसु निवडिऊणं । एयं तोसेह महरिसिं तुब्भे ॥ जइ जीविएण कज्जं । एवं भद्दाए ते भणिया ॥ ९८ ॥ रागाइए-हिं जं भे । अवरद्धं तं खमाहि णो भयवं ॥ पणिवइ य वच्छलच्चिय । हवंति लोगम्मि वरमुणिणो ॥ ९९ ॥ अह ते मुणिणा भणिया । संसारनिबंधणस्स कोवस्स ॥ को अवगासं दिज्जा । विसे-

सव्वं मुणियजिणवयणो ॥ १०० ॥ महज्जत्तिपरेण इमे । चट्टा जक्खेण वारिश्रा दूरं ॥ ता तं चि-
य संज्ञासह । जेण कया एरिसा तुज्झे ॥ १ ॥ ततश्च मुनिना सार्धं । बहुधा विज्ञसेन ते ॥ यक्षे-
ण शांतचित्तेन । सर्वेऽपि प्रगुणीकृताः ॥ २ ॥ अत्रांतरे च शुद्धेन । वराहारेण सादरं ॥ राज्ञः पु-
त्र्याः समं भर्त्रा । स मुनिः प्रतिलंभितं ॥ ३ ॥ ततो गंधोदकं तत्र । निपपात नभोंगणात् ॥ द-
शार्धवर्णसत्पुष्प—वृष्ट्या सार्धं समंततः ॥ ४ ॥ आहता गगने देवै—र्दुरिंदुदुभयो भृशं ॥ प-
पात वसुधाराथ—श्चेलोत्क्षेपः कृतो जनैः ॥ ५ ॥ मुनेर्माहात्म्यमालोक्य । धर्मदेशनया तया ॥ सं-
बुद्धाः प्राणिनोऽनेके । धर्मं च प्रतिपेदिरे ॥ ६ ॥ तदेवं हरिकेशेन । मातंगेनापि दुष्करं ॥ तथा
तप्तं तपो येन । त्रिदशैरपि पूजितः ॥ ७ ॥ इति हरिकेशकथानकं समाप्तं. ॥

तदिदमिह तपोमाहात्म्यमालोक्य लोका—श्चरत गुरुतपांसि व्यस्य गेहादिसंगं ॥ भवशत-
कृतकर्मारण्यकं येन दग्ध्वा । सपदि विशदसौख्यां मोक्षलक्ष्मीं लभध्वं ॥ ८ ॥ उल्लसइ जसो
विहरइ । गुणगणो गलइ पावपब्भारो ॥ वियलइ कम्मकलंको । तवलद्धीविब्भसियंगाण ॥ ९ ॥
उसरइ दुरियनियरो । पिहरइ महंतसोक्खसंदोहो ॥ पसरइ जणाणुरागो । नराण तवलद्धिकलि-

याणं ॥ १० ॥ तथा—पवरजडिलमूलोद्दाममिछत्तमूलो । दढकढिणकसायाणेगसाहासमुहो ॥ वि-
सयविसरफुल्लो मोहरुक्खो महल्लो ॥ तवहुयवहजालालंकिओ जाइ नासं ॥ ११ ॥ घणतुहिणणिवा-
सो पावपंकेरुहाणं । सियकुलिसनिवाओ डुक्खदुग्गाचलाणं ॥ खरनहरमइंदो दोसदोघट्टयाणं ।
जयइ तवसुरूवो सुद्धधम्मो सुरम्मो ॥ १२ ॥ भवजमणभुयंगुच्चामणे चारुमंतो । सिवपहपहियाणं
सत्थवाहो महंतो ॥ कुगइडुहदुमाणं खंमणे खग्गतुल्लो । जयउ तवसमूहालंकिओ साहुधम्मो ॥
॥ १३ ॥ वररयणनिहाणं निद्धणाणं जणाणं । अमरनरगयाणं कारणं संपयाणं ॥ मुणिजणअच-
यंसो सव्वकल्लाणकोसो । जयउ तवसिरीए लासलीलाविलासो ॥ १४ ॥ इति तपोऽधिकारः समा-
प्तः. ॥ अथ भावनाधिकार उच्यते, अस्य चायमभिसंबंधः—पूर्वत्र तप उक्तं, तपश्च भावसारमेव
क्रियमाणं कर्मक्षयाय प्रभवतीत्यतोऽत्र भावना भण्यते, तत्र भावनायाः स्वरूपं माहात्म्यं च प्रदर्श-
यन् श्लोकदशकमाह, तद्यथा—

॥ मूलम् ॥—भो भव्या भावना भाव्या । निर्मूल्या शर्मसाधिका ॥ भावनयैव भव्यानां ।
भवांतो जायते यतः ॥ १ ॥ द्रव्येण दीयते दानं । शीलं सत्वेन पाल्यते ॥ तपोऽपि तप्यते कष्टं

। स्वाधीना भुवि भावना ॥ २ ॥ भावनातोऽपि ये भ्रष्टा—स्ते भ्रमंते भवोदधौ ॥ नात्मलाभं ल-
भंते ते । बीजाभावादिवांकुराः ॥ ३ ॥ भावनातः क्षयं याति । भवकोटीभिरर्जितं ॥ संसारनिंब-
वृक्षस्य । बीजाभं कर्म देहिनां ॥ ४ ॥ सुबह्वपि तपस्तप्तं । चारित्रं च चिरं कृतं ॥ यदि भावो न
संजात—स्तदा तत्तुषकंडनं ॥ ५ ॥ अधीतानि च शास्त्राणि । लोकानां देशना कृता ॥ कृतानि
दिव्यकाव्यानि । जिता वादे च वादिनः ॥ ६ ॥ भावना यदि नो जाता । सद्गतिद्वारकुंचिका ॥
स्वकार्यासाधकत्वेन । तदा सर्वं निरर्थकं ॥ ७ ॥ रथकारः स्वयं दाता । गृहीता पात्रमुत्तमं ॥ पा-
र्श्वस्थो भावनासार—मनुमंता मृगस्तथा ॥ ८ ॥ वाताहतार्धछिन्नेन । वृक्षेण पतता सता ॥ त्रयोऽ-
पि चूर्णिताः संतो । ब्रह्मलोकमुपागताः ॥ ९ ॥ हृदयगिरिगुहांतःसंसृतं यत्तमिस्रं । तदपनयनदक्षः
केवलज्ञानभानुः ॥ स पुनरुदयमेति कृत्स्नदोषावसाने । तदपि च न दुरापं वर्तते भावनायाः ॥
॥ १० ॥ व्याख्या—इति श्लोकदशकं कंठ्यं, नवरं भो इत्यामंत्रणे, भव्या मुक्तिसुखलब्धारः, भा-
वना शुभभावरूपा भाव्या भावनीया, निर्मूल्या मुधिकालभ्या, शर्मसाधिका सुखकारिका, भावनयैव
भावनात एव भव्यानां भवांतो भवनाशो जायते भवति, यतो येन कारणेन, शेषं श्लोकाष्टकं स्प-

ष्टमेव. हृदयमेव गिरिगुहा तस्या अंतर्मध्यं तत्र संसृतं स्थितं यत्तमिस्रमिव तमिस्रमज्ञानं, तस्य तमिस्रस्यापनयनं विनाशस्तत्र दक्षः पटुः, केवलज्ञानमेव भानुरिव भानुरादित्यः, स पुनः केवलज्ञानभानुरुदयमेत्युदयं गच्छति, कृत्स्नदोषावसाने सकलरागादिदोषक्षये, तदपि च कृत्स्नदोषावसानं न दुरापं न दुःप्रापं वर्तते भवति. ॥ १–१० ॥ भावनायाः शुभाध्यवसायस्योपरि रथकारदानानुमोदनपरमृगकथानकं त्विदं—

अत्रैव भारते वर्षे । तुंगप्राकारवेष्टिता ॥ सर्वस्वर्णमया रम्या । नगरी द्वारिकावती ॥ १ ॥
स्वर्णरत्नमयानेक—शुभ्रप्रासादसंकुला ॥ कुलकोटीभिराकीर्णा । रम्या च रम्यवस्तुभिः ॥ २ ॥ द्वादशयोजनायामा । नवयोजनविस्तृता ॥ रम्यवस्तुपरिपूर्णा । दिव्या देवविनिर्मिता ॥ ३ ॥ तां च पालयते कृष्ण—वासुदेवोऽर्धचक्रभृत् ॥ बलभद्रस्तु तद्भ्राता । तथा जरत्कुमारकः ॥ ४ ॥ द्वावपि च तकौ ज्येष्ठौ । पिता वसुदेवोऽनयोः ॥ ते च प्रद्युम्नसांबादि—दुर्ललितकुमारकाः ॥ ५ ॥ अन्ये च वसुदेवाद्या । यादवा बलगर्विताः ॥ नित्यं च चिंतिताशेष—संपूर्णस्वमनोरथाः ॥ ६ ॥ भुंजाना आसते कामं । कामभोगान् मनोहरान् ॥ अन्यदा च समायातः । श्रीमन्नेमिजिनेश्वरः ॥

॥ ७ ॥ भव्यांबुजप्रबोधाय । केवलज्ञानभास्करः ॥ समवसरणं रम्यं । देवादिभिर्विनिर्मितं ॥ ८ ॥
आगताश्च सुरास्तत्र । केशवाद्याश्च मानवाः ॥ कृता च स्वामिना धर्म—देशना मोहनाशिनी ॥
॥ ९ ॥ ततो धर्मकथांते च । वासुदेवेन जल्पितं ॥ स्वामिन्नस्याः पुरः प्रोच्चैः । समृद्धाया धना-
दिभिः ॥ १० ॥ यादवस्य कुलस्यास्य । ममेतरजनस्य च ॥ क्षयः केन निमित्तेन । कुतो वा पु-
रुषांतरात् ॥ ११ ॥ कियतः कालतो वापि । जगत्प्रभो भविष्यति ॥ जिनेन जल्पितं कृष्ण । श्रू-
यतां कथयामि भोः ॥ १२ ॥ युग्मं ॥ अस्ति द्वीपायनो नाम । परिव्राजक एककः ॥ स च मद्य-
मदोन्मत्तैः । सांबादिभिः कुमारकैः ॥ १३ ॥ दुर्वाक्ययष्टिमुष्ट्याद्यै—र्नानाकारं खलीकृतः ॥ वि-
नाशयिष्यते सर्वां । वह्निना द्वारिकावतीं ॥ १४ ॥ यादवान् शेषलोकांश्च । सर्वान् संवर्तयिष्यति ॥
अस्य चैवं समुत्पत्तिः । संजाता कथ्यते शृणु ॥ १५ ॥

पूर्वं पराशरो नाम । शौरिकः पुरबाह्यतः ॥ बभूव तत्र विख्यात—स्तापसस्तापसाश्रमे ॥१६॥
तेनैका कन्यका प्राप्ता । स्वछंदा दुष्टचारिणी ॥ तामादाय समायातो । यमुनासरितस्तटे ॥ १७ ॥
तत्र चायं तयोर्जातः । पुत्रो द्वीपायनाभिधः ॥ स च यौवनमारूढो । ब्रह्मचर्यं प्रपन्नवान् ॥ १८ ॥

उपवासद्वयांते च । पारयामास सर्वदा ॥ तेन च तिष्ठता तत्र । श्रुतं जनप्रवादतः ॥ १९ ॥ यथा भगवतारिष्ट—नेमिनेदं प्रभाषितं ॥ नगर्या द्वारिकावत्याः । समं च यादवैः खलु ॥ २० ॥ भविता सर्वथा नाशो । द्वीपायनसकाशतः ॥ तदिदं निर्घृणं कर्म । करिष्येऽहं कथं बत ॥ २१ ॥ युग्मं ॥ विचिंत्यैवं सखेदोऽसौ । वनांतरमशिश्रियत् ॥ तथा भो यत्त्वया पृष्ट—मात्ममरणकारणं ॥ ॥ २२ ॥ तदिदं कथ्यते तुभ्यं । श्रूयतां केशवाधुना ॥ योऽयं ज्येष्ठस्तव भ्राता । जरादेवीवरात्मजः ॥ २३ ॥ नंदनो वसुदेवस्य । जरत्कुमारनामकः ॥ एतस्मान्निश्चितं कृष्ण । मृत्युस्तव भविष्यति ॥ ॥ २४ ॥ युग्मं ॥ श्रुत्वेदं यादवानां तु । तस्मिन् जरत्कुमारके ॥ हेलया पतिता दृष्टिः । सविकारातिरोषतः ॥ २५ ॥ ततो जरत्कुमारेण । मनस्येवं विचिंतितं ॥ अहो कष्टमहो कष्टं । संजातं कीदृशं कथं ॥ २६ ॥ अहं हि वसुदेवस्य । पुत्रो भूत्वापि नृप्रियः ॥ कथं स्वभ्रातरं मूढो । मारयिष्ये कनिष्ठकं ॥ २७ ॥ अहो पापं महाताप—महो निर्घृणता मम ॥ चिरं चित्ते विचिंत्यैव—मापृच्छ्य च निजं जनं ॥ २८ ॥ जनार्दनस्य रक्षार्थं । वनवासमुपागतः ॥ अथ नेमिः पुनः प्रोचे । यथा भो भो जनार्दन ॥ २९ ॥

ततः सांबकुमाराय । गत्वा तेन निवेदितं ॥ गतश्च तत्र सांबोऽपि । पीता सा तेन वारुणी ॥५२॥
विचिंतितं च किं युक्त—महो मे कर्तुमीदृशं ॥ यत्किंचित्सुखदुःखादि । सह्यते कुमरैर्विना ॥ ५३ ॥
तस्मादत्र प्रगे सर्वा—नानयामि कुमारकान् ॥ तथैव तेन ते सर्वे । आनीतास्तत्र कानने ॥ ५४ ॥
दृष्टा च सा तकैर्हृद्या । सुस्वादा सुंदरा सुरा ॥ आदिष्टाश्च स्वका भृत्या—स्तदानयनहेतवे ॥५५॥
यथैनां सुंदरां शीघ्रं । समानयत वारुणीं ॥ तैरपि च समानीता । ततः सानंदचेतसः ॥ ५६ ॥ ग-
ताः सुंदरमुद्यानं । नानावृक्षोपशोभितं ॥ नानापुष्पफलोपेतं । गंधलुब्धालिसंकुलं ॥ ५७ ॥ युग्मं
ततश्चाज्ञापि सांबेन । यथा भो भो कुमारकाः ॥ षण्मासांते सुलब्धेयं । कथंचित्पुण्ययोगतः ॥
॥ ५८ ॥ हृद्यामृतरसस्वादां । वरां पिबत वारुणीं ॥ ततस्तथैव ते पातुं । प्रारब्धा हृष्टचेतसः ॥५९॥
ततो जातमदोद्रेका । ननृतुश्च जगुश्च ते ॥ वल्गंत्यालिंगयंतेस्म । युध्यंते च परस्परं ॥ ६० ॥
क्रीडंतश्च गताः सर्वे । पर्वताभ्यर्णकाननं ॥ इतश्चेतश्च ते तत्र । पर्यटंतो व्यलोकयन् ॥ ६१ ॥ त-
पस्तीव्रं चरंतं तं । मुनिं द्वीपायनाभिधं ॥ प्रवक्तुं च समारब्धा । यथा सोऽयं महामुनिः ॥ ६२ ॥
युग्मं ॥ आदिष्टो यो जिनेंद्रेण । श्रीमन्नरिष्टनेमिना ॥ नगर्या द्वारिकावत्याः । सर्वनाशविधायकः

॥ ६३ ॥ तदेनं किं न भो हन्मो । निःप्रयोजनवैरिणं ॥ निकृष्टं निर्घृणं पापं । जनस्यास्य क्षयं-
करं ॥ ६४ ॥ ततो रोषेण रक्ताक्षा । दंतदष्टाधरोष्ठकाः ॥ प्रारब्धा यष्टिमुष्ट्याद्यै—र्हंतुं द्वीपायनं
दृढं ॥ ६५ ॥ हतस्तावदसौ याव—न्निर्बलः सोऽपतद्भुवि ॥ हत्वेत्थं नगरीमध्ये । प्रविविशुः कुमा-
रकाः ॥ ६६ ॥

अथेदं वासुदेवाय । कुमाराणां विचेष्टितं ॥ विश्रंजणीयकैः पुंभिः । सर्वमेव प्रवेदितं ॥६७॥
ततो व्यचिंतयत्केशी । भो भो पश्यत पश्यत ॥ कुमाराणां विमूढत्वं । दुर्दांतत्वं प्रमत्तता ॥ ६८ ॥
निरपेक्षविधायित्व—मदीर्घदर्शितां तथा ॥ तदहो जीवितभूतानां । किमेषां कुर्महे वयं ॥ ६९ ॥
युग्मं ॥ चिरं केशी विचिंत्यैवं । ततो रामसमन्वितः ॥ जगाम कानने तत्र । द्वीपायनोपशांतये ॥
॥ ७० ॥ दृष्टश्च रुष्टचित्तोऽसौ । द्वीपायनोऽतिदुर्मनाः ॥ क्षामितश्च प्रियालापैः । पादलग्नेन सादरं
॥ ७१ ॥ इत्थं न क्षमते याव—त्तावद्रामेण जल्पितं ॥ भो कृष्णालं प्रयत्नेन । किं व्यर्थं परिखि-
द्यसे ॥ ७२ ॥ यदेतेन किमप्यत्र । चिंतितं विदधातु तत ॥ दुर्जनो दुर्जनश्चैव । क्षामितोऽपि न
शाम्यति ॥ ७३ ॥ अथवा यज्जिनेंद्रेण । नेमिनाथेन भाषितं ॥ तदहो सर्वथा कृष्ण । नान्यथा

वत्सरे द्वादशे पुर्या । अस्या नाशो भविष्यति ॥ श्रुत्वेति जिनवाक्यं ते । गताः शोकं ज· नाः सखे ॥ ३० ॥ ततस्ते यादवाः सर्वे । गते जरत्कुमारके ॥ शून्यमिव निजात्मानं । मन्यंते शो· कविह्वलाः ॥ ३१ ॥ ततो नत्वा जिनं नेमिं । सर्वेऽप्युद्विग्नचेतसः ॥ संसाराशनित्यतां चैव । चिंतयंतः सुदुःखिताः ॥ ३२ ॥ पुर्याश्च द्वारिकावत्याः । सर्वनाशं विशेषतः ॥ प्रविष्टा नगरीमध्ये । शोकाकु· लितमानसाः ॥ ३३ ॥ युग्मं ॥ ततश्च वासुदेवेन । कारिता घोषणा पुरि ॥ यथा भो भो जना नीत्वा । वने कादंबनामनि ॥ ३४ ॥ समग्राण्यपि मद्यानि । परित्यजत सत्वरं ॥ श्रीमता नेमिना· थेन । यतश्चैवं प्ररूपितं ॥ ३५ ॥ युग्मं ॥ यथा मद्यप्रसंगेन । सांबादयः कुमारकाः ॥ द्वीपायनप· रिव्राजः ॥ करिष्यंति कदर्थनां ॥ ३६ ॥ श्रुत्वा चैवं ततो लोकैः । कादंबकमहावने ॥ शिलाकुंडेषु मद्यानि । संत्यक्तान्यखिलान्यपि ॥ ३७ ॥ ततः कादंबसंलग्न—शिलागुहासु संभृता ॥ कादंबरीति विख्याता । सा सुरा भण्यते जने ॥ ३८ ॥ अत्रांतरे च रामस्य । भ्राता सिद्धार्थनामकः ॥ सार· थित्वं तु तस्यैव । स्नेहाद्यः प्रतिपन्नवान् ॥ ३९ ॥ श्रुत्वा यादवलोकस्य । नगर्या सह संक्षयं ॥ रा· मं भणितुमारब्धो । नम्रो मधुरया गिरा ॥ ४० ॥ रामाय नेमिनाथेन । शिष्टः संसारसागरः ॥ ज·

न्मव्याधिजरामृत्यु—जलकल्लोलसंकुलः ॥ ४१ ॥ नानादुःखमहारौद्र—नक्रचक्रादिदुस्तरः ॥ क्षण-
ध्वंसीनि शिष्टानि । वस्तून्यत्राखिलान्यपि ॥ ४२ ॥ अस्माकं तु विशेषेण । दर्शिता सर्वनाशिता
॥ तदहं राम निर्विण्ण । इतः संसारचारकात् ॥ ४३ ॥ समीपे नेमिनाथस्य । प्रव्रजामि विसर्जय ॥
रामेणाप्यतिनिर्बंधं । विज्ञायासौ विसर्जितः ॥ ४३ ॥ पंचभिः कुलकं ॥ उक्तश्च प्रतिबोध्योऽहं ।
त्वयका व्यसने क्वचित् ॥ वाक्यं रामस्य तेनापि । तत्तथैव प्रतिश्रुतं ॥ ४४ ॥ ततः पृष्ट्वा निजं लो-
कं । गत्वा नेमिजिनांतिके ॥ संसारोत्तारिणीं दीक्षां । जग्राह सुविधानतः ॥ ४५ ॥ ततः कृत्वा त-
पस्तीव्रं । षण्मासं यावदुत्तमं ॥ आलोचितप्रतिक्रांतो । देवलोकं जगाम सः ॥ ४६ ॥ कादंबरीगु-
हायां तु । शिलाकुंडेषु या सुरा ॥ सा हेमंतादिषड्भि—र्मासैः पक्वरसाजनि ॥ ४७ ॥ सुस्वादा
सुंदरा हृद्या । कर्केतनसमप्रभा ॥ इतश्च गतवांस्तत्र । व्याध एकः परिभ्रमन् ॥ ४८ ॥ सद्यः सांब-
कुमारस्य । वारुणीं तां विलोक्य सः ॥ आस्वादयितुमारब्धो । यतः स्वादुरसा हि सा ॥ ४९ ॥
पपौ च तां यथाकामं । स्वपाणिपुटकैस्ततः ॥ वीक्षमाणेन तत्रैव । मृगास्तेन विलोकिताः ॥ ५० ॥
यावत्तेऽपि हि सुस्वस्थाः । सुरापानमदोध्धुराः ॥ क्रीडंतस्तत्र तिष्टंति । निर्भयास्तुष्टचेतसः ॥ ५१ ॥

ततः सांबकुमाराय । गत्वा तेन निवेदितं ॥ गतश्च तत्र सांबोऽपि । पीता सा तेन वारुणी ॥५२॥
विचिंतितं च किं युक्त—महो मे कर्तुमीदृशं ॥ यत्किंचित्सुखदुःखादि । सह्यते कुमरैर्विना ॥ ५३ ॥
तस्मादव प्रगे सर्वा—नानयामि कुमारकान् ॥ तथैव तेन ते सर्वे । आनीतास्तत्र कानने ॥ ५४ ॥
दृष्टा च सा तकैर्हृद्या । सुस्वादा सुंदरा सुरा ॥ आदिष्टाश्च स्वका भृत्या—स्तदानयनहेतवे ॥५५॥
यथैनां सुंदरां शीघ्रं । समानयत वारुणीं ॥ तैरपि च समानीता । ततः सानंदचेतसः ॥ ५६ ॥ ग-
ताः सुंदरमुद्यानं । नानावृक्षोपशोभितं ॥ नानापुष्पफलोपेतं । गंधलुब्धालिसंकुलं ॥ ५७ ॥ युग्मं
ततश्चाज्ञापि सांबेन । यथा भो भो कुमारकाः ॥ षण्मासांते सुलब्धेयं । कथंचित्पुण्ययोगतः ॥
॥ ५८ ॥ हृद्यामृतरसस्वादां । वरां पिबत वारुणीं ॥ ततस्तथैव ते पातुं । प्रारब्धा हृष्टचेतसः ॥५९॥
ततो जातमदोद्रेका । ननृतुश्च जगुश्च ते ॥ वल्गंत्यालिंगयंतेस्म । युध्यंते च परस्परं ॥ ६० ॥
क्रीडंतश्च गताः सर्वे । पर्वताभ्यर्णकाननं ॥ इतश्चेतश्च ते तत्र । पर्यटंतो व्यलोकयन् ॥ ६१ ॥ त-
पस्तीव्रं चरंतं तं । मुनिं द्वीपायनाभिधं ॥ प्रवक्तुं च समारब्धा । यथा सोऽयं महामुनिः ॥ ६२ ॥
युग्मं ॥ आदिष्टो यो जिनेंद्रेण । श्रीमन्नरिष्टनेमिना ॥ नगर्या द्वारिकावत्याः । सर्वनाशविधायकः

॥ ६३ ॥ तदेनं किं न भो हन्मो । निःप्रयोजनवैरिणं ॥ निकृष्टं निर्घृणं पापं । जनस्यास्य क्षयंकरं ॥ ६४ ॥ ततो रोषेण रक्ताक्षा । दंतदष्टावरोष्टकाः ॥ प्रारब्धा यष्टिमुष्ट्याद्यै—र्हंतुं द्वीपायनं दृढं ॥ ६५ ॥ हतस्तावदसौ याव—न्निर्बलः सोऽपतद्भुवि ॥ हत्वेवं नगरीमध्ये । प्रविविशुः कुमारकाः ॥ ६६ ॥

अथेदं वासुदेवाय । कुमाराणां विचेष्टितं ॥ विश्रंभणीयकैः पुंभिः । सर्वमेव प्रवेदितं ॥६७॥ ततो व्यचिंतयत्केशी । भो भो पश्यत पश्यत ॥ कुमाराणां विमूढत्वं । दुर्दांतत्वं प्रमत्ततां ॥ ६८ ॥ निरपेक्षविधायित्व—मदीर्घदर्शितां तथा ॥ तदहो जीवितभूतानां । किमेषां कुर्महे वयं ॥ ६९ ॥ युग्मं ॥ चिरं केशी विचिंत्यैवं । ततो रामसमन्वितः ॥ जगाम कानने तत्र । द्वीपायनोपशांतये ॥ ॥ ७० ॥ दृष्टश्च रुष्टचित्तोऽसौ । द्वीपायनोऽतिदुर्मनाः ॥ क्षामितश्च प्रियालापैः । पादलग्नेन सादरं ॥ ७१ ॥ स्वं न क्षमते याव—त्तावद्रामेण जल्पितं ॥ भो कृष्णालं प्रयत्नेन । किं व्यर्थं परिखिद्यसे ॥ ७२ ॥ यदेतेन किमप्यत्र । चिंतितं विदधातु तत ॥ दुर्जनो दुर्जनश्चैव । क्षामितोऽपि न शाम्यति ॥ ७३ ॥ अथवा यज्जिनेंद्रेण । नेमिनाथेन भाषितं ॥ तदहो सर्वथा कृष्ण । नान्यथा

जायते क्वचित् ॥ ७४ ॥ ततो द्वीपायनेनोक्तं । भो भो भो यादवप्रभो ॥ मया हि ताड्यमानेन । प्रतिज्ञा महती कृता ॥ ७५ ॥ यथेह द्वारिकावत्यां । प्रदीप्तायां समंततः ॥ विमुक्तिर्युवयोरेव । नैवान्यस्य तथांगिनः ॥ ७६ ॥ नासत्यं नेमिनो वाक्यं । न प्रतिज्ञापि मेऽन्यथा ॥ तन्मैवं खिद्यतां व्यर्थं । गम्यतां निजकं गृहं ॥ ७७ ॥ आकर्ण्येदं ततोऽत्यंतं । शोकाकुलितमानसौ ॥ जग्मतुर्नगरीं स्वीयां । द्वावपि रामकेशवौ ॥ ७८ ॥ द्वीपायनप्रतिज्ञां च । ज्ञात्वा सर्वैः पुरीजनैः ॥ पुरीभंगभयोत्त्रस्तैः । शोचितं शोकनिर्भरैः ॥ ७९ ॥ द्वितीयेऽहनि कृष्णेन । कारिता घोषणा यथा ॥ भो भो पौरजना यूयं । हरेर्वाक्यं निशाम्यत ॥ ८० ॥ उद्यच्छत यथाशक्त्या । सततं धर्मकर्मसु ॥ पुष्पगंधादिभिः पूजां । विधत्तानिशमर्हतां ॥ ८१ ॥ सुसाधून् पर्युपासध्वं । तदंते शृणुतागमं ॥ साधुसाधर्मिकान्नित्यं । सन्मानयत सादरं ॥ ८२ ॥ दीनादिभ्यो यथाशक्त्या । कृपादानं प्रयच्छत ॥ सामायिकशुभध्यान—स्वाध्यायाध्ययनादिकं ॥ ८३ ॥ विधत्त सदनुष्ठानं । सर्वदा शुद्धभावतः ॥ पालयतामलं शीलं । भावयत सुभावनाः ॥ ८४ ॥ युग्मं ॥ रागद्वेषादिशत्रूंश्च । विध्वंसयत यत्नतः ॥ संत्यजत महाकष्टान् । महारंभपरिग्रहान् ॥ ८५ ॥ विमुंचत तथा संगं । कामभोगेषु दूरतः ॥

नित्यं भवत भो लोकाः । सर्वथा धर्मतत्पराः ॥ ८६ ॥ यतो भगवताऽरिष्ट—नेमिना सर्वनाशिता
॥ कथितास्या महापुर्याः । सममेवाखिलैर्जनैः ॥ ८७ ॥ अत्रांतरे क्रमेणैव । विहरन्नेमितीर्थपः ॥
रैवतके समागत्य । समवसृतवानिति ॥ ८८ ॥ ततश्च यादवाः सर्वे । वंदनार्थं समागताः ॥ प्रण-
म्य नेमिनाथं ते । निषण्णाः स्वस्वभूमिषु ॥ ८९ ॥ संसारासारतासारा । जिनेनाकारि देशना ॥
तां च श्रुत्वा भवावासा—न्निर्विण्णा भोगनिःस्पृहाः ॥ ९० ॥ प्रद्युम्नशुकसांबाद्या । भूयांसो राजदा-
रकाः ॥ समीपे नेमिनाथस्य । प्रव्रज्यां प्रतिपेदिरे ॥ ९१ ॥ युग्मं ॥ अथ पूर्वभवोत्त्रस्ता । रु-
क्मिण्यपि जनार्दनं ॥ एवं भणितुमारब्धा । यथा भो भो नराधिप ॥ ९२ ॥ शिष्टा परिणतिस्ता-
व—दीदृशी जिननेमिना ॥ संसारस्यास्य निःशेष—यादवानां विशेषतः ॥ ९३ ॥ युग्मं ॥ तन्मां
विसर्जयस्व त्वं । प्रव्रजामि जिनांतिके ॥ ततो बाष्पांबुपूर्णाक्षो । वासुदेवोऽपि रुक्मिणीं ॥ ९४ ॥
कष्टाद्विसर्जयामास । ततः सापि महर्द्धितः ॥ प्राव्राजीच्च सहान्याभी । राजपुत्रीभिरंजसा ॥ ९५ ॥
युग्मं ॥ ततः शोकातुराः सर्वे । वासुदेवादियादवाः ॥ प्रविष्टा नगरीमध्ये । चिंतयंतो भवस्थितिं ॥
॥ ९६ ॥ वासुदेवोऽपि चात्मानं । पुरमंतःपुरं तथा ॥ सर्वं शून्यमिवामंस्त । रुक्मिणीविरहातुरः ॥

॥ ९७ ॥ अथ नेमिर्गतोऽन्यत्र । भव्यप्रबोधहेतवे ॥ कृष्णोऽपि घोषणां पुर्यां । भूयोऽप्येवमचीक·
रत् ॥ ९८ ॥ यथा भो भो जनाः पौराः । परित्यजत सर्वथा ॥ प्राणिहिंसां मृषावाद—मदत्तादा·
नमैथुनं ॥ ९९ ॥ सर्वं परिग्रहं चैव । सर्वं च रात्रिभोजनं ॥ क्रोधं मानं च मायां च । लोभं दु·
र्गतिवर्धनं ॥ १०० ॥ रागं द्वेषं कलिं चाभ्या—ख्यानं रत्यरतिं तथा ॥ सर्वं परपरिवादं । सर्वं पै·
शून्यमेव च ॥ १ ॥ सर्वां मायां मृषां चैव । मिथ्यादर्शनशल्यकं ॥ कुरुध्वं सर्वदाक्षिण्यं । धर्मं कि·
मु बहूदितैः ॥ २ ॥ चतुर्भिः कलापकं ॥ षष्टाष्टमादिरूपं च । तपध्वं दुष्करं तपः ॥ जिनेंद्रसाधुपू·
जां च । संपादयत सादरं ॥ ३ ॥ तैरपि कर्तुमारब्धं । तत्तथैवाखिलं जनैः ॥ सोत्साहं सविशेषं च
। संसारभयभीरुभिः ॥ ४ ॥

अन्यदा द्वारिकावत्या । नाशे कृतनिदानकः ॥ कृत्वा बालतपस्तीव्रं । द्वीपायनोऽतिदुर्मतिः ॥
॥ ५ ॥ मृत्वा चाग्निकुमारेषु । समुत्पन्नो महासुरः ॥ स्मृतं च तेन तद्वैरं । रौद्रं यादवनाशकं ॥
॥ ६ ॥ युग्मं ॥ ततोऽसौ द्वारिकावत्या । विनाशार्थमुपागतः ॥ परं कर्तुं पुरीभंगं । रुष्टोऽपि न श·
शाक सः ॥ ७ ॥ यतस्तत्र जनस्तीव्रं । तपःकर्म करोत्यलं ॥ देवानां च गुरूणां च । विधत्ते परि·

पूजनं ॥ ८ ॥ वैराग्यभावनारूढः । स्वाध्यायध्यानतत्परः ॥ प्रकरोति प्रयत्नेन । धर्मकर्माणि सर्वदा
॥ ९ ॥ अतो द्वीपायनः पापः । पुरीलोकस्य तस्य सः ॥ विधातुं शक्नुते नैव । सुरुष्टोऽपि पराभ-
वं ॥ १० ॥ ततश्चातीवरोषांध—श्छिद्रान्वेषी निरंतरं ॥ अंतरिक्षे भ्रमन्नास्ते । बद्धामर्षः पुरींप्रति ॥
॥ ११ ॥ तावद्यावदतीतानि । वर्षाणि द्वादशापि हि ॥ न चैव द्वारिकावत्या । भंगं कर्तुं शशाक
सः ॥ १२ ॥ ततोऽचिंति जने नैवं । जजल्पे च परस्परं ॥ अहो भ्रष्टप्रतिज्ञोऽयं । निरोजा निःप्र-
भोऽजनि ॥ १३ ॥ अहो नष्टो विनष्टोऽयं । लोके धर्मपरे सति ॥ निर्विण्णः खिन्नचित्तश्च । गतोऽ-
सौ क्वापि दुर्मतिः ॥ १४ ॥ एवमालोच्य तत्रत्यः । सानंदो निर्भयो जनः ॥ नानाक्रीडाभिरत्यर्थं ।
प्रक्रीडितुं प्रचक्रमे ॥ १५ ॥ मत्तो गायंश्च नृत्यंश्च । पपौ कादंबरीं सुरां ॥ ततः सोऽपि समासाद्य ।
छिद्रं द्वीपायनोऽधमः ॥ १६ ॥ उत्पातकशतान्युच्चै—स्तत्रानेकानि जज्ञिरे ॥ ततो द्वीपायनः
पापो । वातं संवर्तकाभिधं ॥ १७ ॥ कल्पांतवातसंकाशं । सर्वतोऽपि विमुक्तवान् ॥ ततः प्रज्वाल-
यामास । सर्वतस्तां महापुरीं ॥ १८ ॥ त्रिभिर्विशेषकं ॥
प्रक्षिप्तवांस्तदंतश्च । तृणकाष्ठादिकं बहु ॥ नश्यल्लोकाननेकांश्च । तिरश्चश्च गवादिकान् ॥१९

संवर्त्यावर्त्य तत्रैव । प्रचिक्षेप स दुर्मतिः ॥ प्रादुर्भूतस्ततो रौद्रो । हाहारवो दिशोदिशि ॥ २० ॥
हस्त्यश्वादितिरश्चां च । जनानां च सुदारुणः ॥ ततश्च स्यंदने रम्ये । आरोप्य पितरौ निजौ ॥
॥ २१ ॥ द्वितीये तु रथे शीघ्रं । रोहिणीं देवकीं तथा ॥ पुर्या निर्गंतुमारब्धौ । प्रेरिताश्च किशो-
रकाः ॥ २२ ॥ यावद्गंतुं क्षमा नाश्वा । वह्निज्वालाकरालिताः ॥ तावत्तौ स्वयमाक्रष्टु—मारब्धौ
निजकैर्भुजैः ॥ २३ ॥ नीतौ च गोपुरद्वारे । ताभ्यां कृच्छ्रेण तौ रथौ ॥ संरुद्धाविंद्रकीलेन । निर्ग-
च्छंतौ च गोपुरात् ॥ २४ ॥ कुलकं ॥ तं चूर्णयति पादेन । यावद्रामो महारुषा ॥ तावच्च सर्वतस्त-
त्तु । प्रतोलीमुखमुच्चकैः ॥ २५ ॥ संप्रज्वलितुमारब्धं । दूरं दारुणवह्निना ॥ अत्रांतरे जगादेवं ।
द्वीपायनोऽधमासुरः ॥ २६ ॥ यथा भो रामगोविंदौ । पूर्वमेव मयोदितं ॥ विमुक्तिर्युवयोरेव । नै-
वान्यस्य शुनोऽपि हि ॥ २७ ॥ एतस्या द्वारिकावत्या । दुरंते दाहसंभ्रमे ॥ ततश्च वासुदेवेन ।
पादेनाहत्य पातितं ॥ २८ ॥ कपाटमेककं भूमौ । रामेण तु द्वितीयकं ॥ अत्रांतरे तु रोहिण्या ।
देवक्या च प्रजल्पितं ॥ २९ ॥ युग्मं ॥ यथा भो पुत्रकौ वत्सौ । स्वकुलानंदकारकौ ॥ युवाभ्या-
मिह जीवद्भ्यां । यादवानां समुन्नतिः ॥ ३० ॥ भविष्यति ततो भद्रौ । निर्गम्यतामितः पुरः ॥

ततस्तौ मातृवाक्येन । रुदंतौ शोकविह्वलौ ॥ ३१ ॥ वाक्यांबुबिंदुसंदोह—सिक्तश्यामनिजाननौ ॥
निर्गत्य बाह्यतो जग—काननस्थौ प्रपश्यतः ॥ ३२ ॥ पुरीं ज्वलध्धुताशेन । दह्यमानां समंततः ॥
दह्यमानजनाराव—कोलाहलसमाकुलां ॥ ३३ ॥ चतुर्भिः कलापकं ॥ अथ द्वीपायनेनापि । वि-
धाय सकलान्यपि ॥ द्वाराणि ज्वालिता प्रोच्चैः । समंताद् द्वारिकावती ॥ ३४ ॥ इतश्च बलभद्रस्य ।
कुब्जवाराभिधांगजः ॥ शोकातुरः समारुह्य । निजप्रासादमूर्धनि ॥ ३५ ॥ एवं ब्रूते यथा भो भो ।
आकर्णयत देवताः ॥ अहं हि नेमिनाथस्य । शिष्यः संप्रति संयतः ॥ ३६ ॥ निर्ममो निरहंका-
रो । निःसंगो निःपरिग्रहः ॥ निवृत्तः सर्वपापेभ्यः । सर्वभूतदयापरः ॥ ३७ ॥ एतद्यदि वचः सत्यं
। श्रीमन्नेमेः सुनिश्चितं ॥ ततश्चरमदेहोऽहं । निर्दिष्टोऽरिष्टनेमिना ॥ ३८ ॥ मया च किल गंतव्यं
। मोक्षे प्रक्षीणकर्मणा ॥ इदं चाकांड एवेह । दृश्यते मृत्युकारणं ॥ ३९ ॥ तत्किं नेमिजिनस्या-
पि । सद्भूतार्थप्रवादिनः ॥ भविताक्लीककं वाक्यं । ते नैवं जल्पिते सति ॥ ४० ॥ उत्पाट्य जृं-
भकैर्देवै—र्देशे पल्हवनामनि ॥ नीतो नेमिजिनस्यांते । स शीघ्रं कुब्जवारकः ॥ ४१ ॥ कुलकं
कृष्णस्य च सहस्राणि । देवीनां किल षोमश ॥ पादपोपगमं मृत्युं । सम्यग्भावेन चक्रिरे ॥४२॥

पादपोपगमं चक्रे । नीताग्निर्वह्निदाहतः ॥ ४३ ॥
तथा यादवरामाद्भिः । प्रभूताभिस्तदा किल ॥ दग्धास्तत्र महापुरि ॥ ४४ ॥ षड्भि·
एवं द्वासप्ततिश्चैव । षष्टिश्च कुलकोटयः ॥ द्वीपायनेन पापेन । सलिलैः पश्चिमोदधिः ॥ ४५ ॥
श्च किल तां मासै—र्नगरीं निर्ददाह सः ॥ पुनश्च प्लावयामास । संजाता विषमा दशा ॥
अथोक्तो हरिणा रामो । शोकातुरेण चेतसा ॥ रामेयमावयोः कीदृक् । यूथभ्रष्टा मृगा इव
॥ ४६ ॥ विप्रयुक्ता वयं सर्वैः । पुत्रमित्रादिभिर्निजैः ॥ तदहो कुत्र गच्छामो । सत्यविक्रमशालि·
॥ ४७ ॥ रामेणोक्तमथास्माकं । संति सुस्निग्धबांधवाः ॥ पांडुपुत्राः सदाचाराः । ततः प्राह
नः ॥ ४८ ॥ तेषां च दक्षिणांभोधि—संस्थितां मथुरां पुरीं ॥ गच्छामः किं विलंबेन । निर्भर्त्स्य च
जनार्दनः ॥ ४९ ॥ द्रौपद्यानयनं राम । कुर्वता मयका तथा ॥ सर्वस्वहरणं कृत्वा । प्र·
कदर्थितैः ॥ ५० ॥ निष्काशितास्तदा काले । रोषात्स्वदेशतोऽपि ये ॥ तेषां समीपके भ्रातः । सत्यवंतः स·
गंतुं शक्यते कथं ॥ ५१ ॥ युग्मं ॥ ततश्चाभाणि रामेण । कृष्णैते पांडुपुत्रकाः ॥ एवमेतदिति
दाचाराः । सारविक्रमशालिनः ॥ ५२ ॥ ते पराभवबुध्यावां । न द्रक्ष्यंति कदाचन ॥ शोकाविष्टौ स·
प्रोक्तं । हरिणा हलिनंप्रति ॥ ५३ ॥ ततो गंतुं प्रवृत्तौ तौ । पादचारेण सत्वरं ॥

माश्रित्य । दिशं प्राचीनदक्षिणां ॥ ५४ ॥ चलंतौ तौ क्रमेणाथ । स्मरंतौ च निजां पुरीं ॥ सौराष्ट्रदेशमुल्लंघ्य । संप्राप्तौ च क्रमादमू ॥ ५५ ॥ हस्तिकल्पे पुरे तस्य । बाह्योद्याने च तस्थतुः ॥ उक्तश्च हरिणा रामो । यथाद्य मां क्षुधातृषे ॥ ५६ ॥ बाधेते भ्रातरत्यर्थं । ततो रामोऽब्रवीदिदं ॥ एष गच्छाम्यहं शीघ्रं । तव भक्तांबुहेतवे ॥ ५७ ॥ त्वयकाप्यप्रमत्तेन । स्थेयं कृष्णात्र कानने ॥ यदि चात्र पुरे कश्चि—दपायो मे भवेदहो ॥ ५८ ॥ कुर्वेऽहं सिंहनादं भो । तदातित्वरितं त्वया ॥ समागंतव्यमित्युक्त्वा । पुरमध्ये गतो हली ॥ ५९ ॥ युग्मं ॥ तत्र च धृतराष्ट्रस्य । पुत्रो राजाच्छदंतकः ॥ राज्यं करोति गर्विष्ठो । यादवानां रिपुर्ध्रुवं ॥ ६० ॥ श्रीवत्सं निजवस्त्रेण । समाच्छाद्य ततो बलः ॥ प्रविष्टः पत्तने तत्र । प्रकृत्या सुंदराकृतिः ॥ ६१ ॥ जनोल्लापश्च तत्राभू—द्यथाहो द्वारिकावती ॥ औत्पातिक्यग्निना दग्धा । हरिरामौ च निर्गतौ ॥ ६२ ॥ ततस्तं सीरिणं दृष्ट्वा । सच्छायं प्रांशुविग्रहं ॥ अद्भुतरूपलावण्यं । जगादैवं जनो मिथः ॥ ६३ ॥ अहो रूपमहो कांति—रहो देहप्रमाणता ॥ एवं संश्लाघ्यमानोऽसौ । कुल्लुरिकापणं ययौ ॥ ६४ ॥ गृहीतं च वरं भक्ष्यं । दत्वांगुलीयकं निजं ॥ वारुणीं चातिसुस्वादां । हस्तकंकणदानतः ॥ ६५ ॥ ततो निर्गंतुमारब्धः ।

प्रासश्च गोपुरांतिकं ॥ इतश्चारक्षकैः पुंभि—र्गत्वा राज्ञे निवेदितं ॥ ६६ ॥ राजन् कश्चिन्नरः प्रांशु
—सुंदराकारधारकः ॥ बलभद्रानुकारी च । विशालोदारमानसः ॥ ६७ ॥ गृहीतपानभक्तोऽसौ ।
निर्याति नगरान्ननु ॥ श्रुत्वेदमब्रदंतेन । शीघ्रमेव निजं बलं ॥ ६८ ॥ संप्रेषितं प्रवृत्तं च । प्रयो·
द्धुं हलिना सह ॥ कृताह्वाननसंज्ञा स । वासुदेवस्य सीरिणा ॥ ६९ ॥ त्रिभिर्विशेषकं ॥ स्वयं
भक्तं च पानं च । भुक्त्वैकत्रातिवेगतः ॥ प्रत्यासन्नं समारुह्य । हस्तिनं तद्बलं ततः ॥ ७० ॥ सं·
चूर्णयितुमारब्धः । केसरीव मृगव्रजं ॥ अथ त्वरितमागत्य । केशवोऽप्यतिरोषतः ॥ ७१ ॥ भंक्त्वा
द्वारकपाटानि । गृहीत्वा च महार्गलां ॥ अब्रदंतबलं सर्वं । संचूर्ण्येदमभाषत ॥ ७२ ॥ त्रिभिर्विशे·
षकं ॥ रेरे मूढ महापाप । दुराचाराब्रदंतक ॥ किमस्माकं गतं क्वापि । बलं शारीरमप्यहो ॥७३॥
ततो भुंक्ष्व निजं राज्यं । भुक्तास्माभिरियं स्थितिः ॥ इत्युक्त्वा तौ गतौ रम्यो—द्याने नानाद्रुमा·
कुले ॥ ७४ ॥ अश्रुपातं च कुर्वंतौ । स्मृत्वा पूर्वां निजस्थितिं ॥ कृत्वार्हतां नमस्कारं । भक्तिसारं
कृतांजली ॥ ७५ ॥ तद्भक्तं भोक्तुमारब्धौ । चिंतयंतौ च ताविदं ॥ अहो तथा तदा भुक्त्वा—धु·
नेदमपि भुज्यते ॥ ७६ ॥ युग्मं ॥ अहो बाढं क्षुधातृष्णे । दुर्धरे देहिनां सदा ॥ किंचिद्भुक्त्वा

च पीत्वा च । कृत्वा चाचमनक्रियां ॥ ७७ ॥ दक्षिणाभिमुखं गंतुं । प्रवृत्तौ रामकेशवौ ॥ संप्राप्तौ
च महारण्यं । कोसंबवननामकं ॥ ७८ ॥ युग्मं ॥ ततः सलवणाहारा—न्मद्यपानात्पथि श्रमात् ॥
ग्रीष्मकालाच्च शोकाच्च । पुण्यानां क्षयतस्तथा ॥ ७९ ॥ वासुदेवः परिश्रांतो । बाध्यते तृष्णयाधि-
कं ॥ उक्तं चानेन भो राम । शुष्यत्यास्यं तृषा मम ॥ ८० ॥ युग्मं ॥ नैवाहं सर्वथा शक्तो । गं-
तुं यावज्जलाशयं ॥ रामेणोक्तं महाभाग । मम हृदयातिवल्लभ ॥ ८१ ॥ त्वमत्र तिष्ठ विश्राम्य ।
छायायामस्य शाखिनः ॥ ततः कौशेयवस्त्रेण । समाछाद्य निजां तनुं ॥ ८२ ॥ जानूपरि निधायांघ्रिं
। तत्र सुष्वाप केशवः ॥ उक्तश्च रामदेवेन । हे हे हृदयवल्लभ ॥ ८३ ॥ स्थातव्यमप्रमत्तेन । ता-
वदत्र त्वया क्षणं ॥ स्वछामलं जलं याव—च्छीघ्रमेवानयाम्यहं ॥ ८४ ॥ चतुर्भिः कलापकं ॥ भ्रा-
तृस्नेहाच्च तेनैवं । भणिता वनदेवताः ॥ यथायं मे प्रियो भ्राता । युष्माकं शरणागतः ॥ ८५ ॥
रक्षणीयः प्रयत्नेन । भणित्वैवं जगाम सः ॥ अत्रांतरे महाव्याध—वेषधारी सुभीषणः ॥ ८६ ॥
व्याघ्रचर्मावृतांगश्च । चापव्यग्रकरस्तथा ॥ इतश्चेतः परिभ्राम्यन् । मृगघातचिकीर्षया ॥ ८७ ॥ जर-
त्कुमारकोऽकस्मा—दायातः केशवांतिकं ॥ तेन चारोप्य कोदंड—माकृष्य निशितं शरं ॥ ८८ ॥

दूरादेव कुरंगोऽयं । तिष्टतीति विमर्षतः ॥ विद्धः पादतले मर्म—देशे तेन जनार्दनः ॥ ७९ ॥
पंचभिः कुलकं ॥

स चोच्चायातिवेगेन । जल्पितवानिदं वचः ॥ अहो पादतले केन । प्रविद्धोऽहं विनागसा ॥
॥ ८० ॥ अविज्ञातकुलः कोऽपि । न मया हतपूर्वकः ॥ तस्मात्कोऽयं समाख्यातु । स्वं गोत्रं त्वरितं मम ॥ ८१ ॥ ततो जरत्कुमारोऽपि । कुरंगांतरितांगकः ॥ व्यचिंतयद्यथा नैष । मृगः किंतु पुमानयं ॥ ८२ ॥ मां च संपृच्छते गोत्रं । तदस्मै कथयाम्यहं ॥ श्रूयतां भो समाख्यामि । निजं गोत्रं च नाम च ॥ ८३ ॥ अहं हि हरिवंशोद्भ—वसुदेवस्य नंदनः ॥ आत्मजश्च जरादेव्या । ज्येष्ठभ्राता हरेस्तथा ॥ ८४ ॥ नाम्ना जरत्कुमारोऽहं । श्रुत्वा नेमेरिदं वचः ॥ यथा भावी हरेर्मृत्युः । पार्श्वाज्जरत्कुमारतः ॥ ८५ ॥ आकर्ण्येदं परित्यज्य । बंधुवर्गं निजं ततः ॥ वनाद्वनांतरं प्रोच्चै—रेवं परिभ्रमाम्यहं ॥ ८६ ॥ समाश्च द्वादशातीता । अथाख्यातु भवानपि ॥ कस्त्वं किमभिधानश्च । ततः कृष्णोऽब्रवीदिदं ॥ ८७ ॥ आगच्छागच्छ भो भ्रातः । स एवाहं जनार्दनः ॥ कनिष्ठकस्तव भ्राता । रामस्यापि तथैव च ॥ ८८ ॥ त्वं चैवं मम रक्षार्थं । महाटव्यामटस्यहो ॥ यावच्च

सर्वथा जातो । निष्फलोऽयं परिश्रमः ॥ ९९ ॥ तदेहि भ्रातरित्युक्ते । सोऽपि शीघ्रं समागतः ॥
कृष्णोऽयमिति मन्वान—स्तथास्थं तं च दृष्टवान् ॥ २०० ॥ ततो बाष्पांबुपूर्णाक्षः । प्रलापानकरो-
दसौ ॥ हाहा हतो दुरात्माहं । निजबांधवघातकः ॥ १ ॥ को वा मां भ्रातृहंतारं । दृष्टुमपीह श-
क्ष्यति ॥ इत्थं नानाविधानुच्चैः । प्रविधाय प्रलापकान् ॥ २ ॥ गोविंदमतिशोकार्त्तो । जगाद गद्ग-
दस्वरं ॥ कुतस्त्वं भो इहायातः । किमेकाकी च दृश्यसे ॥ ३ ॥ किं वा द्वीपायनः पापो ।ददाह
द्वारिकावतीं ॥ नष्टा न वेति भो सर्वे । यादवा वह्निसंभ्रमात ॥ ४ ॥ ततः कृष्णो यथा दृष्टं । त-
स्मै सर्वं न्यवेदयत् ॥ अथ जरत्कुमारोऽपि । विलपन्नेवमभ्यधात् ॥ ५ ॥ अहो अद्य मया चक्रे ।
आतिथ्यमीदृशं हरेः ॥ तदहं कुत्र गच्छामि । कस्मै चेदं निवेदये ॥ ६ ॥ स्वभ्रातुर्घातकं को वा।
मामीक्षितुमपीष्यति ॥ इत्यादि प्रलपन्नुच्चैः । साश्रुः शोकसमाकुलः ॥ ७ ॥ संस्थाप्य कोमलाला-
पैः । स एवं हरिणोदितः ॥ अहो शोकं त्यजादाय । मम वक्षःस्थलादिमं ॥ ८ ॥ मणिं कौस्तुभ-
नामानं । गच्छ त्वं पाण्डवांतिकं ॥ वृत्तांतश्चायमाख्येय—स्तेभ्यः सर्वः सविस्तरः ॥ ९ ॥ त्रिभिर्वि-
शेषकं ॥ भणितव्याश्च ते सम्यग् । मद्वचनेन सांजसं ॥ यथा भो यत्तदा काले । गंगायाः सरि-

तस्तटे ॥ १० ॥ द्रौपदीं धातकीखंडा—न्मयकानयता तथा ॥ निर्भर्त्सिताः खैर्वाक्यैः । संचूर्णितास्तथा रथाः ॥ ११ ॥ स्वदेशतः समस्ताच्च । यन्निर्वास्य विराधिताः ॥ युष्माभिस्तन्ममाशेषं । क्षांतव्यं सर्वथापि हि ॥ १२ ॥ त्रिभिर्विशेषकं ॥ यथा क्षमाप्रधाना हि । भवंति पुरुषोत्तमाः ॥ युष्मादृशो विशेषेण । नितांतस्निग्धबांधवाः ॥ १३ ॥ शूराः सत्यप्रतिज्ञाश्च । कृतज्ञा बंधुवत्सलाः ॥ महात्मानः सदा चैव । परोपकृतिकर्मठाः ॥ १३ ॥ युग्मं ॥ गच्छेदानीमितः स्थाना—दित्युक्तोऽपि स विष्णुना ॥ यदा नैवेहते गंतुं । तदा भूयोऽप्यभाणि सः ॥ १४ ॥ गच्छ गच्छामुतः शीघ्रं । मा मा वत्स विलंबय ॥ जानासि चैव रामस्य । स्नेहवत्त्वं ममोपरि ॥ १५ ॥ पानीयार्थं गतो राम । एष आगच्छति द्रुतं ॥ दृष्ट्वा चैवमवस्थं मां । भद्र त्वां मारयिष्यति ॥ १६ ॥ ततो बाणं समुध्धृत्य । तूर्णं पादतलादसौ ॥ गतस्तेनैव मार्गेण । कुन्ताजारत्कुमारकः ॥ १७ ॥

ततश्च वासुदेवोऽपि । वेदनातुरमानसः ॥ कर्तुं पंचनमस्कारं । प्रारब्धः शुद्धचेतसा ॥ १८ ॥ प्रणम्य चार्हतः सर्वान् । सुरासुरनरार्चितान् ॥ सिद्धांश्च परमानंद—समृद्धान् प्रणमाम्यहं ॥ १९ ॥ आचार्यान् पंचधाचार—धारकान्नौमि भक्तितः ॥ स्वाध्यायध्यानतन्निष्ठा—नुपाध्यायान् प्रणौम्यहं ॥

॥ २० ॥ नमामि सर्वसाधूंश्च । धर्मकर्मप्रसाधकान् ॥ नमः श्रीनेमिनाथाय । त्रैलोक्यहितकारिणे ॥ २१ ॥ यः सर्वसंगमुत्सृज्य । विनिःक्रांतो महामुनिः ॥ एवं कृतप्रणामोऽसौ । परं संवेगमागतः ॥ २२ ॥ संस्तीर्य तृणसंस्तारं । देहमाछाद्य वाससा ॥ सुप्तो दृष्ट्वा निजावस्थां । चिंतयामास मानसे ॥ २३ ॥ धन्याः प्रद्युम्नसांबाद्याः । सर्वे शेषाश्च यादवाः ॥ धन्यास्ते पौरलोकाश्च । निष्क्रांता ये जिनांतिके ॥ २४ ॥ ताश्च धन्यतरा देव्यो । रुक्मिण्याद्या मनःप्रियाः ॥ याः सर्वसंगमुत्सृज्य । नेम्यंते जगृहुर्व्रतं ॥ २५ ॥ अहं त्वीदृशदुःखानि । वेदयाम्यत्र कानने ॥ अकृत्वैव हितं कर्म । म्रिये बंधुविवर्जितः ॥ २६ ॥ एवं विचिंतयन् मृत्वा । तृतीयायां गतः क्षितौ ॥ जातश्च नारकत्वेन । बद्धायुःकर्मयोगतः ॥ २७ ॥

अथ रामोऽपि वेगेन । समादायामलं जलं ॥ आयातो वार्यमाणोऽपि । शकुनैर्विपरीतकैः ॥ ॥ २८ ॥ दृष्टश्च केशवस्तेन । शयानो दीर्घनिद्रया ॥ अहो श्रांतः स्वपीत्येष । शेतां तावत्क्षणांतरं ॥ २९ ॥ पश्चादस्मै विबुद्धाय । दास्यामीदमहं जलं ॥ अतिस्नेहाकुलत्वाच्च । न जानाति यथा मृतः ॥ ३० ॥ एवं विकल्पयन् रामः । प्रतीक्ष्य क्षणमेककं ॥ हरिं विलोकयामास । मक्षिकापटला-

न्वितं ॥ ३१ ॥ दृष्ट्वा च तादृशं भीतो । हा हतोऽस्मीति संगिरन् ॥ मुखाद्वस्त्रं समुत्तार्य । यावत्स-
म्यग् निरीक्षते ॥ ३२ ॥ तावद् दृष्टो मृतावस्थो । बीभत्सो हलिना हरिः ॥ ततश्च मूर्छया भूमौ ।
सहसैव पपात सः ॥ ३३ ॥ लब्ध्वा च चेतनामुच्चैः । सिंहनादं प्रमुक्तवान् ॥ यथा कंपितुमारब्धं ।
तद्वनं श्वापदाकुलं ॥ ३४ ॥ ऊचे चैवं यथा भो भो । भ्राता येन हतो मम ॥ सत्यं यदि भटः
कोऽपि । स मे यच्छतु दर्शनं ॥ ३५ ॥ कथं वा मुच्यते घातः । सुप्तप्रमत्तकादिषु ॥ एवमादि रट-
न्नुच्चै—र्वने भ्रांत्वा समंततः ॥ ३६ ॥ भूयोऽपि चागतो रामो । वासुदेवस्य सन्निधौ ॥ रोदितुं च
समारब्धो । नानाकारं महारवैः ॥ ३७ ॥ हा गुणाकर हा वीर । हा भ्रातर्हा जनार्दन ॥ हा याद-
वकुलानंद । हा मे हृदयवल्लभ ॥ ३८ ॥ किं ते रोदिमि भो बंधो । वीरत्वं विक्रमं बलं ॥ सौभा-
ग्यं सौहृदं रूपं । किं वाद्भुतामुदारतां ॥ ३९ ॥ किमन्य इव संजातो । न दत्से येन मे वचः ॥
किमेकाकी करोम्यद्य । जनार्दन त्वया विना ॥ ४० ॥ तदहं कुत्र गच्छामि । कं वा पृच्छामि सांप्रतं
॥ कं चेहोपालभे लोकं । कं वा शरणमाश्रये ॥ ४१ ॥ कस्मै वापि च रुष्यामि । किं मरणमुपे-
म्यहो ॥ समाप्तः सर्वथैवायं । जीवलोको ममाधुना ॥ ४२ ॥ इत्थं प्रलपतस्तस्य । भास्वानस्तगिरौ

गतः ॥ क्रमात्प्रसारितध्वांता । रजनी च समागता ॥ ४३ ॥ ततो विशेषतो राम—श्चक्रंदे मोह-
मोहितः ॥ आक्रंदसंकुलं कुर्वन् । समग्रं तदरण्यकं ॥ ४४ ॥ ततः प्रभातकाले च । वियोगमसह-
न् ॥ स्वस्कंधे च समारोप्य । कुर्वन्नानाप्रलापकान् ॥ ४५ ॥ बभ्राम सर्वतस्तत्र । नानावृक्षाकुले
वने ॥ नदीगिरिनिकुंजेषु । गुहासु विवरेषु च ॥ ४६ ॥ युग्मं ॥ एवं च भ्राम्यतस्तस्य । वर्षाका-
लः समागतः ॥ अत्रांतरे च रामस्य । सिद्धार्थाभिधसारथिः ॥ ४७ ॥ पूर्वव्यावर्णितो यस्तु । त-
पः कृत्वा दिवं गतः ॥ स देवोऽवधिना ज्ञात्वा । भ्राम्यंतं हलिनं तथा ॥ ४८ ॥ स्वचित्ते चिंतय-
त्येव—महो स्नेहानुरागिता ॥ अहो मोहस्य माहात्म्य—महो कर्मविचित्रता ॥ ४९ ॥ येनायं
वोढुमारब्धो । जीवमुक्ततनुं हरिं ॥ तद्गत्वा बोधयाम्येनं । बांधवं बंधुवत्सलं ॥ ५० ॥ चतुर्भिः क-
लापकं ॥ तत आगत्य देवेन । पुमानेको विकुर्वितः ॥ उत्तारयन् गिरेर्दुर्गा—ज्जीर्णप्रायं महारथं
॥ ५१ ॥ स पुनः स्यंदनस्तस्मि—न्नितश्चेतः स्खलन्नपि ॥ न भग्नः पर्वते दुर्गे । गंडशैलसमाकुले
॥ ५२ ॥ समं च भूतलं प्राप्य । जगाम शतखंडतां ॥ ततोऽसौ पुरुषस्तानि । दारूण्यादाय योज-
यन् ॥ ५३ ॥ रामेणोक्तो महाभद्र । यो न भग्नो गिरावपि ॥ भग्नस्त्वत्र च तं मुग्ध । कथं संधा-

तुमिञ्छसि ॥ ५४ ॥ देवः प्राह यथा भो भो । य एष किल केशवः ॥ भूरियुद्धसहस्रेषु । युध्यमानोऽपि नो मृतः ॥ ५५ ॥ विनापि सोऽधुना युद्धं । मृतः सुप्तोऽत्र कानने ॥ जीविष्यति यदा चैष स्कंधारूढस्तवानुजः ॥ ५६ ॥ तदा रथोऽप्ययं भग्न । भविष्यति पुनर्नवः ॥ ततस्तूष्णीक एवाशु । हली गंतुं प्रचक्रमे ॥ ५७ ॥ देवेन रोपयन् भूयः । शिलापट्टेषु पद्मिनीः ॥ विकुर्वितः पुमानेको । रामेणैवमवाचि सः ॥ ५८ ॥ कथं शिलासु पद्मिन्यो । मुग्ध रोहंति रोपिताः ॥ सुरः प्राह तव भ्राता । जीविष्यति यदाचलः ॥ ५९ ॥ पद्मिन्योऽपि तदैवैता । रोहिष्यंति न संशयः ॥ ततश्च मौनवृत्त्यैव । गच्छता हलिनाग्रतः ॥ ६० ॥ दृष्ट एको नरः स्थाणु—कल्पं तिंदुकिनीद्रुमं ॥ दग्धं वनहुताशेन । सिंचन् वारिभृतैर्घटैः ॥ ६१ ॥ ततो रामस्तकं प्राह । भद्रायं दग्धपादपः ॥ कदा संसिच्यमानोऽपि । पुनर्मोक्ष्यति पल्लवान् ॥ ६२ ॥ देवेनोक्तं यदा काले । त्वदीयस्कंधसंस्थिते ॥ एतस्मिन् मृतके व्यक्तं । चैतन्यं प्रभविष्यति ॥ ६३ ॥ ततः स्तोकांतरं याव—द्गतस्तावद्विलोकितः ॥ ददन्नीलतृणव्रातं । गोपो गवां करोटिषु ॥ ६४ ॥ स भक्तो बलदेवेन । ह्यस्थिशेषा इमाः कदा ॥ जीविष्यंति पुनर्गावो । दत्तैर्नीलतृणैरपि ॥ ६५ ॥ देवेनाभाणि भो मुग्ध । यदैष तव बांधवः ॥

जीविष्यति मुराराति—र्लब्धसुव्यक्तचेतनः ॥ ६६ ॥ श्रुत्वेदं लब्धसंज्ञेन । रामेणैवं प्रजल्पितं ॥
किमेष मामको भ्राता । सत्यं संप्राप पंचतां ॥ ६७ ॥ येनैवं कोऽपि मामत्र । वने बोधयते नरः॥
स्पष्ट देवोऽपि सिद्धार्थ—रूपं कृत्वाब्रवीदिदं ॥ ६८ ॥ सोऽहं भो भो तव भ्राता । राम सिद्धार्थ-
नामकः ॥ यः प्राचीनभवेऽभूवं । सारथिस्ते महारथः ॥ ६९ ॥ श्रीमतो नेमिनाथस्य । प्रसादेन
सुरोऽभवं ॥ उक्तश्चाहं त्वया पूर्वं । यथा भो प्राणवल्लभ ॥ ७० ॥ त्वयाहमापदि क्वापि । संबोध्यः
सर्वयत्नतः ॥ ततोऽहमागतो राम । त्वत्प्रतिबोधहेतवे ॥ ७१ ॥ स चायं प्रतिबोधस्य । कालः संप्र-
ति वर्तते ॥ यथोक्तं स्वामिना पूर्वं । यथा जरत्कुमारकात् ॥ ७२ ॥ हरेः संपत्स्यते मृत्यु—स्तथैव
च बभूव भोः ॥ श्रुत्वेदं हलिना प्रोक्तं । कदा पुनर्जनार्दनः ॥ ७३ ॥ भद्र जरत्कुमारेण । व्या-
पादितस्ततः सुरः ॥ आचख्यौ सर्ववृत्तांतं । हरिव्यापादनादिकं ॥ ७४ ॥ त्रिभिर्विशेषकं ॥ तावद्या-
वत्स कृष्णेन । पांडवानां समीपके ॥ संप्रेषितः प्रियालाप—पूर्वं जरत्कुमारकः ॥ ७५ ॥ ततः स्ने-
हात्समालिंग्य । सिद्धार्थं हलिनोदितं ॥ यथा भो किं मया कार्य—मिदानीं कथयस्व मे ॥ ७६ ॥
देवः प्राह महाभाग । सर्वसंगविवर्जनात् ॥ सर्वज्ञोक्तविधानेन । कुरु श्रामण्यमुत्तमं ॥ ७७ ॥ सं-

स्मर च जिनेंद्रस्य । नेमेस्तानि वचांस्यहो ॥ रामः प्राह करोम्येष । श्रामण्यं साधुसेवितं ॥ ७८ ॥
दुःखाद्विमोचिनीः सुष्टु । नेमिवाचः स्मराम्यहं ॥ परं कुत्र नयिष्यामि । हरेरेतत्कलेवरं ॥ ७९ ॥
देवेन भाषितं राम । नदीद्वितयसंगमे ॥ मुक्त्वेदं पुष्पगंधाद्यैः । सत्कुर्मः पूजयामहे ॥ ८० ॥ य-
तस्तीर्थकृतश्चक्र—वर्तिनो रामकेशवाः ॥ पूजामर्हंति सर्वेऽपि । पूजिताश्च जनैः सदा ॥ ८१ ॥ त-
तस्ताभ्यां द्वयोर्नद्योः । संगमे पुलिने वरे ॥ हरेर्देहमिमं मुक्त्वा । पूजितं संस्कृतं तथा ॥ ८२ ॥
अत्रांतरे च रामस्य । स्वामिनारिष्टनेमिना ॥ प्रव्रज्यासमयं ज्ञात्वा । विद्याधरश्च सन्मुनिः ॥ ८३ ॥
प्रेषितो बलदेवस्य । प्रव्रज्यादानहेतवे ॥ आगतस्तत्र वेगेन । दीक्षां च हलिने ददौ ॥ ८४ ॥
ततो भगवतोऽरिष्ट—नेमेर्वाक्यैस्तदा हली ॥ परं संवेगमापन्न—स्त्रुटितः स्नेहजालकः ॥ ८५ ॥
तुंगिकाभिधशैलस्य । शिखरे संवृतेंद्रियः ॥ एकाकी कर्तुमारब्ध—स्तपःकर्मसुदुःकरं ॥ ८६ ॥ सि-
द्धार्थोऽपि हढं कष्टः । प्राचीनस्नेहरज्जुभिः ॥ रक्षंस्तमेव रामर्षिं । नित्यं तत्रैव तिष्ठति ॥ ८७ ॥
तथा जरत्कुमारोऽपि । दक्षिणां मथुरां ययौ ॥ दृष्टाश्च पांमवास्तेभ्यो । ढौकितः कौस्तुभो मणिः ॥
॥ ८८ ॥ शिष्टं च द्वारिकावत्या । दाहलोकक्षयादिकं ॥ निःशेषं पांडुपुत्रेभ्य—स्तावद्यावदिहाग-

तः ॥ ८८ ॥ श्रुत्वेदं पांमवाः शोका—न्महाक्रंदनपूर्वकं ॥ चक्रिरे मृतकृत्यानि । वर्षमेकं सुदुः
खिताः ॥ ९० ॥ ततो जरत्कुमाराय । दत्वा राज्यश्रियं निजां ॥ सर्वेऽपि प्रस्थिता गंतुं । श्रीमन्ने-
मिजिनांतिके ॥ ९१ ॥

अत्रांतरे जिनेंद्रेण । नेमिना पांडवांतिके ॥ संप्रेषितश्चतुर्ज्ञानी । साधुसंदोहसंयुतः ॥ ९२ ॥
दीक्षार्थं पांडुपुत्राणां । धर्मघोषाभिधो मुनिः ॥ प्रव्राजिताश्च ते तेन । साधुना सुविधानतः ॥९३॥
युग्मं ॥ ततो नेमिजिनस्यांते । गंतुमारेभिरे च ते ॥ षण्मासांतं च षष्ठाद्यं । कुर्वंतो दुःकरं तपः
॥ ९४ ॥ ततस्तैश्चिंतितं चित्ते । परमानंदनिर्भरैः ॥ वयं नेमिजिनं प्रात—र्वंदयामः सुनिश्चितं ॥
॥ ९५ ॥ यतस्ते तावदायाता । यावद् द्वादशभिः किल ॥ योजनैर्वर्तते श्रीमान् । नेमिनाथो जि-
नेश्वरः ॥ ९६ ॥ तत्रैव गमिता रात्रिः । प्रभाते च श्रुतं तकैः ॥ जनवादाद्यथा नेमि—रुज्जयंते
शिवं गतः ॥ ९७ ॥ ततः शोकातिरेकेण । महादुःखौघदुःखिताः ॥ गत्वा शत्रुंजये कृत्वा । पाद-
पोपगमं च ते ॥ ९८ ॥ मृत्वा च क्षीणकर्मांशा । गताः सर्वे शिवालयं ॥ तथा राजीमतीपार्श्वे ।
द्रौपदी विहितव्रता ॥ ९९ ॥ ब्रह्मलोकाभिधे कल्पे । महर्द्धिकः सुरोऽजनि ॥ तथानेका गता दे-

न्यो । रुक्मिणीप्रमुखाः शिवं ॥ ३०० ॥ त्रिभिर्विशेषकं ॥ माता च नेमिनाथस्य । शिवादेवी दिवं गता ॥ तथा नव दशाराश्च । समुद्रविजयादयः ॥ १ ॥ दाहे च द्वारिकावत्या । रोहिणी देवकी तथा ॥ नरेशो वसुदेवश्च । त्रीण्यपि त्रिदिवं ययुः ॥ २ ॥ इतश्च बलदेवोऽपि । महर्षिस्तुंगिकाचले ॥ घोराकारं तपः कुर्व—न्नास्ते संयमतत्परः ॥ ३ ॥ प्रायो मासार्धमासांते । काष्टवाहिजनादितः ॥ लब्धं पारयते शुद्धं । प्राशुकं भक्तपानकं ॥ ४ ॥ तैस्तृणकष्टहाराद्यैः । शिष्टं गत्वा निजे पुरे ॥ यथा कोऽपि तपस्तीव्रं । तप्यमानः सुदुष्करं ॥ ५ ॥ आस्ते भो तुंगिकाशैल—शिखरे सुंदराकृतिः ॥ ततस्तत्रत्यभूपालः । कोपेनैवं व्यचिंतयत् ॥ ६ ॥ कश्चिन्मदीयराज्यार्थी । करोत्येवंविधं तपः ॥ किंचिद्विद्याविशेषं वा । प्रसाधयितुमुद्यतः ॥ ७ ॥ तदहो ध्वंसयामस्त—मित्यालोच्य परस्परं ॥ त्रातनानायुधव्राताः । सन्नद्धाबद्धवर्मिकाः ॥ ८ ॥ सद्यानवाहनारूढा । गता रामर्षिसन्निधौ ॥ ततः सिद्धार्थदेवेन । बलदेवपदांतिके ॥ ९ ॥ भीषणाः सिंहसंघाता । बीभत्समुखदंष्ट्रिकाः ॥ विकुर्विता महारौद्राः । सुतीक्ष्णनखकोटयः ॥ १० ॥ युग्मं ॥ ततस्तं तादृशं दृष्ट्वा । भीतास्ते दूरतो नृपाः ॥ प्रणम्य बलदेवर्षिं । स्वस्थानेषु द्रुतं गताः ॥ ११ ॥ नरसिंह इति ख्यातिं ।

प्राप रामोऽपि भूतले ॥ तस्य च तत्र शैलाग्रे । स्वाध्यायादि प्रकुर्वतः ॥ १२ ॥ तेन सुस्वरशब्देन
। धर्मदेशनया तथा ॥ आक्षिप्तमानसाः संतो । व्याघ्रसिंहमृगादयः ॥ १३ ॥ अटव्या बहवो जी-
वा । मुक्तवैरानुबंधकाः ॥ तिष्ठंति बलदेवस्य । समीपे शांतचेतसः ॥ १४ ॥ युग्मं ॥ केचन श्राव-
का जाताः । केऽपि भद्रकतां गताः ॥ प्रासाश्चानशनं केऽपि । केचित्तपः प्रकुर्वते ॥ १५ ॥ तिष्ठतो
गछतो वापि । कायोत्सर्गस्थितस्य च ॥ मुक्तमांसादिभक्ष्याश्च । रामर्षिं पर्युपासते ॥ १६ ॥ युग्मं.
ततश्चैको मृगः पूर्व—जन्मसंबंधतः किल ॥ जातजातिस्मरोऽत्यंतं । परं संवेगमागतः ॥ १७ ॥ य-
त्र यत्र बलो याति । भक्तपानादिकार्यतः ॥ तत्र तत्र मृगः सोऽपि । परिभ्राम्यति मार्गतः ॥ १८ ॥
अन्यदा बलदेवर्षि—र्मासोपवासपारणे ॥ भिक्षाकाले तु भिक्षार्थ—मेकत्र प्राविशत्पुरे ॥ १९ ॥
ददृशे एकया कूप—तटस्थतरुणस्त्रिया ॥ ततश्च रामरूपश्री—क्षिप्तमानसया तया ॥ २० ॥ कुंभ-
कंठं विमुच्यैव । भ्रांत्या प्रादायि पाशकः ॥ कटीतटात्समुत्तार्य । स्वशिशोरेव कंठके ॥ २१ ॥ यु-
ग्मं ॥ ततोऽवतारितः कूपे । व्यलोकि च बलेन सः ॥ निवारिता च सा बाला । यथा किं नेक्षसे
शिशुं ॥ २२ ॥ ततो रामोऽतिसंविग्नो । मनस्येवं व्यचिंतयत् ॥ अहो देहोऽपि मे प्राणि—वर्ग-

स्यानर्थकारणं ॥ २३ ॥ तदिदानीं न दृश्येऽहं । स्त्रीभिर्यत्र व्यवस्थितः ॥ तत्रस्थेनैव संग्राह्या ।
भिक्षा नैवान्यथा मया ॥ २४ ॥ एवमभिग्रहं लात्वा । तस्मादेव प्रदेशतः ॥ विनिवृत्त्य विनीता-
त्मा । तस्मिन्नेव वने गतः ॥ २५ ॥

अन्यदा चारुदारूणां । हेतवे रथकारकाः ॥ समागता वने तत्र । छिंदंतिस्म महाद्रुमान् ॥
॥ २६ ॥ अथ मासोपवासस्य । पारणे रामसन्मुनिः ॥ भक्तोक्तुं च प्रवृत्तेषु । तेषु भिक्षार्थमागतः
॥ २७ ॥ शुष्कपत्रतृणाहारी । तस्य मार्गानुलग्नकः ॥ स मृगोऽपि समायात—स्तस्मिन्नेव प्रदेशके
॥ २८ ॥ ततोऽसौ राममालोक्य । वनछेदकनायकः ॥ व्यचिंतयद्यथाद्याहो । मम पुण्यमहोदयः ॥
॥ २९ ॥ मरुस्थलेऽपि संप्राप्तो । मया कल्पमहीरुहः ॥ संजातोऽद्य कृतार्थोऽहं । पूर्णसर्वमनोरथः
॥ ३० ॥ येन ममैष भिक्षार्थं । महामुनिरिहागतः ॥ तत्करोमि निजात्मानं । विगताखिलकल्मषं
॥ ३१ ॥ अस्मै भिक्षाप्रदानेन । साधुवृत्ताय साधवे ॥ एवं विचिंतयन् शुद्ध—शुभभावसमन्वितः
॥ ३२ ॥ संभ्रांतो बलदेवर्षिं । प्रणम्य विहितांजलिः ॥ विशुध्यमानभावश्च । गृहीत्वा भक्तपानके
॥ ३३ ॥ सद्भक्तिबहुमानाभ्यां । तस्मै दातुं समुद्यतः ॥ द्रव्यक्षेत्रादिभिः शुद्धं । गृहीतं मुनिनापि

तत् ॥ ३४ ॥ चतुर्भिः कलापकं ॥ ततश्च रथकारेण । पात्रदानप्रभावतः ॥ सत्कृतेर्योग्यताकर्म ।
निबद्धं भावशुद्धितः ॥ ३५ ॥ मृगोऽपि पृष्ठतस्तिष्ठन् । सानंदो रामसन्मुनेः ॥ गुरौ गाढानुरागेण ।
बाष्पवारिप्लुतेक्षणः ॥ ३६ ॥ रथकारे च संन्यस्त—मंथरस्निग्धदृष्टिकः ॥ निष्पंदकर्णयुग्मश्च । न-
मत्सुदीर्घकंधरः ॥ ३७ ॥ एवं चिंतितुमारब्धो । यथायं रथकारकः ॥ धन्यः पुण्यः कृतार्थश्च । नृ-
जन्मास्य सुलब्धकं ॥ ३८ ॥ त्रिभिर्विशेषकं ॥ येनैष प्रवराहारैः । सन्मुनिः प्रतिलंभितः ॥ अहं
त्वधन्यको जात—स्तिर्यग्योनौ स्वकर्मभिः ॥ ३९ ॥ नैवाहमीदृशं पात्रं । समर्थः प्रतिलंभितुं ॥ त-
दपुण्यक एवाहं । धिग्धिग् जातिं मदीयकां ॥ ४० ॥ सर्वदायं वनच्छेत्ता । पुण्यभागत्र भूतले ॥
अथासौ रथकारोऽपि । सत्पात्रप्रतिलंभनात ॥ ४१ ॥ सहसोद्धतरोमांचः । परं तोषमुपागतः ॥ रा-
मेण चिंत्यते चैवं । यथा मे मासपारणे ॥ ४२ ॥ द्रव्यक्षेत्रादिभिः शुद्धा । भिक्षाप्राप्तिरभूदिति ॥
एवं त्रयोऽपि ते याव—द्धर्मध्यानमुपागताः ॥ ४३ ॥ आसते पतितस्ताव—दर्धच्छिन्नो महाद्रुमः ॥
बलदेववनच्छेतृ—मृगाणामुपरि द्रुतं ॥ ४४ ॥ चतुर्भिः कलापकं ॥ तेन ते चूर्णिताः संत—स्त्र-
योऽपि स्वायुषः क्षये ॥ अगच्छन् पंचमे कल्पे । ब्रह्मलोकाभिधानके ॥ ४५ ॥ पुष्पोत्तराभिधाने च

। विमाने रत्नभास्वरे ॥ भास्वद्देहधरा देवाः । समुत्पन्ना महर्द्धिकाः ॥ ४६ ॥ एवं वर्षशतं कृत्वा । श्रामण्यं रामसन्मुनिः ॥ तत्रैव त्रिदशो जातो । विशिष्टर्द्धिसमन्वितः ॥ ४७ ॥ ततश्चावधिना रामः । पूर्वस्नेहातिरेकतः ॥ कृष्णं वीक्षितुमारब्धो । यावत्तृतीयकक्षितौ ॥ ४८ ॥ दुष्टो दुरंतदुःखार्त्तो । नारको नरकालये ॥ ततस्तत्र गतः शीघ्रं । कृत्वा वैक्रियविग्रहं ॥ ४९ ॥ दिव्यरत्नप्रभाजालैः । समुद्योतं विधाय च ॥ सुगंधिपुद्गलक्षेपं । कृत्वा कृष्णं ददर्श सः ॥ ५० ॥ त्रिभिर्विशेषकं ॥ ऊचे चैवं यथा भ्रातः । कृष्ण स्वबंधुवत्सल ॥ प्रियं ते सज्जनानंद । किमिदानीं करोम्यहं ॥ ५१ ॥ कृष्णः प्राह स्वयं चैवो—पार्जिताशुभकर्मणां ॥ भुंजानस्य फलं तीव्रं । दुःखरूपं ममाधुना ॥ ५२ ॥ को नाम शक्तियुक्तोऽपि । परित्रां कर्तुमीश्वरः ॥ स्वयमेव हि भुज्यंते । स्वानि कर्माणि जंतुभिः ॥ ५३ ॥ युग्मं ॥ अथासौ बाहुदंभाभ्या—मुध्धृतो हलिना हरिः ॥ स च प्रोत्क्षिप्यमाणश्च । सर्वांगैरपि हेलया ॥ ५४ ॥ विलीयतेऽग्नितापेन । नवनीतमिव द्रुतं ॥ ततश्च केशवो गाढं । महादुःखौघपीडितः ॥ ५५ ॥ युग्मं ॥ भो राम मुंच मुंचाशु । मां महावेदनातुरं ॥ यतो मे जायते दुःखं । विशेषेण सुदारुणं ॥ ५६ ॥ तद्गच्छ भारते वर्षे । कुर्विदं मामकं वचः ॥ गत्वा तत्र गदा·

चक्र—शंखखड्गप्रधारकं ॥ ५७ ॥ पीतवस्त्रधरं रम्यं । गरुडध्वजभूषितं ॥ विधेहि मामकं रूपं । रा-
मरूपं स्वकं तथा ॥ ५८ ॥ वरं नीलांबरं बिभ्रन् । मुशलं लांगलं तथा ॥ तालचिह्नध्वजोपेतं । त-
तः सर्वं महीतले ॥ ५९ ॥ सर्वेषामपि लोकानां । परिभ्रम्य प्रदर्शय ॥ ततो रामोऽपि तत्सर्वं । त-
थैव प्रतिपन्नवान् ॥ ६० ॥ चतुर्भिः कलापकं ॥ ततो रामः समागत्य । मर्त्यलोकं तथैव च ॥ वि-
मानमकरोत्तत्र । निवेश्य प्रतिमां हरेः ॥ ६१ ॥ स्वकीयं च प्रतिछंदं । ततो भ्राम्यन् महीतले ॥
लोकेभ्यो दर्शयामास । स्ववैरिभ्यो विशेषतः ॥ ६२ ॥ ऊचे चैवं हली स्वीय—शत्रूणामग्रतो य-
था ॥ पुरेषु स्वेषु भो भूपा—स्त्रिकचतुष्कचत्वरादिषु ॥ ६३ ॥ प्रतिमा नौ विधायाशु । निवेशयत
सर्वतः ॥ पूजयध्वं च धूपाद्यै—र्नमस्कुरुत सादरं ॥ ६४ ॥ युग्मं ॥ वयं हि सृष्टिसंहार—कारका-
स्त्रिदशोत्तमाः ॥ देवलोकादिहागत्य । दिव्यदेवर्द्धिसंयुताः ॥ ६५ ॥ स्वक्रीडाभिरनेकाभिः । क्री-
डामात्रं हि भूतले ॥ सृष्टानेकजनव्राताः । सृष्टानेकमहापुरः ॥ ६६ ॥ यस्मादस्माभिरेवेह । सृष्टेयं
द्वारिकावती ॥ अस्माभिरेव संहृत्य । प्रक्षिप्ता पश्चिमोदधौ ॥ ६७ ॥ तदहो वयमेवेह । सृष्टिसंहा-
रकारकाः ॥ कारणिकपुमांसश्च । विश्वस्यास्येति बुध्यतां ॥ ६८ ॥ ततो लोकेन भीतेन । तथैव

यावन्नैव विकासिते नेत्रे लोचने शिष्टसंगशलाकया सज्ज्ञानसंपर्ककीलिकया ॥ २ ॥ दुर्गतिद्वारहेतूनि कुगतिमुख्यकारणानि, सर्वानर्थकराणि च समस्तव्यसनजनकानि च सुलभानि सुप्रापाणि कुमित्राणि कुत्सितसुहृदः, शिष्टसंगस्तु दुर्लभः सद्योगो दुःप्रापः ॥ ३ ॥ तमस्तानवकर्तारोऽज्ञानकृशत्वकारकाः, प्रशमामृतवर्षिण उपशमसुधावर्षकाः, शरदिंदुसमाः शारदचंद्रसन्निभाः संतः सत्पुरुषाः संतोषितजगज्जना आनंदितविश्वलोकाः ॥ ४ ॥ एको द्वौ वेति श्लोकः स्पष्टः, न वरं कल्पोपपदपादपाः कल्पवृक्षाः ॥ ५ ॥ मालतीचंदनमिति श्लोको व्यक्तः ॥ ६ ॥ शरध्धृदजलाकारमिति कंठ्यं, नवरं शरत्काले हृदजलाकारं नदनीराकारं ॥ ७ ॥ असारोऽपीत्यादि श्लोकत्रयं सुव्यक्तमेव, न वरं जंतुभिः परोपकारकरणशीलैः ॥ ८ ॥ ९ ॥ यैः कैश्चित्स्वार्थं स्वप्रयोजनं परिहृत्य परित्यज्य हृद्यहृदयैर्बंधुरमनोभिः प्रायः प्रायेण परार्थः परप्रयोजनं कृतो विहितः, यैरेकांतहितवहा निर्विकल्पं हितकारिका तनुमतां शरीरिणां दत्ता वितीर्णा मतिर्बुद्धिः पृछतां प्रश्नयतां, यैराजन्माजन्मकालाज्जितेंद्रियैर्विजितनिजाक्षैर्जगदिदं भुवनमेतच्छुभ्रैः शुक्लैर्गुणैरौदार्यादिभिर्जीवपरिणामैः शुभ्रितमुज्ज्वलितं, ते संसारसरःसरोरुहसमाः ते पुरुषाः संसारसरोवरस्य शोभाकारित्वात्सहस्रपत्रसन्निभाः

सेव्या आसेवनीयाः सदा सर्वदा सज्जनाः सत्पुरुषा इति. ॥ १० ॥ केशिप्रदेशिकथानकं पुनरि-
दं—अस्त्यत्र भारते क्षेत्रे । सुरमंदिरशोभिता ॥ नगर्यामलकल्पाख्या । रम्यारामादिराजिता ॥ १ ॥
तस्यां बभूव वीरस्य । समवसृतिरन्यदा ॥ सूरिकाख्यसुरस्तत्र । वंदनार्थमुपागतः ॥ २ ॥ अभिवंद्य
महावीरं । स प्राह प्रकृतांजलिः ॥ भगवन् सर्वमेवेह । यूयं जानीत पश्यथ ॥ ३ ॥ गौतमादिमु-
नीनां तु । किंचिन्नाट्यं प्रदर्शये ॥ स्तूष्णयेव भगवांस्तस्थौ । सूरिकाभः सुरस्ततः ॥ ४ ॥ दिशमुत्तर-
पौरस्तीं । गत्वा सिंहासनं तथा ॥ विकुर्व्य तत्र संतिष्ठे—स्ततो दक्षिणतो भुजात ॥ ५ ॥ दिव्या-
तोद्यं च गंधर्व—सन्नाट्यविधिसंयुतं ॥ शतमष्टाग्रमाकृष्टं । कुमाराणां वराकृति ॥ ६ ॥ वामभुजाच्च
देवीनां । रम्यं नाट्यविधिं ततः ॥ द्वात्रिंशद्विधमादर्श्य । निजं स्थानमुपाययौ ॥ ७ ॥ चतुर्भिः क-
लापकं ॥ श्रीमता गौतमेनाथ । पृष्टो वीरजिनेश्वरः ॥ भगवन्नमरः कोऽयं । कथं वा प्राप्तवानिमां
॥ ८ ॥ देवर्द्धिं सर्वतो भद्रां । किमु वा सुकृतं कृतं ॥ उत्पन्नः कुत्र वा कल्पे । कुतो धर्मं च ल-
ब्धवान् ॥ ९ ॥ युग्मं ॥ भगवानाह सौधर्मे । विमाने चारणाभके ॥ चतुःपल्योपमायुष्को । देवो-
ऽयं सूरिकाभिधः ॥१०॥ जन्मन्यनंतरे चायं । श्वेतव्यां महापुरि ॥ प्रदेश्याख्योऽभवद्राजा । सूर्य-

तत्प्रतिश्रुतं ॥ कृताश्च प्रतिमाः सर्व—ग्रामेषु नगरेषु च ॥ ६९ ॥ पारंपर्येण संजाता । लोके ख्यातिरियं तथा ॥ ब्रह्मेशकेशवालोक—सृष्टिसंहारकारकाः ॥ ७० ॥ सर्वमेतत्ततो रामः । कारयित्वा दिवं गतः ॥ आस्ते च तत्र भुंजानो । दिव्यां भोगपरंपरां ॥ ७१ ॥ तथा जरत्कुमारोऽपि । कलिंगाधिपभूपतेः ॥ सुतायां पुत्रमुत्पाद्य । वसुध्वजाभिधानकं ॥ ७२ ॥ तस्मै राज्यं निजं दत्वा । भववासविरागतः ॥ तीर्थे नेमिजिनस्यैव । प्रव्रज्यां प्रतिपन्नवान् ॥ ७३ ॥ तदहो पात्रसद्दान—मनुमोदयतोऽपि हि ॥ दातृतुल्यं फलं प्राज्यं । हरिणस्येव जायते ॥ ७४ ॥ दद्ध्वं तद्यथाशक्त्या । दानं पात्राय भावतः ॥ वित्ताभावे कुरुध्वं भो । पात्रदानेऽनुमोदनं ॥ ७५ ॥ उक्तो दानादिचतुर्विधोऽपि धर्मः, स च शिष्टैरेव सेव्यत इत्यतस्तदनंतरं शिष्टसंगाधिकारमाह—

॥ मूलम् ॥—महामोहज्वराक्रांता । दुःखौघावर्तवर्तिनः ॥ स्वहिताय न चेष्टंते । शिष्टसंगादृते नराः ॥ १ ॥ मोक्षमार्गपरिज्ञानं । तावन्न जायते नृणां ॥ यावन्नोन्मीलिते नेत्रे । शिष्टसंगशलाकया ॥ २ ॥ दुर्गतिद्वारहेतूनि । सर्वानर्थकराणि च ॥ सुलभानि कुमित्राणि । शिष्टसंगस्तु दुर्लभः ॥ ३ ॥ तमस्तानवकर्तारः । प्रशमामृतवर्षिणः ॥ शरदिंदुसमाः संतः । संतोषितजगज्जनाः

॥ ४ ॥ एको द्वौ वा त्रयो वापि । पुरग्रामेषु सज्जनाः ॥ यद्वा संति न सर्वत्र । कल्पोपपदपादपाः
॥ ५ ॥ चंदनमालतीचंद्र—सुधा येन विनिर्मिताः ॥ तेनैव दलसंघेन । श्रेष्टः सृष्टा हि सज्जनाः
॥ ६ ॥ शरध्घ्रदजलाकारं । गंभीरं मलवर्जितं ॥ कोपेऽपि शिशिरं मध्ये । बहिरुष्णं सतां मनः॥
॥ ७ ॥ असारोऽप्येष संसारः । सारवानिव लक्ष्यते ॥ परापद्दुःखितैः सद्भिः । परोपकृतिचंचुभिः ॥
॥ ८ ॥ सागरादपि गंभीरा । मेरोरपि गरीयसी ॥ भूयसी भूरिशः कार्या । संगतिः सह सज्जनैः ॥
॥ ९ ॥ क्रूरकर्मापि सत्संगा—ल्लभते फलमुत्तमं ॥ केशिसंगाद्यथा लब्धं । फलं राज्ञा प्रदेशिना
॥ १० ॥ यैः स्वार्थं परिहृत्य हृद्यहृदयैः प्रायः परार्थः कृतः । यैरेकांतहितावहा तनुमतां दत्ता मतिः
प्रव्रतां ॥ यैराजन्म जितेंद्रियैर्जगदिदं शुभ्रैर्गुणैः शुभ्रितं । ते संसारसरःसरोरुहसमाः सेव्याः सदा
सज्जनाः ॥ ११ ॥ व्याख्या—इति श्लोका एकादश पाठसिद्धा एव, तथापि किंचिदुच्यते—महा-
मोहज्वराक्रांता बृहदज्ञानज्वरावष्टब्धाः, दुःखौघ एवावर्तत इत्येवंशीला दुःखौघावर्तवर्तिनः, स्वहिता-
यात्मकल्याणाय न चेष्टंते न व्याप्रियंते शिष्टसंगात्सज्जनसंपर्कादृते विना नरा मानवाः ॥ १ ॥
मोक्षमार्गपरिज्ञानं शिवपथावबोधो न तावज्जायते न तावत्संपद्यते नृणां नराणां यावन्नोन्मीलिते

यावन्नैव विकासिते नेत्रे लोचने शिष्टसंगशलाकया सज्जनसंपर्ककीलिकया ॥ २ ॥ दुर्गतिद्वारहेतूनि कुगतिमुखकारणानि, सर्वानर्थकराणि च समस्तव्यसनजनकानि च सुलभानि सुप्रापाणि कुमित्राणि कुत्सितसुहृदः, शिष्टसंगस्तु दुर्लभः सद्योगो दुःप्रापः ॥ ३ ॥ तमस्तानवकर्तारोऽज्ञानकृशत्वकारकाः, प्रशमामृतवर्षिण उपशमसुधावर्षकाः, शरदिंदुसमाः शारदचंद्रसन्निभाः संतः सत्पुरुषाः संतोषितजगज्जना आनंदितविश्वलोकाः ॥ ४ ॥ एको द्वौ वेति श्लोकः स्पष्टः, न वरं कल्पोपपदपादपाः कल्पवृक्षाः ॥ ५ ॥ मालतीचंदनमिति श्लोको व्यक्तः ॥ ६ ॥ शरभ्रदजलाकारमिति कंठ्यं, नवरं शरत्काले हृदजलाकारं नदनीराकारं ॥ ७ ॥ असारोऽपीत्यादि श्लोकत्रयं सुव्यक्तमेव, न वरं जंतुभिः परोपकारकरणशीलैः ॥ ८ ॥ ९ ॥ यैः कैश्चित्स्वार्थं स्वप्रयोजनं परिहृत्य परित्यज्य हृद्यहृदयैर्बंधुरमनोभिः प्रायः प्रायेण परार्थः परप्रयोजनं कृतो विहितः, यैरेकांतहितवहा निर्विकल्पं हितकारिका तनुमतां शरीरिणां दत्ता वितीर्णा मतिर्बुद्धिः पृच्छतां प्रश्नयतां, यैराजन्माजन्मकालाज्जितेंद्रियैर्विजितनिजाक्षैर्जगदिदं भुवनमेतच्छुभ्रैः शुक्लैर्गुणैरौदार्यादिभिर्जीवपरिणामैः शुभ्रितमुज्ज्वलितं, ते संसारसरःसरोरुहसमाः ते पुरुषाः संसारसरोवरस्य शोभाकारित्वात्सहस्रपत्रसन्निभाः

सेव्या आसेवनीयाः सदा सर्वदा सज्जनाः सत्पुरुषा इति. ॥ १० ॥ केशिप्रदेशिकथानकं पुनरि-
दं—अस्त्यत्र भारते क्षेत्रे । सुरमंदिरशोभिता ॥ नगर्यामलकल्पाख्या । रम्यारामादिराजिता ॥ १ ॥
तस्यां बभूव वीरस्य । समवसृतिरन्यदा ॥ सूरिकाख्यसुरस्तत्र । वंदनार्थमुपागतः ॥ २ ॥ अभिवंद्य
महावीरं । स प्राह प्रकृतांजलिः ॥ भगवन् सर्वमेवेह । यूयं जानीत पश्यथ ॥ ३ ॥ गौतमादिमु-
नीनां तु । किंचिन्नाट्यं प्रदर्शये ॥ तूष्णयेव भगवांस्तस्थौ । सूरिकाभः सुरस्ततः ॥ ४ ॥ दिशमुत्तर-
पौरस्तीं । गत्वा सिंहासनं तथा ॥ विकुर्व्य तत्र संतिष्ठ—स्ततो दक्षिणतो भुजात ॥ ५ ॥ दिव्या-
तोद्यं च गंधर्व—सन्नाट्यविधिसंयुतं ॥ शतमष्टाग्रमाकृष्टं । कुमाराणां वराकृति ॥ ६ ॥ वामभुजाच्च
देवीनां । रम्यं नाट्यविधिं ततः ॥ द्वात्रिंशद्विधमादर्श्य । निजं स्थानमुपाययौ ॥ ७ ॥ चतुर्भिः क-
लापकं ॥ श्रीमता गौतमेनाथ । पृष्टो वीरजिनेश्वरः ॥ भगवन्नमरः कोऽयं । कथं वा प्राप्तवानिमां
॥ ८ ॥ देवर्द्धिं सर्वतो भद्रां । किमु वा सुकृतं कृतं ॥ उत्पन्नः कुत्र वा कल्पे । कुतो धर्मं च ल-
ब्धवान् ॥ ९ ॥ युग्मं ॥ भगवानाह सौधर्मे । विमाने चारणाभके ॥ चतुःपल्योपमायुष्को । देवो-
ऽयं सूरिकाभिधः ॥ १० ॥ जन्मन्यनंतरे चायं । श्वेतवत्यां महापुरि ॥ प्रदेश्याख्योऽभवद्राजा । सूर्य-

प्रारब्धा धर्मदेशना ॥ देवतत्वं समाख्यातं । जीवाजीवादयस्तथा ॥ ३४ ॥ धर्माधर्मफलं चैव । स्वर्गादि च परिस्फुटं ॥ राजाह सर्वमेवेद—मसंबद्धं त्वयोदितं ॥ ३५ ॥ असंबद्धत्वमेतस्या—त्यंतासत्वादिति ब्रुवे ॥ असत्त्वं पुनरध्यक्ष—प्रमाणाविषयत्वतः ॥ ३६ ॥ वियदिंदीवरादीव । ततः सूरिरुवाच तं ॥ येयं भो भो नराधीश । गोचरातीतता किल ॥ ३७ ॥ युग्मं ॥ सा तवैव किमाहोश्वि—त्सर्वेषामपि देहिनां ॥ आद्यपक्षे गृहस्तंभ—कुड्यादीनामपीह भोः ॥ ३८ ॥ अभावो जायते जीव—स्वर्गादीनामिव स्फुटं ॥ त्वदीयदर्शनस्यार्वा—ग्भागवर्तित्वगादिके ॥ ३९ ॥ प्रवृत्तेनैव मध्यादि—भागेषु भो नरेश्वर ॥ नापि द्वितीयकः पक्षो । यस्मादयमसिद्धिमान् ॥ ४० ॥ तत्सिद्धौ च तवैवेह । सर्वज्ञत्वं प्रसिध्यति ॥ सर्वज्ञत्वे च संसिद्धे । जीवत्वं सिद्धमेव हि ॥ ४१ ॥ जीवत्वे सति संत्येव । पुण्यपापादयोऽखिलाः ॥ इत्यादिना प्रवादेन । नास्तिकत्वे निराकृते ॥ ४२ ॥ राज्ञोक्तमभविष्यत्सन् । परलोको यदि ध्रुवं ॥ आसीच्च धर्मसन्निष्ठा । सर्वदा जननी मम ॥ ४३ ॥ ततस्तव मतेनासौ । भविष्यति दिवं गता ॥ पिता तु पापकर्मांशु—त्स नूनं नरकं गतः ॥ ४४ ॥ तन्माता किं न मामेत्य । संबोधयति सत्वरं ॥ यथा भो माकृथाः पापं । दूरं दुर्गतिकारणं ॥४५॥

मत्संबोधकृते किं वा । समेत्य नरकादिह ॥ पितात्मीयमहो मह्यं । न प्रयच्छति दर्शनं ॥ ४६ ॥
सूरिः प्राह महाराज । यत्ते माता समेति नो ॥ स्वर्गान्मनुष्यलोकेऽत्र । तत्राकर्णय कारणं ॥४७॥
देवा हि सर्वदात्यंतं । विषयासक्तमानसाः ॥ असमाप्तविधेयाश्च । मनुजेषु च निःस्पृहाः ॥ ४८ ॥
नरक्षेत्रं च दुर्गंधं । नेहागच्छंति तेन ते ॥ नारकास्तु पराधीना । दुःखार्त्ताश्च निरंतरं ॥ ४९ ॥
स्वकर्मरज्जुनिर्बद्धा । आगच्छेयुः कथं नु ते ॥ निर्गंतुमनसोऽपीह । बंधुस्नेहपरा अपि ॥ ५० ॥ य-
थेहागसि कुत्रापि । कृते कोऽपि नरस्त्वया ॥ अंधगुप्तौ सुगुप्तायां । बाढं बध्वा प्रवेशितः ॥ ५१ ॥
सोऽभिलषेद्यदि द्रष्टुं । ज्ञातिवर्गं निजं नृपः ॥ त्वं किं विज्ञप्यमानोऽपि । तं वराकं विमुंचसि ॥
॥ ५२ ॥ युग्मं ॥ नृपोऽपि नृपतिः प्राह । भगवन्नेकदा मया ॥ चौर एको महाकुंभ्यां । प्रक्षिप्तो
यत्नतस्ततः ॥ ५३ ॥ स्थगयित्वा च तद्द्वारं । निश्छिद्रं जतुना कृतं ॥ मृतश्चौरो न चालोकि ।
तद्विनिर्गमरंध्रकं ॥ ५४ ॥ कुंभीमध्येऽपि यत्नेन । वीक्षमाणैर्निरंतरं ॥ जीवः कुत्रापि नो दृष्टो । दृ-
ष्टश्च कृमिपुंजकः ॥ ५५ ॥ तथान्योऽपि मया चौरः । सूक्ष्मखंडानि कारितः ॥ न तत्र वीक्षितो जी-
वः । संछिन्नेऽपि तिलं तिलं ॥ ५६ ॥

कांतास्य गेहिनी ॥ ११ ॥ पुत्रस्तु सूर्यकांताख्यो । मंत्री चित्राभिधोऽभवत ॥ स च प्रदेशिना रा-
ज्ञा—न्यदा कचित्प्रयोजने ॥ १२ ॥ श्रावस्त्यां प्रेषितः पुर्यां । जितशत्रुनृपांतिके ॥ स च तत्र ग-
तो दृष्ट्वा । पार्श्वजिनगणाधिपं ॥ १३ ॥ आचार्यं केशिनामानं । चतुर्ज्ञानसमन्वितं ॥ सानंदो वं-
दते भक्त्या । धर्मं चाकर्णयत्यसौ ॥ १४ ॥ युग्मं ॥ धर्मं श्रुत्वा च संबुद्धः । सूरीणामंतिके ततः ॥
पंचाणुव्रतिकं सप्त—शिक्षापदसमन्वितं ॥ १५ ॥ श्राद्धसंबंधिनं धर्मं । विधिना प्रतिपद्य च ॥ भा-
षते भगवन्नस्ति । श्वेतवत्यां मम प्रभुः ॥ १६ ॥ युग्मं ॥

प्रदेशिसंज्ञितो राजा । सोऽपि संबुध्यते यदि ॥ तदा संपद्यते श्रेष्ठं । ततः सूरिः प्रभाषते ॥
॥ १७ ॥ भद्रेदं शोभनं चैव । केवलं यस्तव प्रभुः ॥ प्रदेशिनामको राजा । क्रूरकर्मा दुराशयः ॥
॥ १८ ॥ इहलोकाभिसंबद्धः । परलोकपराङ्मुखः ॥ अनेकसत्वहंता च । निर्धर्मो निर्दयस्तथा ॥
॥ १९ ॥ नास्तिकमतवादी च । स कथं प्रतिभोत्स्यते ॥ ततश्चित्रो वदत्येवं । युष्माकं किं प्रदे-
शिना ॥ २० ॥ युग्मं ॥ श्वेतवत्यां जनोऽन्योऽस्ति । भूयान् भव्येश्वरादिकः ॥ सोऽभिवंदिष्यते पू-
ज्या—त्मनः करिष्यते तथा ॥ २१ ॥ अशनादिकमाहारं । सद्भक्त्या संप्रदास्यति ॥ वस्त्रं पात्रं च

शय्यां च । पीठकं फलकं तथा ॥ २२ ॥ किंच तत्रान्यलोकानां । युष्माकमनुभावतः ॥ सम्यक्त्वा-
दिमहालाभो । भविष्यति गुणो महान् ॥ २३ ॥ सूरिणोक्तमहो चित्र । करिष्यामो यथोचितं ॥
त्वया धर्मे महायत्नो । विधेयः प्रतिवासरं ॥ २४ ॥ एवं करिष्य इत्युक्त्वा । गतश्चित्रो निजां पुरीं
॥ सूरयोऽप्यन्यदा काले । यथोदितविहारतः ॥ २५ ॥ विहरंतः समायाताः । श्वेतवत्यामथ क्रमात्
॥ स्थिताश्च प्रासुके स्थाने । सुसंयतजनोचिते ॥ २६ ॥ युग्मं ॥ वर्धापितस्ततश्चित्रो । गुरूदंतं नि-
युक्तकैः ॥ तत्रस्थेनैव तेनापि । सूरयस्तेऽभिवंदिताः ॥ २७ ॥ चिंतितं च यथैषो हि । राजा पा-
पेषु कर्मसु ॥ सक्तश्चंडश्च रौद्रश्च । महामिथ्यात्वमोहितः ॥ २८ ॥ मय्यपि मंत्रिणि प्राज्ञे । नरके
निपतिष्यति ॥ तदुपायेन केनापि । सूरिमूले नयाम्यहं ॥ २९ ॥ ततोऽश्ववाहनव्याजा—न्निजो-
द्यानसमीपके ॥ नानावृक्षादिभी रम्ये । निनाय सचिवो नृपं ॥ ३० ॥ प्रवेशितश्च तत्रासौ । खे-
दापनोदनच्छलात् ॥ जनमध्यगता यत्र । धर्ममाख्यांति सूरयः ॥ ३१ ॥ सूरिनिःस्वनमाकर्ण्य । भू-
पतिः प्राह मंत्रिणं ॥ यथा भो किमयं मुंडो । रारटीति महारवैः ॥ ३२ ॥ मंत्री प्राह न जानेऽहं ।
तदभ्यर्णेऽभ्यगम्यतां ॥ ततो जगाम सूरीणा—मंतिके मंत्रिसंयुतः ॥ ३३ ॥ सूरिणापि ततस्तस्य ।

प्रारब्धा धर्मदेशना ॥ देवतत्वं समाख्यातं । जीवाजीवादयस्तथा ॥ ३४ ॥ धर्माधर्मफलं चैव । स्व-
र्गादि च परिस्फुटं ॥ राजाह सर्वमेवेद—मसंबद्धं त्वयोदितं ॥ ३५ ॥ असंबद्धत्वमेतस्या—त्यंता-
सत्वादिति ब्रुवे ॥ असत्त्वं पुनरध्यक्ष—प्रमाणाविषयत्वतः ॥ ३६ ॥ वियदिंदीवरादीव । ततः सूरि-
रुवाच तं ॥ येयं भो भो नराधीश । गोचरातीतता किल ॥ ३७ ॥ युग्मं ॥ सा तवैव किमाहोश्वि
—त्सर्वेषामपि देहिनां ॥ आद्यपक्षे गृहस्तंभ—कुड्यादीनामपीह भोः ॥ ३८ ॥ अभावो जायते
जीव—स्वर्गादीनामिव स्फुटं ॥ त्वदीयदर्शनस्यार्वा—ग्भागवर्तित्वगादिके ॥ ३९ ॥ प्रवृत्तेनैव म-
ध्यादि—भागेषु भो नरेश्वर ॥ नापि द्वितीयकः पक्षो । यस्मादयमसिद्धिमान् ॥ ४० ॥ तत्सिद्धौ
च तवैवेह । सर्वज्ञत्वं प्रसिध्यति ॥ सर्वज्ञत्वे च संसिद्धे । जीवत्वं सिद्धमेव हि ॥ ४१ ॥ जीव-
त्वे सति संत्येव । पुण्यपापादयोऽखिलाः ॥ इत्यादिना प्रवादेन । नास्तिकत्वे निराकृते ॥ ४२ ॥
राज्ञोक्तमभविष्यत्सन् । परलोको यदि ध्रुवं ॥ आसीच्च धर्मसन्निष्ठा । सर्वदा जननी मम ॥ ४३ ॥
ततस्तव मतेनासौ । भविष्यति दिवं गता ॥ पिता तु पापकर्माज्ञू—त्स नूनं नरकं गतः ॥ ४४ ॥
तन्माता किं न मामेत्य । संबोधयति सत्वरं ॥ यथा भो माकृथाः पापं । दूरं दुर्गतिकारणं ॥४५॥

मत्संबोधकृते किं वा । समेत्य नरकादिह ॥ पितात्मीयमहो मह्यं । न प्रयच्छति दर्शनं ॥ ४६ ॥ सूरिः प्राह महाराज । यच्च माता समेति नो ॥ स्वर्गान्मनुष्यलोकेऽत्र । तत्राकर्णय कारणं ॥४७॥ देवा हि सर्वदात्यंतं । विषयासक्तमानसाः ॥ असमाप्तविधेयाश्च । मनुजेषु च निःस्पृहाः ॥ ४८ ॥ नरक्षेत्रं च दुर्गंधं । नेहागच्छंति तेन ते ॥ नारकास्तु पराधीना । दुःखार्त्ताश्च निरंतरं ॥ ४९ ॥ स्वकर्मरज्जुनिर्बद्धा । आगच्छेयुः कथं नु ते ॥ निर्गंतुमनसोऽपीह । बंधुस्नेहपरा अपि ॥ ५० ॥ यथेहागसि कुत्रापि । कृते कोऽपि नरस्त्वया ॥ अंधगुप्तौ सुगुप्तायां । बाढं बध्वा प्रवेशितः ॥ ५१ ॥ सोऽभिलषेद्यदि द्रष्टुं । ज्ञातिवर्गं निजं नृपः ॥ त्वं किं विज्ञप्यमानोऽपि । तं वराकं विमुंचसि ॥ ॥ ५२ ॥ युग्मं ॥ नृपोऽपि नृपतिः प्राह । भगवन्नेकदा मया ॥ चौर एको महाकुंभ्यां । प्रक्षिप्तो यत्नतस्ततः ॥ ५३ ॥ स्थगयित्वा च तद्द्वारं । निश्छिद्रं जतुना कृतं ॥ मृतश्चौरो न चालोकि । तद्विनिर्गमरंध्रकं ॥ ५४ ॥ कुंभीमध्येऽपि यत्नेन । वीक्षमाणैर्निरंतरं ॥ जीवः कुत्रापि नो दृष्टो । दृष्टश्च कृमिपुंजकः ॥ ५५ ॥ तथान्योऽपि मया चौरः । सूक्ष्मखंडानि कारितः ॥ न तत्र वीक्षितो जीवः । संभिन्नेऽपि तिलं तिलं ॥ ५६ ॥

सूरिणाप्याणि ज्ञो कश्चि—त्कुंभीमध्यगतो नरः ॥ नीरंध्रं पिहिते द्वारे । शंखमादाय वादये-
त् ॥ ५७ ॥ स शंखनिःस्वनो ज्ञड । निःक्रामति कुतो बहिः ॥ वह्निना ध्मायमाने वा । लोहपिं-
डेऽग्निज्ञासुरे ॥ ५८ ॥ सर्वात्मना कुतस्तत्र । प्रविवेश हुताशनः ॥ द्वितीयस्तेनके चायं । दृष्टांतो
जनविश्रुतः ॥ ५९ ॥ यथा हि मानवः कोऽपि । गृहीत्वारणिदारुकं ॥ सर्वतः पाटयन्नुच्चै—रग्निं
तत्र न पश्यति ॥ ६० ॥ अन्यश्चोज्ज्वालयामास । वह्निं तत्रापि दारुके ॥ यदीदृक्षस्वरूपाणि । मूर्त-
वस्तून्यपीह ज्ञोः ॥ ६१ ॥ तदमूर्तपदार्थानां । को विशेषोऽप्रदर्शने ॥ राजाह पुनरप्येवं । मयैकः
स्तेन एकदा ॥ ६२ ॥ जीवन्नेव तुलारूढो । जनाध्यक्षं प्रतोलितः ॥ उच्छ्वासस्य निरोधेन । मार-
यित्वा तथैव सः ॥ ६३ ॥ तोलितस्तत्क्षणं याव—त्तावानेव न चोनकः ॥ सूरिर्ब्रूते श्हैकेन । गो-
पालेन दृतिर्दृढं ॥ ६४ ॥ तोलितो वातसंपूर्णो । रिक्तोऽपि च तथैव सः ॥ तावानेव हि संजातो ।
न च न्यूनो न चाधिकः ॥ ६५ ॥ कुलकं ॥ तदहो यदि मूर्तेऽपि । तौल्यमाश्रित्य नांतरं ॥ दृष्टं
कथममूर्तेषु । भावेषु तत्प्रदृश्यतां ॥ ६६ ॥ तस्मात्सर्वांगिवर्गस्य । कथंचिद्देहतः पृथक् ॥ स्वसंवे-
दनसंसिद्धो । जीवः प्रत्यक्ष एव हि ॥ ६७ ॥ तथा—चैतन्यानुगतानेक—चलनस्पंदनादिभिः ॥

चेष्टाभिर्लक्ष्यते जीवो । वातवध्ध्वजकंपनात् ॥ ६८ ॥ राज्ञोक्तं भगवन्नेत—देवमेव न संशयः ॥
त्वदीयवाक्यमंत्रैर्मे । नष्टो मोहपिशाचकः ॥ ६९ ॥ परं कुलक्रमायातं । नास्तिकवाददर्शनं ॥ त-
त्कथमित्र शक्तोऽहं । मोक्तुमकांड एव हि ॥ ७० ॥ गुरुराह महाराज । स्तोकमेतद्विवेकिनां ॥
किं वा व्याधिः क्रमायातो । दारिद्र्यं वा न मुच्यते ॥ ७१ ॥ यथेह वणिजः केऽपि । नानावाहन-
संयुताः ॥ वाणिज्येन प्रगच्छंतो—ऽपश्यन् लोहाकरं वरं ॥ ७२ ॥ ततो लोहं गृहीत्वा ते । गच्छंतः
पुनरग्रतः ॥ त्रपुकाकरमालोक्य । मुक्त्वा लोहं ततो मुदा ॥ ७३ ॥ त्रपुकस्य भृता ग्रंथ्यो । नैको
लोहं विमुंचति ॥ सीसकं च ततस्ताम्रं । रूप्यं स्वर्णं च हीरकान् ॥ ७४ ॥ दृष्ट्वा विमुच्य पूर्वात्तं ।
त्रपुताम्रादिकं क्रमात् ॥ लाभवंतः प्रमोदेन । हीरकानेव केवलान् ॥ ७५ ॥ एकस्तु भण्यमानोऽ-
पि । वणिग्भिस्तैर्मुहुर्मुहुः ॥ तल्लोहं नैव तत्याज । कुग्रहग्रस्तमानसः ॥ ७६ ॥ ततः सर्वे समाया-
ताः । स्वेषु स्वेषु गृहेषु ते ॥ तत्र च हीरकग्राहि—वणिजो विलसंत्यलं ॥ ७७ ॥ लोहग्राही तु
तानुच्चै—र्भुंजानान् ददतस्तथा ॥ दृष्ट्वा दंदह्यतेऽत्यंतं । पश्चात्तापकृशानुना ॥ ७८ ॥ तथा तवापि
ज्ञो राजन् । पश्चात्तापो भविष्यति ॥ अतो विमुच्यतामेष । ध्रुवं निंद्यः कदाग्रहः ॥ ७९ ॥ सम-

ग्रोपाधिं मुक्त्वैव । धर्मे यत्नो विधीयतां ॥ येनायं तीर्यते दुर्गो । दूरपारो नवोदधिः ॥ ८० ॥ ततो जीवादितत्वानि । बुद्धोऽद्भुतशुनाशयः ॥ प्रत्यपद्यत सुश्राद्ध—धर्मं द्वादशनेदकं ॥ ८१ ॥ ततो गतो निजे गेहे । राजा रंजितमानसः ॥ सूरयोऽप्यन्यदान्यत्र । विहृता नगरांतरे ॥ ८२ ॥ नूपेनापि यथाग्राहं । धर्मः सुश्रावकोचितः ॥ निःकलंकश्चिरं कालं । शुद्धनावेन पालितः ॥ ८३ ॥ महापरिग्रहारंनाः । सर्वेऽपि शिथिलीकृताः ॥ स्त्रीसंगश्च परित्यक्तो । विशुद्धं धर्ममिछता ॥ ८४ ॥ ततो विचिंतितं सूर्य—कांतयान्यत्र सक्तया ॥ यथायं यत आरज्य । राजा जात नपासकः ॥८५॥ ततः प्रभृति मामेष । सर्वथा त्यक्तवानिति ॥ तद्विषादिप्रयोगेण । विनाश्यैनं नराधिपं ॥ ८६ ॥ पुत्रं च सूर्यकांताख्यं । राज्ये संस्थापयाम्यहं ॥ ततो नुंजे यथाकामं । कामभोगान्निरंतरं ॥ ८७ ॥ निर्नया च निराशंका । स्ववशा स्वेछचारिणी ॥ ततोऽन्यदा तया क्षिप्तं । नक्तमध्ये महाविषं ॥ ॥ ८८ ॥ नपोषितनरेंद्राय । दत्तं पौषधपारणे ॥ ततो राज्ञः समुत्पन्ना । प्राणप्रहाणकारिणी ॥८९॥ दुःसहा सर्वतो देहे । पित्तज्वरोग्रवेदना ॥ राज्ञा ज्ञातं तक्तसर्वं । यत्कृतं सूर्यकांतया ॥ ९० ॥ त्रिभिर्विशेषकं ॥

मन्ये विषविकारोऽयं । तेनाधरं वपुर्मम ॥ ततः संवेगमापन्न—स्तस्यामद्विष्टमानसः ॥ ७१ ॥ अनुव्रतानि पंचापि । समुच्चार्य यथाविधि ॥ आलोचितप्रतिक्रांतो । नमस्कारपरायणः ॥ ७२ ॥ मृत्वा समाधिना प्राप्तः । कल्पे सौधर्मनामनि ॥ विमाने सौरिकाव्हे च । सूर्यनामाभिधः सुरः ॥ ॥ ७३ ॥ चतुःपल्योपमायुष्कः । समुत्पन्नो महर्द्धिकः ॥ भुक्त्वा तत्र महाभोगां—स्ततश्च्युत्वा स्थितिक्षयात् ॥ ७४ ॥ क्षेत्रे महाविदेहाख्ये । कृत्वा संयममुत्तमं ॥ यास्यत्यशेषकर्मांश—विनिर्मुक्तः शिवालयं ॥ ७५ ॥ उक्तः शिष्टसंगाधिकारः, शिष्टसंगादेव विनीतो जायते जंतुरित्यतस्तदनंतरं विनयाधिकारमाह—

॥ मूलम् ॥—यत्र तत्र प्रयातापि । दुर्विनीतो न शोभते ॥ न चापि सेव्यतामेति । निर्जलेव यथा नदी ॥ १ ॥ किं किं यन्न प्रयच्छंति । किं किं यन्न प्रकुर्वते ॥ स्वबंधुमिव पश्यंति । विनयाराधिता नराः ॥ २ ॥ अंगजोऽपि हि दुष्टात्मा । व्रणः संतापकारणं ॥ पुत्रोऽपि दुर्विनीतात्मा । पितुर्निर्वेदकारणं ॥ ३ ॥ कोदंडस्यापि नम्रस्य । कोटिमारोहते गुणः ॥ ततोऽपि च टणत्कारो । बंभ्रमीति महीतले ॥ ४ ॥ दुर्विनीतं परित्यज्य । स्वपुत्रं मेदिनीपतिः ॥ अन्यस्यापि ददात्येव ।

राज्यं विनयरंजितः ॥ ५ ॥ हंता जन्मद्वयस्यापि । दुर्विनीतो डुराशयः ॥ हितेष्वप्यहितः पापः । कूलवालो यथा मुनिः ॥ ६ ॥ नेत्रहीनं यथा वक्त्रं । दानहीनं यथा धनं ॥ चंद्रहीनं यथाकाशं । पद्महीनं यथा सरः ॥ ७ ॥ निर्नायकं यथा सैन्यं । तपोहीनो व संयमः ॥ निःसंस्कारं यथा वाक्यं । निरपत्यं यथा गृहं ॥ ८ ॥ तथैव दुर्विनीतस्य । चेष्टितं जल्पितं स्थितं ॥ पांडित्यं च क्रियाकांडं । सर्वथैव न शोजते ॥ ९ ॥ गुर्वादिषु शुन्नं चित्तं । विनयो मानसो मतः ॥ हितं मितं प्रियं वाक्यं । विनयस्तेषु वाचिकः ॥ १० ॥ कायिकश्च यथाशक्ति । तत्कार्याणां प्रसाधकः ॥ सर्वथाशातनात्यागः । सर्वदा नीचवर्तिता ॥ ११ ॥ ज्ञानदर्शनचारित्र—रत्नत्रितयत्राजनं ॥ विनयादेव जायंते । गुरूणां योग्यजंतवः ॥ १२ ॥ त्निंबतां दुर्विनीतत्वात् । पश्चाच्चागमदाम्रतां ॥ यथैष क्षुल्लको गछे । पित्रा सार्धं कृतव्रतः ॥ १३ ॥ वरविनयगुणौघप्राप्तलोकप्रशंसः । सफलितनिजजन्मा न्नूरिधामा महात्मा ॥ कतिपयदिनमध्ये क्षीणनिःशेषकर्मा । सकलजनविनीतः शाश्वतं स्थानमेति ॥ ॥ १४ ॥ व्याख्या—यत्र तत्र प्रयातोऽपि यस्मिंस्तस्मिन् स्थाने गतोऽपि दुर्विनीतो दुर्नयकारी न शोजते न शोभामर्हति, न चापि सेव्यतामेति आश्रयणीयतां न गछतीत्यर्थः, निर्जलेव सलिल-

विकलेव यथा येन प्रकारेण नदी निम्नगेति प्रथमश्लोकार्थः. ॥ १ ॥ अथ विनयाराधिताः संतः संतो यादृशा भवंति तद्दर्शयन्नाह—किं किं न प्रयच्छंतीत्यादिश्लोकः सुगमः ॥ २ ॥ पुत्रोऽपि दुर्विनीतः पितुरुद्वेगकारणमिति दर्शयन्नाह—अंगजोऽपीत्यादि, तत्रांगजो देहोद्भव इति, शेषं सुगममिति. ॥ ३ ॥ अथ नमनशीलस्य धनुर्दृष्टांतेन गुणमाह—कोदंडस्येति श्लोकः सुगमः. ॥ ४ ॥ अथ पितापि दुर्विनीतस्य यत्करोति तद्दर्शयन्नाह—दुर्विनीतं परित्यज्येति श्लोकः स्पष्टः. ॥ ५ ॥ अथ दुर्विनीतस्यानर्थप्राप्तिं सदृष्टांतामाचष्टे, हंतेत्यादि, तत्र हंता घातयिता जन्मद्वयस्यापि ऐहिकामुष्मिकभवद्वितयस्यापि दुर्विनीतो दुराशयो दुष्टचित्तो हितेष्वपि हितकारिष्वपि गुर्वादिष्विति गम्यते, अहितः शत्रुतुल्यः पापः पापकारी कूलवालो यथा मुनिरिति. ॥ ६ ॥ अथेह यथा दुर्विनीतस्य चेष्टितजल्पितादि न शोभते नेत्रवक्रादिदृष्टांतैस्तथा दर्शयन् श्लोकत्रयमाह—नेत्रहीनं यथा वक्रमित्यादि सुगमं चैतत. ॥ ७ ॥ ८ ॥ ९ ॥ अथ मानसिकादिभेदेन विनयत्रैविध्यं तत्स्वरूपं च दर्शयन् श्लोकद्वयमाह—गुर्वादिषु शुभं चित्तमित्यादि सुखावबोधमेतदिति. ॥ १० ॥ ११ ॥ अथ गुर्वादिषु विनयकारिणां यद्भवति तद्दर्शयन् श्लोकमेकमाह—ज्ञानेत्यादि स्पष्टमेवेदं. ॥ १२ ॥ अ-

थ विनयाविनययोः फलमाह—लिंबतां दुर्विनीतत्वादिति श्लोकः सुगमः ॥ १३ ॥ अथ सर्वोत्तमं विनयफलमाविःकुर्वन् वृत्तमाह—वरविनयेत्याद्यस्य व्याख्या—वरविनय एव गुणास्ते नाशा प्राप्ता अशेषलोकविहिता प्रशंसा येन स तथा, सफलितं सफलीकृतं निजं जन्म येन स तथा, भूरि प्रभूतं धाम तेजो यस्य स तथा, महान् प्रशस्य आत्मा यस्य स तथा, कतिपयदिनमध्ये कियद्दिवसाभ्यंतरे स्तोककालेनेत्यर्थः, क्षीणनिःशेषकर्मा क्षीणानि प्रलयं गतानि निःशेषाणि समस्तानि कर्माणि ज्ञानावरणादीनि यस्य स तथा, सकलजनविनीतः समस्तजनानां विनयकारी शाश्वतं शश्वद्भवं स्थानं पदमेति गच्छति, निर्वाणनगरमुपगच्छतीत्यर्थः. इति श्लोकचतुर्दशसमासार्थः. ॥ १४ ॥ कूलवालककथानकं संक्षेपादिदं—

एकस्याचार्यस्यात्यंतदुर्विनीतो विनेयः, तं चाचार्यो विनयं ग्राहयन् बहुधा शिक्षयति कदाचिन्मधुरैर्वाक्यैः कदाचित्किंचिन्निष्ठुरैरिति, स चाचार्यप्रति बृहदनुशयं वहति. अन्यदा सूरिस्तेनैव सार्धं केनापि प्रयोजनेन कंचित्पर्वतमारूढः, सिद्धप्रयोजनेन पश्चादागच्छता तेन शिष्येण मामयं निरपराधमेव मुहुर्मुहुर्निर्भर्त्सयत्यतो मारयाम्येनं स्वगुरुमिति कल्पयता शिलैका समुत्पाट्य सूरेः पृष्ठ-

तो मुक्त्वा, सूरिणापि खाट्कारं कुर्वंती महावेगेनागच्छंती सहसैव सा लक्षिता, स्थितश्च द्रुतमेव मार्गं मुक्त्वैकत्र पार्श्वे सूरिः, जगाम भूतले शिला, ततश्च सूरिणातिरुष्टेन स दुर्विनीतो विनेयः शप्तो यथा रे दुरात्मन्! दुर्विनीत! दुष्टकर्मकारिन्! स्वगुरुघातक! स्त्रीभ्यस्ते विनाशो भवत्विति. तेनोक्तं मया तत्र स्थातव्यं यत्र स्त्रीणां संभवोऽपि नास्तीत्युक्त्वा स गतः शून्यारण्यं, तत्र चैकत्र नदीकूले कायोत्सर्गस्थितः प्रतिदिवसमातापनां प्रकुर्वन्नास्ते, तत्रायातसार्थादेः सकाशाल्लब्धभक्तपानादिना च पारयति. इतश्च वैशालीनगरीं भंक्तुमशक्नुवन् कोणिकनरेंद्रो नितरां खेदमावहन्नेवं व्यचिंतयत्, कथं नामैतस्या नगर्या मया भंगः कर्तव्य इति. अत्रांतरे सहसैव गगनमंडले वचनमिदमुल्ललास—जया समणे कूलवालए । मागहियं गणियं रमिस्सइ ॥ राया असोगचंदए । वेसालीं नगरीं गहिस्सइ ॥ १ ॥ इत्याकर्ण्य राज्ञा तत्क्षणमेव मागधिकां गणिकां समाहूय शिक्षयित्वा च प्रेषिता कूलवालकसमीपे. ततस्तया श्राविकाया वेषं कृत्वा वंदितः कूलवालकः, पर्युपासितश्च क्षणं, भणितश्च यथा भगवन् मम सार्थे समागत्य भक्तपानादिनानुग्रहः क्रियतां. ततोऽसौ क्रमेण गतस्तत्र प्रदेशे, तयापि च चूर्णमिश्रमोदकैः प्रतिलंभितो गतोऽसौ स्वस्थानं, कृतं च तैर्मोदकैः पा-

रणकं, जातं च पायुदालकं, अत्यंतमधरीभूतं च तच्छरीरकं, तया च सुश्राविकयेव सादरं सर्वप्रकारैः प्रतिजागरितः कालेन स प्रगुणतां ययौ, सस्नेहं प्रार्थितश्च तया यथा पश्चात्कर्म भगवन् कुर्याः, म-यैव सार्धमधुना भोगान् भुंक्ष्वेति, तथैव तेनापि प्रतिपन्नं तद्वचः, कृतश्च कालेन तया स कूलवा-लक आत्मवशवर्ती, नीतश्च कोणिकराजसमीपे, भक्तश्च कोणिकेन यथा भो भट्टारक! कथमेत-स्या नगर्या भंगो भविष्यतीति, तेन निगदितं नगरीं निरीक्ष्य कथयामि, ततः प्रविष्टस्तदभ्यंतरे, निरूपिता च सा सर्वतः, दृष्टं च तत्रातीवरमणीयं मुनिसुव्रतजिनस्तूपं, ज्ञातं च यथास्य प्रभावेण नगरी न भज्यत इति. ततश्च कथितं तेन लोकानां यथा भो भो नागरकाः! स्तूपस्यास्य दोषे-ण नगरीरोधोऽजनि, स्तूपभंगे रोधभंगो भविष्यति, प्रत्ययश्चात्रास्योत्कीलनाकाल एव परचक्रं दूरं गमिष्यति, इत्युक्त्वा गतः कूलवालकः कोणिकसमीपे, कथितस्तस्मै सर्वोऽपि स्तूपभंजनादिव्यति-करः, नगरीलोकैश्च स्तूपो भंक्तुमारब्धः, कोणिकोऽपि सस्कंधावारो दूरं दूरतरं गतः, लोकेनापि जातप्रत्ययेन समंतादुत्कीलितः स्तूपः, कोणिकेनापि समागत्य गृहीता नगरी, भग्ना च, कूलवाल-कोऽपि गुरुप्रत्यनीको भ्रष्टचारित्रो दुःकर्मकारी दुर्गतिं गतवानिति. अथाम्रलिंबककथानकं, तच्चेदं—

अस्त्यत्रैव सुविख्यातो—ऽवंतीजनपदो भुवि ॥ धनधान्यादिसंपन्नो । रम्यग्रामादिसंकुलः ॥१॥
तस्मिन्नुज्जयिनी नाम । प्रवरास्ति महापुरी ॥ जैनेंद्रचैत्यसंदोहैः । सर्वतोऽपि विराजिता ॥ २ ॥
शतानि पंच तत्रासन् । गछानां सद्गुणश्रियां ॥ भिन्नभिन्नाश्रयस्थानां । साधुसंदोहशालिनां ॥
॥ ३ ॥ तत्र गछे किलैकस्मिन् । गीतार्थगुर्वधिष्टिते ॥ सहाम्राख्यसुतेनैको । जग्राह स्थविरो व्रतं
॥ ४ ॥ अथ प्रवर्धमानोऽसा—वाम्रकः प्रतिवासरं ॥ विनयं ग्राह्यमाणोऽपि । सर्वकल्याणकारणं ॥
॥ ५ ॥ जातस्तथाप्ययोग्यत्वाद् । दुर्विनीतशिरोमणिः ॥ एहीत्युक्तो व्रजत्येव । व्रजेत्युक्तो समेति
सः ॥ ६ ॥ युग्मं ॥ चैत्यवंदनसध्यान—कालप्रग्रहणादिषु ॥ विघ्नं सुसाधुकृत्येषु । व्यर्थमेव चकार
सः ॥ ७ ॥ ततस्तं तादृशं दृष्ट्वा । दुर्विनीतं दुराशयं ॥ निर्विण्णाः साधवः सर्वे । गुर्वंतिकमुपागताः
॥ ८ ॥ विहितानतयः प्रोचु—र्भगवन्नयमाम्रकः ॥ युष्मच्छिष्यः सदाकालं । कुरुते दुर्नयानलं ॥
॥ ९ ॥ इयंतं कालमस्माभिः । सोढा एतस्य दुर्नयाः ॥ संप्रत्युद्वेजिता दूरं । न वयं सोढुमीश्वराः
॥ १० ॥ अयं हि शास्त्रपाठादि—साधुकार्येषु सर्वदा ॥ कुरुते विघ्नसंघातं । वार्यमाणोऽपि साधु-
भिः ॥ ११ ॥ तदिदं पूज्यपादाना—मस्माभिः कथितं स्फुटं ॥ युक्तायुक्तं विजानंति । पूज्या ए-

वात्र वस्तुनि ॥ १२ ॥ गुरुणापि स आकार्य । पित्रा सार्धं तु तत्क्षणं ॥ जल्पितः कोमलालापैः
। संवेगरसदायकैः ॥ १३ ॥ यथा भो भो महाभाग । त्वं धर्मार्थं समुद्यतः ॥ धर्मार्थिना च संत्या·
ज्या । दूरतोऽखिलदुर्नयाः ॥ १४ ॥ भाव्यं च सुविनीतेन । वांछता हितमात्मनः ॥ वर्जनीयं च
सर्वत्र । पराप्रीतिकमुच्चकैः ॥ १५ ॥ तन्मुक्त्वा दुर्विनीतत्वं । विनयः शिक्ष्यतामहो ॥ स्वर्गापवर्ग·
संसर्ग—सौख्यसंपत्तिकारणं ॥ १६ ॥ श्रुतज्ञानं सुविज्ञानं । यशोराज्यादिसंपदः ॥ जायते चेष्टसं·
सिद्धि—र्विनयादेव देहिनां ॥ १७ ॥ विनय एव विस्तारि । मूलं सद्धर्मशाखिनः ॥ सर्वदा साधु·
वर्गस्य । विनयो वरभूषणं ॥ १८ ॥ कुलरूपवचनयौवन—धनमित्रैश्वर्यसंपदपि पुंसां ॥ विनयप्रश·
मविहीना । न शोभते निर्जलेव नदी ॥ १९ ॥ न तथा सुमहार्घैरपि । वस्त्राभरणैरलंकृतो भाति
॥ श्रुतशीलमूलनिकषो । विनीतविनयो यथा भाति ॥ २० ॥ विनयफलं सुश्रूषा । गुरुसुश्रूषाफलं
श्रुतज्ञानं ॥ ज्ञानस्य फलं विरति—र्विरतिफलं चाश्रवनिरोधः ॥ २१ ॥ संवरफलं तपोबल—मथ
तपसो निर्जरा फलं दृष्टं ॥ तस्मात्क्रियानिवृत्तिः । क्रियानिवृत्तेरयोगित्वं ॥ २२ ॥ योगनिरोधाद्भव·
सं—ततेः क्षयस्ततश्चापि मोक्षश्च ॥ तस्मात्सर्वेषां क—ल्याणानां भाजनं विनयः ॥ २३ ॥ तदहो

यदि कल्याणं । निजात्मनः समीहसे ॥ सुशीलः सुविनीतश्च । नम्रः प्रियंवदो नव ॥ २४ ॥ इ-
त्यादिपेशलैर्वाक्यै—रम्रको गुरुणा भृशं ॥ संबोधितः समं पित्रा । साधूनामग्रतः स्फुटं ॥ २५ ॥
इत्यमृतरसस्पंद—स्राविन्योऽपि गुरोर्गिरः ॥ तीव्रकटुरसस्वादा—स्तेनामन्यंत चेतसि ॥ २६ ॥ त-
तश्चाकाम एवासौ । प्रतिपद्य गुरोर्वचः ॥ लब्धाय च ततः स्थाना—त्तथैव समचेष्टत ॥ २७ ॥ पू-
र्वक्रमेण भूयोऽपि । साधुभिः कथितं गुरोः ॥ तेनापि सामभेदाभ्यां । प्रज्ञापितो मुहुर्मुहुः ॥२८॥
एवं प्रज्ञाप्यमानोऽपि । यावन्नोज्झति वक्रतां ॥ तावन्निष्कासितो गच्छात । समं पित्रा स मूढधीः ॥
॥ २९ ॥ ततो जनकपुत्रौ तौ । तस्यामेव महापुरि ॥ गतौ गच्छांतरं तत्र । विधिना प्रविवेशतुः ॥
॥ ३० ॥ तत्रापि विनयं नैव । गुरोरपि करोत्यसौ ॥ प्रत्युत साधुकृत्येषु । विघ्नान्नित्यं निरंकुशः ॥
॥ ३१ ॥ ततः पूर्वक्रमेणैव । निष्कासितश्च सूरिभिः ॥ समं पित्रा गतोऽन्यत्र । ततो निष्कासितो-
ऽपि हि ॥ ३२ ॥ एवं तत्रैव तौ पुर्यां । गच्छानां शतपंचकं ॥ हिंडितौ न च कुत्रापि । प्राप्तवंतौ
समाश्रयं ॥ ३३ ॥ इत्थं यदा न लेभाते । स्थानं कुत्रापि तौ गणे ॥ ततो रोदितुमारब्धो । बृह-
च्छब्देन तत्पिता ॥ ३४ ॥ निंबकेनोदितं तात । किमर्थं रुद्यते त्वया ॥ स्थविरः प्राह रे पाप । रो-

वात्र वस्तुनि ॥ १२ ॥ गुरुणापि स आकार्य । पित्रा सार्धं तु तत्क्षणं ॥ जल्पितः कोमलालापैः । संवेगरसदायकैः ॥ १३ ॥ यथा भो भो महाभाग ! त्वं धर्मार्थं समुद्यतः ॥ धर्मार्थिना च संत्याज्या । दूरतोऽखिलदुर्नयाः ॥ १४ ॥ भाव्यं च सुविनीतेन । वांछता हितमात्मनः ॥ वर्जनीयं च सर्वत्र । पराप्रीतिकमुच्चकैः ॥ १५ ॥ तन्मुक्त्वा दुर्विनीतत्वं । विनयः शिक्ष्यतामहो ॥ स्वर्गापवर्गसंसर्ग—सौख्यसंपत्तिकारणं ॥ १६ ॥ श्रुतज्ञानं सुविज्ञानं । यशोराज्यादिसंपदः ॥ जायते चेष्टसंसिद्धि—र्विनयादेव देहिनां ॥ १७ ॥ विनय एव विस्तारि । मूलं सद्धर्मशाखिनः ॥ सर्वदा साधुवर्गस्य । विनयो वरभूषणं ॥ १८ ॥ कुलरूपवचनयौवन—धनमित्रैश्वर्यसंपदपि पुंसां ॥ विनयप्रशमविहीना । न शोभते निर्जलेव नदी ॥ १९ ॥ न तथा सुमहार्घैरपि । वस्त्राभरणैरलंकृतो भाति ॥ श्रुतशीलमूलनिकषो । विनीतविनयो यथा भाति ॥ २० ॥ विनयफलं सुश्रूषा । गुरुसुश्रूषाफलं श्रुतज्ञानं ॥ ज्ञानस्य फलं विरति—र्विरतिफलं चाश्रवनिरोधः ॥ २१ ॥ संवरफलं तपोबल—मथ तपसो निर्जरा फलं दृष्टं ॥ तस्मात्क्रियानिवृत्तिः । क्रियानिवृत्तेरयोगित्वं ॥ २२ ॥ योगनिरोधाद्भवसं—ततेः क्षयस्ततश्चापि मोक्षश्च ॥ तस्मात्सर्वेषां क—ल्याणानां भाजनं विनयः ॥ २३ ॥ तदहो

भव ॥ २४ ॥ इ-
यदि कल्याणं । निजात्मनः समीहसे ॥ सुशीलः सुविनीतश्च । नम्रः प्रियंवदो भव ॥ २४ ॥ इ-
त्यादिपेशलैर्वाक्यै—रास्रको गुरुणा भृशं ॥ संबोधितः समं पित्रा । साधूनामग्रतः स्फुटं ॥ २५ ॥
इत्यमृतरसस्पंद—स्राविन्योऽपि गुरोर्गिरः ॥ तीव्रकटुरसस्वादा—स्तेनामन्यंत चेतसि ॥ २६ ॥ त-
तश्चाकाम एवासौ । प्रतिपद्य गुरोर्वचः ॥ उत्थाय च ततः स्थाना—त्तथैव समचेष्टत ॥ २७ ॥ पू-
र्वक्रमेण भूयोऽपि । साधुभिः कथितं गुरोः ॥ तेनापि सामभेदाभ्यां । प्रज्ञापितो मुहुर्मुहुः ॥२८॥
एवं प्रज्ञाप्यमानोऽपि । यावन्नोज्झति वक्रतां ॥ तावन्निष्कासितो गच्छात । समं पित्रा स मूढधीः ॥
॥ २९ ॥ ततो जनकपुत्रौ तौ । तस्यामेव महापुरि ॥ गतौ गच्छांतरं तत्र । विधिना प्रविवेशतुः ॥
॥ ३० ॥ तत्रापि विनयं नैव । गुरोरपि करोत्यसौ ॥ प्रत्युत साधुकृत्येषु । विघ्नान्नित्यं निरंकुशः ॥
॥ ३१ ॥ ततः पूर्वक्रमेणैव । निष्कासितश्च सूरिभिः ॥ समं पित्रा गतोऽन्यत्र । ततो निष्कासितो-
ऽपि हि ॥ ३२ ॥ एवं तत्रैव तौ पुर्यां । गच्छानां शतपंचकं ॥ हिंडितौ न च कुत्रापि । प्राप्तवंतौ
समाश्रयं ॥ ३३ ॥ इत्थं यदा न लेभाते । स्थानं कुत्रापि तौ गणे ॥ ततो रोदितुमारब्धो । बृह-
च्छब्देन तत्पिता ॥ ३४ ॥ निंबकेनोदितं तात । किमर्थं रुद्यते त्वया ॥ स्थविरः प्राह रे पाप । रो-

दिमि तव चेष्टितं ॥ ३५ ॥ दुर्विनीत दुराचार । दुर्बुद्धे दुष्टनाशक ॥ त्वद्दोषेण कुत्रापि । पश्य स्थानं न लभ्यते ॥ ३६ ॥ किं करोमि क्व गच्छामि । ज्ञानविज्ञानवर्जितः ॥ कमाश्रयामि रे मूढ । तव दोषविदूषितः ॥ ३७ ॥ त्वं पुनर्वर्धसे नित्यं । विषपूर्ण इवोरगः ॥ सहान्यायशतैर्घोरै—र्जन· कोद्वेगकारकः ॥ ३८ ॥ तदिदमेकमेवात्र । रोदने मम कारणं ॥ न चान्यत्किंचिदेवास्ति । बुध्य· स्व यदि बुध्यसे ॥ ३९ ॥ श्रुत्वेदं तस्य निंबस्य । तत्प्रतिचित्तमागतं ॥ यथैष सुंदरं ब्रूते । परि· णामहितावहं ॥ ४० ॥ अहो अहं महापापः । पितुः संतापकारकः ॥ येन मे सर्वगच्छेषु । साधवः प्रविराधिताः ॥ ४१ ॥ इत्यादि बहुधात्मानं । चिरं चित्ते विनिंद्य सः ॥ पितरं प्रांजलिः प्राह । गा· ढं संविग्नमानसः ॥ ४२ ॥ तात त्वं माकृथाः खेदं । मा मारोदीश्च मारुषः ॥ नाद्यप्रभृति कुत्रापि । दुर्विनयं करोम्यहं ॥ ४३ ॥ तदुत्तिष्ट वयं यामो । गच्छे श्रीमति मौक्तिके ॥ गुणाढ्यसाधुसंपूर्णे । दीक्षासूरेश्च सन्निधौ ॥ ४४ ॥ स्थविरः प्राह भो वत्स । साधु साधु त्वयोदितं ॥ परं तत्र प्रवेशोऽ· पि । लप्स्यामहे वयं न हि ॥ ४५ ॥ यतस्त्वया समग्रोऽपि । गच्छ उद्वेजितो दृढं ॥ स कथं तव नामापि । मुग्धबुद्धे सहिष्यते ॥ ४६ ॥ तद्गच्छवासिनः सर्वे । त्वद्गंधादपि बिभ्यति ॥ को वा दुर्ज·

नसंसर्गा—च्छीरोऽप्युद्वेजते न हि ॥ ४७ ॥ निंबकेनोदितं तात । यथैव त्वं प्रभाषसे ॥ तथैव स-
र्वमेवैत—त्कार्यं नैवात्र संशयः ॥ ४८ ॥ तथापि गम्यतां तत्र । वारामेकां प्रविश्यतां ॥ तत्रत्यस-
र्वसाधूनां । दूरं वारयतामपि ॥ ४९ ॥ ततोऽहं यत्करिष्यामि । गच्छवासव्यवस्थितः ॥ तदेतत्तात
निःशेषं । त्वमप्यालोकयिष्यसि ॥ ५० ॥

एवं विधीयतां वत्से—त्युक्ते वृद्धेन सत्वरं ॥ समुत्थाय ततः स्थाना—द्गतौ द्वावपि तत्र तौ ॥
॥ ५१ ॥ तावायांतौ समालोक्य । भीताः सर्वेऽपि साधवः ॥ अहो अयं समेत्यत्र । भूयोऽपि वि-
घ्नकारकः ॥ ५२ ॥ इत्यादि ध्यायतां चित्ते । श्रमणानां क्षणांतरं ॥ झटित्येव समायातौ । गुरूणा-
मंतिके तकौ ॥५३॥ कृत्वा सर्वां यथाज्ञातां । प्रतिपत्तिं यथोचितां॥ साधूनां च गुरूणां च। सद्भक्त्या
नम्रगात्रकौ ॥ ५४ ॥ साधुदत्तासने तस्मि—न्निषण्णौ गुर्वनुज्ञया ॥ संभाषितौ यथौचित्यं । गुरुभिः
कोमलोदितैः ॥ ५५ ॥ युग्मं ॥ ततो विज्ञपयामास । वृद्धः सूरिं कृतादरः ॥ यथातथैकवारं मां ।
प्रवेशस्व गणे विभो ॥ ५६ ॥ यद्ययं मामकः पुत्रः । कथंचिन्निंबकाभिधः ॥ विधत्ते दुर्नयं भूय—
स्ततो निष्कास्यतां खलु ॥ ५७ ॥ गुरुराह यथा भद्र । तावत्तिष्ठ दिनत्रयं ॥ प्राघूर्णकोऽत्र पश्चाच्च

। यद्युक्तं तत्करिष्यते ॥ ५८ ॥ अथ तौ गुर्वनुज्ञातौ । स्थितौ तत्र वरे गणे ॥ साधुकृत्यानि स-
र्वाणि । प्रकुर्वाणौ प्रयत्नतः ॥ ५९ ॥ सर्वेषामपि साधूनां । गुरूणां च विशेषतः ॥ विनयं कर्तुमा-
रब्धो । निंबकोऽपि यथाफलं ॥ ६० ॥ सामाचारीं च संपूर्णां । सुसाधुजनसेवितां ॥ यथाकालं य-
थाशक्त्या । प्रवृत्तः कर्तुमुच्चकैः ॥ ६१ ॥ एवं च कुर्वता तेन । रंजिताः सर्वसाधवः ॥ दिनत्रये ग-
ते चैवं । ततः सूरेर्निवेदितं ॥ ६२ ॥ यथैष निंबकः साधु—र्जातः संप्रति नम्रकः ॥ सुशीलः सु-
विनीतश्च । धार्मिको धार्मिकप्रियः ॥ ६३ ॥ गुरुभिर्भाषितं तर्हि । तिष्ठत्वत्रैव शिक्षया ॥ सम्यक्पा-
लनीयश्च । शिक्षणीयो विशेषतः ॥ ६४ ॥ ततोऽसौ निवसंस्तत्र । गुर्वाराधनतत्परः ॥ स्वकैरेव गु-
णग्रामैः । संजातः साधुसंमतः ॥ ६५ ॥ विनीतत्वेन सत्कीर्ति—स्तस्य दूरे विजृंभिता ॥ आम्रक
इति नामापि । संप्रवृत्तं चिरंतनं ॥ ६६ ॥ इत्थं वंद्यश्च पूज्यश्च । श्लाघनीयः सतां मतः ॥ तत्रास्ते
रञ्जिताशेष—साधुश्रावकसंहतिः ॥ ६७ ॥

अन्यदा तेन वृद्धेन । विज्ञप्तो मुनिपुंगवः ॥ यथावयोः समग्रेषु । गच्छेष्वत्र महापुरि ॥ ६८॥
अप्रसिद्धिरियं जाता । दुर्विनीतत्वसंभवा ॥ अयमप्याम्रकोऽगच्छ—त्सांप्रतं सुविनीततां ॥ ६९ ॥ त-

दहं तेषु गछेषु । व्रजामि सकलेष्वपि ॥ आराध्यैरभ्यनुज्ञातः । प्रमार्ष्टुं स्वकलंकतां ॥ ७० ॥ तत्श्चैवं विधेहीति । सूरिणा जल्पिते सति ॥ स वृद्धः सर्वगछेषु । ययावाम्रकसंयुतः ॥ ७१ ॥ सद्विनयविवेकादि—सद्गुणग्रामसंपदा ॥ सर्वेऽपि रंजितास्ताभ्यां । गछा यतिशताकुलाः ॥ ७२ ॥ प्रलब्धः साधुवादश्च । महत्त्वं पूज्यता जने ॥ सर्वत्र धार्मिकत्वेन । वल्लभत्वमलभ्यत ॥ ७३ ॥ इत्थं कलंकमुत्तार्य । स्वस्योच्चैर्दुर्नयाश्रयं ॥ आयातौ पितृपुत्रौ तौ । सानंदौ निजके गणे ॥ ७४ ॥ ततस्तत्र स्थितौ संतौ । सर्वदा साधुसंमतौ ॥ साधुसंमतसंपूर्ण—सामाचारीपरायणौ ॥ ७५ ॥ यावत्सारं चिरं कालं । कृत्वा संयममुत्तमं ॥ मृत्वागमविधानेन । देवलोकमुपागतौ ॥ ७६ ॥ इत्थमाम्रकनामासौ । साधुदुर्विनयादिह ॥ व्याहृतः सर्वगछेषु । निंबक इति साधुभिः ॥ ७७ ॥ पुनः सोऽपि च सर्वत्र । विनयादिगुणसंपदा ॥ प्रापाम्रक इति ख्यातिं । लोके पूजासमन्वितां ॥ ७८ ॥ तदिह सकलधर्मोर्वीरुहस्यादिमूलं । सुर इव मनुजानां संपदामेकहेतुः ॥ सह विशदसुकीर्त्या कारणं मोक्षलक्ष्म्याः । प्रवरविनयधर्मः शिक्ष्यतां चर्यतां च ॥ ७९ ॥ उक्तो विनयाधिकारः, विनयवद्भिश्च विषया दूरतः परित्याज्या इत्यतस्तदनंतरं विषयाधिकारमाह—

॥ मूलम् ॥—हृत्पूरकाशिनो यद्व—त्तृणेष्वपि सुवर्णधीः ॥ दुःखात्मकेषु कामेषु । कामिनां सुखवासना ॥ १ ॥ स्वप्ने दृष्टं यथा पुंसः । क्षणमात्रं सुखायते ॥ प्रबुद्धस्य न तत्किंचि—देवं विपयजं सुखं ॥ २ ॥ त्यजंति कामिनं कामा—स्तज्यंते ते न कामिभिः ॥ कामानां न प्रियः कोऽपि । कामाः सर्वजनप्रियाः ॥ ३ ॥ शब्दादिविषयासक्ता । धर्ममार्गपराङ्मुखाः ॥ अजरामरवन्मूदा—श्चेष्टंते नष्टचेतनाः ॥ ४ ॥ गर्त्ताशूकरसंकाशा । विषयाशुचिकर्दमे ॥ ये रमंते रमंते ते । नरके नरकीटकाः ॥ ५ ॥ विषयेषु विषीदंतो । न पश्यंति हिताहितं ॥ शृण्वंति न हितं वाक्य—मंधवधिरसन्निभाः ॥ ६ ॥ आदौ हृद्यरसास्वादाः । पर्यंते परितापिनः ॥ विषया विषवत्त्याज्याः । पुंसा स्वहितमिच्छता ॥ ७ ॥ एकवारं विषं हंति । भुक्तमेव न चिंतितं ॥ विषयाश्च चिंतनादेव । बहुधा च विनाशकाः ॥ ८ ॥ प्राप्ता अपि नरैः कामा । दुःखं ददति केवलं ॥ क्षणं दृष्टाः क्षणं नष्टा । गंधर्वनगरोपमाः ॥ ९ ॥ यथा यथा निषेव्यंते । विषया मोहमोहितैः ॥ तथा तथा प्रवर्धंते । यथा चाहुर्महर्षयः ॥ १० ॥ उपभोगोपायपरो । वांछति यः शमयितुं विषयतृष्णां ॥ धावत्याक्रमितुमसौ । पुरोऽपराह्णे निजच्छायां ॥ ११ ॥ विषयेषु प्रसक्तानां । प्रजायंते सुदारुणाः ॥ लोकद्व·

यविघातिन्यो । नानानर्थपरंपराः ॥ १२ ॥ व्याख्या—तत्र कामिनां विपर्यस्तबुद्धीनां श्लोकद्वयमाह—हृत्पूरकेत्यादि, हृत्पूरकाशिनो धत्तूरभक्षकस्य यद्वद्येन प्रकारेण तृणेष्वपि वीरणादिवनस्पत्यवयवविशेषेष्वपि सुवर्णधीः कनकबुद्धिः, दुःखात्मकेषु दुःखस्वभावेषु कामेषु शब्दादिषु सुखधीः सुखबुद्धिस्तथा तेन प्रकारेणेति, ॥ १ ॥ स्वप्ने दृष्टं यथा यद्वत्पुंसो नरस्य क्षणमात्रं स्तोककालं सुखायते सुखं ददाति, प्रबुद्धस्य विनिद्रस्य न तत्किंचिदसत्त्वात्तस्य, एवममुना प्रकारेण विषयजं विषयोद्भवं सुखं शर्मेति श्लोकद्वयार्थः. ॥ २ ॥ अथ कामाः कामिनं त्यजंतोऽपि न ते तेन त्यक्तुं शक्यंत इति दर्शयन्नाह—त्यजंतीत्यादिकं श्लोकार्धं सुगमं. तथा कामानां शब्दादीनां न प्रियो न वल्लभः कोऽपि कश्चिदपि, कामाः सर्वजनप्रियाः सकललोकवल्लभा इति श्लोकार्थः. ॥ ३ ॥ अथ कामासक्तानां धर्मप्रत्यनादरतां दर्शयन्नाह—शब्दादीत्यादिश्लोकः सुगमः ॥ ४ ॥ अथ कामिनामपायान् दर्शयन्नाह—गर्तेत्यादि, गर्ताशूकरसंकाशा गर्ताशूकरो क्षुंडस्तेन तुल्या विषयाशुचिकर्दमे विषया एवाशुचिकर्दमो विष्ठाविलपंकस्तत्र ये रमंते क्रीडंति, ते क्रीडंति नरके प्रतीते नरकीटका नरा अपि कृम्यादिकीटकतुल्या इत्यर्थः. ॥ ५ ॥ अथ विषयासक्तानामेवांधबधिरतुल्यतामाह—वि-

पयेष्वित्यादिश्लोकः कंठ्यः ॥ ६ ॥ अथ विषयाणां विषतुल्यतामाह—आदावित्यादि, आदौ मूले हृद्यरसास्वादा मधुररसा इत्यर्थः, पर्यंते तत्सेवनांते परलोके वा परितापकारिणः परिणामदारुणा इत्यर्थः. विषयाः शब्दादयो विषवत्कालकूटमिव त्याज्याः पुंसा नरेण स्वहितमात्मकल्याणमिच्छताभिलपतेति श्लोकार्थः ॥ ७ ॥ अथ विषादपि विषयाणां दुष्टत्वमाह—एकवारमिति श्लोकः स्पष्टः. ॥ ॥ ८ ॥ अथ कामानामेव दुःखदायित्वमस्थिरत्वं च दर्शयन्नाह—प्राप्ता अपीत्यादिश्लोकः सुगमः ॥ ॥ ९ ॥ अथ विषया निषेव्यमाना अपि वर्धंत एवेति वक्तुमाह—यथायथेत्यादिश्लोको व्यक्त एवेति. ॥ १० ॥ अथ कामासक्तानामैहिकामुष्मिकानर्थं प्रदर्शयन्नाह—विषयेष्वित्यादि, विषयेषु विषयादिषु प्रसक्तानां गृद्धानां प्रजायंते भवंति सुदारुणाः सुतरां घोरा लोकद्वयविघातिन्य इहलोकापरलोकविघातकारिण्यो नानानर्थपरंपरा अनेकापायसंतयः ॥ ११ ॥ १२ ॥ इह पर्यंतश्लोके विषयप्रसक्तानां लोकद्वयविघातिन्यो नानानर्थपरंपराः प्रजायंत इत्युक्तं, यथा च विषयप्रसक्ता नानानर्थपरंपराभाजो भवंति तथा लौकिकलोकोत्तरदृष्टांतैः शुकसारिकमुखाख्यानैः प्रदर्श्यते, तद्यथा—

अटव्यां लुब्धकैकेन । शुकेन सह सारिका ॥ गृहीता विहितं नाम । नीलकंठाभिधः शुकः

॥ १ ॥ सारिका हरिमेलेति । एवं गछंति वासराः ॥ व्याधेन भणिता भार्या । प्रिये प्राणप्रिये
शृणु ॥२॥ श्रीमत्तालपुरे राजा। विक्रमादित्यविक्रमः ॥ समस्तसंपदां धाम । त्यागी भोगी महाब-
लः ॥ ३ ॥ समस्तपंडितग्राम—ग्रामणीः सिंहविक्रमः ॥ एतत्तस्मै प्रयछामि । इयं द्विरदगामिनि
॥ ४ ॥ युग्मं ॥ गतः प्रवेशितो दृष्टो । राज्ञारण्यविचारिणा ॥ पुरतः पादयोर्मुक्ते । तेन ते शुक-
सारिके ॥ ५ ॥ शुक उवाच—विबुधपुंमरीकाक्ष । क्षोणीपालशिरोमणे ॥ प्रसीद दर्शनं देहि ।
सिंहविक्रमभूपते ॥ ६ ॥ सारिकोवाच—परस्परविरोधिन्यौ । देहवक्त्रकृतास्पदे ॥ बिभ्रते श्रीसरस्व-
त्यौ । समं राजन्नमोऽस्तु ते ॥ ७ ॥ सहस्रद्वितयं दत्वा । राज्ञा व्याधो विसर्जितः ॥ सुवर्णपंजर-
स्यांत—स्तयोः स्थानं निरूपितं ॥ ८ ॥ सभामंमपमध्यस्थ—स्वर्णपंजरमध्यगे ॥ कथाकाव्यविनो-
देन । तिष्टतः शुकसारिके ॥ ९ ॥ इतश्च हेमसुंदर्या । सिंहविक्रमभार्यया ॥ शुकसारिकयोः के-
ल्या । विवाहं कर्तुकाम्यया ॥ १० ॥ ननांदा विरतिर्नाम । प्रमोदेन निमंत्रिता ॥ आयातासौ स-
मारब्धो । विवाहो वरमंगलैः ॥ ११ ॥ अत्रांतरे समायातो । महासत्या समन्वितः ॥ परस्परविसं-
वादे । लिंबदेवो नृपांतिकं ॥ १२ ॥ तयोश्च दर्शनं दृष्ट्वा । मूर्छिते शुकसारिके ॥ मूर्छांते प्रश्नितो

राज्ञा । शुको मूर्गनिबंधनं ॥ १३ ॥ शुकेनोक्तं महाराज । शृणु मूर्गनिबंधनं ॥ स्वगृहे स्वशरीरे च । यद्वृत्तं मे तदुच्यते ॥ १४ ॥ वसंतसुंदरे ग्रामे । श्रेष्टी सत्यप्रियोऽजवत् ॥ सती च गेहिनी तस्य । सुशीला सत्यवादिनी ॥ १५ ॥ कालेन गछता जातः । पुत्रोऽहमनयोः प्रियः ॥ यथाश्रुतपरिग्राही । मुग्धो मुग्धकनामकः ॥ १६ ॥ परिणीता तद्दास्तव्या । सुगुप्तवणिजः सुता ॥ महासतीकृताह्वाना । यथार्थीकृतनामका ॥ १७ ॥ एवं व्रजति संसारे । पितरौ गुणंशेषतां ॥ संजातौ तत्पदे जातो । ह्यहं च गृहचिंतकः ॥ १८ ॥ एकोऽस्ति मद्गृहे दासो । गृहदासीसमुद्भवः ॥ सप्तदशाब्ददेशीयो । विकारी कांतदर्शनः ॥ १९ ॥ शौचधर्मसमारूढा । करस्थताम्रभाजना ॥ जनाद्विरंजनाहेतो—र्बंभ्रमीति महासती ॥ २० ॥ रजन्यां विजने जाते । गृहदाससमन्विता ॥ मद्यं पिबति चाश्नाति । मांसं सा पापकारिणी ॥ २१ ॥

अन्यदाजनि पुत्रश्च । दासेनास्यास्ततो द्रुतं ॥ मामाहूय महासत्या । संक्षेपेण प्रजल्पितं ॥ ॥ २२ ॥ नाथ धात्री समानेया । कालक्षेपो न संगतः ॥ स्तनं पिबति येनायं । भवदीयस्तनंधयः ॥ २३ ॥ मयापि च समानीता । कृतार्थाऽऽन्मइहासती ॥ ततः संजाततोषेण । निर्मलामलमौक्तिकैः

॥ २४ ॥ अष्टादशसरो हार—स्त्वत्कृते कारितो मया ॥ समर्पितो महासत्या । न चासौ प्रतिपद्यते
॥ २५ ॥ युग्मं ॥ हारः पुरुषनामायं । कथं मे लगिता गले ॥ अन्योऽपि पुरुषाह्वो यो—ऽलंका-
रस्तिलकादिकः ॥ २६ ॥ सोऽपि नाथ न दातव्यो । तेन मे न प्रयोजनं ॥ तदन्यः कोऽपि यो
लोके । नरनामा नरोऽपि वा ॥ २७ ॥ नासौ मे लगिता देहे । नाथायं मम निश्चयः ॥ तन्मया
चिंतितं चित्ते । तद्गुणाक्षिप्तचेतसा ॥ २८ ॥ श्रूयंते हि महासत्यः । सीताद्या जगतीतले ॥ एषा
हि सर्वनारीणां । शीलेन धुरि धार्यते ॥ २९ ॥ मुग्धगृहे समायाता । ब्राह्मणा दक्षिणार्थिनः ॥
पादान्न क्षालयत्येषा । दूरस्थैवावतिष्ठते ॥ ३० ॥ ब्रूते च ब्राह्मणा यूयं । मया तु नियमः कृतः ॥
धर्मार्थमपि नान्यस्य । नरस्यांगं स्पृशाम्यहं ॥ ३१ ॥ श्वश्रूगुणानतिक्रम्य । सद्गुणैरुपरि स्थिता ॥
तैरूचे च चिरं जीव । यथार्था त्वं महासती ॥ ३२ ॥ एकदा भणितो भ्राता । भगिन्या हितका-
म्यया ॥ वत्स मध्यं न जानासि । गृहचारो न सुंदरः ॥ ३३ ॥ प्रजल्पंती मया दृष्टा । नर्मगर्भ
प्रिया तव ॥ सार्धं च गृहदासेन । भ्रूप्रक्षेपसंज्ञया ॥ ३४ ॥ न चैतत्सुंदरं वत्स । परिणामोऽप्यसुं-
दरः ॥ पुत्रोऽपि दाससंजात—स्त्वं पिता नाममात्रतः ॥ ३५ ॥ विश्रंभो हि न कर्तव्यः । शुद्धा-

नामपि योषितां ॥ शुद्धा दीपशिखा वत्स । मलिनीकुरुते गृहं ॥ ३६ ॥ ननांद्रुर्भाषितं श्रुत्वा । महासती च शंकिता ॥ प्रोक्तं मच्चरितं सर्वं । पत्युश्च पापयानया ॥ ३७ ॥ एकांते सह दासेन । रजन्यां मंत्रितं तया ॥ स्वामी ते गोकुले गंता । सहायस्त्वं द्वितीयकः ॥ ३८ ॥ गच्छंतं विजनं ज्ञात्वा । ह्यागच्छंतं तथैव च ॥ रजन्यां वा दिवा वापि । जीविताद्व्यपरोपयेः ॥ ३९ ॥ प्रतिपन्नमनेनापि । मुग्धोऽसौ गोकुले गतः ॥ लब्ध्वा छिद्रशतं चापि । न तेन व्यपरोपितः ॥ ४० ॥ पुरस्वामी गृहस्वामी । द्रष्टव्यः पितृसन्निभः ॥ प्रछन्नं वा प्रकाशं वा । न युक्तो मम मारितुं ॥ ४१ ॥ रक्ता मत्ताश्च जल्पंति । यत्किंचन हतस्त्रियः ॥ श्रोतव्यमेव तद्वाक्यं । न कर्तव्यं मनीषिणा ॥ ४२ ॥ एवं चिंतयता तेन । लब्ध्वा छिद्रशतान्यपि ॥ नैव व्यापादितो मुग्धः । क्षेमेण गृहमागतः ॥४३॥ अन्यदा भोजने चूर्णं । प्रक्षिप्तं पापयानया ॥ क्षीयंते तेन सर्वाण्य—प्यंगोपांगानि मेऽनिशं ॥ ॥ ४४ ॥ धातवो गलिताः सर्वे । कीकसानि शरीरके ॥ केवलानि विलोक्यंते । मुखे विस्फारिताक्षिणी ॥ ४५ ॥ हस्तपादादिकं सर्वं । संवाहयितुमक्षमः ॥ मुखाद्वागतिकष्टेन । मंदं मंदं प्रवर्तते ॥ ॥ ४६ ॥ भगिनी प्रांगणे सुप्ता । ततः संगुप्तपादया ॥ महासत्या समागत्य । घंटिका मम टालिता

॥ ४७ ॥ महावेदनया ग्रस्त—श्चार्तध्यानपरायणः ॥ मृत्वा सोऽहं शुको जातो—ऽटव्यां च वटको-
टरे ॥ ४८ ॥ ततो रोदितुमारब्धा । वक्षस्ताडनपूर्वकं ॥ हा हता मंदपुण्याहं । विधिनापहृतो प्रियः
॥ ४९ ॥ हाहा विधे त्वया नून—मेतदसंगतं कृतं ॥ यदि प्रियस्त्वया नीतो । धृताहं कस्य हेतवे
॥ ५० ॥ भगिन्या भणिता पापे । हाहा कपटकारिणि ॥ यत्त्वया विहितं किंचि—त्तत्तवैवापतत्
खलु ॥ ५१ ॥ शरीरमग्निसात्कृत्वा । वितीर्य च जलांजलिं ॥ स्वजनान्यजनाः सर्वे । स्वस्वस्थानमु-
पागताः ॥ ५२ ॥ दासदाससुतौ जातौ । मंदिरे मम नायकौ ॥ अर्धचंद्रं गले दत्वा । भगिनी मे
बहिष्कृता ॥ ५३ ॥ ये निजास्ते परे जाताः । परे च गृहनायकाः ॥ अहो संसारवैरस्यं । नटपे-
टकसन्निभं ॥ ५४ ॥ पक्षौ ममापि संजातौ । सर्वलोकमनोहरौ ॥ उड्डीयोड्डीय गच्छामि । वनाराम-
नगादिषु ॥ ५५ ॥ अन्यदा लुब्धकैकेन । पातितो निजपाशके ॥ वसंतसुंदरे ग्रामे । नीतोऽहं
धनकांक्षया ॥ ५६ ॥ गृहीतो दासपुत्रेण । कारितं वरपंजरं ॥ ददाति भोजनं नित्यं । शालिसिक्थ-
फलादिकं ॥ ५७ ॥ स्वगृहं गृहदासं च । दासपुत्रं महासतीं ॥ विलोक्य मे समुत्पन्नं । जातिस्म-
रणमात्मनः ॥ ५८ ॥ श्यामवक्त्रा निरानंदा । कोपकंपितकंधरा ॥ मां दृष्ट्वा तत्क्षणादेव । संजातेयं

महासती ॥ ५९ ॥ गतत्राणो निरालंबो । निरुद्धेंद्रियपंचकः ॥ दिनानि कति तत्राहं । महामुनि·
रिव स्थितः ॥ ६० ॥

अन्यदा तु समाकृष्य । पंजराद्भीतशंकया ॥ मारितोऽहं महाराज । मोटयित्वा कृकाटिकां ॥
॥ ६१ ॥ भूयोऽपि च शुको जातो । जातौ पक्षौ मनोहरौ ॥ वनेषु वनखंडेषु । स्वेच्छया विचरन्न·
हं ॥ ६२ ॥ जालिकेन स्वजालेन । गृहीत्वा तव ढौकितः ॥ त्वयापि पुत्रवद् दृष्टः । पाठितश्च य·
थोचितं ॥ ६३ ॥ युग्मं ॥ काव्यशास्त्रविनोदेन । नीतः कालः कियानपि ॥ अद्य त्वेषा मया दृ·
ष्टा । पातकिनी महासती ॥ ६४ ॥ तेनाहं मूर्छितो राजन् । भयसंभ्रांतमानसः ॥ क्षणं च न मया
ज्ञातं । मृतेनेव सुखासुखं ॥ ६५ ॥ नानादोषौघकारिण्यः । सत्यशौचबहिष्कृताः ॥ सुप्तैः स्वप्नेऽपि
राजेंद्र । न दृष्टाः सुखदाः स्त्रियः ॥ ६६ ॥ इदं नेत्रपथे वृत्त—मिदं शास्त्रे मया श्रुतं ॥ अस्ति
चंपापुरीनाम । पुरी शक्रपुरीसमा ॥ ६७ ॥ तन्निवासी सतां श्लाघ्यो । धर्मकर्मविचक्षणः ॥ काष्टश्रे·
ष्ठीति विख्यातः । समस्तजगतीतले ॥ ६८ ॥ मनःप्रिया प्रिया तस्य । वज्रेति कृतनामिका ॥ भुं·
जानस्य तया सार्धं । कामभोगान् मनोहरान् ॥ ६९ ॥ वज्रायाश्च सुतो जातः । पूर्णपुण्यनिकेतनं

॥ समये प्रतिष्टितं नाम । पुण्यसारो यथार्थकं ॥ ७० ॥ युग्मं ॥ पुण्यसारसमस्तस्य । कुर्कुटो वसति गृहे ॥ पंजरस्थे प्रिये तस्य । वसतः शुकसारिके ॥ ७१ ॥ अन्यदा भणिता तेन । भार्या कोमलया गिरा ॥ प्रिये देशांतरे यामि । ह्यर्थोपार्जनहेतवे ॥ ७२ ॥ अर्थहीनः पुमान् लोके । तृणादपि लघूयते ॥ अर्थोऽयं सर्वसौख्यानां । गौरवस्य च कारणं ॥ ७३ ॥ यतः—अर्थयुक्तः कुरूपोऽपि । नलकूबरतायते ॥ जल्पन्नपि कठोराणि । ह्यर्थवानमृतायते ॥ ७४ ॥ यस्यार्थास्तस्य मित्राणि । यस्यार्थास्तस्य बांधवाः ॥ यस्यार्थः स पुमान् लोके । यस्यार्थः स च पंडितः ॥ ७५ ॥ गृहचिंता त्वया कार्या । वार्या दुर्जनसंगतिः ॥ शरीरस्थं सदा धार्यं । शीलाभरणभूषणं ॥ ७६ ॥ शुकश्च सारिका चैषा । कुर्कुटोऽपि प्रबोधकृत् ॥ पुण्यसारसमं ज्ञेय—मेतत् त्रिकमपि त्वया ॥ ७७ ॥ स्वीकृतमनया सर्वं । श्रेष्टी तुष्टः स्वमानसे ॥ सामग्रीं कर्तुमारब्ध । उदारस्थिरमानसः ॥ ७८ ॥ गृह्यंते वरभांडानि । निरूप्यंते सहायकाः ॥ बलानि विधीयंते । दम्यंते सुरभीसुताः ॥ ७९ ॥ एवं समस्तसामग्रीं । विधाय विधिना ततः ॥ प्रशस्ते तिथिनक्षत्रे । दध्यादिकृतमंगलः ॥ ८० ॥ प्राचीं दिशं समाश्रित्य । ससारासौ शनैः शनैः ॥ बलीबर्दादिसार्थेन । स्थलेन सुखवर्त्मना ॥ ८१ ॥

युग्मं ॥ देवशर्मद्विजोऽप्येति । प्रत्यहं श्रेष्ठिमंदिरे ॥ पुष्पाण्यादाय निःशंको । देवपूजनहेतवे ॥
॥ ८२ ॥ मिथो जल्पेन हास्येन । नर्मणा दानकर्मणा ॥ वज्रायां मानसं तेन । द्विजेन स्ववशी-
कृतं ॥ ८३ ॥ क्वचिद्भुंक्ते क्वचिच्छेते । तत्रैव विगतत्रपः ॥ सारिका च शुकं वक्ति । निःस्पृहा क-
र्कशं वचः ॥ ८४ ॥ शुक त्वं पाठितो बाढं । स्वस्वामिगृहरक्षकः ॥ स्वामिभक्तो विनीतश्च । कृत-
ज्ञः प्रभुभक्तिमान् ॥ ८५ ॥ शालिसिक्थानि साराणि । दाडिमीबीजपुंजकं ॥ तातेन ते स्वहस्ते-
न । दत्तं तदपि विस्मृतं ॥ ८६ ॥ तुंभिक त्वं कृतघ्नोऽसि । ह्यदृष्टव्योऽसि सर्वदा ॥ नोपकारो धृत-
श्चित्ते । तातस्यापि न लज्जितं ॥ ८७ ॥ अहो पंचदिनाः प्राणाः । प्रियास्तेन यशः स्थिरं ॥ एवं
निर्भर्त्स्यमानोऽपि । तया कर्कशया गिरा ॥ ८८ ॥ शुकश्च समयापेक्षी । कष्टमौनेन तिष्ठति ॥ न
नारीवत्पुमांसस्तु । ह्यनालोचितकारिणः ॥ ८९ ॥ युग्मं ॥ प्रविशंतं समालोक्य । द्विजं पश्चिमव-
र्त्मना ॥ जजल्प सारिका रुष्टा । साक्षेपमीदृशं वचः ॥ ९० ॥ रे रे दासीसुतः कोऽय—मकर्तव्य-
विधायकः ॥ अपद्वारेण तातस्य । गृहमागंतुमिच्छति ॥ ९१ ॥ रुष्टेन देवशर्मणा । जल्पितं वज्रया
सह ॥ प्रिये शृणोसि वाक्यानि । सारिका यानि जल्पति ॥ ९२ ॥ सुखं दुःखायते नूनं । जवि-

ता च विम्बना ॥ पंजरस्था यतश्चैषा । वर्धते विषकंदली ॥ ९३ ॥ शुकेन स श्रुतो जल्प । स्त्रा-
स्मरक्षां प्रकुर्वता ॥ उच्चैःकारं वचस्तेन । बृहच्छब्देन जल्पितं ॥ ९४ ॥ सारिके त्वं न जानासि ।
स्त्रीणां पाष्णिकयोर्मतिः ॥ स एव हि पिता मह्यं । यो मातुर्मम वल्लभः ॥ ९५ ॥ तत श्रुत्वा रं-
जितो विप्रो । वज्रा प्रहसिता हृदि ॥ सारिकाया मनः क्रूरं । सानुकूलं शुकस्य च ॥ ९६ ॥ गता
रात्रिर्दिनं जातं । देवशर्मा गतो गृहे ॥ पंजरात्सा समाकृष्टा । सारिका पापवज्रया ॥ ९७ ॥ रसं-
ती विरसं शश्व—त्तारं तरललोचना ॥ मारिता दुःखमारेण । मोटयित्वा कृकाटिकां ॥ ९८ ॥ यु-
ग्मं ॥ भिक्षार्थं तद्गृहे प्राप्तः । साधुसंघाटकोऽन्यदा ॥ तयोर्भणितमेकेन । निरीक्ष्य गृहकुर्कुटं ॥
॥ ९९ ॥ राजा पृथ्वीपतिर्भावी । भोक्ते योऽस्य मंजरीं ॥ श्रुतमेतद्गृहस्यांतः—स्थितेन ब्रह्मक-
र्मणा ॥ १०० ॥ प्रदानं वा निदानं वा । यदा कोऽपि न यच्छति ॥ स्वत एव ततः साधू । निर्गतौ
मंदिरात्ततः ॥ १ ॥ वज्रा वज्रोपमं वाक्यं । प्रोक्ता तेन द्विजातिना ॥ गृहकुर्कुटमांसेन । भोक्तव्य-
मद्य मे प्रिये ॥ २ ॥ पुण्यसारसमानोऽयं । कुर्कुटो मम वर्तते ॥ अन्यकुर्कुटमांसेन । भोजनं तव
दीयते ॥ ३ ॥ प्रतिपन्नं न चैतेन । तया सोऽपि निपातितः ॥ ततो राध्धुं समारब्धा । पुत्रोऽपि गृ-

मातर्मे भोजनं देहि । पाठको मां हनिष्यति ॥ उपविष्टस्तया दत्ता । सैव कुक्कु·
हमागतः ॥ ४ ॥ मातर्मे भोजनं देहि । पाठको मां हनिष्यति ॥ उपविष्टस्तया दत्ता । सैव कुक्कु·

टमंजरी ॥ ५ ॥ लेखशालां गतः पुत्रो । जारश्च गृहमागतः ॥ निविष्टो भोजनं कर्तुं । पिशितं प·
रिवेशितं ॥ ६ ॥ न दृष्टा मंजरी तेन । वज्रा पृष्टा क्व मंजरी ॥ तयोक्तं पुण्यसारेण । भक्षिता सा
न विद्यते ॥ ७ ॥ भणितं मे तया कार्यं । किमेतत्पिशितेन मे ॥ पुत्रोदरं विपाट्याशु । मंजरी
मम दीयतां ॥ ८ ॥ प्रतिपन्नं तया धात्री । धावित्वा पुरतो गता ॥ पुण्यसारं समादाय । नष्टा दे·
शांतरे गता ॥ ९ ॥ निशाकरपुरे तत्र । निस्संतानो नृपो मृतः ॥ दिव्यैश्च पुण्यसारोऽयं । प्रपन्नो·
ऽजनि भूपतिः ॥ १० ॥

इतश्चेतश्च सर्वत्र । पुण्यसारो गवेषितः ॥ वज्रया न पुनर्दृष्टो । जाता वज्रसमाहता ॥ ११ ॥
देवशर्मद्विजेनोक्ता । किं दृष्टो निजपुत्रकः ॥ तयोक्तं न मया दृष्ट—स्तेनोक्तं नाशितस्त्वया ॥
॥ १२ ॥ परित्यक्तो द्विजेनापि । तया सह समागमः ॥ शुशोचासौ विशेषेण । दुःखव्रातसमाहता
॥ १३ ॥ न पतिर्न च पुत्रो मे । जारोऽपि च पराङ्मुखः ॥ इहैव विधिना दत्तो । विपाकः पाप·
कर्मणां ॥ १४ ॥ दग्धं गृहं जातं । गृहाचारः क्षयं गतः ॥ शिष्टैः समागमो मुक्तो । भृत्यैश्च भे·

जिरे दिशः ॥ १५ ॥ काष्टश्रेष्टी समायातो । गृहाचारदिदृक्षया ॥ दृष्टं निजगृहं तेन । शून्यं स्म-
शानसन्निभं ॥ १६ ॥ विस्मयापन्नचित्तेन । भणितः श्रेष्ठिना शुकः ॥ पुण्यसारस्तव भ्राता । किमर्थं
नेह दृश्यते ॥ १७ ॥ कुर्कुटः केन कार्येण । पर्यटन्नावलोक्यते ॥ पंजरं शून्यमाधाय । क्व गता सा-
रिका वद ॥ १८ ॥ शुकोऽपि मौनमाधाय । स्थितो नैव प्रजल्पति ॥ रुष्टेन श्रेष्ठिना प्रोचे । साक्षेपं
कर्कशं वचः ॥ १९ ॥ पालितो लालितो नित्यं । भोजितो भव्यभोजनं ॥ रेरे कीर परो जातो ।
वार्तामात्रेऽपि संशयः ॥ २० ॥ अश्रूणि मुंचता तेन । शुकेनेदं बभाषिरे ॥ त्वं तात न विजाना-
सि । तर्जयंतीं पुनः पुनः ॥ २१ ॥ वस्त्रं निःपीलयंतीं च । स्थगयंतीं मुखं मुहुः ॥ स्वभार्यां विहि-
ताकार्यां । वज्रां वज्रसमप्रभां ॥ २२ ॥ युग्मं ॥ मुंच मां पंजराद्येन । सर्वं वच्मि परिस्फुटं ॥ मो-
चितः कथितं तेन । मूलतो गृहचेष्टितं ॥ २३ ॥ वज्रा मूलमनर्थानां । संक्षेपादिति भाव्यतां ॥
चित्ते खेदो न कर्तव्यो । ज्ञाततत्वेन धीमता ॥ २४ ॥ स्त्रियो हि सर्वदोषाणां । मूलमाहुर्मनीषि-
णः ॥ यदेताश्च प्रकुर्वंति । कथितुं तन्न पार्यते ॥ २५ ॥ यतः—हंसेण समं रमिऊण । कमलि-
णी रमइ महुयरेणावि ॥ सियकसिणनिव्विसेसाइं । हुंति महिलाण हिययाइं ॥ २६ ॥ जेणं वि-

माहिलाण मणं बहुकूड—कवडभरियं दुरव-
णिम्मिया ज । विहिणा सो चेव जइ परं मुणइ ॥ तन्नास्ति यन्न कुर्वंति । स्त्रियः कोप·
गाहं ॥ २७ ॥ रक्षणीयस्त्वया तात । सदाप्यात्मा प्रयत्नतः ॥ सांप्रतं च वनं यामि ।
वशं गताः ॥ २८ ॥ तातात्मा विधृतः कष्टा—न्मया वार्ता निवेदिता ॥ भूयोऽपि दर्शनं ङु-
ङुःखदग्धस्तवाज्ञया ॥ २९ ॥ श्रेष्ठिना जणितं वत्स । गच्छ स्थानं समीहितं ॥ यस्यैषा को·
या—देवमुक्त्वा गतः शुकः ॥ ३० ॥ तिर्यग्योनौ विजातोऽपि । वरमेषो विहंगमः ॥ सर्वसंगं
मला वाणी । विवेकश्च सुनिर्मलः ॥ ३१ ॥ कृतं मे गृहवासेन । विचारेणापि मे कृतं ॥ राजा दृष्टश्च
परित्यज्य । जिनधर्मं करोम्यहं ॥ ३२ ॥ द्वारि सार्थः समायात—स्तत्रैवावासितश्चिरं ॥ सप्तक्षेत्र्यां धनं द·
पृष्टश्च । व्रतं देव करोम्यहं ॥ ३३ ॥ अष्टाह्निकामहं कृत्वा । महामहपुरस्सरं ॥ विजहार म·
त्वा । निश्चक्राम गृहादसौ ॥ ३४ ॥ सुस्थिताचार्यपादांते । दीक्षां जग्राह निर्मलां ॥ राजगृहीतस·
हीपीठे । पठन्नंगादिकं श्रुतं ॥ ३५ ॥ पतिपुत्रपरित्यक्ता । निस्सारा शीलवर्जिता ॥ निशाकरपुरे प्राप्ता
वेश्या । पुरादपि बहिष्कृता ॥ ३६ ॥ वज्रा वज्राहतेवोच्चैः । पर्यटंती महीतले ॥ गुर्वाज्ञ
। यत्राजन्यंगजो नृपः ॥ ३७ ॥ युग्मं ॥ यातः काष्ठानगारोऽपि । गीतार्थः श्रुतनिर्मलः ॥

याथ कार्येण । निशाकरपुरे गतः ॥ ३८ ॥ षष्टपारणके काष्टो । भिक्षामटन् गृहे गृहे ॥ कथंचि-
द्भावियोगेन । वज्राया गृहमागतः ॥ ३९ ॥ मध्यस्थया तया दृष्टो । दूनिता निजमानसे ॥ मार-
यामि ह्युपायेन । केनाप्येवं ततः सुखं ॥ ४० ॥ भिक्षाभोजनमध्यस्थं । निजाभरणमेतया ॥ कृत्वा
च क्रूरचित्तेन । दास्या हस्तेन दापितं ॥ ४१ ॥ नातिदूरं गते तस्मिन् । कोलाहलः कृतोऽनया ॥
शस्त्रव्यग्रकरास्तूर्ण—माजग्मुर्दंमपाशिकाः ॥ ४२ ॥ तैरूचे किं निमित्तोऽयं । भद्रे रोलो विधीयते
॥ संकल्प्य च तयाभाणि । तेषामुत्तरमीदृशं ॥ ४३ ॥ भूषणानि बहिर्मुक्त्वा । प्रविष्टाहं गृहांतरे ॥
भिक्षार्थं निर्गता याव—त्तावच्छून्यः करंमकः ॥ ४४ ॥ यात यात द्रुतं तात । यावद्दूरं न गच्छ-
ति ॥ धावितास्ते निरुद्धोऽसौ । भिक्षामध्ये निरूपितं ॥ ४५ ॥ भूषणं विस्मितो लोको—ऽप्यहो
वेषविडंबना ॥ तलवरेण साश्चर्यं । नरेंद्राय निवेदितं ॥४६॥ युग्मं ॥ साधुवेषधरः कोऽपि । पाखं-
डी श्वेतवस्त्रभृत् ॥ लोप्त्रहस्तो मया लब्धः । को दंडस्तस्य कथ्यतां ॥ ४७ ॥ व्रतं च तस्करत्वं च ।
विरुद्धमिव लक्ष्यते ॥ आनीय दर्शयास्माकं । येन दंडं करोम्यहं ॥ ४८ ॥ काष्टः कृतमहाकष्टः ।
सर्वसत्त्वहितावहः ॥ तलारेण समानीतः । सर्वतो जनवेष्टितः ॥ ४९ ॥ दर्शनादेव विज्ञातो । धा-

त्र्या काष्टमहामुनिः ॥ प्रधाविता च वेगेन । संभ्रमभ्रांतलोचना ॥ ५० ॥ पादग्राहं विधायासौ । रुदिता दुःखदुःखिता ॥ पृष्टा सा च नरेंद्रेण । धात्री रोदनकारणं ॥ ५१ ॥ तयापि कथितं सर्वं । यावदेष पिता तव ॥ तत् श्रुत्वा लज्जितो राजा । स्थितोऽधोमुखदृष्टिकः ॥ ५२ ॥ धात्र्याभाणि महाभाग । विश्वविश्वहितावह ॥ कथं ते व्यसनं जातं । मुनिराह न वेद्म्यहं ॥ ५३ ॥ अजानितमिदं जात—मचिंतितमतर्कितं ॥ पूर्वजन्मकृतस्याय—मुदयः कर्मणां मम ॥ ५४ ॥ अत्रांतरे समायाता । वज्रादासी मनःप्रिया ॥ ज्ञातवृत्तांतया सर्वं । तया राज्ञे निवेदितं ॥ ५५ ॥ भृत्यैरानायिता वज्रा । दृष्टा धात्री सुतो नृपः ॥ भर्ता च लोकमध्यस्थः । कूटदूषणदूषितः ॥ ५६ ॥ अलमत्र विचारेण । ह्यात्मलाघवकारिणा ॥ वज्रा विसर्ज्यते दूरं । तातश्चात्रैव धार्यते ॥ ५७ ॥ माता विसर्जिता दूरं । दत्वा संवलमात्रकं ॥ स्थितस्तत्रानगारोऽसौ । काष्टः कष्टकृदग्रिमः ॥ ५८ ॥ पुण्यसारनृपो नित्य—मप्रमादी जनान्वितः ॥ वंदनार्थं समभ्येति । शृणोति च जिनोदितं ॥ ५९ ॥ धर्मं जीवदयासारं । सर्वसत्वहितावहं ॥ स्वर्गापवर्गसंसर्ग—साधकं पापबाधकं ॥ ६० ॥ युग्मं ॥ स्वल्पैरेव दिनै राजा । संजातो धर्मकोविदः ॥ जनोऽपि जैनधर्मस्य । कारको बहुशोऽभवत् ॥६१॥

संजातमत्सरैर्विप्रै—रथान्योन्यं च मंत्रितं ॥ तपसा वचसा लोकः । सर्वोऽपि श्रावकीकृतः ॥ ६२ ॥
तदस्य गच्छतो बाढं । गयाभ्रंशं प्रकुर्महे ॥ येन भूयोऽपि लोकोऽयं । स्वं स्वं धर्मं प्रपद्यते ॥ ६३ ॥
इत्यालोच्य स्थिता विप्रा । मत्सरच्छन्नबुद्धयः ॥ नास्ति कृत्यमकृत्यं वा । पापोपहतचेतसां ॥ ६४ ॥
व्यतीते चाथ वर्षर्त्तौ । प्राणिनां जीवितप्रदे ॥ शरत्कालः समायातो । मलिनत्वापनोदकृत् ॥ ६४ ॥
दिग्याताभिमुखा यत्र । भूपाः पंकविवर्जिताः ॥ पंथानः पक्वशस्याकाः । सश्रीका ग्रामभूमयः ॥६५॥
मुमुदिरे बलीवर्दा । ननंदुः सितपक्षिणः ॥ प्रम्लानं कोकिलैर्यत्र । रेजुर्नक्षत्रराजयः ॥ ६६ ॥ मु-
नय इव मार्गस्थाः । सरितः शालिमंजरी ॥ गदितांगा कुलस्त्रीव । गंधघ्राणमनोहरा ॥ ६७ ॥
अधःकृतमलान्युच्चै—र्जनतापहराणि च ॥ स्वच्छानि यत्र तोयानि । मनांसीव महात्मनां ॥ ६८ ॥
निर्मलो रजनीनाथः । कासा यत्र चकासति ॥ विबुद्धजलजैर्यत्र । हसंतीव जलाशयाः ॥ ६९ ॥
व्यतीते कार्तिके मासे । सर्वलोकमनोहरे ॥ गुणस्थसर्वसाधूनां । विहारकरणोचिते ॥ ७० ॥ अ-
नुशिष्टिं सर्वलोकानां । दत्वा धर्मसमाश्रयां ॥ पुण्यसारं नृपं धर्मे । कृत्वा निश्चलमानसं ॥ ७१ ॥
चातुर्मासकमाधाय । निराहारो महामुनिः ॥ बहिर्विचरणाहेतोः । कार्तिक्यामेव निर्गतः ॥ ७२ ॥

त्रिभिर्विशेषकं ॥ गतानुगतिकाः केचि—त्केचिद्राजानुरोधतः ॥ गुणानुरागतः केचि—त्तं काष्टमनुवव्रजुः ॥ ७३ ॥

अत्रांतरे समायाता । काचिदव्यक्तलिंगिनी ॥ सन्निरुध्य मुनेर्मार्गं । स्थिता दुर्गतिगामिनी ॥ ७४ ॥ निराश्रयां तथा दीनां । सगर्भां बंधुवर्जितां ॥ न युक्तं नाथ गंतुं ते । मां मुक्त्वान्यत्र सांप्रतं ॥ ७५ ॥ अवश्यं यदि गंतव्यं । निर्वाहो मम चिंत्यतां ॥ दुःखिताहं यतो नाथ । गर्भोऽयं स्थापितस्त्वया ॥ ७६ ॥ साधुना भणितं भद्रे । न युक्तं वक्तुमीदृशं ॥ उक्तानि हि दुरुक्तानि । दुःखं ददति देहिनां ॥ ७७ ॥ असंबद्धं न वक्तव्यं । लोकद्वयविबाधकं ॥ सुलभो हि मृषावादो । दुर्लभं सत्यभाषणं ॥ ७८ ॥ साधवोऽपि यदि जातु । कुर्वतेऽलीकभाषणं ॥ तदास्मादृशलोकानां । मुद्रिता सत्यसंकथा ॥ ७९ ॥ अन्यस्त्रीणामिवास्यापि । जन्म योनेः प्रजायतां ॥ मदीयो यद्ययं गर्भो । मिथ्या चेदन्यथा तदा ॥ ८० ॥ विपाट्य जठरं सद्यो । गर्भो निपतितो भुवि ॥ सापि वेदनया ग्रस्ता । पश्चात्तापसमाहता ॥ ८१ ॥ यथावृत्तमवादीदं । भो भो शृण्वंतु नागराः ॥ कारिताहं द्विजैर्दत्वा । दीनारशतपंचकं ॥ ८२ ॥ मयापि पापकारिण्ये—हलोकप्रतिबद्धया ॥ परलोकं प-

रित्यज्य । कृतं पातकमीदृशं ॥ ८३ ॥ लोकः स्थिरतरो जातो । धर्मे सर्वज्ञभाषिते ॥ पुण्यसारनरें- डेण । ब्राह्मणा करदीकृताः ॥ ८४ ॥ गृहीता वेश्यया पुत्री । सा मृता दुर्गतिं गता ॥ काष्ठोऽपि विहृतोऽन्यत्र । प्रकाश्य जिनशासनं ॥ ८५ ॥ इति काष्ठकथानकं परिसमाप्तं. ॥

अन्यदपि महीनाथ । भण्यमानं निशम्यतां ॥ स्त्रीचरित्रं पुराणेषु । यदवाचि विचक्षणैः ॥ ॥ १ ॥ शुकः कथितुमारब्धो । राजा शुश्राव सादरं ॥ भव्यां श्रीधर्मराजस्य । लोचनानंददायि- नि ॥ २ ॥ अमरावतीव शक्रस्य । ह्यस्ति चंपापुरी पुरी ॥ निधानं सर्वसौख्याना—मास्पदं सर्वसं- पदां ॥ ३ ॥ विचारचतुरो राजा । विचारकुशला प्रिया ॥ विचारधवलः पुत्रो । विचारधवला सुता ॥ ४ ॥ तत्रैव नगरे श्रेष्ठी । धनो धनदसंनिभः ॥ बभूव गेहिनी तस्य । धारिका धर्मधारिका ॥ ॥ ५ ॥ अपारासारसंसार—वृक्षस्य फलसन्निभा ॥ संजाताविरतिर्नाम । दुहिता विषकंदली ॥ ६॥ सत्यशौचविनिर्मुक्ता । दुर्विनीता दुराशया ॥ अतिदुष्टसमाचारा । मातुरुद्वेगकारिणी ॥ ७ ॥ श्रम- णं ब्राह्मणं दृष्ट्वा । दूरतः सा पलायते ॥ पातकिनं नरं दृष्ट्वा । हृष्टा भवति मानसे ॥ ८ ॥ न यु- क्तं दूषणं वक्तुं । सतां सदपि सर्वदा ॥ परं श्रुतानुवादोऽयं । न तेन दोषहेतवे ॥ ९ ॥ कौमार्ये-

क्क गतास्तव मोदकाः ॥ येन दास्या घटो दृष्टो । मोदका नावलोकिताः ॥ ३३ ॥ विचारचतुरो रा· जा । विचारकुशला प्रिया ॥ विचारधवलः पुत्रो । विचारधवला सुता ॥ ३४ ॥ विचारो यदि ना· त्रापि । तदा कुत्र भविष्यति ॥ सावेशमभिधायैवं । बंधवो मौनमाश्रिताः ॥ ३५ ॥ नगररक्षको राज्ञा । भणितो रक्तचक्षुषा ॥ अरे विनाशयोग्योऽयं । विप्रो मदनविग्रहः ॥ ३६ ॥ तेनापि च करे कृत्वा । नीतः श्मशानसन्निधौ ॥ वटे विशालशाखायां । गले बध्ध्वावलंबितः ॥ ३७ ॥ सापि धारिकया प्रोक्ता । सोपालंभं पुनः पुनः ॥ गछ वत्से न युक्तं ते । स्वभर्तुरपमाननं ॥ ३८ ॥ सा· पीदं वचनं श्रुत्वा । कृत्वा च भृकुटिं मुखे ॥ प्राह याम्युपरोधेन । संप्राप्ता भर्तुरंतिके ॥ ३९ ॥ त· स्याप्यनुकूलस्यैषा । प्रतिकूलविधायिनी ॥ सोऽपि सुप्तोऽवधीर्यैमां । निद्रया सह निस्पृहः ॥ ४० ॥ सद्भावस्नेहसंपूर्णे । रक्ते रागोऽपि संगतः ॥ विरक्ते च पुना रागः । सेयं पूर्णा विडंबना ॥ ४१ ॥ इतश्चेतश्च निक्षिप्त—लोचनैषा विलोकिता ॥ तस्करेण ततस्तेन । निलीय निभृतं स्थितं ॥ ४२ ॥ चंदनागुरुकर्पूर—पुष्पतांबूलपूरितं ॥ पटलं जलपात्रं च । करे कृत्वा विनिर्गता ॥ ४३ ॥ चौरका· त्रेण ते नैषा । चलिता सत्वरैः पदैः ॥ चौरोऽपि पृष्टतो लग्नो । दूरस्थो यात्यनाकुलः ॥ ४४ ॥ सा

पि वेगेन संप्राप्ता । स्मशानेऽशिवसंकुले ॥ ज्वलज्ज्वालाकुले रौद्रे । भीरुसंत्रासकारिणि ॥ ४५ ॥
इतस्ततः परिभ्रम्य । वटशाखावलंबितः ॥ दृष्टः सोऽप्यनयाभीष्टो । मुक्तः प्राणैरधोमुखः ॥ ४६ ॥
कक्षाबंधं विधायैषा । गृहीत्वा ज्वलदुल्मुकं ॥ वटशाखां समारुह्य । धृत्वा रज्जुमुपायतः ॥ ४७ ॥
क्षिप्तो ह्यसौ महीपीठे । समुत्तीर्णा ततः स्वयं ॥ स्नपितो वारिणा तेन । विलिप्तश्चंदनेन च ॥४८॥
युग्मं ॥ बद्धानि दिव्यपुष्पाणि । मस्तके मल्लग्रंथिना ॥ कर्पूरपूरसन्मिश्री—कृत्य तांबूलबीटकं ॥
॥ ४९ ॥ प्रक्षिप्य स्वे मुखे पश्चा—द्विधाय चार्धचर्वितं ॥ स्वमुखेन मुखे तस्य । क्षिपत्यधरधाव-
नं ॥ ५० ॥ करोति गाढमालिंग्य । शेते तेन समं क्षणं ॥ वेतालश्चिंतयामास । किमिदं क्रिय-
तेऽनया ॥ ५१ ॥ निशीथे प्रेतसंकीर्णे । घूकघूत्कारभीषणे ॥ निंदनीयेऽतिबीभत्से । जीवमुक्तक-
लेवरे ॥ ५२ ॥ चतुर्भिः कलापकं ॥ अहो दृष्टा मया नार्यो । ह्यकार्यकरणोद्यताः ॥ परमेतादृशी
पापा । न श्रुता नावलोकिता ॥ ५३ ॥ करोमि शिक्षणामस्याः । प्रविश्यास्मिन् कलेवरे ॥ वेताले-
नेति संचिंत्य । ततश्चाधरधावनं ॥ ५४ ॥ कुर्वंत्याः खंडितो मूला—दधरश्चापि नाशिका ॥ कर्णौ
विकीर्णतां नीतौ । हहाहसनपूर्वकं ॥ ५५ ॥ युग्मं ॥ वेतालो वटमारूढ—स्ततः सापि तथाविधा

ऽपि कुशीलत्वा—द्दलितं शीलमेतया ॥ दीयमाना न केनापि । गृहीता कुलसूनुना ॥ १० ॥ ततः समानजातीयो । निर्धनो रोरनंदनः ॥ पित्रा बहुधनं दत्वा । गृहजामातृकः कृतः ॥ ११ ॥ परिणीतैव ते नैषा । न पुनर्वशवर्तिनी ॥ स्वछंदचारिणी जाता । भर्तुश्च दुःखदायिनी ॥ १२ ॥ त्यक्तकुलक्रमाचारा । स्वैरिणी विटसंगता ॥ सत्यशौचबहिर्भूता । निर्मर्यादा निरर्गला ॥ १३ ॥ जानन्नपि न जानाति । पश्यन्नपि न पश्यति ॥ कथितोऽपि करोत्येव । पिता गजनिमीलिकां ॥ १४ ॥ सापि सक्तान्यदा विप्र—पुत्रे मदनविग्रहे ॥ अत्यंतरक्ता सा तत्र । विश्वं पश्यति तन्मयं ॥ १५ ॥

अन्यदा नक्तमानीता । ते नैषा निजमंदिरे ॥ सुप्ता तत्रैव निःशंका । यावज्जातो दिवाकरः ॥ १६ ॥ दृष्टैषा विप्रगेहिन्या । निजतल्पगता सती ॥ गृहीता चाग्रकेशेषु । तयैषा ह्यनया च सा ॥ १७ ॥ कृतरोलं महाघोरं । दुष्टं दुर्वचनाश्रयं ॥ कृतहासं च लोकानां । जातमायोधनं तयोः ॥ १८ ॥ हेलया मिलितो लोको । मुष्टो मदनविग्रहः ॥ गृहीतं गृहसारं च । मुक्तैषा श्रेष्ठिलज्जया ॥ १९ ॥ अन्येद्युर्जल्पितो विप्रो । यद्यहं तव वल्लभा ॥ तदैषा वैरिणी पापा । हंतव्या निजगेहिनी ॥ २० ॥ प्रतिपन्नमनेनापि । छिद्रान्वेषणतत्परः ॥ नयत्यहानि संक्लिष्ट—चेता मदनविग्रहः

॥ २१ ॥ आरामादन्यदा तेन । घटे क्षिप्त्वा महोरगः ॥ आनीतः स्थापितश्चापि । गृहांतर्गतबु-
द्धिना ॥ २२ ॥ रजन्यां भणिता भार्या । घटेऽस्मिंश्च मया प्रिये ॥ मनोज्ञा मोदका मुक्ता—
स्तानानीय ममार्पय ॥ २३ ॥ गता सोद्घाटितं द्वारं । दष्टा सर्पेण दक्षिणे ॥ करे कृतमहाक्रंदा ।
पतिता विषविह्वला ॥ २४ ॥ मुक्ता च तत्क्षणं प्राणै—स्तेन लोकस्य साधितं ॥ दष्टा भुजंगमेनै-
षा । मृता संप्रति लक्ष्यते ॥ २५ ॥ नीता च बंधुवर्गेण । श्मशाने भस्मसात्कृता ॥ दास्याथ भ-
णितो विप्रः । क्व स्वामिंस्तव मोदकाः ॥ २६ ॥ शून्यो मया घटो दृष्टो । दष्टेयमहिना कथं ॥ ते-
नोक्तं किं विचारेण । नूनं भ्रांतिर्ममाभवत ॥ २७ ॥ दासीतो ज्ञातवृत्तांतै—र्बंधुभिः कृतनिश्चयैः
॥ प्रोक्तं नराधिपस्येदं । भार्या पत्या विनाशिता ॥ २८ ॥ भूपेन शब्दितो विप्रः । किं भार्या घा-
तिता त्वया ॥ स प्राह न मया किंतु । सर्पदष्टा हि सा मृता ॥ २९ ॥ बंधुभिर्भणितं सत्यं । वा-
च्यं विप्र न कृत्रिमं ॥ स प्राह शुद्धिराधेया । वचनं न हि केवलं ॥ ३० ॥ गृहदासी ततस्तस्य ।
समाहूता समागता ॥ तया तु कथितं सर्वं । यथा तेन कृतं तथा ॥ ३१ ॥ सगर्भस्त्रीविघातेन ।
पापमेकमुपार्जितं ॥ अलीकेन द्वितीयं च । पापः पापैर्न तुष्यति ॥ ३२ ॥ अरे यदि घटे मुक्ताः ।

क्व गतास्तव मोदकाः ॥ येन दास्या घटो दृष्टो । मोदका नावलोकिताः ॥ ३३ ॥ विचारचतुरो रा· जा । विचारकुशला प्रिया ॥ विचारधवलः पुत्रो । विचारधवला सुता ॥ ३४ ॥ विचारो यदि ना· त्रापि । तदा कुत्र भविष्यति ॥ सावेशमभिधायैवं । बंधवो मौनमाश्रिताः ॥ ३५ ॥ नगररक्षको राज्ञा । भणितो रक्तचक्षुषा ॥ अरे विनाशयोग्योऽयं । विप्रो मदनविग्रहः ॥ ३६ ॥ तेनापि च करे कृत्वा । नीतः श्मशानसन्निधौ ॥ वटे विशालशाखायां । गले बध्ध्वावलंबितः ॥ ३७ ॥ सापि धारिकया प्रोक्ता । सोपालंभं पुनः पुनः ॥ गच्छ वत्से न युक्तं ते । स्वभर्तुरपमाननं ॥ ३८ ॥ सा· पीदं वचनं श्रुत्वा । कृत्वा च भृकुटिं मुखे ॥ प्राह याम्युपरोधेन । संप्राप्ता भर्तुरंतिके ॥ ३९ ॥ त· स्याप्यनुकूलस्यैषा । प्रतिकूलविधायिनी ॥ सोऽपि सुप्तोऽवधीर्यैमां । निद्रया सह निस्पृहः ॥ ४० ॥ सद्भावस्नेहसंपूर्णे । रक्ते रागोऽपि संगतः ॥ विरक्ते च पुना रागः । सेयं पूर्णा विडंबना ॥ ४१ ॥ इतश्चेतश्च निक्षिप्त—लोचनैषा विलोकिता ॥ तस्करेण ततस्तेन । निलीय निभृतं स्थितं ॥ ४२ ॥ चंदनागुरुकर्पूर—पुष्पतांबूलपूरितं ॥ पटलं जलपात्रं च । करे कृत्वा विनिर्गता ॥ ४३ ॥ चौरका· ग्रेण ते नैषा । चलिता सत्वरैः पदैः ॥ चौरोऽपि पृष्ठतो लग्नो । दूरस्थो यात्यनाकुलः ॥ ४४ ॥ सा

पि वेगेन संप्राप्ता । स्मशानेऽशिवसंकुले ॥ ज्वलज्ज्वालाकुले रौद्रे । भीरुसंत्रासकारिणि ॥ ४५ ॥
इतस्ततः परिभ्रम्य । वटशाखावलंबितः ॥ दृष्टः सोऽप्यनयाभीष्टो । मुक्तः प्राणैरधोमुखः ॥ ४६ ॥
कक्षाबंधं विधायैषा । गृहीत्वा ज्वलदुल्मुकं ॥ वटशाखां समारुह्य । धृत्वा रज्जुमुपायतः ॥ ४७ ॥
क्षिप्तो ह्यसौ महीपीठे । समुत्तीर्णा ततः स्वयं ॥ स्नपितो वारिणा तेन । विलिप्तश्चंदनेन च ॥४८॥
युग्मं ॥ बद्धानि दिव्यपुष्पाणि । मस्तके मल्लग्रंथिना ॥ कर्पूरपूरसन्मिश्री—कृत्य तांबूलबीटकं ॥
॥ ४९ ॥ प्रक्षिप्य स्वे मुखे पश्चा—द्विधाय चार्धचर्वितं ॥ स्वमुखेन मुखे तस्य । क्षिपत्यधरधाव-
नं ॥ ५० ॥ करोति गाढमालिंग्य । शेते तेन समं क्षणं ॥ वेतालश्चिंतयामास । किमिदं क्रिय-
तेऽनया ॥ ५१ ॥ निशीथे प्रेतसंकीर्णे । घूकघूत्कारभीषणे ॥ निंदनीयेऽतिबीभत्से । जीवमुक्तक-
लेवरे ॥ ५२ ॥ चतुर्भिः कलापकं ॥ अहो दृष्टा मया नार्यो । ह्यकार्यकरणोद्यताः ॥ परमेतादृशी
पापा । न श्रुता नावलोकिता ॥ ५३ ॥ करोमि शिक्षणामस्याः । प्रविश्यास्मिन् कलेवरे ॥ वेताले-
नेति संचिंत्य । ततश्चाधरधावनं ॥ ५४ ॥ कुर्वत्याः खंडितो मूला—दधरश्चापि नाशिका ॥ कर्णौ
विकीर्णतां नीतौ । हहाहसनपूर्वकं ॥ ५५ ॥ युग्मं ॥ वेतालो वटमारूढ—स्ततः सापि तथाविधा

क्व गतास्तव मोदकाः ॥ येन दास्या घटो दृष्टो । मोदका नावलोकिताः ॥ ३३ ॥ विचारचतुरो राजा । विचारकुशला प्रिया ॥ विचारधवलः पुत्रो । विचारधवला सुता ॥ ३४ ॥ विचारो यदि नात्रापि । तदा कुत्र भविष्यति ॥ सावेशमभिधायैवं । बंधवो मौनमाश्रिताः ॥ ३५ ॥ नगररक्षको राज्ञा । भणितो रक्तचक्षुषा ॥ अरे विनाशयोग्योऽयं । विप्रो मदनविग्रहः ॥ ३६ ॥ तेनापि च करे कृत्वा । नीतः श्मशानसन्निधौ ॥ वटे विशालशालायां । गले बध्ध्वावलंबितः ॥ ३७ ॥ सापि धारिकया प्रोक्ता । सोपालंभं पुनः पुनः ॥ गच्छ वत्से न युक्तं ते । स्वभर्तुरपमाननं ॥ ३८ ॥ सापीदं वचनं श्रुत्वा । कृत्वा च भृकुटिं मुखे ॥ प्राह याम्युपरोधेन । संप्राप्ता भर्तुरंतिके ॥ ३९ ॥ तस्याप्यनुकूलस्यैषा । प्रतिकूलविधायिनी ॥ सोऽपि सुप्तोऽवधीर्येमां । निद्रया सह निस्पृहः ॥ ४० ॥ सद्भावस्नेहसंपूर्णे । रक्ते रागोऽपि संगतः ॥ विरक्ते च पुना रागः । सेयं पूर्णा विडंबना ॥ ४१ ॥ इतश्चेतश्च निक्षिप्त—लोचनैषा विलोकिता ॥ तस्करेण ततस्तेन । निलीय निभृतं स्थितं ॥ ४२ ॥ चंदनागुरुकर्पूर—पुष्पतांबूलपूरितं ॥ पटलं जलपात्रं च । करे कृत्वा विनिर्गता ॥ ४३ ॥ चौरकात्रेण तेनैषा । चलिता सत्वरैः पदैः ॥ चौरोऽपि पृष्ठतो लग्नो । दूरस्थो यात्यनाकुलः ॥ ४४ ॥ सा

पि वेगेन संप्राप्ता । स्मशानेऽशिवसंकुले ॥ ज्वलज्ज्वालाकुले रौद्रे । भीरुसंत्रासकारिणि ॥ ४५ ॥
इतस्ततः परिभ्रम्य । वटशाखावलंबितः ॥ दृष्टः सोऽप्यनयाभीष्टो । मुक्तः प्राणैरधोमुखः ॥ ४६ ॥
कक्षाबंधं विधायैषा । गृहीत्वा ज्वलदुल्मुकं ॥ वटशाखां समारुह्य । धृत्वा रज्जुमुपायतः ॥ ४७ ॥
क्षिप्तो ह्यसौ महीपीठे । समुत्तीर्णा ततः स्वयं ॥ स्नपितो वारिणा तेन । विलिप्तश्चंदनेन च ॥४८॥
युग्मं ॥ बद्धानि दिव्यपुष्पाणि । मस्तके मल्लग्रंथिना ॥ कर्पूरपूरसन्मिश्री—कृत्य तांबूलबीटकं ॥
॥ ४९ ॥ प्रक्षिप्य स्वे मुखे पश्चा—द्विधाय चार्धचर्वितं ॥ स्वमुखेन मुखे तस्य । क्षिपत्यधरधाव-
नं ॥ ५० ॥ करोति गाढमालिंग्य । शेते तेन समं क्षणं ॥ वेतालश्चिंतयामास । किमिदं क्रिय-
तेऽनया ॥ ५१ ॥ निशीथे प्रेतसंकीर्णे । घूकघूत्कारभीषणे ॥ निंदनीयेऽतिबीभत्से । जीवमुक्तक-
लेवरे ॥ ५२ ॥ चतुर्भिः कलापकं ॥ अहो दृष्टा मया नार्यो । ह्यकार्यकरणोद्यताः ॥ परमेतादृशी
पापा । न श्रुता नावलोकिता ॥ ५३ ॥ करोमि शिक्षणामस्याः । प्रविश्यास्मिन् कलेवरे ॥ वेताले-
नेति संचिंत्य । ततश्चाधरधावनं ॥ ५४ ॥ कुर्वंत्याः खंडितो मूला—दधरश्चापि नाशिका ॥ कर्णौ
विकीर्णतां नीतौ । हहाहसनपूर्वकं ॥ ५५ ॥ युग्मं ॥ वेतालो वटमारूढ—स्ततः सापि तथाविधा

॥ चलिता हट्टमार्गेण । तस्करोऽपि च पृष्टतः ॥ ५६॥ समायातः प्रविष्टश्च । तद्गृहे निश्चलः स्थितः ॥ पश्यामि तावदेतस्या । इदानीमपि चेष्टितं ॥ ५७ ॥ ततो रोदितुमारब्धा । कचाकर्षणपूर्वकं ॥ ससंभ्रमा समायाता । पूर्वं माता ततः पिता ॥ ५८ ॥ दृष्ट्वा तथाविधा पुत्री । पृष्टा वत्से किमीदृशं ॥ कष्टं व्यसनमापन्नं । तथा संकल्प्य जल्पितं ॥ ५९ ॥ कुलस्त्रीणामयोग्यं य—त्सदहं कर्म कारिता ॥ न कृतं तन्मया मात—स्तेनायं कुपितो मम ॥६०॥ पादप्रक्षालनासक्ता । वारिता तेन न स्थिता ॥ क्षुर्या तेन च पापेन । अहमेवं विडंबिता ॥ ६१ ॥ श्रेष्ठिनात्यंतरुष्टेन । करे कृत्वा समर्पितः ॥ जामाता राजलोकानां । मोहे नास्ति विचारणा ॥ ६२ ॥ वध्यो राज्ञा समादिष्टः । श्मशाने चालितो नरैः ॥ चौरेण चिंतितं कष्टं । वराको मार्यतेऽधुना ॥ ६३ ॥ यदेषा कुरुते पापा । निजपापस्य गोपनं ॥ मारापयति भर्तारं । निर्दोषं दोषदूषिता ॥ ६४ ॥ तदयं रात्रिसंबंधी । विफलो मे परिश्रमः ॥ इदं चेतसि संचिंत्य । प्रकाशं तेन जल्पितं ॥ ६५ ॥ युग्मं ॥ निर्दोषोऽपि वराकोऽयं । मार्यते केन हेतुना ॥ निर्दोषो दोषयुक्तो वा । कथं तद् ज्ञायते त्वया ॥ ६६ ॥ यथा वृत्तं तथा सर्वं । जानेऽहं कथयामि च ॥ यद्ययं च पुराधीशो । ह्यभयं मे प्रयच्छति ॥ ६७ ॥ श्रु-

त्वेदं भूमिनाथोऽपि । समाहूय मलिम्लुचं ॥ अभयं ते न कर्तव्या । शंका ब्रूहि निरर्गलः ॥६८॥
तेनापि कथितं सर्वं । यथा दृष्टं यथा श्रुतं ॥ आदितो निधनं याव—द्विस्मितश्च नराधिपः ॥६९॥
राजादेशाद्गतश्चौरः । श्मशानं सह मंत्रिणा ॥ दृष्टास्तत्र मुखेऽनेन । श्रवणाधरनाशिकाः ॥ ७० ॥
मंत्रिणा कथितं सर्वं । यथा दृष्टं महीभुजे ॥ जामाता मोचितो राज्ञा । तस्करोऽपि विसर्जितः ॥
॥ ७१ ॥ अविरतिर्महापापा । नानाकारं विडंबिता ॥ निष्कासिता च सा देशा—न्मृत्वा च दुर्ग-
तिं गता ॥ ७२ ॥ तथान्यदपि राजेंद्र । शृणु स्त्रीणां विचेष्टितं ॥ यन्मयाकर्णितं वेदे । भण्यमानं
मनीषिभिः ॥ ७३ ॥

श्रीवसंतपुरे राजा । जितशत्रुर्महाबलः ॥ रूपसौभाग्यलावण्य—कलाकौशलमंदिरं ॥ ७४ ॥
प्रीतिपात्रं महादेवी । यथार्था सुकुमारिका ॥ बभूव भूपतेस्तस्य । प्राणेभ्योऽपि प्रिया प्रिया ॥७५॥
तया सार्धं दिवारात्रौ । विषयासक्तमानसः ॥ परित्यक्तान्यकर्तव्यो । गमयामास वासरान् ॥ ७६ ॥
न चास्थानं न चामंत्रो । न धर्माधर्मचिंतनं ॥ स च तस्यां समासक्तो । विश्वं पश्यति तन्मयं ॥
॥ ७७ ॥ सीदंति राजकार्याणि । हन्यंते प्रांतभूमयः ॥ तस्करास्तरलायंते । सर्वं राज्यं विसंस्थुलं

।। ७८ ।। मंत्रितं मंत्रिसामंतै—र्नेदमुन्नतिकारणं ।। वचनं न करोत्येष । उपायः कोऽपि चिंत्यतां ।। ७९ ।। हुं ज्ञातं मदिरामत्तः । प्रसुप्तो गाढनिद्रया ।। नक्तं देव्या समायुक्तो । महाटव्यां विमुच्यते ।। ८० ।। प्रतिपन्नमिदं सर्वै—र्लेखोऽयं लिखितः स्फुटः ।। कठोराक्षरसंयुक्तो । निःस्नेहो व्यक्तकाक्षरः ।। ८१ ।। यदि ते जीवने वांछा । पाता वा शीतलं जलं ।। तदा दूरतरे देशे । गंतव्यमिति निर्णयः ।। ८२ ।। अन्येद्युर्विहितं सर्वं । यथामंत्रितमंजसा ।। प्रबुद्धो वीक्षते राजा । कांतारं त्रासकारणं ।। ८३ ।। न तद्राज्यं न तद्वेश्म । न सा शय्या मनोहरा ।। रौद्रशिवशताराव—भीषणेयं महाटवी ।। ८४ ।। विसर्पत्सिंहशार्दूल—महिषा हि गजाकुला ।। विसर्पद्घूकघूत्कारा । भीषणेयं महाटवी ।। ८५ ।। प्रिये किं मतिमोहो मे । किमेतदिंद्रजालकं ।। स्वप्नो वायं मया दृष्टो । साशंकमिव मे मनः ।। ८६ ।। दृष्टो वस्त्रांचले लेखो । वाचितश्च शनैः शनैः ।। ततः संजातकोपेन । स्मृता तेनासिधेनुका ।। ८७ ।। विरक्तमंत्रिसामंत—व्रजैरेतत्कृतं मम ।। समूलकाषंकशति । विरक्तिरनुजीविनां ।। ८८ ।। कोपं कुर्वन्निषिद्धोऽसौ । देव्या कोमलया गिरा ।। ततश्च वक्तुमारब्धः । श्रूयतां देवि मद्वचः ।। ८९ ।। हस्त्यश्वरथयानानि । किं करिष्यंति तानि च ।। कोष्ठागारादयः

सर्वे । देवि तेऽपि निरर्थकाः ॥ ९० ॥ त्वदायत्ताः प्रिये प्राणा । जीवितं यौवनं च मे ॥ संसारसु-
खसर्वस्वं । त्वमेवैका मम प्रिया ॥ ९१ ॥ सहैव राज्यमायात—मागछंत्या त्वया मम ॥ अनुकूलो
विधिर्मन्ये । येन त्वं न वियोजिता ॥ ९२ ॥ ततः साहसमालंब्य । देव्या सार्धं शनैः शनैः ॥
प्राचीं दिशं समाश्रित्य । चचालाचलमानसः ॥ ९३ ॥ स्तोकांतरं गते राज्ञि । मूर्छाछादितचेतना
॥ निपपात धरापीठे । निःसहा सुकुमारिका ॥ ९४ ॥ संप्राप्तचेतनां राजा । पप्रछ मधुराक्षरैः ॥
किं बाधते कुरंगाक्षि । प्राणेश तृष्ट् विबाधते ॥ ९५ ॥ क्षुर्या च कर्तयित्वाथ । वामे बाहौ सिरां
ततः ॥ पलाशपत्रनिष्पन्नः । शोणितस्य भृतः पुटः ॥ ९६ ॥ गुटिकांतरयोगेन । जलवर्णीकृतं त-
कत् ॥ ततः सा पायिता देवी । संजाता स्वस्थमानसा ॥ ९७ ॥ भूयः स्तोकांतरं गत्वा । सावोच-
द्धरणीपतिं ॥ नाथ गंतुं न शक्ताहं । बुभुक्षा बाधतेतरां ॥ ९८ ॥ सितक्षुरिकया कृत्वा । स्वोरुमां-
सविकर्तनं ॥ अग्निपक्वं पुटे कृत्वा । तेन तस्यै समर्पितं ॥ ९९ ॥ ततः भुक्तं तया सर्वं । संजाता
गमनक्षमा ॥ लंघिता चाटवीप्रासा । गंगागोदावरी पुरी ॥ १०० ॥ अंगुलीयकमादाय । निजांगु-
ल्या महीभृता ॥ संगृहीतं गृहं हट्टो । वणिग्धर्मे मनः कृतं ॥ १ ॥ व्यापारं कर्तुमारब्धो । लब्ध-

लाभो दिने दिने ॥ भोजनार्थं गृहे याति । स्वापार्थं च नरेश्वरः ॥ २ ॥
अन्यदा भणितो देव्या । कष्टंकष्टेन वासराः ॥ एकाकिन्याः प्रगच्छंति । द्वितीयः कोऽपि चिं-
त्यतां ॥ ३ ॥ प्रतिपन्नमनेनापि । हट्टमार्गे विलोकितः ॥ पंगुर्नराधमः कोऽपि । गीतनर्मविचक्षणः
॥ ४ ॥ आनीय च गृहे मुक्त । एष ते गृहरक्षकः ॥ सहायः सर्वकार्येषु । देवि तिष्ट निराकुला ॥
॥ ५ ॥ ततो दिने दिने तेन । नर्मणा गीतकर्मणा ॥ तस्या आवर्जितं चित्त—मनाचारे मतिर्ग-
ता ॥ ६ ॥ अनाचारप्रवृत्तानां । तेषां गच्छंति वासराः ॥ साशंका सा सदा देवी । बंभ्रमीति दिवा-
निशं ॥ ७ ॥ अनेनावर्जिता लक्ष्मी—र्भोगयोग्यास्ति मे गृहे ॥ यद्ययं म्रियते शल्यं । तदा मम
निवर्तते ॥ ८ ॥ इत्यत्याकुलचित्ता सा । छिद्रान्वेषणतत्परा ॥ आकाशगामिनीकल्पा । कालं न-
यति दुःखिता ॥ ९ ॥ अन्यदा भणितो रात्रौ । प्रिय प्रातस्त्वया सह ॥ भोक्तव्यं हि मया नूनं ।
गंगाकूलस्थपादपे ॥ १० ॥ एवमंगीकृतं तेन । हृष्टासौ निजमानसे ॥ विधाय पाकं चलिता । भो-
जनार्थं प्रियान्विता ॥ ११ ॥ भुक्त्वा च तत्र सुप्त्वा च । क्षणमेकमनाकुलं ॥ ततः क्रीडितुमारब्ध-
स्तया सार्धं नराधिपः ॥ १२ ॥ क्षिप्रं क्षिप्रं समागच्छ । प्रिय पश्य कुतूहलं ॥ जलहस्ती हस्तिना

साधं । जलांतर्योध्धुमुद्यतः ॥ १३ ॥ कुत्र कुत्र प्रियेत्येवं । पश्यन्नेष निराकुलः ॥ पृष्टतः प्रेर्य हस्तेन । क्षिप्तो गंगाजले पतिः ॥ १४ ॥ मुधा कोलाहलं कृत्वा । गता सा निजमंदिरे ॥ निःशंका पंगुना सार्धं । कामभोगान्निषेवते ॥ १५ ॥ गांगेन श्रोतसा शीघ्र—मुह्यमानो दिवानिशं ॥ दिनत्रयेण संप्राप्तो । राजा सिंहपुरे पुरे ॥ १६ ॥ निराम्नायो मृतस्तत्र । राजा शूलेन सत्वरं ॥ जितशत्रुः कृतो राजा । दिव्यैर्मंत्रिनृपादिभिः ॥ १७ ॥ गुणानुरक्तनिःशेष—मंत्रिसामंतमंडलं ॥ राज्यं पालयतस्तस्य । वव्रजुर्भूरिवासराः ॥ १८ ॥ इतः सा ज्ञातवृत्तांतै—र्लोके राज्ञे निवेदिता ॥ तेनापि हृतसर्वस्वा । पुरादपि बहिष्कृता ॥ १९ ॥ रुदती पंगुमादाय । विधाय निजमस्तके ॥ भिक्षां भ्रमितुमारब्धा । प्रतिग्रामं प्रतिगृहं ॥ २० ॥ पंगुं भूम्यां विमुच्यैष । जगाद विशदाक्षरैः ॥ पतिव्रताया मे देहि । भिक्षां येन व्रजाम्यहं ॥ २१ ॥ पर्यटंती क्रमेणैषा । ग्रामे ग्रामे पुरे पुरे ॥ कदाचिद्दैवयोगेन । गता सिंहपुरे पुरे ॥ २२ ॥ तत्रापि पर्यटंत्येषा । करोति जनविस्मयं ॥ पतिव्रतेति सर्वत्र । जने रूढिमुपागता ॥ २३ ॥ अविचारो जनो ब्रूते । यथाश्रुतपरिग्रहः ॥ अहो पतिव्रता नारी । संत्यन्यापि पतिव्रताः ॥ २४ ॥ श्रुतमेतन्नरेंद्रेण । शब्दिता निजमंदिरे ॥ मिलितः पुरलो-

कोऽपि । हेलया नृपमंदिरे ॥ २५ ॥ प्रोक्तो मंत्री नरेंद्रेण । पृष्ठ्येयं त्वयाबला ॥ का त्वं च कीदृशं नाम । कोऽयं पंगुः शिरोगतः ॥ २६ ॥ सर्वं तेनापि सा पृष्टा । तयापीदं प्रजल्पितं ॥ पूर्वं वसुंधरा नाम । श्रेष्टिना मम निर्मितं ॥ २७ ॥ द्वितीयं गुणनिष्पन्नं । कृतं लोकैः पतिव्रता ॥ जातोयं गुरुभिर्दत्तो । मस्तकेनोह्यते मया ॥ २८ ॥ पंगुलो वातिकुब्जो वा । काणः कुंटोऽतिदुर्भगः ॥ सुरूपो वा कुरूपो वा । धनी वा निर्धनोऽपि वा ॥ २९ ॥ कुलस्त्रीणामयं धर्मो । यत्पतिर्नैव मुच्यते ॥ शेषा वेश्यासमा नार्यः । सदा स्वार्थपरायणाः ॥ ३० ॥ स्वल्पा कस्तूरिका यद्वत् । स्वल्पं मलयजं यथा ॥ स्वल्पं कश्मीरजं यद्व—त्तद्वन्नार्यः पतिव्रताः ॥ ३१ ॥

निशम्येदं महीनाथः । कोपकंपितकंधरः ॥ सोपहासं जगादेदं । वचो मर्मविघट्टकं ॥ ३२ ॥ बाहुभ्यः शोणितं पीत—मूरुमांसं च भक्षितं ॥ भर्ता गंगाजले क्षिप्तः । साधु साधु पतिव्रता ॥ ॥ ३३ ॥ पापे शीघ्रं प्रयाहि त्वं । यत्र नो दृश्यसे दृशा ॥ नामापि श्रूयते नैव । यत्र तत्र व्रज द्रुतं ॥ ३४ ॥ स्वपुरान्निजदेशाच्च । नृपेनासौ बहिः कृता ॥ अहो पापानि पापाना—मिहैव फलदान्यलं ॥ ३५ ॥ शुकेनाज्ञाणि नृपाल । श्रुतं स्त्रीणां विचेष्टितं ॥ स्त्रियो विश्वासघातिन्यः । पा·

पाः पापनिबंधनं ॥ ३६ ॥ यावज्जीवं मया देव । स्त्रीभिः संगो विवर्जितः ॥ ब्रह्मचर्यं चरिष्यामि ।
मुक्त्वा स्पर्शनदर्शने ॥ ३७ ॥ सिंहविक्रमराजेन । रोषारुणितचक्षुषा ॥ महासती महापापा । दे-
शनिर्धाटिता कृता ॥ ३८ ॥ इति कथानकदृष्टांतोऽयं. ॥ सारिके त्वमपि ब्रूहि । निजमूर्गनिबंधनं
॥ तयोक्तं शृणु राजेंद्र । यद्वृत्तं मे शरीरके ॥ ३९ ॥ श्रीशृंगारपुरे रम्ये । लिंबदत्ताभिधो वणि-
क् ॥ बभूव सद्गुणग्राम—ग्रामणीः करुणापरः ॥ ४० ॥ लिंबदेवसुतस्तस्य । कटुलोचनचित्तयोः ॥
दौर्भाग्यपुद्गलान् लात्वा । वेधसेह विनिर्मितः ॥ ४१ ॥ अधर्मज्ञोऽकृतज्ञश्च । कलाकौशलवर्जितः
॥ वणिजानां कुले जातो । न वणिग् नापि पामरः ॥ ४२ ॥ तत्रैव नगरे श्रेष्ठी । सोमदेवाभिधो-
ऽभवत ॥ प्रियदर्शना तद्भार्या । पुत्रिकाहं सुदर्शना ॥ ४३ ॥ ऊढाहं तेन पापेन । लिंबदत्तस्य सू-
नुना ॥ यथाक्रमं करोत्येष । विधिर्नानाविडंबनां ॥ ४४ ॥ अस्याहं वल्लभात्यंतं । न चासौ मम
रोचते ॥ वासः स्वल्पश्च संजात—स्तेन मे श्वशुरालये ॥ ४५ ॥ अन्यां कन्यां पिता तस्य । ग-
वेषयति सादरं ॥ न च कोऽपि ददात्यस्य । सदा सापत्न्यशंकया ॥ ४६ ॥ ततश्च भोगलुब्धेन ।
पापेनेदं विचिंतितं ॥ न कोऽपि मे सुतां दद्या—दनया विद्यमानया ॥ ४७ ॥ ततोऽहं तेन पा-

पेन । सुप्ता क्षुरिकया हता ॥ लोकप्रत्यायनाहेतो—र्मुधा कोलाहलः कृतः ॥ ४८ ॥ मिलिता ना-
गराः सर्वे । पृष्ठतां तेन जल्पितं ॥ मृषावादं महापाप—मुत्तरं पापकर्मणा ॥ ४९ ॥ बंदिग्राहं गृ-
हीतोऽहं—मेषा निपतितांबरे ॥ कृतशब्दा च चौरैस्तै—रसिधेनुकया हता ॥ ५० ॥ सर्वं शृणो-
मि कर्णाभ्यां । पश्यामि न च चक्षुषा ॥ महावेदनया ग्रस्ता । महादुःखेन दुःखिता ॥ ५१ ॥ न
जाने किं मयाकारि । पुरा जन्मनि पातकं ॥ येनास्य करलग्नाहं । प्राणैर्भोगैश्च वर्जिता ॥ ५२ ॥
नेत्रे नोत्पाटिते किं च । मिलिते यस्य नेत्रयोः ॥ करोऽपि किं न छिन्नोऽसौ । लग्नो योऽस्य करे
मम ॥ ५३ ॥ न मे श्वश्रूगृहं जातं । न जातं पैतृकं गृहं ॥ न भोगा विरतिर्नैव । गतं जन्म नि-
रर्थकं ॥ ५४ ॥ हे मातर्हे पितर्जामि । पितृव्यभ्रातृमातुलाः ॥ न युष्माकमयं दोषो । दोषोऽयं मम
कर्मणां ॥ ५५ ॥ वेदनाविह्वलः कायः । प्राणाः पर्यंतवर्तिनः ॥ मर्षणीयं तकत्सर्वं । यन्मया दुष्कृ-
तं कृतं ॥ ५६ ॥ यदि मे साटिका शुद्धा । निर्मलो दक्षिणः करः ॥ तदा विडंबनापूर्वं । मरिष्य-
त्येष पातकी ॥ ५७ ॥ आर्तध्यानसमारूढा । बद्धायुर्गतचेतना ॥ मृत्वा मार्गसमासन्ने । वटेऽथाज-
नि सारिका ॥ ५८ ॥ असंजातबलौ पक्षौ । संवाहयितुमक्षमा ॥ इतश्चेतश्च बभ्राम । वट एव शा-

नैः शनैः ॥ ५९ ॥ पक्षाबले समुत्पन्ने । जाताहं व्योमचारिणी ॥ विद्याधरीव सर्वत्र । संचरामि य-
थेच्छया ॥ ६० ॥ आम्रारामेषु रम्येषु । मृद्वीकामंडपेषु च ॥ दाडिमीषु च पक्कासु । कृताहारप्रयो-
जना ॥ ६१ ॥ नदीकूपतडागेषु । निर्झरेषु ह्रदेषु च ॥ पयः पीत्वा मनोहारि । विचरामि यथा-
सुखं ॥ ६२ ॥ स्थितिरेषास्य पापस्य । विधातुर्विषमा जने ॥ सुस्थं द्रष्टुं न शक्नोति । चिरकालं
जनं यतः ॥ ६३ ॥

एकदा वटशाखायां । कृतासनपरिग्रहा ॥ यावत्तिष्ठामि तत्राहं । तावत्तत्र समागतः ॥ ६४ ॥
निषण्णः स वटस्याधो । दत्तं चोल्मुकसन्निभं ॥ उपरिष्टान्निजं चक्षुः । प्राणा निपतिता मम ॥६५॥
भीता मूर्छिता पतिता । निस्सहास्यैव मस्तके ॥ मारिता तेन पापेन । मोटयित्वा कृकाटिकां ॥६६॥
भूयोऽपि तिर्यगायुष्कं । बध्ध्वा जाता च सारिका ॥ संजातौ कोमलौ पक्षौ । दरसंचरणक्षमौ ॥
॥ ६७ ॥ कथंचित्पुण्ययोगेन । प्रविष्टा तव पंजरे ॥ एतावंतं स्थिता कालं । प्रमोदभरनिर्भरा ॥
॥ ६८ ॥ अद्य त्वेष मया दृष्टः । पातकी पुरुषाधमः ॥ लिंबदेवो दुरात्मायं । तेनाहं मूर्छिता प्रभो
॥ ६९ ॥ अजानतेव तेनेदं । लिंबदेवेन भाषितं ॥ किमेषा पक्षिणी ब्रूते । सभामध्ये निरर्गला

॥ ७० ॥ यन्न भूतं न वा भावि । न च संप्रति वर्तते ॥ अन्यथा भवती ब्रूते । स च कोऽप्यन्य एव हि ॥ ७१ ॥ साक्षी न दृश्यते कोऽपि । संकीर्णमिव लक्ष्यते ॥ सारिकाह महाराज । तर्हि शुद्धिं करोम्यहं ॥ ७२ ॥ यद्यशुद्धा दहत्वग्निः । शुद्धा मुंचतु जीवतीं ॥ ततश्च सत्वयोगेन । वह्नि-शुद्धा विनिर्गता ॥ ७३ ॥ सारिका सभ्यलोकेन । सर्वेणापि प्रशंसिता ॥ लिंबदेवो नरेंद्रेण । दंड-यित्वा विसर्जितः ॥ ७४ ॥ नराणां चरितं श्रुत्वा । कंपते मे शरीरकं ॥ अन्यदपि शृणु स्वामिन् । पुराणे यन्मया श्रुतं ॥ ७५ ॥

समस्ति स्वर्णसंकाशं । श्रीसुवर्णपुरं पुरं ॥ श्रेष्ठी स्वर्णध्वजस्तत्र । कनकश्रीस्तद्गेहिनी ॥७६॥ कालक्रमेण संजात—स्तयोः पुत्रो धनंजयः ॥ पुण्यश्रीर्गेहिनी तस्य । गुणरत्नकरंडिका ॥ ७७ ॥ एकदा भ्रमता तेन । विस्तीर्णे भानुमंदिरे ॥ द्यूतासक्तास्त्रपामुक्ता । द्यूतकारा विलोकिताः ॥७८॥ कौतुकार्थी गतस्तत्र । दापितं बृहदासनं ॥ अर्थवान् श्रेष्ठिपुत्रोऽयं । धनदाता धनंजयः ॥ ७९ ॥ सोऽपि द्यूतं समारब्धो । रंतु मुग्धमतित्वतः ॥ हारितं शतमेतेन । दीनाराणां गतो गृहे ॥ ८० ॥ तत्रासौ मंचकं लात्वा । सुप्तो विद्राणमानसः ॥ न पिबत्यंबु नाश्नाति । न च जल्पति किंचन ॥

॥ ८१ ॥ दीनं श्याममुखं दृष्ट्वा । मात्रा भर्त्रे निवेदितं ॥ दीनाराणां शतं नाथ । द्यूते पुत्रेण हा-
रितं ॥ ८२ ॥ दापितं वारितस्तेन । वत्स द्यूतं न संगतं ॥ अधोमुखः क्षणं स्थित्वा । निर्गतः पि-
तृपार्श्वतः ॥ ८३ ॥ द्वितीयेऽह्नि सहस्रं तु । हारित्वा गृहमागतः ॥ दत्तं तदपि तातेन । वारितो न
च तिष्ठति ॥ ८४ ॥ एवं द्वे त्रीणि चत्वारि । यावल्लक्षोऽपि हारितः ॥ पिताप्यपहृतो धात्रा । मृता
माता वधूटिका ॥ ८५ ॥ धनंजयोऽपि संजातो । गृहस्वामी निरर्गलः ॥ हारयते धनं द्यूते । द-
दाति प्रतिवासरं ॥ ८६ ॥ कालेन गछता तेन । सदनं निर्धनीकृतं ॥ मातुश्च शाटिका सापि । हा-
रिता हतकर्मणा ॥ ८७ ॥ रजन्यां पश्चिमे यामे । द्यूतिभ्यो भीतमानसः ॥ दक्षिणां दिशमाश्रित्य
। चचालाशु धनंजयः ॥ ८८ ॥ प्रत्यहं गछता तेन । प्राप्ता चंद्रपुरी पुरी ॥ तत्रास्ति चंद्रसारस्य ।
ह्यापणः पण्यपूरितः ॥ ८९ ॥ दीर्घाध्वश्रमतस्तत्र । निषसाद धनंजयः ॥ गछता स्वगृहे नीतः ।
स्नापितो भोजितस्तथा ॥ ९० ॥ अन्यदा प्रश्नितः कुत्र । कुतो त्वं केन हेतुना ॥ एकाकी धनही-
नश्च । बंभ्रमीषि महीतले ॥ ९१ ॥ तेनापि कथितं सर्वं । मूलतो निजचेष्टितं ॥ भणितश्चंद्रसारे-
ण । वत्स द्यूतं न संगतं ॥ ९२ ॥ द्यूतमेतन्महापापं । महापापनिबंधनं ॥ कुलशीलहरं द्यूतं ।

द्यूतमर्थहरं परं ॥ ९३ ॥ सत्यशौचहरं द्यूतं । द्यूतं कीर्तिक्षयंकरं ॥ सर्वाविश्वासमूलं हि । द्यूतमाहुर्मनीषिणः ॥ ९४ ॥ यतः—कुलकलंकणु सच्च—पडिवक्क गुरुलज्जासोयहरु ॥ धम्मावग्घु अच्छपणासणु । जं दाणभोगेहिं रहिउं ॥९५॥ तवोपदेशतस्तात । यावज्जीवमिदं मया ॥ द्यूतं च द्यूतकारैश्च । संगतिः सापि वर्जिता ॥ ९६ ॥ ततः संजाततोषेण । चंद्रसारेण जल्पितं ॥ वत्स ते कथ्यते किंचि—त्सावधानेन श्रूयतां ॥ ९९ ॥ अस्त्येका मे सुता मान्या । चंद्रलेखेति विश्रुता ॥ रूपसौभाग्यसंयुक्ता । चंद्रकांतासमुद्भवा ॥ २०० ॥ तद्वियोगमशक्तोऽहं । सोढुं सा हि मम प्रिया ॥ भवते तां प्रयच्छामि । यद्यन्यत्र न गच्छसि ॥ १ ॥ प्रतिपन्नमनेनापि । प्रशस्ते तिथिवासरे ॥ कारापितं प्रमोदेन । पाणिग्रहणमंगलं ॥ २ ॥ खानपानादिसुस्थस्य । कामभोगान् प्रभुंजतः ॥ पुलवद् दृश्यमानस्य । गतः कालः कियानपि ॥ ३ ॥ अन्यदा चिंतितं तेन । धिक्कष्टं मम जीवितं ॥ निंदितं सर्वलोकेऽपि । शिष्टलोके विशेषतः ॥ ४ ॥ द्यूतं च द्यूतकाराश्च । तस्य चित्ते व्यवस्थिताः ॥ गुप्तिप्रक्षेपतुल्यं हि । पारवश्यं विदुर्बुधाः ॥ ५ ॥ उक्तं च—सोच्छ्वासं मरणं निरग्निदहनं निःशृंखलं बंधनं । निःपंकं मलिनं विनैव नरकं सैषा महायातना ॥ सेवासंजनितं नरस्य सुधियो धि·

स्पारवश्यं यतः । पंचानां सविशेषमेतदपरं षष्ठं महापातकं ॥ ६ ॥ स्वभावो नोपदेशेन । शक्यते
कर्तुमन्यथा ॥ सुतप्तान्यपि तोयानि । पुनर्यांति स्वभावतां ॥ ७ ॥ सांप्रतं मुंच मां तात । मनो मे
गमनोत्सुकं ॥ स्वगृहं मातरं भार्यां । दृष्ट्वागच्छामि सत्वरं ॥ ८ ॥ जामातुर्भणितं श्रुत्वा । चंद्रसारे-
ण चिंतितं ॥ मनःपूतं करोत्वेष । बलात्कारो न संगतः ॥ ९ ॥ पृष्टा च चंद्रलेखापि । वत्से गंता
तव प्रियः ॥ या गतिर्जीवितेशस्य । ममापि ननु सा गतिः ॥ १० ॥ वसनाभरणं दत्वा । ससहा-
या विसर्जिता ॥ अर्धमार्गे प्रसुप्तेन । चिंतितं तेन चेतसा ॥ ११ ॥ आभरणेन मे कार्यं । न का-
र्यं चंद्रलेखया ॥ अंतर्दुष्टं बहिर्मृष्टं । प्रोक्तं कोमलया गिरा ॥ १२ ॥ एहि कांते कुरंगाक्षि । कौतु-
कं दर्शयामि ते ॥ गता सा दर्शितस्तेन । कूपो जलविवर्जितः ॥ १३ ॥ तं पश्यंती निराशंका ।
क्षिप्ता तत्रैव तेन सा ॥ भूषणानि समादाय । गतः स्वर्णपुरे पुनः ॥ १४ ॥ गवेषणां प्रकुर्वाणैः ।
स्वपुंभिः सा निरीक्षिता ॥ निष्कासिता ततः कूपा—त्पृष्टा व्यसनकारणं ॥ १५ ॥ तयाचिंति न
मे युक्तं । वक्तुं नाथस्य दूषणं ॥ तेन दुष्टेन दुष्टाहं । साध्वी चानेन साधुना ॥ १६ ॥ यः प्रिय
उपकारी च । भूयो येन प्रयोजनं ॥ कुले जाता न कुर्वंति । तस्य मर्मविघट्टनं ॥ १७ ॥ बंदिग्राहं

गृहीतानि । तस्करैः पापकर्मभिः ॥ भूषणानि समादाय । क्षिप्तोऽहमंधकूपके ॥ १७ ॥ आर्यपुत्रश्च तैर्नीतो । वंदीकृत्य न लक्ष्यते ॥ चंद्रलेखां समादाय । सहायाः स्वपुरं गता ॥ १८ ॥ संकल्प्य कथितः पित्रे । वृत्तांतश्चंद्रलेखया ॥ अहो प्राणप्रणाशेऽपि । सज्जनाश्चंदनोपमाः ॥ २० ॥ यतः—सुजनो न याति विकृतिं । परहितनिरतो विनाशकालेऽपि ॥ छेदेऽपि चंदनतरुः । सुरभयति मुखं कुठारस्य ॥ २१ ॥ भूयो धनंजयो जातः । सर्वरोरशिरोमणिः ॥ निंद्यश्च सर्वलोकाना—मुद्दंडद्यूतदोषतः ॥ २२ ॥ क्षीणोपायः प्रवृत्तोऽसौ । पुनर्दृष्टेन वर्त्मना ॥ क्रमेण भ्रमता पृथ्वीं । प्राप्ता चंद्रपुरी पुरी ॥ २३ ॥ गृहे च विशता दृष्टा । चंद्रलेखा गृहांगणे ॥ तयापि च समागत्य । शिक्षितोऽसौ प्रजल्पितुं ॥ २४ ॥ यन्मया भणितं किंचि—द्भाषणीयं त्वयापि तत ॥ वाक्यभेदो हि दोषाय । गुणायाभिन्नवाक्यता ॥ २५ ॥ दृष्टोऽसौ चंद्रसारेण । सानंदमवगूहितः ॥ तस्मादं व्यसनं जातं । कथं ते वत्स साध्यतां ॥ २६ ॥ हानितो भूषणानां मे । यापि कापि कदर्थना ॥ सापि मे सफला जाता । तात ते मुखदर्शनात ॥ २७ ॥ पूर्ववत्तिष्ठतस्तस्य । स्नेहगौरवपूर्वकं ॥ सुखंसुखेन सर्वत्र । व्यतीताः कतिचित्समाः ॥ २८ ॥ भूयोऽपि च स्मृतं द्यूतं । द्यूतकारा हृदि स्थिताः ॥ विजं-

ज्जिताऽरतिर्देहे । गमनाय कृतं मनः ॥ २९ ॥ न च देवः प्रियो नापि । न माता न पिता गुरुः
॥ द्यूतकारस्य पापस्य । प्रियमेकं डुरोदरं ॥ ३० ॥ संदेशकः समायातः । प्रिये स्वर्णपुरान्मम ॥
मातृमातुलसंबंधी । शीघ्रमागम्यतामिति ॥ ३१ ॥ तथापि समये सर्वं । चंद्रसाराय साधितं ॥ शिवा
वः संतु पंथानो । यात भूयोऽपि दर्शनं ॥ ३२ ॥ वस्त्राभूषणं दत्वा । चंद्रलेखा विसर्जिता ॥ स्व-
ल्पेनैव च कालेन । प्राप्ता स्वर्णपुरं पुरं ॥ ३३ ॥ सहाया वल्लिता जातो । द्यूतकारे समागमः ॥
द्यूतं रंतु समारब्धो । यथा रात्रौ तथा दिवा ॥ ३४ ॥ पुण्यश्रीसाटिका सापि । हारिता तेन पापि-
ना ॥ स्वल्पैरेव दिनैर्जातो । रोरराजो धनंजयः ॥ ३५ ॥ एकदा भणिता तेन । चंद्रलेखा निशा-
गमे ॥ प्रिये प्रभाते भोक्तव्यं । त्वयोद्याने मया सह ॥ ३६ ॥ प्रतिपन्नं तया सर्वं । कृतः पाको
मनोहरः ॥ प्रियेण सह संप्राप्ता । कानने जनवर्जिते ॥ ३७ ॥ भुक्तं च भोजनं भव्यं । पीतं वा-
रि मनःप्रियं ॥ पुष्पादिसर्वसामग्री । सेविता क्रीडितं चिरं ॥ ३८ ॥ सुखसुप्ता हता तेन । हताशे-
नार्थलोभतः ॥ हहा ही द्यूतकाराणां । कृत्याकृत्यं न विद्यते ॥ ३९ ॥ प्रक्षिप्य विजले कूपे । गृ-
हीत्वाभरणादिकं ॥ निस्त्रिंशो गृहमागत्य । द्यूतं रंतु समुद्यतः ॥ ४० ॥ जनन्या भणितः किं न ।

चंद्रलेखा विलोक्यते ॥ गृहे किं न समायाता । निर्गता सा ममाग्रतः ॥ ४१ ॥ एकाकिन्यपि क्रोधांधा । गता सा पितृमंदिरे ॥ मातश्चिंता न कर्तव्या । गता तत्र भविष्यति ॥ ४२ ॥ भूयोऽपि निर्धनो जातः । पापकारी धनंजयः ॥ विंध्याटवी गजेनेव । स्मृता चंद्रपुरी पुरी ॥ ४३ ॥ क्रामन् बृहत्क्रमैः पृथ्वीं । चचालासौ गतत्रपः ॥ प्राप्तश्च स क्रमेणैवं । दुष्टात्मा क्रूरमानसः ॥ ४४ ॥ चंद्रलेखां विना दृष्टः । प्रविशंश्चंद्रकांतया ॥ पादप्रक्षालनं कृत्वा । पृष्टः साशंकचित्तया ॥ ४५ ॥ अंगोपांगानि दह्यंते । स्पंदते दक्षिणेक्षणं ॥ कुस्वप्ना वत्स दृश्यंते । न बहिर्न गृहे सुखं ॥ ४६ ॥ शरीरे कुशलं वत्स । वत्साया मे निवेद्यतां ॥ पृष्टव्यमेतदेवेह । प्राणिनां सुखलापदा ॥ ४७ ॥ पतिं विना गृहे पत्यु—र्वासः स्त्रीणां न सुंदरः ॥ नैतद्भोजनमाह्लाति । परं वक्तुं न शक्यते ॥ ॥ ४८ ॥ दिष्ट्या त्वं वर्धसे मात—र्लघूभूता तवांगजा ॥ सर्वलक्षणसंपूर्णं । पुत्ररत्नमजीजनत् ॥ ॥ ४९ ॥ नामापि निर्मितं तस्य । चंद्रशेखरसंज्ञितं ॥ आगच्छता च नानीता । शुक्रश्च सन्मुखो यतः ॥ ५० ॥ निशम्येदं कृतानंदा । चंद्रकांताप्यजायत ॥ दत्ता स्वर्णमयी जिह्वा । जगज्जनितविस्मया ॥ ५१ ॥ सस्नेहं सादरं स्थित्वा । दिनानि दश पंच वा ॥ न युक्तं मे चिरं स्थातुं । गंतुमेव

ममोचितं ॥ ५२ ॥ भूषणं चंद्रकांताया । हृत्वा रात्रौ विनिर्गतः ॥ श्रेष्ठिना जातशंकेन । कृता पुत्र्या गवेषणा ॥ ५३ ॥ गताः स्वर्णपुरे केचिद् । भृत्याः सा तैर्निरूपिता ॥ अश्रुजलानि रुषित्वा तो । गता सा पितृमंदिरे ॥ ५४ ॥ ततस्तैश्च समागत्य । चंडसाराय साधितं ॥ रुरोद दुःखितः श्रेष्ठी । सततं करुणस्वरैः ॥ ५५ ॥ वियोगभयभीतेन । मया वै यदनुष्ठितं ॥ विपरीतमिदं जातं । वत्से दुर्लभदर्शने ॥ ५६ ॥ वंचिता कूटजामात्रा । पापेनाहं पदे पदे ॥ चंडलेखागुणान् स्मृत्वा । चक्रंद कुररीव सा ॥ ५७ ॥ सुताशोकं परित्यज्य । विभाव्य भवभावनां ॥ श्रेष्ठी धर्मपरो जातो । यो मृतो मृत एव सः ॥ ५८ ॥ भूषणं चंडकांताया । हारित्वा हीनपौरुषः ॥ पुनः स्वर्णपुरे प्राप्तो । गतलज्जो धनंजयः ॥ ५९ ॥ मृता माता गता सापि । पुण्यश्रीः पितृमंदिरे ॥ गृहं शून्यतरं जातं । धिग्धिग्दुःपुत्रचेष्टितं ॥ ६० ॥ क्वचिद्भुक्तः क्वचित्सुप्तः । क्वचिद्भोजनवर्जितः ॥ क्वचिद्दुःखसमासक्तः । क्वचिन्नखविदारितः ॥ ६१ ॥ समयं गमयामास । पुरुषार्थविवर्जितः ॥ निंदनीयः सतां शोच्य—स्त्वजागलस्तनोपमः ॥ ६२ ॥

अन्यदा द्यूतकारेण । विसंवादे विसंवदन् ॥ हतः क्षुरिकया मृत्वा । जातो दुर्गतिभाजनं ॥

॥ ६३ ॥ इति द्यूते धनंजयदृष्टांतः ॥ अन्यच्च श्रूयतां राजन् । पुरुषाधमचेष्टितं ॥ श्रुतं मया पुरा·
णेषु । सतां निर्वेदकारणं ॥ ६४ ॥ श्रीमंजीरपुरे रम्ये । काननोद्यानशोभिते ॥ नवयौवनमारूढा ।
रूढा रूपादिभिर्गुणैः ॥ ६५ ॥ अंगोपांगादिलावण्यै । राजधानी मनोभुवः ॥ अन्यजन्मकृतैः पुण्यै
—र्लब्धसौभाग्यमंजरी ॥ ६६ ॥ बभूव सर्वलोकानां । हृदयानंदकारिणी ॥ कंदली कामभोगानां ।
नाम्नापि कामकंदली ॥ ६७ ॥ वेश्याचारसमायुक्ता । वेश्या विस्मयकारिणी ॥ सर्ववेश्याशिरोरत्नं ।
सर्वालंकारधारिणी ॥ ६८ ॥ चतुर्भिः कलापकं ॥ तस्यां वणिक्सुतो रक्तो । यक्षनामा महाधनः ॥
त्यागी भोगी सुसंस्कारो । दत्वा दीनारविंशतिं ॥ ६९ ॥ एवं दिने दिने तस्य । वसतो यांति वा·
सराः ॥ समारूढं तयोः प्रेम—सारं वाचामगोचरं ॥ ७० ॥ अन्यदा कुट्टिनी प्रोक्ता । माधवाख्य·
द्विजन्मना ॥ यथा तुभ्यं प्रयच्छामि । दीनारशतपंचकं ॥ ७१ ॥ अष्टादशसरं हारं । सर्वलोकमनो·
हरं ॥ माससेकं मया सार्धं । वसतां कामकंदली ॥ ७२ ॥ अक्कयांगीकृतं सर्वं । भणिता निजपु·
त्रिका ॥ स्थिता साधोमुखा तन्वी । न दत्तमुत्तरं तया ॥ ७३ ॥ नदीकूपतडागानां । यथा साधार·
णं पयः ॥ वेश्यानां यौवनं वत्से । सर्वसाधारणं तथा ॥ ७४ ॥ एकपुंसि प्रसक्ता हि । शस्यंते

कुलयोषितः ॥ सर्वलोककृते वेश्या । वेधसेह विनिर्मिता ॥ ७५ ॥ पत्यंतरसमासक्ता । निंद्यंते कुलबालिकाः ॥ धन्या वत्से जने वेश्या । पतिलक्षेऽप्यनिंदिता ॥ ७६ ॥ यदि नार्थेन ते कार्यं । मे वचनं विधीयतां ॥ यथा यक्षास्तथैषोऽपि । रम्यतामंतरांतरा ॥ ७७ ॥ सा प्राह—अर्थार्थं च सुखार्थं च । रमणी रमते नरं ॥ अर्थश्च मे गृहेऽप्यस्ति । सुखं यक्षे पुनः स्थितं ॥ ७८ ॥ मानखंडनसंजात—कोपा माधवसंगता ॥ यक्षे च कामकंदल्या—मुदासीनतया स्थिता ॥ ७९ ॥ कुट्टिनी क्रूरचित्ता सा । गमयामास वासरान् ॥ कामशक्तिक्षयात्क्षीणो । यक्षः प्राप परासुतां ॥ ८० ॥ युग्मं ॥ ततः प्रवेशितः शीघ्रं । माधवो धनलुब्धया ॥ रमते तेन सार्धं सा । गतस्नेहं निरादरं ॥ ॥ ८१ ॥ करिणीव वनानीता । कालं नयति दुःखिता ॥ वियोगेनाथ यक्षस्य । स्नेहमोहविमोहिता ॥ ८२ ॥ अन्यदा नक्तमेकांते । तल्पमारूढयानया ॥ सुदुःखं पठितं चेदं । रुदंत्या व्यक्तभाषया ॥ ८३ ॥ यथा—भमरा सुरतरुमंजरिहिं । परिमलु लेवि हयास ॥ हियरुं कुट्टवि कह नहि । अह ढंढोलिउं पलास ॥ ८४ ॥ श्रुत्वेदं पठितं रोषा—त्कुट्टिनी हसिता हृदि ॥ पापो मुंचति नाद्यापि । हृदयं ते मनः प्रियः ॥ ८५ ॥ मृता माता ततो जाता । दुःखिता कामकंदली ॥ चिरं न

सहते भ्राता । संबंधं सह बंधुभिः ॥ ८६ ॥ अन्यस्मिंश्च दिने सुप्तो । दत्वा दीनारविंशतिं ॥ माधवः कामकंदल्या । किंचिच्चलितमानसः ॥ ८७ ॥ सुखसुप्तां निशि ज्ञात्वा । कृत्वा तद्गलकर्तनं ॥ हाटकस्य शतान्यष्टौ । द्वौ हारौ द्वे च कुंडले ॥ ८८ ॥ अंगदे द्वे कटीसूत्रं । मुषित्वा प्रपलायितः ॥ तत्रैव नगरे विलस—नन्यया वेश्यया सह ॥ ८९ ॥ नगरारक्षकैर्दृष्टो । बध्ध्वा राज्ञे समर्पितः ॥ चौरस्त्रीवधकारी च । मारणाय निरूपितः ॥ ९० ॥ त्रिभिर्विशेषकं ॥ नराणां चरितं श्रुत्वा । कंपते मे शरीरकं ॥ स्त्रियो हि नामभिर्दग्धा । नराः कर्मभिरेव च ॥ ९१ ॥ अन्यदपि महाराज । श्रूयतां यन्मया श्रुतं ॥ कथ्यमानं पुराणेषु । निंदितं नरचेष्टितं ॥ ९२ ॥

अस्ति भद्रपुरे श्रेष्टी । भद्रो भद्रनिकेतनं ॥ सुभद्रा गेहिनी तस्य । समस्तगुणमंदिरं ॥ ९३ ॥ एकदा च कृतस्नाना । निशीथे सुप्तजागरा ॥ विवदंतं नरं वक्त्रे । विशंतं वीक्ष्य शंकिता ॥ ९४ ॥ ससंभ्रमा समुत्थाय । संप्राप्ता भर्तुरंतिके ॥ यथा दृष्टस्तथा तस्य । तया स्वप्नो निवेदितः ॥ ९५ ॥ तेनापि भणिता पुत्रो । भावी ते कलहप्रियः ॥ गच्छ भद्रे न भेतव्यं । स्वस्थानं समलंकुरु ॥ ९६ ॥ पूर्णकाले प्रसूता सा । जातोऽयं कुलदूषकः ॥ आजन्मतोऽपि दुर्जातो । कलिकारी कुदर्शनः ॥

॥ ९७ ॥ स्वप्नानुसारतो दत्तं । नामास्य कलहप्रियः ॥ कलहं मूल्यतो लाति । लभते यदि नो
मुधा ॥ ९८ ॥ समये समागते पित्रा । समाहूय समर्पितः ॥ कलाचार्यस्य पुत्रोऽयं । कलाग्रहण-
हेतवे ॥ ९९ ॥ कलहं कुर्वता तेन । कलाचार्योऽपि खेदितः ॥ तेनाप्युपेक्षितो जातः । सर्वथैव
निरक्षरः ॥ ३०० ॥ नाराचवन्न जानाति । गुणागुणपरीक्षणं ॥ नाराचस्तुलनाकाले । कनकोपल-
योः समः ॥ १ ॥ समुद्रवणिजः पुत्री । तेनोढा कलिकारिणी ॥ मृता माता पिताप्यस्य । गतः
स्मरणशेषतां ॥ २ ॥ गृहस्वामी ततो जातः । क्रमेण कलहप्रियः ॥ भार्या च कारणं जाता । गृ-
हे कलहकारिणी ॥ ३ ॥ बहिर्लोकैः समं युद्धं । गृहे च सह भार्यया ॥ सुखं च यदि सुप्तानां ।
जाग्रतां दुःखमेव च ॥ ४ ॥ विशति न गृहे कोऽपि । श्रमणो ब्राह्मणोऽपि वा ॥ स्वजनो वा सु-
हृद्वापि । भिक्षायै याचकोऽपि वा ॥ ५ ॥ विश्वमुद्वेजयत्येवं । सततं दुष्टचेष्टया ॥ कुरूपाणां परा-
सीमा । मूर्खाणां च धुरि स्थितः ॥ ६ ॥ तुल्यता चार्कतूलस्य । समा समधिकापि वा ॥ चापल्यं
मर्कटस्येव । भुजंगस्येव दुष्टता ॥ ७ ॥ कातर्यं मूषकस्येव । लोभिनो व कदर्यता ॥ निःपुण्यनिर्ध-
नादीनां । सर्वेषां धुरि धार्यते ॥ ८ ॥ युग्मं ॥ निर्गुणोऽपि गुणाधारं । स्वं वितर्कयति स्वयं ॥ रू-

पेण कामदेवोऽहं । कुबेरो धनसंपदा ॥ ९ ॥ शरणागतशिवोऽहं । कृपया मेघसन्निभः ॥ मुनिः प्रशांतभावेन । बुद्ध्या सुरगुरुरहं ॥ १० ॥ क्षीरनीरधिसंकाशो । गांभीर्येण न संशयः ॥ स्थैर्येण च महामेरुः । शौर्येण च धनंजयः ॥ ११ ॥ दानेन कर्णतुल्योऽहं । सत्येन तु युधिष्ठिरः ॥ इत्येवं मन्यते मूढो । विपर्यस्ततया मतेः ॥ १२ ॥ चतुर्भिः कलापकं ॥ यथा भर्ता तथा सापि । स्वात्मानं बहु मन्यते ॥ प्रविशंतं गृहे दृष्ट्वा । कलहेनोपतिष्ठते ॥ १३ ॥ पितृसत्का गता लक्ष्मी—दारिद्र्यं पृष्ठतः स्थितं ॥ बहिर्गृहे च सर्वत्र । तृणायापि न गण्यते ॥ १४ ॥ निर्धनो शटिकारी च । सर्वेण परिभूयते ॥ न कुतोऽपि परित्राणं । वचनेनापि जायते ॥ १५ ॥ मुखं वक्ति कुवाक्यानि । सहते च शरीरकं ॥ भज्यते गरूडुकस्यास्यं । बाढमश्नाति शूकरः ॥ १६ ॥ जनैः कदर्थितो बाढं । दुर्गदारिद्र्यपीडितः ॥ एकदा भणिता तेन । भार्या कलहकारिणी ॥ १७ ॥ प्रिये देशांतरं यामो । धनोपार्जनहेतवे ॥ धनहीनो नरो लोके । तृणादपि लघूयते ॥ १८ ॥ श्रुत्वा वचो भर्तु—र्भाषते कलहप्रिया ॥ दारिद्र्यं प्रिय कस्यापि । किं नश्यति प्रयाणकैः ॥ १९ ॥ दूरं दूरतरं देशं । दारिद्र्यभयभीरुकः ॥ लोकः प्रयाति तत्रापि । दारिद्र्यं म्रियते न हि ॥ २० ॥ भो प्रियतम! पूर्व॰

जन्मार्जितात्मीयप्रचुरतरप्रवरपुण्यप्राग्भारज्वलज्ज्वालावलीकरालदंभोलिनिर्घातैरेव संचूर्ण्यते दुर्ग-
दारिद्र्यमहामहीधरः. न देशांतरगमनैः । प्रार्थनाकरणैर्न च ॥ न चापि परराज्यादि—धनवल्लोक-
सेवनैः ॥ २२ ॥ न चापि नीचकर्मसमाश्रयणैर्न च दीनतालंबनैः, यतो निष्पुण्यका दारिद्र्यमुद्गरा-
घातविदीर्णाखिलमनोरथा द्रव्यार्थिनः संतो भ्रमंति नानाविधदेशांतराणि, लंघयंति जलनिधिं,
खनंति रोहणगिरिधरणीतलं, विशंति विवराणि, कुर्वंति परगृहेषु दुःकरकर्माणि, आरंभयंति कृष्या-
दीननेकान् व्यापारान्, शीतवातातपक्षुत्पिपासादिदुःखव्रातमविगणयंतः संतो धावंति तेषु स्थानेषु,
तथापि भोजनाच्छादनमात्रमपि कथंचिदेव महता क्लेशेन संपद्यते, पूर्वसुकृतकर्मणस्तु यदेव किंचि-
दारभ्यते कृष्यादिकं तदपि चिंतातिक्रांतप्रभूततरफलदायि भवति. यतः—नूनं समेऽपि यत्ने । भा-
व्यं यद्यस्य तस्य तद्भवति ॥ एकस्य विभवलाभ—श्छेदः प्रत्यक्षमपरस्य ॥ २३ ॥ विकटाटव्यामटनं
। शैलारोहणमपांनिधेस्तरणं ॥ क्रियते गुहाप्रवेशो । विहितादधिकं कुतस्तदपि ॥ २४ ॥ यद्येवं
तर्हि ये पुण्यरहितास्तैः किं पादौ प्रसार्य स्थातव्यं मर्तव्यं वा? एतदपि न. यतः—यद्यपि पुरुषा-
कारो । निरर्थको भवति पुण्यरहितानां ॥ त्यक्तव्यो नैवात्मा । यथोचितं तदपि करणीयं ॥ २६ ॥

सत्यसंधाः सदाचाराः । शुद्धशीलाः शुभाशयाः ॥ अत्यंतं स्तोकका नार्यो । दृश्यंतेऽनेकशो नराः ॥ ५० ॥ श्रूयते सर्वशास्त्रेषु । दृश्यंते च पुरादिषु ॥ सर्वत्र हीनका नार्यः । पुरुषाः पुनरुत्तमाः ॥ ॥ ५१ ॥ तदहो विषयासक्त—लोकानां हि विडंबनाः ॥ आकर्ण्यैवंविधा घोरा—स्त्यजत विषयानहो ॥ ५२ ॥ इति विषयाधिकारः समाप्तः. ॥ उक्तो विषयाधिकारः, विषयाश्च विवेकिभिरेव परिहर्तुं शक्यंते, इत्यतस्तदनंतरं विवेकाधिकार उच्यते, तत्रैते श्लोकाः—

॥ मूलम् ॥—विवेको निर्मलं चक्षु—रेकं यस्य महात्मनः ॥ तद्वद्भिः संगतिश्चैव । द्वितीयं चक्षुरुज्ज्वलं ॥ १ ॥ एतन्नेत्रयुगं यस्य । वस्तुसद्भावदर्शकं ॥ स दृष्टा परमार्थेन । शेषा अंधसमा नराः ॥ २ ॥ निर्विवेका न शस्यंते । जंतवः पशवो यथा ॥ विवेको हि परं रत्नं । सतां हृदयमंडनं ॥ ३ ॥ सततं तीव्रदुःखौघ—मंदारोद्दामवेगतः ॥ मथितस्य मनोंभोधे—रुत्पन्नं न कदाचन ॥ ॥ ४ ॥ विवेकसंज्ञितं रत्न—मनर्घ्येयमनुत्तरं ॥ सतां सदा समीपस्थ—महार्यं तस्करादिभिः ॥५॥ स्वदेशे च विदेशे च । ग्रामे मार्गे च गच्छतां ॥ रात्रौ दिवा च कंठस्थं । नृणां मंडनमुत्तमं ॥ ६ ॥ निर्विवेककृतं कार्यं । परिणामे न सुंदरं ॥ पाताय जायते नूनं । जात्यंधस्येव चेष्टितं ॥ ७ ॥ वि-

वेकदंडमादाय । मार्गमंधोऽपि लंघते ॥ वांछितं स्थानमाप्नोति । सुखानि च समश्नुते ॥ ८ ॥ असारे सारतावांछा । शत्रावपि च मित्रधीः ॥ मित्रेष्वमित्रताबुद्धि—र्निर्विवेकस्य लक्षणं ॥ ९ ॥ नमस्तस्मै विवेकाय । हृदयानंदकारिणे ॥ सद्गुणाय सुवृत्ताय । श्रेयसे हारहारिणे ॥ १० ॥ विवेकि दुर्लभं दानं । विवेकि दुर्लभं तपः ॥ विवेकि दुर्लभं शीलं । दुर्लभा कमलापि च ॥ ११ ॥ विवेकाद्भोगदेवेन । संपदः सफलीकृताः ॥ विवेकादेव तेनैव । त्यक्ताः प्रथमतश्च ताः ॥ १२ ॥ भव्या भक्तिर्भगवति जिने यत्सदा निःप्रकंपा । संसाराब्धेस्तरणतरिका सेवना यद्यतीनां ॥ यन्निर्लोभं हृदयमनघं यज्जयश्चेंद्रियाणा—मेतत्सर्वं शिवसुखफलं सद्विवेकस्य कार्यं ॥ १३ ॥ व्याख्या—अथ विवेक इति कः शब्दार्थः? उच्यते—इह वि विरु पृथग्भावे इत्यस्य धातोर्विपूर्वस्य विविच्यते पृथक्क्रियते आत्मप्रदेशेभ्यः सकाशाद् ज्ञानावरणीयाद्यष्टप्रकारं कर्मानेनास्मिन्निति वा विवेक इति. अकर्तरि च कारके संज्ञायामित्यनेन सूत्रेण करणाधिकरणयोर्घटते, ततश्च जोङ्गौ घुव्यानुबंधयोरित्यनेन सूत्रेण चकारस्थाने ककारः, नामिनश्चोपधाया लघोरित्यनेन च गुणे सति विवेक इति भवति. स च मतिश्रुतात्मको ज्ञानविशेष एवेह गृह्यते, तस्यैव हिंसाहिंसादिवस्तूनां

तन्नाथ मुंच देशांतरगमनाग्रहं, अत्रैव स्थीयतां, मा विषादः क्रियतां, क्रियतां स्वनूमिकानुसारेण
तथाविधः कोऽपि व्यवसाय इति. श्रुत्वा कलहकारिण्या । वचनं कलहप्रियः ॥ स्थितस्तत्रैव संय·
म्य । चेतो यात्रासमुत्सुकं ॥ २७ ॥ अर्थागमनिमित्तानि । ध्यायता द्विजपुत्रिका ॥ स्वल्पान्तरण·
लाभेन । मारिता तेन पापिना ॥ २९ ॥ अन्यदा क्लिष्टचित्तेन । तेन सा महिषासुरा ॥ महिषा·
सना महारौद्रा । दृष्टा नगरदेवता ॥ ३० ॥ पाषाणपिंडिकाहस्तः । प्रविष्टो देवतागृहे ॥ संनिलीनः
स्थितो याव—दंधकारो विजृंभितः ॥ ३१ ॥ शनैः शनैः समुत्थाय । प्रविश्याज्यंतरं ततः ॥ गृही·
त्वा दक्षिणे हस्ते । जणिता तेन देवता ॥ ३२ ॥ बंदिग्राहं गृहीतासि । देवि मे देहि संपदं ॥
नो चेदद्य शरीरं ते । खंमखंमं करोम्यहं ॥ ३३ ॥ देवता काष्टमौनेन । स्थिता क्षीणा च शर्वरी ॥
न दानं न निदानं च । खंडाखंमीकृता ततः ॥ ३४ ॥ मालाकारेण दृष्टोऽसौ । निर्गछन् देवतागृ·
हात ॥ यामिन्याः पश्चिमे यामे । मलयंप्रति गछता ॥ ३५ ॥ ततः संजातशंकेन । पौरलोकेन
शब्दितः ॥ पृष्टश्च किमिदं पाप । कलिप्रिय कृतं त्वया ॥ ३६ ॥ न कृतं चेत्तदा तूर्णं । प्रत्यापय
महाजनं ॥ जवता जवने देव्या । जषितं केन हेतुना ॥ ३७ ॥ न च यात्रामहः कोऽपि । न च

पूजा कृता त्वया ॥ एकाकी निर्गतस्त्वं हि । रजन्यां केन हेतुना ॥ ३८ ॥ भणतः पुरलोकस्य । किमहं वच्मि सन्मुखं ॥ भगवत्येव जानाति । यादृशं तादृशं स्फुटं ॥ ३९ ॥ एतत् श्रुत्वा च कोपांधा । प्रस्फुरदोष्टपल्लवा ॥ पूजकस्य जनी जाता । साधिष्ठाना सुदुर्धरा ॥ ४० ॥ जगाद पुरलोकस्य । पुरतः प्रकटाक्षरैः ॥ भग्ना ह्यनेन पापेन । देवता महिषासुरा ॥ ४१ ॥ बंदिग्राहं गृहीतासौ । याचितं विपुलं धनं ॥ अदत्तवचना देवी । ह्यनेनैवंविधा कृता ॥ ४२ ॥ ब्राह्मणपुत्रिका सापि । ह्यनेनैव निपातिता ॥ पातकी पापनामाय—मदृष्टव्यमुखः सतां ॥ ४३ ॥ ततश्च पुरलोकेन । बद्धोऽयं दृढबंधनैः ॥ नानाकारं विडंब्योच्चैः । प्रापितोंतकमंदिरं ॥ ४४ ॥ सारिकाह महाराज । श्रुतं पुरुषचेष्टितं ॥ अकृत्यकारिणः पापा । दूरस्थाः सुंदरा नराः ॥ ४५ ॥ शुक आह—ज्ञानं दानं क्षमा शौर्यं । सत्यशौचादयो गुणाः ॥ नरं विना निराधारा । निस्साराः सारिके स्त्रियः ॥ ४६ ॥ यद्यप्यत्र त्वया भद्रे । दृष्टांतत्वेन दर्शिताः ॥ दूरं दुष्कर्मकर्तारो । नरा धनंजयादयः ॥ ४७ ॥ तथापि स्तोकका एव । सारिके ईदृशा नराः ॥ ये निंद्यं निर्घृणं कर्म । कुर्वंति कुलजा अपि ॥ ४८ ॥ स्त्रियस्तु बहुधा बह्वयो । ग्रामे ग्रामे पुरे पुरे ॥ गृहे गृहे विलोक्यंते । क्रूरा दुःकर्मकारकाः ॥४९॥

सत्यसंधाः सदाचाराः । शुद्धशीलाः शुभाशयाः ॥ अत्यंतं स्तोकका नार्यो । दृश्यंतेऽनेकशो नराः ॥ ५० ॥ श्रूयते सर्वशास्त्रेषु । दृश्यंते च पुरादिषु ॥ सर्वत्र हीनका नार्यः । पुरुषाः पुनरुत्तमाः ॥ ॥ ५१ ॥ तदहो विषयासक्त—लोकानां हि विडंबनाः ॥ आकर्ण्यैवंविधा घोरा—स्त्यजत विषयानहो ॥ ५२ ॥ इति विषयाधिकारः समाप्तः. ॥ उक्तो विषयाधिकारः, विषयाश्च विवेकिभिरेव परिहर्तुं शक्यंते, इत्यतस्तदनंतरं विवेकाधिकार उच्यते, तत्रैते श्लोकाः—

॥ मूलम् ॥—विवेको निर्मलं चक्षु—रेकं यस्य महात्मनः ॥ तद्वद्भिः संगतिश्चैव । द्वितीयं चक्षुरुज्ज्वलं ॥ १ ॥ एतन्नेत्रयुगं यस्य । वस्तुसद्भावदर्शकं ॥ स दृष्टा परमार्थेन । शेषा अंधसमा नराः ॥ २ ॥ निर्विवेका न शस्यंते । जंतवः पशवो यथा ॥ विवेको हि परं रत्नं । सतां हृदयमंडनं ॥ ३ ॥ सततं तीव्रदुःखौघ—मंदारोद्दामवेगतः ॥ मथितस्य मनोंभोधे—रुत्पन्नं न कदाचन ॥ ॥ ४ ॥ विवेकसंज्ञितं रत्न—मनर्घ्येयमनुत्तरं ॥ सतां सदा समीपस्थ—महार्यं तस्करादिभिः ॥५॥ स्वदेशे च विदेशे च । ग्रामे मार्गे च गच्छतां ॥ रात्रौ दिवा च कंठस्थं । नृणां मंडनमुत्तमं ॥ ६ ॥ निर्विवेककृतं कार्यं । परिणामे न सुंदरं ॥ पाताय जायते नूनं । जात्यंधस्येव चेष्टितं ॥ ७ ॥ वि·

वेकदंडमादाय । मार्गमंधोऽपि लंघते ॥ वांछितं स्थानमाप्नोति । सुखानि च समश्नुते ॥ ८ ॥ अ-
सारे सारतावांछा । शत्रावपि च मित्रधीः ॥ मित्रेष्वमित्रताबुद्धि—र्निर्विवेकस्य लक्षणं ॥ ९ ॥ न-
मस्तस्मै विवेकाय । हृदयानंदकारिणे ॥ सद्गुणाय सुवृत्ताय । श्रेयसे हारहारिणे ॥ १० ॥ विवेकि
दुर्लभं दानं । विवेकि दुर्लभं तपः ॥ विवेकि दुर्लभं शीलं । दुर्लभा कमलापि च ॥ ११ ॥ वि-
वेकाद्भोगदेवेन । संपदः सफलीकृताः ॥ विवेकादेव तेनैव । त्यक्ताः प्रथमतश्च ताः ॥ १२ ॥ भ-
व्या भक्तिर्भगवति जिने यत्सदा निःप्रकंपा । संसाराब्धेस्तरणतरिका सेवना यद्यतीनां ॥ यन्निर्लो-
भं हृदयमनघं यज्जयश्चेंद्रियाणा—मेतत्सर्वं शिवसुखफलं सद्विवेकस्य कार्यं ॥ १३ ॥ व्याख्या—
अथ विवेक इति कः शब्दार्थः? उच्यते—इह वि विरु पृथग्भावे इत्यस्य धातोर्विपूर्वस्य विवि-
च्यते पृथक्क्रियते आत्मप्रदेशेभ्यः सकाशाद् ज्ञानावरणीयाद्यष्टप्रकारं कर्मानेनास्मिन्निति वा वि-
वेक इति. अकर्तरि च कारके संज्ञायामित्यनेन सूत्रेण करणाधिकरणयोर्घटते, ततश्च लोकणौ घु-
ट्यानुबंधयोरित्यनेन सूत्रेण चकारस्थाने ककारः, नामिनश्चोपधाया लघोरित्यनेन च गुणे सति
विवेक इति भवति. स च मतिश्रुतात्मको ज्ञानविशेष एवेह गृह्यते, तस्यैव हिंसाहिंसादिवस्तूनां

हेयोपादानद्वारेण समस्तार्थक्रियासार्थनिष्पत्तिहेतुत्वादिति, यत्र यस्यास्ति विवेकवद्भिः संगतिः स एव पश्यति, शेषास्तु परमार्थतोंधा एवेति दर्शयन् श्लोकद्वयमाह—विवेक इत्यादि, विवेक उक्त· शब्दार्थो निर्मलमुज्ज्वलं चक्षुर्लोचनमेकं यस्य महात्मनस्तद्वद्भिर्विवेकवद्भिः सह संगतिः संसर्गश्चे· त्येति समुच्चये, द्वितीयं चक्षुर्नयनमुज्ज्वलं विशदं, एतदुक्तलक्षणं नेत्रयुगं लोचनद्वयं वस्तुसद्भावद· र्शकं पदार्थपरमार्थप्रकाशकं, स द्रष्टा, स एव चक्षुः परमार्थेन, शेषा अंधसमा नरा इति. उक्तं च —एकं हि चक्षुरमलं सहजो विवेक—स्तद्वद्भिरेव सह संवसतिर्द्वितीयं ॥ एतद् द्वयं भुवि न य· स्य स तत्वतोंध—स्तस्याप्यमार्गचलने खलु कोऽपराधः ॥ १ ॥ १ ॥ २॥ अथ निर्विवेकानामश्ला· घ्यत्वं विवेकस्य च रत्नरूपत्वं दुर्लभत्वं च दर्शयन् श्लोकचतुष्टयमाह—निर्विवेका इत्यादि, निर्वि· वेका विवेकविकला न शस्यंते न श्लाघ्यंते जंतवो जीवाः, पशवो यथा अजादिपशव इव, विवे· को हि सद्बोधो हि परं प्रधानं रत्नं सतां सत्पुरुषाणां हृदयमंडनं हृदयालंकरणमिति, तथा सततम· नवरतं तीव्रदुःखौघ एव मंदरस्तस्योद्दामो वेगस्तस्मान्मथितस्य व्यलोडितस्य मनोंभोधेर्मनःसमुद्र· स्योत्पन्नं संजातं न कदाचिदपि, उक्तं च—अणवरयगुरुयदुक्खोह—मंदरुद्दामवेयमहियस्स ॥ त·

हवि तुह हियसार—विवेयरयणं न ज्ञलियं ॥ १ ॥ विवेकसंज्ञितमित्यादि श्लोकद्वयं स्पष्टमिति श्लोकचतुष्टयार्थः. ॥ ३–६ ॥ अथ विवेकाविवेकयोः फलमाविःकुर्वन् श्लोकद्वयमाह—निर्विवेककृतमित्यादि सुगमं चैतत. ॥ ७–८ ॥ अथ निर्विवेकलक्षणमाह—असारेऽसुंदरे सारता वांबा सुंदरत्वाभिलाषः, शत्रावपि रिपावपि मित्रधीः सुहृद्बुद्धिः, मित्रेष्वपि स्निग्धवयस्येष्वप्यमित्रबुद्धिः शत्रुबुद्धिरित्यर्थः, तदेतन्निर्विवेकस्य लक्षणमिति श्लोकार्थः. ॥ ए ॥ अथ विवेकमेव स्तुवन् श्लोकद्वयमाह—नमस्तस्मै इत्यादि स्पष्टं चैतत्. ॥ १०–११ ॥ अथ विवेकिन एव स्वसंपदः सफलीकुर्वंतीति दर्शयन् दृष्टांतमाह—विवेकादिति श्लोकः सुगमः. ॥ १२ ॥ अथ विवेकस्य कार्यं दर्शयन् वृत्तमाह—अन्येत्यादि, अन्या प्रधाना भक्तिराराधना भगवति समग्रैश्वर्ययुक्ते जने सर्वज्ञे यद्यस्मात् सदा सर्वदा निःप्रकंपा निश्चला संसाराब्धेर्भवसमुद्रस्य तरणतरिका परपारगमनप्रवणद्रोणिका,. सेवना पर्युपासना यद्यतीनां यत्साधूनां, यन्निःस्पृहं हृदयं चित्तमनवद्यं, यश्च निग्रहश्चेंद्रियाणां हृषीकाणां, एतत्पूर्वोक्तं सर्वं समस्तं शिवसुखफलं सिद्धिसौख्यफलं सद्विवेकस्य सद्बोधस्य कार्यं फलमिति. उक्तं च—यत्संतोषसुखं यदिंद्रियजयो यच्चेतसः शांतता । यज्जीवेषु दयालुता यदपि गीः सत्या-

मृतस्यंदिनी ॥ यद्दानं यदनार्यसंगविरतिर्यत्स्वंगतिः सज्जनै—रित्येतत्परिणामसुंदरफलाः सर्वे विवे·
कांकुराः ॥ १ ॥ इति श्लोकत्रयोदशकार्थः. ॥ १३ ॥ भोगदेवकथानकं पुनरिदं, तद्यथा—

अस्त्यत्र विश्वविख्याते । जंबूद्वीपस्य मध्यगे ॥ ग्रामाकरपुराकीर्णे । क्षेत्रे च भारताभिधे ॥
॥ १ ॥ स्वर्ग इव समुत्तुंगं । सुरवेश्मविराजितं ॥ चेतोहारिविभूत्याढ्यं । सुपर्वशतसुंदरं ॥ २ ॥
मेर्वासन्नधरित्रीव । भद्रशालोपशोभितं ॥ उत्तुंगशिखरोदार—जैनमंदिरमंडितं ॥ ३ ॥ समुद्रांभ
इवोदग्र—भूरिसत्वसमाकुलं ॥ विराजद्रत्नराजीभिः । समाकीर्णं समंततः ॥ ४ ॥ रसातलमिवोद्दा·
म—भोगभोगिशतान्वितं ॥ रामारामादिभी रम्यं । पुरं भोगपुराभिधं ॥ ५ ॥ पंचभिः कुलकं ॥
माणिक्यानि समादाय । स्थितमेतदिति क्रुधा ॥ यद्वेष्टितमिवाभाति । सिंधुना परिखाछलात ॥६॥
अभ्रंलिहानि शृंगाणि । बिभ्रत्प्राकारमंडलं ॥ खातिकांभोनिधिर्यत्र । वेदिकाविभ्रमं दधौ ॥ ७ ॥
यियासोः ककुभः कीर्ते—श्वतस्तोऽपि समं दधौ ॥ प्रस्थानपथसंस्थानं । यस्य द्वारचतुष्टयं ॥ ८ ॥
शुभ्राभ्रविभ्रमभ्राज—च्चारुरत्नचयांचिताः ॥ आलया यत्र भांतिस्म । न्यक्कृतत्रिदशालयाः ॥ ९ ॥
मनोरथातिगंधेन । सुदूराहूतमार्गणाः ॥ वसंति धनिनो यत्र । बहुस्पर्धाः परस्परं ॥ १० ॥ अदभ्र·

विभ्रमोपेता । हावभावान्विता बभुः ॥ मारवीरशरीभूता । यत्र रामा मनोरमाः ॥ ११ ॥ कलंको यत्र शीतांशौ । कोकिले परपुष्टता ॥ काठिन्यं स्त्रीकुचेष्वेव । पद्मनाले च कंटकाः ॥ १२ ॥ सुतारं हरिसंयुक्तं । सचित्रं मंगलालयं ॥ सकुंभं बुधसंशोभि । द्विजराजविराजितं ॥ १३ ॥ कन्याभिरा- ममुद्दाम—मकरमीनकेतुकं ॥ व्योमेव राजते यत्र । सुंदरं राजमंदिरं ॥ १४ ॥ सप्रभः सप्रतापश्च । जिततेजस्विमंडलः ॥ यत्र सूर्य इवारेजे । राजा राजतुरंगमः ॥ १५ ॥ बभूव यत्र सद्भोग्यो—द- ग्रसौभाग्यसंयुतः ॥ सुभोगो भोगदेवाख्यः । सार्थवाहो महाधनः ॥ १६ ॥ शुचिस्त्यागी च भोगी च । कृतज्ञः सुकृती कृती ॥ सदाशयः सदाचारः । सत्यवादी प्रियंवदः ॥ १७ ॥ कृतार्थीकृतसर्वार्थि —सार्थनानामनोरथः ॥ बभार भारताभोगे । यः कल्पतरुकल्पतां ॥ १८ ॥ दधानो वक्षसा ल- क्ष्मीं । गतः सत्यानुरागितां ॥ अनंतभोगसंगेन । यो दध्यावच्युतश्रियं ॥ १९ ॥ अभूद्भोगवतीना- म । तस्य भार्या प्रियंवदा ॥ सौभाग्यदानदाक्षिण्य—दयादिगुणसंयुता ॥ २० ॥ स्वबंधुकुमुदानंद —प्रदानोज्ज्वलचंद्रिका ॥ सत्यसूनृतसुश्रव्य—सद्वाक्यामृतकूपिका ॥ २१ ॥ विशालशीलसंपन्ना । विशालवरवंशजा ॥ पद्मपत्रविशालाक्षी । सुविशालमनोरथा ॥ २२ ॥ त्रिभिर्विशेषकं ॥ यस्याः सु-

निर्मलज्ञान—दीप्रप्रदीपरोचिभिः ॥ मिथ्यात्वविततध्वांतं । ध्वंसितं स्वांतवेश्मनः ॥ २३ ॥ यस्या·
श्रितमहीपीठे । सर्वदोषविवर्जिते ॥ सिक्ते जैनागमांभोद—वाक्यनिर्मलवारिभिः ॥ २४ ॥ दृढस·
म्यक्त्वसन्मूलः । सद्ज्ञानस्कंधसंयुतः ॥ पंचाणुव्रतविस्तारि—मूलशाखाविराजितः ॥ २५ ॥ सप्त·
शिक्षाव्रतोद्दाम—प्रशाखासंचयांचितः ॥ विविधाभिग्रहप्राज्य—प्रोल्लसत्पल्लवाकुलः ॥ २६ ॥ संवे·
गादिगुणग्राम—विकासिकुसुमोत्करः ॥ स्वर्गादिसौख्यसुस्वाद—सुप्रशस्तफलप्रदः ॥ २७ ॥ सक·
लोपाधिसंशुद्धः । शुक्लपक्षनिषेवितः ॥ श्रावकधर्मसद्वृक्षः । प्ररुरोह मनोहरः ॥ २८ ॥ पंचभिः कु·
लकं ॥ जिनेंद्रपूजने सक्ता । रक्ता सर्वज्ञशासने ॥ भक्ता सुसाधुलोकेषु । विरक्ता भववासतः ॥
॥ २९ ॥ विज्ञा सद्धर्मकार्येषु । वत्सला धार्मिके जने ॥ स्त्रीजनोचितनिःशेष—कलाकौशलशा·
लिनी ॥ ३० ॥ मुक्तावलीव सच्छाया । सुनारगुणराजिनी ॥ सरला च सुवृत्ता च । जनतानंदका·
रिणी ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ तया सार्धं सदौदार्य—धैर्यगांभीर्ययुक्तया ॥ संपद्यमाननिःशेष—
मनोवांछितसंपदा ॥ ३२ ॥ सुरेंद्रस्येव सद्भोगान् । भुंजानस्य सुरालये ॥ प्रकामं भोगदेवस्य । व्य·
तिक्रामंति वासराः ॥ ३३ ॥ युग्मं ॥ बन्धुवान्योऽपि तत्रैव । श्रीदेवाख्यो धनेश्वरः ॥ अनेकधनको·

टीनां । स्वामी विख्यातकीर्तिकः ॥ ३४ ॥ तेनाचिंति यथेयं श्रीः । सर्वकल्याणकारिका ॥ व्यापद्व-
ल्लीवितानस्य । सच्छेदनकुठारिका ॥ ३५ ॥ इयं हि प्राणिनां लक्ष्मी—र्गुरुताकरणं वरं ॥ हेतुर्नि-
र्मलकीर्तीनां । जयश्रीणां शुभाश्रयः ॥ ३६ ॥ सुजातिकुलहीनोऽपि । कुरूपोऽपि जडोऽपि हि ॥
मूकोऽपि हीनसत्वोऽपि । विचक्षुर्बधिरोऽपि हि ॥ ३७ ॥ अस्पृश्योऽपि जघन्योऽपि । क्लीवोऽपि कृप-
णोऽपि हि ॥ निर्गुणोऽपि श्रियायुक्तः । शोभते भुवि मानवः ॥ ३८ ॥ युग्मं ॥ जातिः कुलं कु-
लाचाराः । सर्वे रूपादयो गुणाः ॥ एकयैव श्रिया हीना—स्तृणायंते हि देहिनां ॥ ३९ ॥ तदहं
प्रतिमामस्या । लक्ष्म्या लक्षणसंयुतां ॥ सर्वरत्नमयीं रम्यां । कारयित्वा वराकृतिं ॥ ४० ॥ विनिवे-
श्य गृहस्यांतः । स्फुरद्रत्नविराजिनीं ॥ आलिके सर्वसौवर्णे । मुक्ताफलसुमंडिते ॥ ४१ ॥ तदेना-
मेकचित्तेन । त्रिसंध्यमपि सादरं ॥ पूजये वस्त्रपुष्पाद्यैः । सर्वैः सुंदरवस्तुभिः ॥ ४२ ॥ त्रिभिर्वि-
शेषकं ॥ एवं विचिंत्य चित्तेऽसौ । श्रीदेवः कृतनिश्चयः ॥ तथैव सत्वरं चक्रे । निःशेषं निजवांछि-
तं ॥ ४३ ॥ ततस्तां प्रतिमामेष । स्नपयित्वा प्रयत्नतः ॥ कर्पूरकुंकुमोन्मिश्र—सौगंधोध्धुरवारिभिः
॥ ४४ ॥ चारुचंदनसध्धूप—सद्गंधकुसुमादिभिः ॥ त्रिसंध्यं सादरं भक्त्या । प्रत्यहं पर्यपूजयत ॥

॥ ४५ ॥ युग्मं ॥ इत्थं संपूज्य पंचागं । प्रणामं प्रविधाय च ॥ कृत्वा पाणी ललाटस्थौ । लक्ष्मीमेवं सुतुष्टुवे ॥ ४६ ॥ जय त्वं देवि निःशेष—मर्त्यामरार्चितक्रमे ॥ जय त्वं सर्वलोकस्य । स्पृहणीयगुणव्रजे ॥ ४७ ॥ त्वं देवि परमाराध्या । त्वं मे परमदेवता ॥ त्वं मे माता पिता बंधु—स्त्वं स्वामी त्वं च मे गुरुः ॥ ४८ ॥ त्वदायत्ता हि जीवानां । सर्वा सौख्यपरंपरा ॥ त्वदायत्तं महाराज्यं । सर्वसंपत्तिसुंदरं ॥ ४९ ॥ त्वदायत्ता रणे देवि । प्ररूढानां जयश्रियः ॥ त्वदायत्ता हि कीर्तिश्च । त्वदायत्ता गुणाः समे ॥ ५० ॥ देवानां दानवानां च । मर्त्यानां व्योमचारिणां ॥ त्वं वंद्या पूजनीया च । श्लाघनीया सुखप्रदा ॥ ५१ ॥ स एव सुभगो लोके । सुरूपः शिष्टसंमतः ॥ मेधावी पंडितो धीमान् । शूरो धीरः कलालयः ॥ ५२ ॥ स एव जगति स्वामी । स एवेह गुणाश्रयः ॥ यस्त्वया स्वामिनि प्राणी । दृष्टः सानंदया दृशा ॥ ५३ ॥ त्वं मे देवि परं तत्वं । त्वमेवाभीष्टदेवता ॥ त्वमेव मम सर्वस्वं । त्वमेव मम जीवितं ॥ ५३ ॥ नाहमन्यं स्तुवे देवि । नान्यमभ्यर्चयाम्यहं ॥ नाहमन्यं विमुच्य त्वां । मनसापि विचिंतये ॥ ५४ ॥ त्वयि चाराधितायां हि । नित्यं खलु सुभक्तितः ॥ समग्राण्यपि सौख्यानि । करस्थानीह देहिनां ॥ ५५ ॥

इत्यादि समभिष्टुत्य । महालक्ष्मीं सभक्तिनः ॥ विरराम निजात्मानं । मन्यमानः कृतार्थकं ॥ ५६ ॥ इत्थं त्रिसंध्यमप्यस्य । श्रीदेवस्य महाश्रियं ॥ भक्त्याराधयतो नित्यं । गतः कालः कियानपि ॥ ५७ ॥ प्रविलोक्यान्यदा लक्ष्मीं । हसंतीं तत्र हेलया ॥ श्रीदेवो विस्मयापन्नो । विषण्णस्तामभाषत ॥ ५८ ॥ किमित्यद्य त्वया देवि । मामालोक्य प्रहस्यते ॥ कथ्यतां मे प्रसादेन । यद्यकथ्यमिदं न हि ॥ ५९ ॥ तयोदितमहो मुग्ध । हसामि तव चेष्टितं ॥ स प्राह कीदृशं देवि । सावोचदवधार्यतां ॥ ६० ॥ कथं त्वं नोपहास्योऽसि । कथं त्वं नैव मुग्धकः ॥ लोकधर्मविरुद्धं वा । कथं न क्रियते त्वया ॥ ६१ ॥ यस्त्वं सर्वगुणोपेतान् । सर्वसत्वहितावहान् ॥ सुरासुरनराधीश—विद्याधरनतक्रमान् ॥ ६२ ॥ सर्वकर्मक्षयोद्भूत—परमानंदकारकान् ॥ देवेंद्रादिकृतस्फार—चारुपूजांस्तथार्हतः ॥ ६३ ॥ त्यक्त्वार्हत्प्रमुखान् देव—विशेषानतिमूढधीः ॥ प्रपूजयसि मामेका—मिहलोकसुखार्थिकः ॥ ६४ ॥ त्रिभिर्विशेषकं ॥ न चेत्तत्त्वं विजानासि । यथाहं न स्थिरा क्वचित् ॥ भवामि सुभगस्यापि । सत्पूजाद्युपचारतः ॥ ६५ ॥ सत्वस्य निर्गुणस्यापि । पुण्यैरेव पुरा कृतैः ॥ भवामि स्थेयसी भद्र । नान्यथेत्यवधार्यतां ॥ ६६ ॥ श्रीदेवोऽपि ततः प्राह । भक्तिनिर्भरमानसः ॥

ललाटदेशविन्यस्त—प्रोल्लासिकरसंपुटः ॥ ६७ ॥ किमेवमुच्यते देवि । त्वमेव मम देवता ॥ त्रा· णमालंबनं चैव । जीवितं जीवितप्रदा ॥ ६८ ॥ त्यक्तान्यदेवतस्येह । त्वामाराधयतो ध्रुवं ॥ सद्ब· त्यैकाग्रचित्तेन । यद्भवति तदस्तु मे ॥ ६९ ॥ ततो विशेषतस्तस्य । तामेवार्चयतः सदा ॥ संत्य· क्तशेषदेवस्य । व्यतिक्रामंति वासराः ॥ ७० ॥

अन्यस्मिंश्च दिने दृष्ट्वा । श्रियं श्यामीकृताननां ॥ पप्रच्छोद्विग्नचित्तोऽसौ । संयोज्य करसंपुटं ॥ ७१ ॥ श्यामीकृतमुखांभोजा । वहंती खेदमुच्चकैः ॥ लक्ष्यसे विश्वसंपूज्ये । स्वामिनि किमु का· रणं ॥ ७२ ॥ तयोक्तं तव संजातो । योऽयं संप्रति दारकः ॥ स निर्भाग्यो निशदेयो । सर्वथाप्य· पलक्षणः ॥ ७३ ॥ अतोऽहं तावकं गेहं । त्यक्तुमिच्छामि सत्वरं ॥ तेनाहं खेदमापन्ना । त्वद्वियो· गाभिशंकया ॥ ७४ ॥ श्रुत्वेदं सविषादेन । श्रीदेवेन प्रभाषितं ॥ मुक्त्वा च मामकं गेहं । देवि त्वं कुत्र यास्यसि ॥ ७५ ॥ तयोक्तं भोगदेवस्य । सार्थवाहस्य मंदिरे ॥ वास्तव्यस्य पुरेऽत्रैव । त· त्पुण्याकृष्टमानसा ॥ ७६ ॥ अथ क्रमाद्गता सापि । भोगदेवस्य मंदिरे ॥ श्रीदेवस्य गृहं मुक्त्वा । चंचलत्वस्वभावतः ॥ ७७ ॥ रत्नस्वर्णादिसंपूर्णं । सर्वतोऽपि स्वमंदिरं ॥ दृष्ट्वा भोगवतीं प्राह । भो·

गदेवो गतस्मयः ॥ ७८ ॥ प्रिये दीनादिसत्वेभ्यो । देहि दानं यदृच्छया ॥ उपभुंक्ष्व समं सर्वै—
रिमां लक्ष्मीं स्वबंधुभिः ॥ ७९ ॥ यदेषा नैव कस्यापि । संजाता स्थेयसी भुवि ॥ सद्गुणस्यापि स-
त्वस्य । प्रकृत्यैवातिचंचला ॥ ८० ॥ श्रुत्वा वाक्यमिदं भर्तुः । सापि सानंदमानसा ॥ नाथैवं प्रक-
रोमीति । प्रतिपन्नं तथा तया ॥ ८१ ॥ एवं संप्रेरिता भर्त्रा । भार्येयं दानशूरिका ॥ दातुं भोक्तुं
समारब्धा । यथेष्टं सा निजश्रियं ॥ ८२ ॥ तस्येत्थं भोगदेवस्य । याति कालं यथासुखं ॥ जैनं
दानादिकं धर्मं । कुर्वता प्रियया सह ॥ ८३ ॥ श्रीदेवोऽपि श्रिया मुक्तो । मुक्तः सर्वगुणैरपि ॥
सर्वस्यापि च लोकस्य । जातः परिभवास्पदं ॥ ८४ ॥ ततस्तेन समारब्धा । नानारंभा धनार्थिना
॥ षंढपोषणवाणिज्य—समुद्रतरणादयः ॥ ८५ ॥ परं सर्वेऽपि ते तस्य । निष्फला एव जज्ञिरे ॥
यत्नतोऽपि यथा बीज—मुप्तं खलूषरावनौ ॥ ८६ ॥ व्यवसायपरोऽप्येवं । यतमानोऽप्यहर्निशं ॥ ला-
भं कुत्रापि नो प्राप । परं खेदमवाप सः ॥ ८७ ॥ धनाकांक्षी ततो गाढ—मितश्चेतश्च पर्यटन् ॥
सर्वत्र निष्फलारंभो । नाशितवान् गृहाद्यपि ॥ ८८ ॥ ततोऽतिक्षीणपुण्यस्य । श्रीदेवस्य सुदुस्तरं ॥
महापराभवस्थानं । दारिद्र्यं समजायत ॥ ८९ ॥ अथासौ सर्वलोकेन । सर्वव्यवहारेष्वलं ॥ देव-

भूपादिगेहेषु । सर्वत्र परिभूयते ॥ ९० ॥ पुत्रमित्रकलत्राणि । सर्वे स्वजनबांधवाः ॥ भृत्याः कर्मकराश्चैव । तस्यावज्ञां प्रचक्रिरे ॥ ९१ ॥ यतः—लज्जंते बांधवास्तस्य । संबंधं गोपयंति च ॥ न भजंते यथा पूर्वं । यस्य स्तोकाः कपर्दकाः ॥ ९२ ॥ किंच—गरुयावि गुणा गुण—वंतयाण दलिद्दतमभरकंति ॥ अब्बजोएण विणा । पयडावि न पायमा होंति ॥ ९३ ॥ दालिद्दय तुम्ह गुणा । गइज्जंतावि धीरपुरिसेहिं ॥ पाहुणएसु भणेसु य । वसणेसु य पायमा होंति ॥ ९४ ॥ दालिद्दपरिभवो । परिभवाण सव्वाण चेव जेठ्यरो ॥ जीवंतावि हु जेणिह । मयव्व पुरिसा गणिज्जंति ॥ ॥ ९५ ॥ अन्यच्च—उद्यमः साहसं धैर्यं । व्यवसायः पराक्रमः ॥ सर्वोऽपि च समारंभो । निष्पुण्यस्येह निष्फलः ॥ ९६ ॥ स्वल्पोऽपि च समारंभो । निःसत्वस्यापि देहिनः ॥ संपूर्णपुण्ययोगेन । जायते हि महाफलः ॥ ९७ ॥ किंच—धनेन विकलो यस्मा—न्नार्थं किंचन साधयेत् ॥ समग्रगुणयुक्तोऽपि । निंदाभाक्केवलं भवेत ॥ ९८ ॥ भारवाहादिकां कुर्वन् । वरमर्थक्रियां पशुः ॥ न पुनर्धनहीनस्य । मानुषत्वं वरं क्वचित् ॥ १०० ॥ कुलीनोऽपि सुजात्योऽपि । विनीतो रूपवानपि ॥ शूरश्च चतुरोऽप्यत्र । वित्तहीनस्तृणायते ॥ १ ॥ अकुलीनोऽपि मूर्खोऽपि । कुरूपोऽप्यगुणोऽपि

च ॥ अर्थवान् पूज्यते लोके । धिगर्थरहितं नरं ॥ २ ॥ अथासौ भोगदेवोऽपि । भूरिधान्यादिसंप-
दा ॥ सर्वत्र पुण्ययोगेन । ववृधे प्रतिवासरं ॥ ३ ॥ ततश्चाशेषदीनादि—साधुसाधर्मिकादिके ॥ ध-
र्मस्थाने विशेषेण । निजं द्रव्यं स दत्तवान् ॥ ४ ॥

अन्यदा च समायातो । नगरे तत्र केवली ॥ सूर्य इव स्फुरद्भाभिः । संदेहतिमिरापहः ॥
॥ ५ ॥ ततस्तस्य गता लोका । बहवो वंदनाकृते ॥ भोगवत्या समं तत्र । भोगदेवोऽपि चागमत्
॥ ६ ॥ ततः केवलिनाकारि । संवेगरसदायिका ॥ संदेहशतसंछेत्री । पर्षदि धर्मदेशना ॥ ७ ॥
अथ प्रस्तावमासाद्य । भोगदेवोऽब्रवीदिदं ॥ सुपात्रदत्तदानस्य । किं फलं जायते नृणां ॥ ८ ॥
जगाद केवली भद्र । फलं सद्दानजं त्वया ॥ विशालशालवास्तव्यो । दौर्गत्यज्वरपीडितः ॥ ९ ॥
दुर्गतकपताकाख्यः । पृष्टव्यः प्रश्नकारकः ॥ गृहे संचयशीलस्य । सार्थवाहस्य कर्मकृत् ॥ १० ॥ इ-
त्यादि केवली धर्मं । कथयित्वा ततः स्थितः ॥ लोकोऽपि निजकस्थाने । जगामानंदनिर्भरः ॥११॥
कतिचिद्दिनपर्यंते । ययावन्यत्र केवली ॥ भव्यांभोजप्रबोधाय । विवस्वानिव सभ्रमः ॥ १२ ॥ अ-
न्यदा भोगदेवोऽपि । भोगवत्या समं ययौ ॥ पुरे विशालशालाख्ये । दानफलपिपृच्छया ॥ १३ ॥

दृष्टा प्रविशता तत्र । कथंचिद्दैवयोगतः ॥ दुर्गतकपताकस्य । गेहिनी दुर्गिलाभिधा ॥ १४ ॥ सं·
पृष्टा च यथा भद्रे । कुत्र स्थानेऽत्र पत्तने ॥ श्रीमत्संचयशीलस्य । सार्थवाहस्य मंदिरं ॥ १५ ॥
तया प्रहृष्टयाभाणि । समागच्छत दर्शये ॥ जग्मुर्दृष्टं च तद्गृहं । पूर्णं च सुंदरश्रिया ॥ १६ ॥ भा·
र्यां संचयशीलस्य । नामतो धनसुंदरीं ॥ पप्रच्छ च यथा भद्रे । समस्त्यत्र गृहे तव ॥ १७ ॥ दुर्ग·
तकपताकाख्यो । युष्मत्कर्मकरः स्फुटं ॥ तया प्रोक्तमहो श्रेष्ठिन् । बभूवासौ गृहे मम ॥ १८ ॥ यु·
ग्मं ॥ नवमो वर्तते मासो । मृतस्यास्य तु सांप्रतं ॥ इत्युक्त्वा धनसुंदर्या । पृष्टं किं ते प्रयोजनं ॥
॥ १९ ॥ केवलिप्रोक्तवृत्तांतं । सोऽपि तस्यै न्यवेदयत ॥ अत्रांतरे समायातो । धनी संचयशील·
कः ॥ २० ॥ दर्शितं च ततस्तेन । भोगदेवस्य सुंदरं ॥ गेहमेकं ततस्तत्र । तस्थौ सोऽपि निरा·
कुलः ॥ २१ ॥ अन्यस्मिंश्च दिने शस्ते । प्रसूता धनसुंदरी ॥ द्योतयंतं दिशां चक्रं । सुरूपं चारु·
दारकं ॥ २२ ॥ वर्धापितस्ततो गत्वा । दास्यासौ सार्थवाहकः ॥ सोऽपि व्ययतः संभीतो । मौन·
मालंब्य संस्थितः ॥ २३ ॥ विलक्षवदना दासी । निरानंदा न्यवर्तत ॥ गेहतः सार्थवाहोऽपि । नि·
र्ययौ सहसा बहिः ॥ २४ ॥ अन्यदा धनसुंदर्या । सोपालंभमभाण्यसौ ॥ अपुत्राया अयं जातः ।

पुत्रो बृहन्मनोरथैः ॥ २५ ॥ अत्यंतं त्वं पुनर्लोभाद् । द्रविणव्ययभीरुकः ॥ न ददासि न चाश्ना-
सि । सदपीदं गृहे धनं ॥ २६ ॥ किमनेन करोषि त्वं । भुवो भारविधायिना ॥ पुत्रजन्मोत्सवेऽ-
पीह । यदेतन्नोपयुज्यते ॥ २७ ॥ अहो एषा न जानाति । यत्कष्टं द्रविणार्जने ॥ मूर्खेयं भिन्नचि-
त्ता च । मुग्धा वै मम गेहिनी ॥ २८ ॥ इत्यादि चिंतयन्नेष । आर्त्तध्यानवशं गतः ॥ गमयित्वा
दिनं रात्रौ । मृत्वार्थव्ययभीरुकः ॥ २९ ॥ तत्रैव नगरे जातो । नागिलदुर्गतांगजः ॥ आजन्म-
तोऽप्यनिष्टश्च । मातुरप्यपपुण्यकः ॥ ३० ॥ क्लेशेन महता कालं । निर्वाहयति दुःखितः ॥ आक्रो-
श्यमानो मात्रापि । खानपानविवर्जितः ॥ ३१ ॥ ततश्च धनसुंदर्या । स्वभर्तुर्मृतकर्मसु ॥ विहि-
तेषु यथायोगं । बंधुसंबंधिभिः सह ॥ ३२ ॥ समये च कृतं नाम । दारकस्य विशोकया ॥ संमतं
बंधुवर्गस्य । धनदत्त इति स्फुटं ॥ ३३ ॥ स पुनर्दारको दृष्ट्वा । तन्मंदिरं जनं च तं ॥ जातजाति-
स्मरज्ञानः । परिकंपितकंधरः ॥ ३४ ॥ ऊर्ध्वीकृतकरस्तोषा—देकाक्येवाब्रवीदिदं ॥ अहो सुपात्र-
दानस्य । प्रपश्यत महाफलं ॥ ३५ ॥ युग्मं ॥ येनाहं दुर्गतो भूत्वा । प्रेष्यकर्मकरोऽपि हि ॥ त्र-
योदशार्थकोटीनां । जातः सांप्रतमीश्वरः ॥ ३६ ॥ एवं जल्पंतमालोक्य । सप्रमोदं दिने दिने ॥

पप्रच्छ भोगदेवस्तं । विस्मयापन्नमानसः ॥ ३७ ॥ अहो वत्स क एतस्य । भावार्थो जल्पितस्य ते ॥ तेनोक्तं कथयाम्येष । सावधानमनाः शृणु ॥ ३८ ॥

अत्रैवाहं पुरे रम्ये । तातस्यैव च मंदिरे ॥ दुर्गतकर्पताकाख्यः । ख्यातः कर्मकरोऽभवं ॥ ॥ ३९ ॥ महर्षिदानमाहात्म्या—देतस्यैव च मंदिरे ॥ सर्वस्य नायको जात—स्तेनैवं प्रवदाम्यहं ॥ ४० ॥ श्रुत्वेदं भोगदेवस्य । तस्मिन् केवलिभाषिते ॥ जातः संप्रत्ययो बाढं । दाने च बहुमानतः ॥ ४१ ॥ प्रविवेशान्यदा तत्र । भिक्षार्थं मुनिरेककः ॥ गुणंधराभिधानस्तु । तमद्राक्षीच्च बालकं ॥ ४२ ॥ उक्तवांश्च यथा भद्र । किमेवं हर्षनिर्भरः ॥ जातोऽहमस्य गेहस्य । नायक इति भाषसे ॥ ४३ ॥ नैकांतेन प्रहर्षोऽपि । कर्तव्यः कापि वस्तुनि ॥ रंकोऽपि जायते राजा । याति राजापि रंकतां ॥ ४४ ॥ यतो यस्ते पिता भद्र । संचयशीलनामकः ॥ अदत्ताभुक्तवित्तौघः । सत्यप्यर्थेऽपि दुर्गतः ॥ ४५ ॥ स मृत्वा नागिलाह्वस्य । रोरस्याजनि पुत्रकः ॥ मातापितृजनद्वेष्यो । लोकानां च विशेषतः ॥ ४६ ॥ अप्राप्तभोजनाह्लादो । वेदनां वेदयन्नसौ ॥ नरकप्रतिरूपां च । गमयामास वासरान् ॥ ४७ ॥ अतो हर्षविषादौ हि । वर्तेते भुवि देहिनां ॥ सममेवेति संजल्प्या—

गतः साधुर्यथागतं ॥ ४८ ॥ श्रुत्वेदं धनसुंदर्या । समाहूय स नागिलः ॥ प्रोक्तः कार्यं त्वया कर्म
। मद्गृह एव सर्वदा ॥ ४९ ॥ अयं च दारकः सम्य—क्पालनीयः प्रयत्नतः ॥ भोजनाद्यहमेवा-
स्मै । प्रदास्यामि यथोचितं ॥ ५० ॥ एषोऽपि गुरुको जात—स्तिष्ठन्नत्रैव मद्गृहे ॥ मदीयसर्वक-
र्माणि । कृष्यादीनि करिष्यति ॥ ५१ ॥ नागिलोऽपि सपत्नीक—स्तद्वाक्यं प्रतिपन्नवान् ॥ ततस्त-
स्या गृहे कर्म । कुर्वतो यांति वासराः ॥ ५२ ॥ अन्यदा भोगदेवोऽपि । सुखं सुप्तो गृहे निशि ॥
॥ शृणोति स्त्रीयुगस्योच्चैः । संलापं कौतुकावहं ॥ ५३ ॥ तत्रैका च वदत्येवं । का भद्रे त्वमिहाग-
ता ॥ साप्यवोचदहं लक्ष्मी—र्भोगदेवगृहाश्रिता ॥ ५४ ॥ आद्या प्राह तव क्षेमं । द्वितीयेदं ततो-
ऽवदत् ॥ दानभोगादिकृत्येषु । भोगदेवेन भोगिना ॥ ५५ ॥ नित्यं व्यापार्यमाणायाः । कौतस्त्यं
मे सुखं सखि ॥ इत्यावेद्य तया पृष्टं । त्वं तु कुत्रावतिष्ठसे ॥ ५६ ॥ युग्मं ॥ सा प्राह सखि ति-
ष्ठामि । संचयशीलवेश्मनि ॥ आद्याह सुखवासस्ते । द्वितीया प्राह नो सखि ॥ ५७ ॥ यतस्तिष्ठा-
मि निक्षिप्ता । नित्यमत्यंतभीषणे ॥ अंधकारे महागर्ते । चारक इव बंदिनी ॥ ५८ ॥ अतः कुतः
सुखावासः । कुतो निद्रा कुतो धृतिः ॥ अदृष्टसूर्यचंद्राया । वसंत्या मम गर्तके ॥ ५९ ॥ आकर्ण्य-

दं ततश्चित्ते । भोगदेवेन चिंतितं ॥ अहो सुदुःखिते एते । दूरं द्वे अपि तिष्टतः ॥ ६० ॥ अहो लोकेऽत्र नैवास्याः । करिकर्णचलश्रियः ॥ स्थिरीकरणतोपायः । कोऽपि कुत्रापि विद्यते ॥ ६१ ॥ नेयं शौचेन संसाध्या । न भक्त्या न पराक्रमैः ॥ न दानतो न पूजातः । न चैवोद्यमसाहसैः ॥ ॥ ६२ ॥ इयं हि स्थेयसी नैव । लक्ष्मीः कस्यापि भूतले ॥ दातुस्तृष्णापरस्यापि । त्यागिनो भोगिनोऽपि वा ॥ ६३ ॥ तदेषा यावदद्यापि । मां सहसा न मुंचति ॥ एतामेव चलां ताव—त्संत्यजामि चलश्रियं ॥ ६४ ॥

इत्यादि वहु संचिंत्य । कृतसामग्रीकः प्रगे ॥ गतो भोगपुरे शीघ्रं । विशुद्धाध्यवसायभृत ॥ ॥ ६५ ॥ ततः कृत्वा जिनेंद्राणां । सुसाधूनां च पूजनं ॥ दत्वा दीनादिदानं च । संभाष्य च सुहृज्जनं ॥ ६६ ॥ भोगदत्ताभिधं पुत्रं । विधाय गृहचिंतकं ॥ प्रातर्दीक्षां जिनोद्दिष्टां । गृहीष्यामीति चिंतयन् ॥ ६७ ॥ सुप्तो रात्रौ श्रिया प्रोक्तो । भोगदेवः सखेदया ॥ अहो अहं त्वया दत्ता । प्रयुक्ता च यथेप्सितं ॥ ६८ ॥ त्यक्ताहमत्यजंत्येव । त्वया विद्वन् विवेकिना ॥ त्वद्वांछितं करिष्यामि । तस्मान्मामीश मा मुच ॥ ६९ ॥ चतुर्भिः कलापकं ॥ मत्पुत्रेण समं सम्य—ग्वर्तितव्यं त्व·

या सदा ॥ एवमीश करिष्येऽह—मित्युक्त्वा श्रीस्ततो गता ॥ ७० ॥ द्वितीयदिवसे सार्धं । भोग-
वत्या विभूतितः ॥ गृहीता भोगदेवेन । दीक्षा सद्गुरुसन्निधौ ॥ ७१ ॥ परिपाल्य चिरं चारु । निः-
कलंकं निजं व्रतं ॥ विहिताराधनो मृत्वा । सर्वार्थसिद्धिमाप सः ॥ ७२ ॥ भोगवत्यपि तत्रैव । स-
मुत्पन्ना शुभोदयात् ॥ ततश्च्युत्वा प्रयास्यंती । निर्वाणपुरमुत्तमं ॥ ७३ ॥ अथ तस्य तया लक्ष्म्या ।
मुक्तस्याशुभयोगतः ॥ श्रीदेवस्य महारौद्र—दारिद्र्यार्दितचेतसः ॥ ७४ ॥ अत्रांतरे मृतः पुत्रः ।
स निःपुण्योपलक्षणः ॥ ततः श्रीरपि तद्गृहे । प्रादुर्भूता पुनर्भृशं ॥ ७५ ॥ युग्मं ॥ ततस्तदेव पू-
ज्यत्वं । लोके सैव च मान्यता ॥ यतो विभव एवेह । पूज्यते नहि मानवः ॥ ७६ ॥ अथान्यदा
रजन्यां तु । सुप्तो वरपर्यंकके ॥ रुदंतीं ललनां दृष्ट्वा । तामपृच्छत्स विस्मितः ॥ ७७ ॥ भद्रे का त्वं
किमर्थं वा । रोदिष्येवं सुदुःखिता ॥ तया प्रोक्तमहं लक्ष्मी—र्वास्तव्या तव मंदिरे ॥ ७८ ॥ रो-
दितव्ये पुनः श्रेष्ठिन् । सदा सद्भोगकारकः ॥ अतर्कितो ममाकांडे । त्वद्वियोगोऽत्र कारणं ॥ ७९ ॥
यतो येयं त्वया भार्या । परिणीता द्वितीयका ॥ सर्वपुण्यविनिर्मुक्ता । नूनं लक्ष्मीसुदुर्भगा ॥ ८० ॥
न तया सममेकत्र । वासो मेऽस्ति कदाचन ॥ इत्युक्त्वा तत्क्षणादेव । जगाम श्रीरदर्शनं ॥ ८१ ॥

भूयोऽपि तस्य दारिद्र्यं । तदेवोच्चैरजायत ॥ तदेव लाघवं लोके । स एव च पराभवः ॥ ८२ ॥
होऊण अहंतीए । लच्छीए माणमलणदच्छीए ॥ सिरिदेवो सयलजणे । विम्मविओ णेगहा काउं ॥
॥ ८३ ॥ अब्भत्थिया न थक्कइ । सोयं न गणेइ सेवइ दायारं ॥ रुसइ रक्खिज्जंती । भिम्मणमहि·
ला य लच्छी य ॥ ८४ ॥ अणुकूलं चिय भुंजइ । मज्झं न करेइ गरुयपडिबंधं ॥ परपुरिसासत्तम·
णं । मुचइ लच्छीं च महिलं च ॥ ८५ ॥ रक्खंतस्स विरुद्धा । संचयसीलस्स भोगदेवस्स ॥ दिंत·
स्सुभ्भोगपरा—णयस्सवि वरं मुहा जाया ॥ ८६ ॥ जो संतंवि न भुंजइ । न देइ भुक्खणाइ नि·
हणइ ससंको ॥ सो संचयसीलसमो । हवंति दालिद्दिओ पुरिसो ॥ ८७ ॥ संचयसीलसरिच्छा । पु·
रिसा महिमंडलंमि सव्वत्तो ॥ जे भलिया भलिपिसा—इयाए करिकन्नचवलाए ॥ ८८ ॥ जो संतं
परिभुंजइ । देइ न दिंतस्स पडइ परिणामो ॥ सो भोगदेवसरिसो । भवयभवसुहावहो पुरिसो
॥ ८९ ॥ ते विरला सप्पुरिसा । जयंमि जे भोगदेवसारिच्छा ॥ लच्छीए जे न भलिया । भलिया
लच्छी पुणो जेहिं ॥ ९० ॥ को मुणइ ताण संखं । नराण लच्छीए जे भलिज्जंति ॥ संतावि जाहिं
लच्छी । भलिया ते एक्क दो तिन्नि ॥ ९१ ॥ ता भडिज्जउ एसा । जाव न भम्डेइ अप्पणा चेव

॥ लहीए छलिज्ज पुण । लहुत्तणं पावए पुरिसो ॥ ७२ ॥ इति भोगदेवकथानकं समाप्तं ॥ उ·
क्तो विवेकाधिकारः, विवेकिनस्तु मृदुभाषका भवंतीति तदनंतरं मृदुभाषिताधिकारमाह, तत्र श्लो·
कास्त्रयोदश, तद्यथा—
॥ मूलम् ॥—तदेवेहामृतं मन्ये । यत्सत्यं कोमलं वचः ॥ वार्त्तैषा यत्सुरैः सिंधु—र्मथिता·
दुद्धृतं तु तत ॥ १ ॥ न तस्यास्ति रिपुः कोऽपि । न चापि च परो जनः ॥ वस्त्वसाध्यं न चास्य·
स्य । यस्यास्ति मधुरं वचः ॥ २ ॥ एषैव देवतावंद्या । जिह्वाग्रे या सरस्वती ॥ अशुभेतरभेदेन ।
वक्रे वक्रे व्यवस्थिता ॥ ३ ॥ मित्राणि चाप्यमित्राणि । बंधूनपि ह्यबांधवान् ॥ शत्रूभूतं करोत्याद्या ।
विश्वं विश्वं सरस्वती ॥ ४ ॥ अमित्राण्यपि मित्राण्य—बंधूनपि च बांधवान् ॥ मित्रभूतं करोत्यन्या
। विश्वं विश्वं सरस्वती ॥ ५ ॥ स्वरुच्या दीयते दानं । विद्यमानं निजे गृहे ॥ स्वाधीनं दुर्गतस्या·
पि । मोदकं मधुरं वचः ॥ ६ ॥ किं किं तेन न दत्तं स्यात् । किं किं नोपकृतं जने ॥ प्रथमं
हृष्टवक्रेण । मधुरं येन भाषितं ॥ ७ ॥ गुणान् स्मरन् सदा शेते । स्मरन्नेव प्रबुध्यते ॥ दानं विना·
पि लोकोऽयं । पुंसो मधुरभाषिणः ॥ ८ ॥ सुधया किं गुडेनाथ । किं वा खंडेन निर्मिता ॥ किं

वा शर्करया सृष्टा । सृष्ट्वा जिह्वा महात्मनां ॥ ९ ॥ यदेषा सर्वदा सूते । सूनृतं मधुरं वचः ॥ कठोरकारणाद्यस्मा—न्मृदुकार्यं न जायते ॥ १० ॥ शुभाशुभानि भावीनि । जीवानां कर्मयोगतः ॥ दुःखमुत्पादयत्येव । तत्क्षणाद् दुर्वचः श्रुतं ॥ ११ ॥ दग्धा दवेन रोहंति । छिन्ना ह्यपि पुनः पुनः ॥ वचोदग्धा वचश्छिन्ना । न रोहंति नरांह्रिपाः ॥ १२ ॥ मितमधुरमुदारं जंतुसंतोषकारं । वदत वदत लोकाः सद्वचश्चित्तहारं ॥ हरहसितहिमानीहारनीहारहारि । भ्रमति भुवि समंतात्सद्यशो येन सारं ॥ १३ ॥ व्याख्या—तदेवेत्यादि, तदेवेह लोकेऽमृतं पीयूषं मन्ये तर्कयामि, यत्सत्यं समीचीनं कोमलं मृदु वचो वचनं, वार्ता किंवदंत्येषेयं यद्यस्मात्सुरैर्देवैः सिंधोः समुद्रान्मथितात्क्षोभितादुद्धृतं निर्गतं तदमृतमिति श्लोकार्थः. ॥ १ ॥ अथ मृदुवचनस्य गुणमाह—नतस्येत्यादिश्लोकः सुगमः ॥ २ ॥ अथ शुभेतरभाषाया माहात्म्यं वर्णयन् श्लोकत्रयमाह—एषैवेत्यादि, एषैवेयमेव देवता देवी वंद्या स्तुत्या जिह्वाग्रे रसनांते सरस्वती या वाणी, अशुभेतरभेदेन कर्कशमृदुविकल्पेन वक्रे वक्रे मुखे मुखे व्यवस्थिता स्थितिं कृतवती ॥ ३ ॥ मित्राण्यपि सुहृदोऽपि अमित्राणि शत्रून्, बंधूनपि स्वजनानप्यत्रांधवान्, शत्रूभूतं रिपुसमानं करोति विधत्ते आद्या प्रथमा कर्कशेत्यर्थः, विश्वं

सर्वं विश्वं जगत्सरस्वती भाषा ॥ ४ ॥ अमित्राण्यपीति श्लोकस्य पूर्वश्लोकविपर्ययेण व्याख्या कर्तव्येति श्लोकत्रयार्थः. ॥ ५ ॥ अथ मृदुभाषकं स्तुवन्नाह—स्वरुचेत्यादिश्लोकत्रयं स्पष्टमेव. ॥ ६ ॥ ॥ ७ ॥ ८ ॥ अथ मृदुभाषकजिह्वाया मधुरभाषकत्वे कारणं वितर्कयन् श्लोकद्वयमाह—सुधयेत्यादि, सुधयामृतेन किमिति वितर्के, गुडेन प्रतीतेन. अथ विकल्पे किंवा खंडेन निर्मिता कृता, किंवा शर्करया प्रसिद्धया सृष्टा निष्पादिता स्रष्ट्रा धात्रा जिह्वा रसना महात्मनां महापुरुषाणां ॥ ९ ॥ यदेषा सर्वदा सूते जनयति सूनृतं सत्यं प्रियं च सूनृतमुच्यते, मधुरं कोमलं वचो, न कठोरकारणाद्यस्मान्मृदुकार्यं जायते भवतीति श्लोकद्वयार्थः. ॥ १० ॥ अथ कटुकवचसो दोषमाह—शुभेत्यादि श्लोकद्वयं, शुभाशुभानि सुखदुःखरूपाणि भावीनि जीवानां जंतूनां कर्मयोगतः कर्मसंबंधाद् दुःखमसुखमुत्पादयत्येव जनयत्येव तत्क्षणात्तस्मिन्नेव समये दुर्वचः श्रुतं सदिति. ॥ ११ ॥ दग्धा दवेनेत्यादि सुगममिति श्लोकद्वयार्थः. ॥ १२ ॥ अथ मृदुभाषकत्वं प्रत्युपदिशन् वृत्तमाह—मितेत्यादि, मितं स्तोकं मधुरं प्रियमुदारं स्फारं जंतुसंतोषकारं जीवानां तुष्टिकरमित्यर्थः, वदत वदत जल्पत जल्पत लोका जनाः सद्वचः शोभनवाक्यं चित्तहारं मनोहारि, हरहसितहिमानीहारनीहारहा·

रि, तत्र हरहसितं हराट्टहासः, हिमानी महद्धिमं, हारो मुक्ताफलमाला, नीहारस्तुषारः, तद्वद्गौरि शोभायमानं हरहसितादिवच्छुभ्रमित्यर्थः, भ्रमति भ्राम्यति भुवि पृथिव्यां समंतात्सर्वतः सद्यशो शोभना सर्वदिग्गामिनी कीर्तिर्येन कारणेन सारं प्रधानमिति वृत्तार्थः. ॥ १३ ॥ अथ मधुरकटुकभाषिणामर्थानर्थसूचकं श्लोकद्वयेन दृष्टांतमाह—

॥ मूलम् ॥—इह लोकेऽपि कल्याणं । जायते मृदुभाषिणां ॥ अत्रामृतमुखीनाम । वृद्धनारी निदर्शनं ॥ १ ॥ इह लोकेऽपि दुःखानि । लभंते कटुभाषिणः ॥ अत्रार्थे ऋतुभिः शप्ता । वृद्धयोषा निदर्शनं ॥ २ ॥ व्याख्या—इह लोकेऽपि मनुष्यलोके कल्याणं सुखं सत्कीर्तिसंप्राप्तिरूपं जायते संपद्यते मृदुभाषिणां मधुरवादिनां, अत्रास्मिन्नर्थेऽमृतमुखीनाम वृद्धनारी स्थविरस्त्री निदर्शनं दृष्टांत इति प्रथमश्लोकार्थः. ॥ १ ॥ इह लोकेऽपि मनुजजन्मनि दुःखान्यशर्माणि लभंते प्राप्नुवंति कटुभाषिणः कटुवक्तारः, अत्रार्थे ऋतुभिः शप्ता, ऋतवः शिशिरादयस्त्रयः कालविशेषास्तदधिष्टायका देवा अपि ऋतुशब्देनाभिधीयंते, तैः शप्ता आक्रोशिता वृद्धयोषा वृद्धनारी निदर्शनं दृष्टांत इति द्वितीयश्लोकार्थः. ॥ २ ॥ अथ वृद्धनारीदृष्टांतश्चायं—

अस्त्यत्रैव भारते वर्षे महीमंडलमंडना सकलसंपदावासा सुखावासा नाम नगरी, तस्यां नागदत्तो नाम इभ्यपुत्रः परिवसति, तस्य च यथार्थाभिधानाऽमृतमुखीनाम जननी, कटुकमुखीनामधेया च श्वश्रूः, नागश्रीनाम च भार्या, अन्यदा च परलोकं गते जनके जातो गृहस्वामी नागदत्तो विचिंतयति गृहकार्याणि, न करोति कुत्सितजनैः सह संगं, न प्रसरति द्यूतादिव्यसनेषु. अन्यदा च स नगरान्निर्गच्छन् दृष्टो दुष्टहस्तिना, तद्भयेन च नष्ट्वा प्रविष्टः समासन्ने संकटद्वारेऽनंगसेनाभिधानवेश्यामंदिरे, विनयपुरस्सरं कृतस्तया तस्यासनाद्युपचारः, भणितश्च नागदत्तो निजगृहमिवैतदेव, तदत्रैव भुज्यतामिति, प्रतिपन्नमनेन, मज्जितः परममज्जनविधिना, भोजितः सर्वादरेण, ततः पुष्पतांबूलविलेपनादिभिः प्रतिपत्तिं कृत्वा परिहासगर्भैर्वचोभिः समावर्जितं तस्य हृदयं, उषितस्तत्रैव तां रजनीं, गतः प्रभाते निजमंदिरं, पृष्टश्च जनन्या यथा वत्स! कुत्र त्वमद्य रजन्यामुषितोऽसि? दुःखसंभारपूरितानामस्माकं कथंकथमपि कष्टेन व्यतीता रजनी. अत्रांतरे वक्रीकृताननया प्रकृतिकटुकभाषणशीलया सासूयं जल्पितं श्वश्वा किमत्र पृष्टव्यं! लोचने एवास्य रात्रिजागरणं साधयतः, व्यसनासक्तः स्वच्छंदचारी च तव पुत्रकः, नेदं गृहवृद्धिकारणं, यतः—देवकुले राजकुले

। वुड्ढीसु य ऊसवेसु विविहेसु ॥ कह होउ तब बुद्धी । जह न वुड्ढा गणिज्जंति ॥ १ ॥ वयपरिणयलोयपर—म्मुहाण दुक्खाणि सुयणु सुलहाणि ॥ एसो तुह पुण पुत्तो । न कुणइ वुड्ढाण वयणाइं ॥ २ ॥ तद्भद्र निवारय यदि शोभनेन प्रयोजनं, ततो हस्ते गृहीत्वा बाष्पाविललोचनया भणितो नागदत्तो जनन्या, यथा जात! यदहं भणामि तदवश्यं त्वया कर्तव्यमेव, तेनोक्तमेवं करिष्याम्येव तव वचनं, मा खेदं कार्षीः, तया भणितं यद्येवं वत्स न त्वया बहिर्वास्तव्यं, प्रतिपन्नमिदमनेन, व्रजंति वासराः, मिलति चोद्यानादौ गतस्यानंगसेना, संवर्धते च तयोस्तत्र गोष्टीरसः, ददाति च प्रछन्नमेव द्रविणजातं नागदत्तः, अन्यस्मिन् दिवसे परिहासेन जल्पितमनया यदहो दौर्भाग्यं मम मंदिरस्य, यतः प्रथमदिने दृष्ट्वा न दृष्टं पुनरप्यार्यपुत्रेण. तेन भणितं गुरुजनपराधीनतया न साक्षाद् दृश्यसे त्वं, हृदयेन पुनः प्रतिदिवसं पश्यामि भवंतीं. तया चिंतितमीश्वरपुत्रोऽयं दाता, अनुरक्तश्च सांप्रति, यदि कथंचिज्जानन्या वियोज्यते तदा पूर्यंते मम मनोरथाः, भणितश्चानया नागदत्तो यथार्यपुत्रावसरस्ते सांप्रतमर्थोपार्जनस्य, यतः—पढमे न पढइ विज्जं । बीए अत्थं न चेव विवढेइ ॥ तइए न कुणइ धम्मं । तुरिये वए होइ हु असारो ॥ १ ॥ ववसायवज्जियाणं

। संतावि सिरी पणस्सइ चेव ॥ होइ असंतावि धुवं । ववसायपराण पुरिसाणं ॥ २ ॥ पुव्वपुरिसज्जियाए । लच्छीए कुणइ जो नरो गव्वं ॥ सो गयलज्जो धणियं । भणिज्ज अहमाहमो चेव ॥ ॥ ३ ॥ अप्पपराजवसुहया । भुंजंती तह परेसिं दिज्जंति ॥ निययपरक्कमपत्ता । भिक्काविय किं पुणो लच्छी ॥ ४ ॥ तदार्यपुत्र! क्रियतां कालोचितं, गम्यतां देशांतरं, स्थितमेतच्चित्ते नागदत्तस्य, गतो निजगृहे, विज्ञप्ता जननी, यथा मातर्विसर्जय मां देशांतरे द्रव्योपार्जननिमित्तं, प्रतिषिद्धो जनन्या, तथापि न तिष्टति, ततः सा रोदितुं प्रवृत्ता, नागदत्तेन भणितं मातरलं रुदितेन, शीघ्रमेवाहमागच्छामीत्यादि लपन् प्रतिषिद्धोऽपि स न स्थितः, कृता गमनसामग्री, निर्गमदिवसे सविशेषं वार्यमाणोऽप्यपकर्ण्य जननीं चलितो नागदत्तः, स्थितो नगरस्य बहिष्टात्, भणितोऽनंगसेनया, आर्यपुत्र! त्वयाविना शून्यमिव नगरमिदमहं मन्ये, यदि भणसि तदा त्वया सह समागच्छामि, प्रतिपन्नमनेन, क्रमेण वहन् सार्थः स प्रविष्टः कांतारे दुरुत्तारे, व्यालोभितो भिल्लैः, गृहीतं द्रव्यजातं, भयभ्रांतलोचन एकाक्येव प्रविष्टो नंष्ट्वा शून्यारण्यं नागदत्तः, अनंगसेनापि बंदिग्राहं गृहीत्वा पल्लीपतिना पल्लीं प्रापिता, नागदत्तेनापि कांतारमध्ये पर्यटता दृष्ट एकत्र प्रदेशे एकस्तापसकुमारकः,

प्रणम्य पृष्टश्च कुत्र युष्माकं तपोवनं? तेन भणितमितो नातिदूर एव, गतस्तेन सह तापसाश्रमं नागदत्तः, वंदितः कुलपतिः, श्रुतस्तदंतिके क्षणमेकं धर्मोपदेशः, पश्चात्प्रश्नितस्तेन कुलपतिर्भगवन्! साधारणरूपसौभाग्यगुणगणालंकृतस्य प्रथमयौवने वर्तमानस्यापि किं भवतो व्रतकरणकारणं? कुलपतिना भणितं सौम्य! शृणु?—

अस्ति मलयविषयमंडनं चंदनपुरं नगरं, तन्निवासिचंडदेवब्राह्मणसुतश्चंडरुद्रो नामाहं, कालांतरेणोपरतो मम पिता, ममोपरि संक्रांतो गृहभारः, परस्परं कलहं कुर्वत्यौ न शक्नोमि निवारयितुं जननीगृहिण्यौ, तावदेव च मे सुखं यावदहं गृहं न प्रविशामि. अन्यस्मिन् दिने भणितं गेहिन्या, यदि मया प्रयोजनं तदा निजजननीं गृहबहिष्टात् कृत्वा भोजनमात्रसंतुष्टां धारय? मां वा विसर्जय? ततो विस्मार्य जनन्या उपकारं, अवलंब्य च नीचजनचेष्टितं, कलत्रस्नेहविधुरेण मया खरपरुषवचनैर्निर्भर्त्सिता जननी, भणिता च किं ते गृहतृप्त्या? उदरं भृत्वा तूष्णीका तिष्ट? तत् श्रुत्वा मन्युभरभृतमानसाऽनवरतमुक्तस्थूलाश्रुजालका सा गृहादपि निर्गता, उपेक्षिता च मया, समुत्पन्नवैलक्ष्यया च तया प्रक्षिप्त आत्मा नगरकूपे, पतनशब्दश्रवणसंभ्रांतमानसा मिलिताः कृत्वा कोला-

हलं नरनारीगणाः, विगतप्राणा च सा समुत्तारिता कूपात्, तत्क्षणं लोकैर्विज्ञातवृत्तां तैर्धिक्कारितोऽहं, परिहृतः स्वजनवर्गेण, न भुंजते मम गृहे ब्राह्मणाः, न गृह्णंति भिक्षां पाखंडिनः, ततोऽहं विषादमापन्नो मरणमेव मे समुचितमिति मन्यमानो निर्गतो नगरात्, गतः स्तोकं भूमिभागं, दृष्टः पूर्वपरिचितगंगाधराभिधतापसेन. प्रश्नितश्च तेन वत्स चंद्ररुद्र! किं कारणं? विमनस्को विच्छायवदन इव लक्ष्यसे? कथितश्च मया मरणाध्यवसायपर्यवसानो निजो व्यतिकरः, तापसेन भणितं वत्स! धर्म एव जननीवधजनितपापपंकप्रक्षालनस्वच्छसलिलसन्निभः शेषदोषनिर्घातनसमर्थश्च. तद्वत्स तमेव धर्मं कुरुष्व? येन ते शुद्धिर्भवति. प्रतिपन्नं च मया तद्वचनं, गतस्तापसः, मयापि गृहीत्वा तापसव्रतमतिनिर्वेदेन शून्यारण्यमिदमंगीकृतं.

एतत् श्रुत्वा विषण्णो नागदत्तः, गृहीतः पश्चात्तापेन, चिंतितं च तेन मयाप्यपकर्णिता जननी, विनाशितो गृहभारः, मरणमेव मम शरणमिति मन्यमानोऽसौ गतस्तापसजनसाधितसामर्थ्यं सर्वकामितनामपत्तनं, चिंतितुं च प्रवृत्तो यथा दुर्लभा पुनरपि सर्वकामितपत्तनसंप्राप्तिः, जन्मांतरेऽपि मा जननीजनकयोरपमानकारकोऽहमभूवमिति कृत्वा प्रणिधानमत्र निपतामीति विचिंत्य स समारू-

ढः सर्वकामितपत्तनशिखरिशिखरं. दृष्टोऽसौ मंत्रसाधनार्थमागतेन योगसिद्धयोगीश्वरेण. लक्षितश्च तेन तदभिप्रायः, संभाषितो मधुरवचनेन, भणितश्च भद्र! कस्त्वं? किं वा कर्तुमारब्धः? निवेदितो नागदत्तेन सर्वोऽपि निजव्यतिकरः, योगसिद्धेन भणितं भद्रक! बुधनिंदित आत्मवधः, विरम त्वममुष्मान्मरणाध्यवसायात, गत्वा कुरु निजजनन्याः पानभोजनस्नानशयनाशनादिविनयकरणेन परमप्रतिपत्तिं, नष्टद्रविणजातविषये व्यवसाय एव संगतो, न मरणं, नागदत्तेन भणितं भगवन् शोभनं त्वया समादिष्टं, किंतु निष्कासितं मया निजगृहात्प्रभूतं द्रविणजातं नाशितं च, सांप्रतमर्थेन विना व्यवसायेनापि न तावदाजीवितुं पार्यते, न निपुणोऽपि कोलिकः सूत्रं विना पटकरणसमर्थः. योगसिद्धेन भणितं भद्र! दृष्टो मया विनापि सूत्रेण क्रियमाणः पटः, नागदत्तेन भणितं कथं? तेन भणितं गतोऽहमेकदा प्रयोजनवशादुत्तरापथं, तत्राटवीशीर्षे मिलित एकः कुलपुत्रकः, भणितश्चाहमनेन भद्र! आगच्छ सममेव व्रजावः, सांप्रतं शिशिरकालो, हिमाचलभूमिरेषा, अप्रावरणश्चाहं, दृश्यते चास्य गुर्वी चीवरमुत्कोली, वितरिष्यति ममापि रजन्यां सवडिमात्रमिति विचिंत्य चलितोऽहं तेन समं, प्राप्तावटवीमध्ये, अस्तमितो दिनकरः, मुक्त्वा मार्गमुषितं चैकत्र प्रदेशे, उभो·

टिता तेन मुत्कोली, यावत्तत्र संबलमेव केवलं, ततो विषादमापन्नेन जल्पितं मया नूनं मर्तव्यमद्य शीतेन, तेन भणितं किं कारणं? मया भणितमप्रावरणोऽहं, त्वमपि मम सदृश एव, क्लेशेन गमितव्या शिशिरशीतलपवनवाद्यमानदशनैरेवास्माभिः शर्वरी, तेन भणितं मा भैषीः, अवलोकय निजमित्रशक्तिं? कुविंदेनेव तेन विक्षिप्तौ नभस्तले हस्तौ, प्रादुर्भूतं प्रधानसुकुमालपक्ष्मलपटिकायुगलं, एका मम समर्पिता, द्वितीया पुनरात्मना प्रावृता, प्रणष्टं शीतं. समुत्पन्नकौतुकेन जल्पितं मया अहोऽचिंत्यं सामर्थ्यं मम मित्रस्य, अलमितरसंकथया, एतदेव तावत्कथयतु भवान् प्रियवयस्य! किमेष सुप्रसन्नगुरुपादुकाप्रसादः? उत कश्चिद्देवतावर इति? तेन भणितं सौम्य! शृणु?—

अस्ति मगधाविषये जयंती नाम नगरी, तत्र कनकशेखरो नाम राजा. अन्यदास्थानगतस्य राज्ञश्चित्रनिपुणो नाम कुविंदः प्रयोजनवशेन समागतः, उपायनीकृतं तेन चित्रचित्रमनोहरं प्रवरतेजसा दीप्यमानमत्यंतसुकुमारस्पर्शं वस्त्रयुगलं, तत्क्षणमेव परिहितं राज्ञा, निषण्णः सिंहासने, तुष्टः कुविंदकस्य, दत्तस्तस्मै सकलविषयप्रधानो ग्रामो निजांगलग्नवस्त्राभरणादिकं च. प्रशंसितश्च सकललोकेन, परगुणश्रवणसमुत्पन्नमत्सरेण प्रकटमेव जल्पितं मया राजसभामध्ये, सूत्रेण पटः क्रियते,

किमत्राश्चर्यं? कुविंदेन भणितं यदि सूत्रेण विना करोषि तदा युज्यते भणितुमीदृशं, ततः कृता मया राजसमक्षमेवैषा प्रतिज्ञा, यदि सप्तरात्रमध्ये सूत्रंविनापि पटं न करोमि तदा ज्वलने प्रविशामि. कुविंदेन भणितमस्तु तावद्वचनविस्तरः, कार्यसिद्धौ पुनः संशयः. अदत्तप्रतिवचन एव निर्गतोऽहं राजमंदिरात, प्राप्तः स्वभवनं, कथं नु नामैष प्रतिज्ञासागरस्तरितव्यः, एवंविधचिंतासमाकुलो यावत्तिष्ठामि तावत्समागतो मम गृहे लीलाविलासो नाम योगिकः. गृहांगणे स्थित्वा हुंकारितं तेन, आनीता मया स्वहस्तेन यथा पर्याप्ता मनोरमा भिक्षा, निपतितश्च तच्चरणयोः, गतोऽसौ स्वस्थानं, अहमपि गृहीत्वा पुष्पतांबूलविलेपनादिकं तदनु मार्गलग्न एव प्राप्तस्तस्याश्रमे, प्रक्षालितं तस्य चरणयुगलं, समर्पितानि पुष्पतांबूलविलेपनानि, सुखं प्रसुप्तस्य तस्य तालवृंतेन प्रवीजितुमहमारब्धः, एवं द्वितीयतृतीयदिनेऽपि, चतुर्थदिने भणितोऽहं तेन वत्स! किमिहकार्यवशेन गुरुप्रतिपत्तिं करोषि परलोकार्थं वा? मया भणितं सांप्रतं प्रयोजनवशेन, तेन भणितं भण येन प्रयोजनं? कथितो मया निजप्रतिज्ञाविशेषः, तेन भणितमस्त्यत्र तावदुपायः, केवलं सत्वसाध्या सिद्धिः, मयोक्तं कीदृशा? तेनावाच्यष्टोत्तरशतवारं मंत्राक्षराणि जपित्वा निजशिरसा गिरिकंदरोदरो नाम

यक्षः पूजयितव्यः, पश्चादसौ सत्वानुरूपं वरं वितरति, प्रतिपन्नं तन्मया, गृहीतो मंत्रः, कृतं बलिविधानं, गतो गिरिकंदरोदरमंदिरं, पूजितो यक्षः, कृतो मंत्रजापः, आकृष्टं कोशादग्रमजिह्वाकरालं करवालं, वाहितं निजकंधरायां, निरुपमसत्वगुणावर्जितमानसोऽर्धच्छिन्न एव शिरसि प्रत्यक्षीभूतो यक्षः, भणितोऽहमनेन भण ते किं प्रियं करोमि? मया भणितमसूलपटकरणसामर्थ्यं देहि? तेनोक्तं भविष्यति वत्स ते चिंतितं. ततः संपूज्य तं यक्षं परं परितोषमुद्वहन् समागतोऽहं स्वभवनं, प्रणम्य राजानं निषण्णोऽहमुचितासने, पृष्टोऽहं मंत्रिणा किं संपूर्णा ते प्रतिज्ञा? मया भणितमेवमेतत. ततः सकलसभासमक्षं विक्षिप्य गगनांगणे करयुगलं दत्तं देवदुष्योपमं वस्त्रयुगलं नरपतये, एवं मंत्रिसामंतादिभ्योऽपि, तुष्टो राजा, गुणग्राहिणी जाता नरपतिसभा, भणितोऽहं राज्ञा किं तव प्रियं करोमि? मया भणितं वर्षमेकमकरं कुरुष्व जनपदमिमं? प्रतिपन्नं राज्ञा, दत्तश्च प्रवरग्रामपंचकसहितः सकलविषयसारः सुखसंगमो नाम मह्यं ग्रामः, वितीर्णश्च यदृच्छाचारः, एवमेषा मे शक्तिरीदृशी जातेति. ततोऽभिनंदितो मया कुलपुत्रकः, प्रशंसितो बहुप्रकारं, प्रस्थितौ ततः स्थानाद् द्वावप्यावां, लंघिता सप्तरात्रेणाटवी, गतोऽसौ स्वस्थानं, अहमपि प्रयोजनवशेनात्र समागतः, तदेवं वि-

नापि सूत्रेण दृष्टो मया क्रियमाणः पटः, अर्थोपार्जनमपि व्यवसायिनां नातिदुष्करं, व्यवसायमेव पुरुषाणां गुरुकं प्राणमूल्यं, यतः—आदत्ता सप्पुरिसेहिं । गुरुयववसायदित्तहियएहिं ॥ कज्जारंभा होहिंति । निष्फला किं चिरं कालं ॥ १ ॥ मया भणितमेवमेतत्, नास्त्यत्र संदेहः, निवर्तितोऽहमेतस्मादविधिमरणात्, व्रजामि सांप्रतं स्वस्थानं, योगिकेन भणितं वत्सैतया गुरुजनपराधीनतया समावर्जितं मे हृदयं, गृहाणेदं स्थावरजंगमविषापहारकं प्रधानमणिं, अनुग्रह इति मन्यमानेन प्रतीच्छितो नागदत्तेन गतो योगिकः स्वस्थानं, नागदत्तोऽपि निजनगरमागतः, कथितः सर्वोऽपि सविस्तरो निजवृत्तांतो जनन्याः, तया भणितं वत्स ! गच्छतु द्रविणजातं, त्वया विद्यमानेन भूयोऽपि भूरि द्रव्यं भविष्यति, धन्याहं यया पुनरपि तव मुखकमलमवलोकितमिति भणित्वा स्नेहसारं निवेशितो निजोत्संगे, चुंबितो मूर्धनि नागदत्तः, चिंतितं तेनाहो स्नेहपरता जननीहृदयानां, अहं पुनः शिलासंघातकठिनमानसो यस्तथापकर्ण्य जननीं देशांतरं प्रस्थितः, प्राप्तमिहलोक एव मया दुर्नयफलं, सांप्रतं परमविनयेन समाराधयामि मातरमिति विचिंत्यैवं चेतसि कृतनिश्चयो मातुः पार्श्ववर्ती प्रतिदिनं पर्युपास्ते, मातरि स्नातायां स्नाति, भुक्तायां भुंक्ते, किंबहुना? सर्वप्रयोजनेष्वपि सत·

तमानुकूल्येनैव वर्तते, एतद् दृष्ट्वा दूयते नागश्रीस्तद्गेहिनी, श्यामितवक्रीकृतमुखी न गृहकार्येषु सम्यक्प्रवर्तते, एवं व्रजति कालः.

अन्यस्मिन् दिवसे गुणधरश्रेष्ठिपुत्रो गुणसारः कृष्णभुजंगमेन दष्टः, समाहूता गारुडिकाः, प्रयुक्ता मंत्रागदादयः, न जातः कोऽपि विशेषः. ततः पटहशब्देनाकारि घोषणा नगरे, यथा यो गुणसारं जीवापयति तस्मै श्रेष्ठी शतसहस्रं ददाति, निवारितः पटहको नागदत्तेन, गृहीत्वा योगिना दत्तं मणिरत्नं गतः स श्रेष्ठिसमीपं, प्रक्षाल्य मणिरत्नं पायितस्तज्जलं गुणसारः, नष्टो विषविकारः, संवृत्तश्च स प्रगुणः, तुष्टेन श्रेष्ठिना दत्तं तस्मै सुवर्णशतसहस्रं, गतो गृहीत्वा नागदत्तो निजभवनं, सविशेषं च समाराधयति जननीचरणयुगलं. अन्यस्मिन् दिने विमनस्का दुर्मना विमुक्तदीर्घनिःश्वासा विच्छायवदनकमला मंचकगता दृष्टा नागश्रीर्नागदत्तेन, पृष्टा च प्रिये किं तव बाधते? तया भणितं शिरोवेदना, नागदत्तेन भणितं किंनिबंधना? तया भणितमीर्ष्यानिबंधना, यतस्त्वं परिहृतसकलगृहव्यापारः कृतकरतलांजलिर्जनन्याः पुरतः किंकर इव किं करोमीति ब्रुवाणस्तिष्ठसि. किं तवैवैकस्य जननी? किमन्यो जनो नभस्तलान्निष्पतितः? एभिरनर्दौर्ज्वलितज्वलनपतितमिव द-

ह्यते मम शरीरकं, प्रणष्टा निद्रा, न रोचते भोजनं, बाढं बाधते शिरोवेदना. नागदत्तेन भणितं श्रूयतां प्रिये परानदैरात्मानं कदर्थयसि, अनद्कबहुलकुंभकारं चानुकरोषि. तया भणितं क एषोऽनद्कबहुलः? नागदत्तेन भणितं श्रूयतां प्रिये !—

अस्ति सकलमहीवलयतिलकभूतं कुसुमपुरं नाम नगरं, तस्मिन् कुंभप्रियो नाम कुंभकारः परिवसति. स पुनर्यदि कश्चिदघटमानकं ब्रूते तदाकर्ण्य नितरामनद्कभरभृतमानसष्टक्कराभिर्निजमस्तकं चूर्णयति, ततः कृतं लोकैस्तस्य गुणनिष्पन्नमनद्कबहुल इति नाम, तदेव च प्रसिद्धिं गतं. तस्य च गृहे समस्ति विशाला कुंभशाला, वसंति च तस्यां नानादेशागताः कार्पटिकादयः, वदंति च रजन्यामघटमानकानि टक्करशतानि, अनद्कवशविगतनिद्रो रोषवशपरिगतश्चूर्णयति टक्कराभिरनद्कबहुलो निजमस्तकं. तथा कदर्थयंतमात्मानं दृष्ट्वा जनको भणितस्तनयैः, तात तव गृह एवानद्काणामंतो नास्ति, विशेषतो नगरमध्ये, ततो यद्यनद्कपरिहारेण प्रयोजनं तदाटव्यां गृहं क्रियतां? प्रतिपन्नमिदं तेनापि, गतास्तं गृहीत्वा तत्तनयाः कांतारमध्यसंस्थितपर्वततलासन्नां स्वच्छसलिलपरिपूर्णामेकां सरसिकां, कृतं तदासन्ने कुटीरकं, बहुदिनयोग्यं संबलं च समर्प्य मुक्त्वा तत्र जनकं नगरमागतास्त-

नयाः, सोऽपि तत्र कर्दमं मर्दयित्वा भांडानि कर्तुमारब्धः, तत्पुत्रा अपि समये समागत्य गृहीत्वा भांडानि नगरे विक्रीणंति. एवं च व्रजति कालः. अन्यदा मृगयायै निर्गतो महाकांतारमनुप्रविष्टो राजा, निष्ठितं सलिलं, पिपासितः पृच्छति समासन्नपुरुषान्, यथा भो भो किमस्त्यत्र क्वापि जलसंभवः? तैरुक्तमस्ति, इतः स चासन्ना सरसी, तत्र गम्यतामित्युक्ते गतो राजा, दृष्ट्वा राजानं ससंभ्रममभ्युत्थितः कुलालः, दत्तमासनं, निषण्णो राजा, आनीतः स्वच्छशीतलसलिलपरिपूर्णः करवकः, पीतं पयः पृथ्वीपतिना, जातश्च स स्वस्थमानसः, परितुष्टः कुलालस्य, पृष्टश्च स्नेहसारं भद्र! किंनिमित्तमेकाकी कांतारे तिष्ठसि? तेनोक्तमनर्थवचनश्रवणपरिहाराय. राज्ञा भणितं यद्येवं तदागच्छ मया सार्धं नगरे, तथाहं करिष्यामि यथा न कोऽप्यनर्थान् समुल्लपति. तेन भणितमेवं भवतु, चलितो नगराभिमुखं, नगरसमासन्ने च दृष्टा राज्ञा सागराभिधानस्य वणिजो दुहिता रत्नकाभिधाना कर्कधूफलानि चिन्वंती, पृष्टो राज्ञा मंत्री कैषा कस्य वा सुता? कथितः सर्वोऽपि मंत्रिणा वृत्तांतः, प्रविष्टा नगरं, धृतः कुंभकारो निजमंदिर एव नरपतिना, कारिता च घोषणा नगरे पटहकेन यथा यः कश्चिदघटमानकं भणिष्यति तं राजा महादंडेन दंडयिष्यति, एवं व्रजति कालः. अन्यस्मिन् दिने

विज्ञातनरपतिमनोगतभावेन परिणायिता सा दुर्गतकन्यका सचिवेन, राज्ञापि परिणीता च संक्षेपेण, प्रक्षिप्तांतःपुरे, पूर्वकृतसुकृतानुभावेन जातस्तदुपरि प्रणयानुबंधो नरपतेः, प्राप्ता सा पट्टमहादेवीपदं, प्रवर्धमानप्रणयेन राज्ञा सह विषयसुखमनुभवंती सा कालं गमयामास. अन्यदा तरुणजनमनोमोहने कलकोकिलारावभृतभुवनोदरे समागते च वसंतमासे नगरोद्यानाभिमुखं च प्रमोदभरनिर्भरे निर्गच्छति सति नागरीकजने उद्यानश्रीदर्शनार्थं समं स्वकया महादेव्या अनङ्गबहुलकुंजरकारेण च प्रस्थितः पार्थिवोऽपि, निर्गच्छता च दृष्टा अकालफलभरभज्यमानशाखासंचयैका बदरी, पृष्टा च राज्ञा समासन्नवर्तिनी स्वकामहादेवी, प्रिये! क एष पादपः? किमभिधानान्येतस्य फलानि? सुचिरं निरूप्य जल्पितमनयाहं न विजानामि, तदेवं श्रुत्वा समुत्पन्नानक्षेण प्रहतं निजमस्तकं टक्काभिरनङ्गबहुलेन, राज्ञा भणितं किमेतत? तेनोक्तं यद्वयेन कांतारे गृहमकारि, स्वकां महादेवीं दर्शयता पठितमनङ्गबहुलेन—कल्लइ बोरइं विकिणइ। अज्ज न जाणइ स्वक्क ॥ परुयइ अम्हविहिं करि। मु घरु न सहउं एइ अणक्क ॥ १ ॥ दुःप्रतीकारमिति कृत्वा विसर्जितो राज्ञा गतोऽसौ तस्मिन्नेव स्थाने तथैव कालं गमयति.

अन्यदा तमःस्तोमांधकारायां रजन्यां श्रुतस्तेन शार्दूलशब्दः, भयभीतोऽन्यत्र कुत्रापि निलयनमलभमानः प्रविष्टः संकटद्वारां कुंजिकां, प्रभाते निर्गंतुमशक्नुवंस्तृषाक्षुधाभिभूतो नारक इव घटिकालये विसंस्थूलं तडफडायमानो विरसंस्तत्रैव विनाशमापन्नः, समागता भांडानयननिमित्तं तनयाः, प्रेक्षते पितरं, इतस्ततो गवेषयद्भिस्तैर्दृष्टोऽसौ कुंजिकायां पंचत्वमुपगतः, कुंजिकामुखे चोपदेशगर्भं गाथायुगलं, तद्यथा—वग्घभएण पविठो । बुहाहओ निग्गमंमि असमत्थो ॥ अट्टवसट्टोवगओ । पुत्तय पत्तो अहं निहणं ॥ १ ॥ इह लोगम्मि दुरन्ते । परलोगविवाहगे दुहविवागे ॥ मह पयणेणं पावे । वज्जिज्जा पुत्तय अणक्खे ॥ २ ॥ अवधार्य तदर्थं, कृत्वा जनकस्य मृतकृत्यानि विगतशोका गृहकार्याणि कर्तुमारब्धास्तत्तनयाः, तस्मात्प्रिये! परानर्थैरेवमनर्थभाजनं प्राणिनो भवंति, यद्यहं निजजनन्या विनयं प्रयुंजे तत्किं तव शिरो बाधते? विज्ञातनागदत्तनिश्चया स्थिता मौनेन नागश्रीः, व्रजंति वासराः.

अन्यस्मिन् दिने भणिता सा नागदत्तेन प्रिये! यदि त्वं निजश्वश्रूशुश्रूषां करोषि तदाहं देशांतरे व्रजामि वाणिज्यार्थं, हर्षवशविकसितवदनया प्रतिपन्नमनया, गतो नागदत्तः, प्राप्तावसरया

चिंतितं नागश्रिया, साधयामि सांप्रतं निजसमीहितं. तत आहारनिरोधं कुर्वत्या क्रमेण महातपस्विनीव शोषितशरीरा सा कृता तया, तेनोत्थातुमपि सा न शक्नोति, परिशुषितमांसरुधिरा प्रसृतश्वासा गलन्नयना च कथंकथमपि जल्पंती निःस्थामा सा गमयति दिनानि, यतः—बहुया उ सासुयाणं । कलुसियहियया उ जंवि चिंतिंति ॥ सइ सामत्थे जं पुण । कुणंति किं तेण भणिएण ॥१॥

दुःखभरभृतायां कंठप्राणायां तस्यां समागतो नागदत्तः, निपतितस्तच्चरणयोः, पृष्टा जननी कुशलोदंतं, विमानिताहमनयाा, कामं बालस्त्वमिति वक्तव्ये स्खलदक्षरं कामपाल इति जल्पितं जनन्या, पृष्टा तेन नागश्रीः, प्रिये! किं ते श्वश्रूः समुल्लपति? तत्कालोत्पन्नप्रतिभया जल्पितमनया तदेषा समुल्लपति यद्वक्तुमपि न शक्यते, तथापि तव कथ्यते. यस्मिन्नेव दिने आर्यपुत्रः प्रचलितस्तस्मिन्नेव दिवसे भणिताहमनया वत्से! अस्ति मम पूर्वपरिचितः कामपालो नाम पुरुषः, अनपत्या च त्वं, तद्रहसे रजन्यां तं प्रच्छन्नं प्रवेशयामि, न प्रतिपन्नं मया. पुनः पुनर्भणंत्याः समतिक्रांतानि सप्तदिनानि, तथापि मया न प्रतिपन्नं. तत आज्ञाखंडनं मन्यमाना सा भोजनमपि न करोतीति. ततः समुत्पन्नकोपेन जल्पितं तेन मा करोतु भोजनं, म्रियतां? किमनया? उत्तीर्णचित्त·

मिति ज्ञात्वा भणितं नागश्रिया आर्यपुत्र! विसर्जय मां. नाहमनया सार्धमेकमपि दिनं तव गृहे वसामि. तेन भणितं न त्वं विसर्जनयोग्या यस्याः शीलपरिपालने ईदृशो निश्चयः, एषा पुनर्लंघितमर्यादा स्थविरा विसर्जनमप्यर्हति. तया भणितं यद्येवं ततोऽहं स्थिता. ततोऽसौ तद्वचनेन जननीं गृहीत्वा निर्गतो गृहात, गतो योजनपंचकं, दृष्टाटवीमध्ये चैका प्रपा, मुक्त्वा तत्र जननीं समागतो निजगृहं, सापि दृष्टा प्रपास्वामिना, भणिता च वृद्धे! समागतो जनस्त्वया पानीयं पातव्यं, वसनाशनादिचिंतामहं तव करिष्यामि, प्रतिपन्नमनया, व्रजंति वासराः, अन्यदा जातः परस्परं शिशिरग्रीष्मवर्षारात्राणां विसंवादः, तत्र शिशिरो भणति मया मेदिनी भूषिता, ग्रीष्मवर्षारात्रावप्येवमेव भणतः, न छिद्यते तेषां विवादः, भणितं शिशिरेण पृच्छामः कमपि चिरवयसं, प्रतिपन्नं ताभ्यां, दृष्टा प्रपोपविष्टाऽमृतमुखीनामस्थविरा, समागताश्च ते तदंतिकं, प्रणता स्थविरा, आशीर्दानपुरस्सरं संभाषितास्तया कोमलवचनैः पृष्टाश्च किं निमित्तं वत्साः समागताः? तैरुक्तमंब शिशिरग्रीष्मवर्षारात्राणां मध्ये कः श्लाघनीयः? तयोक्तं त्रयोऽपि श्लाघ्यतमा एव. ततस्ते त्रयोऽपि परितुष्टाः, भणितास्तैः स्थविरा, अंब! घटमिमं मोदकभृतं त्वं प्रतिदिनं पश्यसि. एवं भणित्वा गतास्ते स्वस्था-

नं, सापि प्रतिदिनं मोदकान् भुंजाना कालं गमयति.

अन्यदा चिंतितं वध्वा यदि तस्या मृतशब्दः श्रूयते तदा मे निवृत्तं भवति हृदयं, भणितश्च तया नागदत्तः, आर्यपुत्र! गत्वा निजांबायाः शुद्धिं लभस्व? कथं सा तिष्ठति? गतोऽसौ. दृष्टा जननी सुंदरशरीरा, दर्शितस्तया पुत्रस्नेहः, भोजितः परममोदकैः, निवर्तमानस्य च तस्य संबलनिमित्तं समर्पिता मोदकाः, प्राप्तो निजगृहं नागदत्तः, पृष्टो नागश्रिया कथमंबा तिष्ठति? कथं वा भुंजते? कथितस्तेन सर्वोऽपि व्यतिकरः, दर्शिता मोदकाः, कषायिता नागश्रीः, भणितो नागदत्तो यथा मम जननीं तत्र मुंच? निजजननीं चेहानय? तथैव कृतं तेन. पुनरपि संपन्नस्त्रयाणामपि ऋतुदेवानां विसंवादः, भणितं शिशिरेण पुनरप्यन्यं कमपि पृछामः, आगछद्भिस्तैर्दृष्टा सा कटुकमुखी, अपूर्वेति कृत्वा च पृष्टा अंब! शिशिरग्रीष्मवर्षारात्राणां को रमणीय इति? तया भणितं त्रयोऽप्यशोभनाः. एतत् श्रुत्वा तैस्त्रिभिरपि रुष्टैः शप्ता सोपहतश्रवणनयनव्यापारा दुःखेन तिष्ठति. कतिपयदिवसावसाने भणितो नागदत्तो नागश्रिया मम जनन्यास्तु त्वं वार्तामपि न पृछसि, तेन भणितं पृछामि गछामि च. तत्र गतोऽसौ, तत्र स्थाने दृष्टा तथाविधा सा वृद्धा, विस्मयमापन्नेन

तेन पृष्टास्तत्रैव संपिंमिताः कार्पटिकादयः, जणितमेकेन दृष्टा मया सा पुरुषत्रिकेण शिशिरादिस्व-रूपं पृच्छ्यमाना त्रयाणामपि निंदनपरायणा. ततस्तै रोषापूरितमानसैः प्रणष्टवचननयनश्रवणचेष्टा सा कृता. नागदत्तेन चिंतितं निजनामसदृशं कुर्वत्या दूनिताः केचिदेतया दिव्यपुरुषाः, तेन चैवं-विधा जातेति विचिंत्य गृहीत्वा तां गतः स्वनगरं, प्रविष्टो गेहे, गेहिन्या पृष्टं कथमेवंविधमवस्थांतरं संप्राप्ता मे जननी. तेन जणितं निजतुंडफलमेतदिति कथितः सर्वोऽपि वृत्तांतः, श्रुत्वेदं स्थिता सा लज्जयाधोमुखी, मातरं प्रतिपालयंती च क्लेशेन कालं गमयामास. एवं मधुरवचनानि वदंती प्रथ-मस्थविरा सुखपरंपरां प्राप्ता, द्वितीया पुनर्दुर्वाक्यदोषतो दुःखपरंपरामिति. तदेतदवगम्य सदा मधुर-जाषिजिरेव जाव्यमिति. तदिह मधुरजाषाजाषिणामेवमुच्चै—र्विपुलसुखसमृद्धिं वीक्ष्य सार्धं सुकी-र्त्यां ॥ वदत विशदवाक्यं सर्वदा सत्यसारं । मितमधुरमुदारं विश्वसंतोषकारं ॥ १ ॥ मितमधुरभाष-काश्च दयापरा जवंति, ततस्तदनंतरं दयाधिकारमाह, तत्रैते श्लोकाः—

॥ मूलम् ॥—दय ।धर्मस्य सर्वस्वं । दया धर्मस्य जीवितं ॥ मातेव निजपुत्रस्य । दया धर्मस्य पालिका ॥ १ ॥ दुःखिताः स्वत एवामी । केऽपि केनापि कर्मणा ॥ प्राणिनोऽनादिसंसारे । तेषां

किं वद चिंतया ॥ २ ॥ जायंते चात्र संसारे । जंतवः शतशः समे ॥ मातृपित्रादिभावेन । कः
प्रियः कोऽप्रियस्ततः ॥ ३ ॥ हन्मीति चिंतनादेव । सुकृतं हंति जन्मजं ॥ त्रिजन्मसंभवं हंति ।
सुकृतं हेतियोगतः ॥ ४ ॥ घ्नंश्च जन्मशतोपात्तं । सर्वं हंति हितं शुभं ॥ आत्मैव च हतस्तेन ।
परं घ्नता न संशयः ॥ ५ ॥ यतो हन्यादसौ हंता । लभते वधबंधनं ॥ दशधा शतधा चैव । ल-
क्षशः कोटिशोऽपि वा ॥ ६ ॥ दृष्ट्वा च शस्त्रमुद्गीर्णं । भयात्तरललोचनः ॥ वेपते विविधं प्राणी ।
सर्वो जीवनवांछया ॥ ७ ॥ आकृष्टोऽपि म्रियस्वेति । दुःस्थो भवति मानसे ॥ मार्यमाणस्य यद्दुः-
खं । तद्वेत्ति यदि केवली ॥ ८ ॥ अर्थवंतोऽर्थसारेण । राजा राज्येन रक्षति ॥ येन तेन प्रकारेण
। रक्षामर्हति जीवितं ॥ ९ ॥ यथा स्वयं प्रणश्यंति । दूरं दूरेण देहिनः ॥ मृत्योस्तथापरस्यापि ।
न प्रियं मरणं क्वचित् ॥ १० ॥ निःशेषं विश्वमेकत्र । धनमन्यत्र जीवितं ॥ विश्वं विश्वं परित्यज्य
। जीवो गृह्णाति जीवितं ॥ ११ ॥ एतद्धर्मस्य सर्वस्वं । शेषो वचनविस्तरः ॥ परेषां तन्न कर्तव्यं ।
यदात्मनि न रोचते ॥ १२ ॥ सर्वदानाग्रिमं दानं । शौचानां शौचमुत्तमं ॥ कारणं सर्वसौख्यानां ।
यदेतत्प्राणिरक्षणं ॥ १३ ॥ शेषदानान्यदानानि । मरणे समुपस्थिते ॥ जीवितं यो ददात्यस्य । स

दाता सर्वदायकः ॥ १४ ॥ दृष्टांतोऽत्र नरः कोऽपि । राजरत्नमलिम्लुचः ॥ राजप्रसादतो राज्ञ्या । मरणाद्विनिमोचितः ॥ १५ ॥ परप्राणप्रहाणोत्थाः । पापपूरेण पूरिताः ॥ पतंति प्राणिनः पापा । नरके तीव्रवेदने ॥ १६ ॥ सदयहृदयदत्ता त्रातनिःशेषसत्वा । विधृतगुणविताना सर्वधर्मप्रधाना ॥ जयति दलितदोषाः सर्वकल्याणपोषा । जनजनितसदक्षा पालिता जीवरक्षा ॥ १७ ॥ इति श्लोकाः सप्तदश. व्याख्या—दयेत्यादि दया अहिंसा धर्मस्य सर्वस्वं सर्वसारः, दया धर्मस्य जीवितमिव जीवितं, दयासद्भाव एव धर्मसद्भावात, मातेव जननीव निजपुत्रस्य सुतस्य दया धर्मस्य पालिकेति श्लोकार्थः. ॥ १ ॥ अथ वधचिंतापि न कर्तव्येत्युपदिशन्नाह—दुःखिता इत्यादि श्लोकः स्पष्टः. ॥ ॥ २ ॥ अथात्र संसारे न कोऽपि शत्रुर्मित्रं वापीति दर्शयन्नाह—जायंत इति श्लोकः सुगमः. ॥ ॥ ३ ॥ अथ परप्राणप्रहाणंप्रति चिंतनशस्त्रग्रहणव्यापादनेषु यावन्मात्रं सुकृतं हंति व्यवहारतस्तत्तावन्मात्रं दर्शयन् श्लोकत्रयमाह—हन्मीति चिंतनादेवेत्यादिकं कंठ्यं चैतत. ॥ ४–६ ॥ अथ शस्त्रमुद्गीर्णमालोक्यामार्यमाणा अपि यथा दुःखातुरा भवंति जंतवस्तथा दर्शयितुमाह—दृष्ट्वा शस्त्रं समुद्गीर्णमित्यादि श्लोकद्वयं स्पष्टं. ॥ ७–८ ॥ अथ सर्वास्वप्यवस्थासु सर्वेषामपि प्राणिनां सर्वैरपि

प्रकारैर्जीवितव्यमत्यंतवल्लभमिति दर्शयन् श्लोकत्रयमाह—अर्थवंतोऽर्थसारेणेत्यादि सुखावबोधमेवेदमिति. ॥ ९–११ ॥ अथ तात्पर्यं कथयन्नाह—एतद्धर्मस्य सर्वस्वमिति श्लोकः स्पष्टः. ॥ १२ ॥ अथ दयाया एव माहात्म्यमाविःकुर्वन्नाह—सर्वदानेत्यादि, सर्वदानानामग्रिमं प्रधानं दानं वितरणं शौचानां सत्यतपोजलादिशौचानां शौचमुत्तमं प्रधानं कारणं निबंधनं सर्वसौख्यानां समस्तशर्मणां यदेतत्प्राणिरक्षणमिति. ॥ १३ ॥ अथ शेषदानेभ्यो जीवितव्यदानस्य प्राधान्यमावेदयन्नाह—शेषदानानीत्यादि, स्पष्टश्चायं श्लोकः. ॥ १४ ॥ अथ शेषदानेभ्यो यथा जीवितव्यदानं प्रधानं तथा दृष्टांतेन स्पष्टयन्नाह—दृष्टांतोऽत्र नर इत्यादि, दृष्टांत उदाहरणमत्र दयादानाधिकारे नरो मानवः कोऽपि कश्चिद्राजरत्नमलिम्लुचो राजरत्नहारिचौरो राजप्रसादतो राज्ञः प्रसादेन राज्या पट्टमहादेव्या मारणात्प्राणव्यपरोपणाद्विमोचितो रक्षित इति. ॥ १५ ॥ अथ जीवघातिनामामुष्मिकं दोषमाह—परेत्यादि, परप्राणानां प्रहाणं घातनं तदुद्भवपापस्य पूरः प्रवाहस्तेन पूरिता व्याप्ताः पतंति निमज्जंति प्राणिनो जीवाः पापाः पापकारिणो नरके तीव्रवेदन इति. ॥ १६ ॥ अथ जीवदयां स्तुवन् वृत्तमाह—सदयेत्यादि, सदयहृदयदत्ता सदयं हृदयं येषां ते सदयहृदयास्तैर्दत्ता, त्रातनिःशेषसत्त्वा

रक्षितसकलजीवा, विधृतगुणविताना विधृतो गुणानां वितानो विस्तरो यया सा, तथा सर्वधर्मप्रधाना सर्वधर्मोत्तमा, जयत्यतिशेते दलितदोषा विदारितापराधा, सर्वकल्याणपोषा सकलश्रेयःपुष्टिकारिणी, जनजनितसदक्षा जनानां जनितानि संति शोभनान्यक्षाणींद्रियाणि यया सा, तथा पालिता सेविता जीवरक्षा जीवदयेति वृत्तसमासार्थः. ॥ १७ ॥ राजरत्नमलिम्लुचदृष्टांतः पुनरयं—

अस्त्यत्र भारते वर्षे वसंतपुरं नाम नगरं, तत्र जितशत्रुर्नाम राजा बभूव. अथ तत्रैकेन रंभापुत्रकेण विषयप्रसक्तेन धनार्थिना चौरैः सह संगतिः कृता. अन्यदा तैश्चौरै राज्ञो रत्नभांडागारे क्षात्रं दत्तं, स एव रंभापुत्रकः प्रवेशितो मध्ये, निष्कासितं च किंचिद् द्रव्यजातं. अत्रांतरे विज्ञातास्ते तस्करा दंडपाशिकेन, चौराश्चौरा इति जल्पंतो धाविताः सुभटाः, नष्टाश्चौराः, गृहीतो रंभापुत्रकः, दर्शितो राज्ञः. ततो राज्ञा तरलतारं पश्यन्नसौ पृष्टो यथा रेरे मुग्ध! किमर्थं चौरिका कृता? तेनापि मुग्धत्वेन सत्यमेव निवेदितं. ततो नरेंद्रेण भणितं नानेन कदाचिदपि चौरिका कृता, मुग्धोऽयं वराको मुच्यतामिति. ततो मंत्रिणा जल्पितं देव! यद्यप्येवं तथापि निगृहीतव्य एवायमन्येषां शिक्षानिमित्तमिति. राज्ञोक्तमेवं विधेहि? ततोऽसौ वध्य आज्ञप्तो दीनो द्रव्याजनको

भयातुरो कंपमानशरीरकस्तरलतारं चक्षुर्विक्षिपन् वध्यभूमौ नेतुमारब्धः, दृष्टश्चालोकगतयैकया दे· व्या दयापरीतांतःकरणया, दासीमुखेन राजा भणितो यथा देव! चौरमिमं प्रसादं कृत्वा दिनमेकं मदुपरोधेन विमुंचस्व? येनास्य किंचिदहं सांसारिकं सुखं दर्शयामि. ततो राज्ञा मुक्तोऽसौ नीतश्च देव्या निजगृहे, कारितं च तस्य स्नानभोजनपुष्पतांबूलविलेपनादिकं, परिधापितो वरवस्त्राणि, ढौ· कितास्तस्य पंचप्रकारा अपि विषयाः, गतं च दीनाराणां शतमेकं, तद्व्यतिकरं द्वितीयदिने राजानं विज्ञप्य द्वितीयया देव्या तस्य तस्करस्य कृतं विशेषेण स्नानभोजनवस्त्राभरणादिकं, गतं च दीना· राणां सहस्रमेकं, तृतीयदिने तृतीयया देव्या स चौरो मोचितः, तयापि च तद्भोगादौ लक्ष एको व्ययीकृतः, चतुर्थदिने यावन्न काचिद्देव्युत्सहते, ततो राज्ञा स्वयमेव पट्टमहादेवी भणिता यथा दे· वि! किं ते मनोरथा न पूर्यंते? किमेनं चौरं न मुंचयसि? तयोक्तं देव! न त्वं मामकं वचः क· रोषि, राज्ञोक्तं किमेवं वदसि? करोम्येव तावकं वचः, देवी प्राह देव! यद्येवं तर्हि जीवन्नेवैष व· राको मुच्यतामिति, राज्ञापि तथा कृतं, देव्या च स नीतो गृहे, यद्वा तद्वा भोजनं दत्वा च विस· र्जितः. ततोऽसौ गंतुमारब्धः, शेषदेवीभिः सा महादेवी हसिता अहो इयं त्यागिनीति! ततस्तया

चौर आकारितः पृष्टश्च केन ते प्रभूतं दत्तमिति? स प्राह त्वया यया जीवितव्यं दत्तमिति, यतो मम पाश्चात्यदिनत्रये इदमेव चेतसि वर्तते यदुत प्रातरहमवश्यं मारणीय इति. न पुनर्जानामि किं मया भुक्तं पीतं वा, दत्तं परिहितं वा, सुखं दुःखं वानुभूतमिति, अद्य पुनर्जानेऽहं यदुत त्वयैव महानुभावया महादेव्या मह्यं त्रैलोक्यसंपदोऽपि दत्ता यया मे दत्तं जीवितव्यमिति. अद्यैव जातोऽहं जनन्या, अद्यैवाहममृतरसेन सिक्त इत्यादि तां महादेवीं परमोपकारिणीं शेषदेवीनां पुरतः श्लाघयित्वा गतोऽसौ रंभापुत्रक इति. तदेवं सर्वदानानां मध्येऽभयदानं प्रधानं महदिति स्थितं. इति दयाधिकारः समाप्तः ॥ उक्तो दयाधिकारः, इह च परमार्थवृत्त्या दयालवः सर्वज्ञशासनस्थिता एव भवंति, ते च यथाशक्त्या चतुर्विधमपि श्रमणसंघं पूजयंते च, अतो दयाधिकारानंतरं संघपूजोच्यते, तत्रैते श्लोकाः—

॥ मूलम् ॥—कर्मद्रुमकुठाराय । सर्वकल्याणकारिणे ॥ जगन्मंगलभूताय । सत्पात्राय महात्मने ॥ १ ॥ ज्ञानदर्शनचारित्र—संपदां कुलसद्मने ॥ संसारसारभूताय । सर्वदा सुखहेतवे ॥ २ ॥ श्रीमत्संघसमुद्राय । गुणरत्नभृतात्मने ॥ पूजां पुण्यजनः कोऽपि । कुरुते भक्तिनिर्भरः ॥ ३ ॥ त्रि-

निर्विशेषकं ॥ शिवसद्मसमारोह—निःश्रेणिः सरला समा ॥ गुणगात्रैः समाकीर्णा । संघभक्ति-
र्गरीयसी ॥ ४ ॥ किं किं न पूजितं तेन । संघो येनेह पूजितः ॥ न चान्यदीदृशं पात्रं । पवि-
त्रं भुवि विद्यते ॥ ५ ॥ यस्य निःशेषसंसार—पारवर्ती जिनेश्वरः ॥ त्रिलोककृतपूजोऽपि । सपर्यां
कुरुते स्वयं ॥ ६ ॥ तीर्थप्रवर्तनाकाले । भ्रामरीदानपूर्वकं ॥ कृतज्ञतां पुरस्कुर्वन् । यतो नौति जि-
नोऽपि तं ॥ ७ ॥ संघवात्सल्यतः पूर्वं । पश्चात्तीर्थकरोऽजनि ॥ अतः कारणभावेन । संघः पूर्वो
निगद्यते ॥ ८ ॥ सर्वोऽपि पूजितः संघः । संघदेशेऽपि पूजिते ॥ यथैकपुष्पदानेऽपि । देवो भव-
ति पूजितः ॥ ९ ॥ सर्वसंघसपर्यायाः । फलमाप्नोति मानवः ॥ परिणामभेदतो यस्मा—त्पुण्यापु-
ण्यव्यवस्थितिः ॥ १० ॥ आसन्नसिद्धिकस्येदं । लिंगमाहुर्मनीषिणः ॥ यत्संघपूजनं शक्त्या । भक्ति-
सारं विधीयते ॥ ११ ॥ संघपूजाफलं प्रोक्तं । परं सिद्धिस्तथा परं ॥ मर्त्यामरेंद्रनागेंद्र—श्रियः स-
र्वसुखप्रदाः ॥ १२ ॥ त्यक्ता दुर्गतिवर्तिनी प्रतिहता कष्टा परप्रेष्यता । मानुष्यं सफलीकृतं शशधरे
स्वं नाम संलेखितं ॥ संध्यारागचलाः श्रियः सफलतां तैरेव संप्रापिता । यैः सद्वित्तचयेन शुद्धम-
नसा श्रीसंघपूजा कृता ॥ १३ ॥ संसारसागरे पोतो । ज्ञानादिगुणभांडभृत् ॥ येनायमर्चितः संघ—

स्तेन तीर्णो भवोदधिः ॥ १४ ॥ यथाशक्ति यथाभक्ति । यथाकालं यथाधनं ॥ संघपूजा सदा कार्या । जन्मसाफल्यमिच्छता ॥ १५ ॥ गृहिणा सद्विवेकेन । संसारभयभीरुणा ॥ पूजनीयः सदा संघः । कृतार्थं जन्म कुर्वता ॥ १६ ॥ आसन्नसिद्धिकैरेव । संघश्च पूज्यते नरैः ॥ संघपूजारतश्चात्र । धनसारो निदर्शनं ॥ १७ ॥ व्याख्या—इति श्लोकाः सप्तदश प्रायः सुगमाः, तथापि किंचिद्व्याख्यायते—कर्मद्रुमकुठारायेति कर्माण्येव द्रुमाः कर्मद्रुमास्तेषां छेदकत्वात्कुठार इव कुठारः परशुस्तस्मै कर्मद्रुमकुठाराय, सर्वकल्याणकारिणे समस्तश्रेयोविधायिने, जगन्मंगलभूताय भुवनमंगलकल्पाय, सत्पात्राय शोभनभाजनाय, महात्मने पूज्यात्मने इति प्रथमश्लोकार्थः. ॥ १ ॥ तथा ज्ञानदर्शनचारित्रसंपदां कुलसद्मने कुलगृहाय, संसारसारभूताय भवप्रधानकल्पाय, सर्वदा सर्वस्मिन् काले सुखहेतवे सुखकारणायेति द्वितीयश्लोकार्थः. ॥ २ ॥ श्रीमत्संघसमुद्रायेति, श्रीमांश्चासौ संघश्च श्रीमत्संघः, स एव समुद्रस्तस्मै श्रीमत्संघसमुद्राय, गुणरत्नभृतात्मने ज्ञानादिगुणमाणिक्यात्मकाय, पूजां सपर्यां पुण्यजनः पुण्यप्राणी कोऽपि कश्चित्कुरुते विधत्ते भक्तिनिर्भरो भक्तिप्रह्व इति तृतीयश्लोकार्थः. ॥ ३ ॥ शिवसद्मसमारोहणनिःश्रेणिः सिद्धिसौधसमारोहणाधिरोहिणी, सरला दीर्घा, समा वै-

षम्यरहिता, गुणमात्रैर्ज्ञानादिगुणमात्रकैः समाकीर्णा व्याप्ता संघभक्तिः संघाराधना गरीयसी महीयसीति चतुर्थश्लोकार्थः. ॥ ४ ॥ किं किं न पूजितं तेन? सर्वमपीत्यर्थः, संघो ज्ञानादिगुणगणयुक्तो जंतुसमुदायो येनात्र पूजितोऽर्चितः, न चान्यत्र नैवान्यतरदीदृशमीदृक्षं पात्रं भाजनं पवित्रं शुचि भुवि पृथिव्यां विद्यते समस्तीति पंचमश्लोकार्थः. ॥ ५ ॥ न केवलं संघः सुरासुरनरेंद्रैरेव पूज्यते, किं तर्हि? जिनैरपीत्येतद्दर्शयन्नाह—यस्य निःशेषसंसारपारवर्ती जिनेश्वर इत्यादि श्लोकत्रयं सुगममेव. ॥ ६–८ ॥ अथ परः प्राह—ननु कथं पंचदशकर्मभूमिवर्ती प्रतिनियतदेशवर्तिना श्रावकेण संघः संपूजयितुं शक्यते? तद्देशस्यैव पूजयितुं शक्यत्वात, सत्यमुक्तं, द्रव्यतोऽसौ देशपूजक एव, भावतस्तु सकलमपि संघं पूजयतीति दर्शयन्नाह—सर्वोऽपि पूजितः संघः संघदेशेऽपि पूजिते इत्यादि श्लोकद्वयं सुगममेव. ॥ ९–१० ॥ अथ संघपूजकस्य स्तुतिं कुर्वन् फलं दर्शयन् श्लोकत्रयमाह—तत्रासन्नसिद्धिकस्येदं लिंगमाहुर्मनीषिण इत्यादि श्लोकद्वयं पाठसिद्धमेव, तृतीयस्तु व्याख्यायते—त्यक्ता भग्निता दुर्गतिवर्तिनी कुगतिसरणिः, प्रतिहता निराकृता कष्टा दुरंतदुःखरूपा परप्रेष्यता परकर्मकरत्वं, मानुष्यं मानुषत्वं सफलीकृतं सफलतां नीतं, शशधरे चंद्रमसि स्वमात्मीयं

नाम नामधेयं संलेखितं विन्यस्तं. संध्यारागचलाः संध्याकालरक्तानुसमप्रभाः श्रियो लक्ष्म्यः सफलतां फलवतीत्वं तैरेव संघपूजकैरेव संप्रापिता लंभिता यैर्यकैः सद्वित्तचयेन शोभनद्रव्यजातेन शुद्धमनसा निर्मलांतःकरणेन श्रीसंघपूजा श्रीगुणवच्चतुर्विधश्रमणगणसपर्या कृता विहितेति. ॥ ११–१३ ॥ अथ संघपूजाफलमेव रूपकत्रयेणाह—संसारसागरे इत्यादि, अस्य व्याख्या—संसारसागरे भवसमुद्रे पोतो यानपात्रं, ज्ञानादिगुणा एव भांडं क्रयाणकं तद्बिभर्तीति ज्ञानादिगुणभांडभृत, येनायमर्चितः संघस्तेन तीर्णो भवोदधिरिति सुगमं. ॥ १४ ॥ यथाशक्ति यथाभक्ति । यथाकालं यथाधनं ॥ संघपूजा सदा कार्या । जन्मसाफल्यमिच्छता ॥ १ ॥ गृहिणा सद्विवेकेन । संसारभयभीरुणा ॥ पूजनीयः सदा संघः । कृतार्थं जन्म कुर्वता ॥ २ ॥ इति श्लोकद्वयं कंठ्यं. ॥ १५–१६॥ अथ संघपूजाकर्तुरासन्नसिद्धिकत्वं दर्शयन् दृष्टांतमाह—आसन्नसिद्धिकैरेवेत्यादि श्लोकः सुगमः. ॥ १७ ॥ धनसारकथानकं त्विदं—

अस्तीह मंदरोदार—सुरमंदिरमंडितं ॥ कैलासपर्वतोत्तुंग—प्रैंखत्प्राकारवेष्टितं ॥ १ ॥ नृरिपुण्यजनाकीर्णं । कुबेरपुरसन्निभं ॥ पुरं विश्वपुरं नाम । महाधनजनाकुलं ॥ २ ॥ युग्मं ॥ बभूव त·

त्र विख्यातो । राजमान्यो महाधनः ॥ महायशा महात्यागी । सार्थवाहः सुमंगलः ॥ ३ ॥ प्रकृत्यैव सदाचारः । सत्यसंधः सदाशयः ॥ दयादाक्षिण्यसौजन्य—गांभीर्यादिगुणालयः ॥ ४ ॥ परोपकारतानिष्ठः । सुसंतुष्टः प्रियंवदः ॥ पापभीरुः सुधीरात्मा । धर्मिष्ठो धार्मिकप्रियः ॥ ५ ॥ कल्पवृक्ष इवाध्यक्ष—पूरितार्थिमनोरथः ॥ सद्बंधुकुमुदानंदी । सद्वृत्तः पार्वणेंदुवत् ॥ ६ ॥ सुरूपः सुभगः श्रीमान् । कृतज्ञः सुकृती कृती ॥ सदादेयः सतां मुख्यः । शांतमूर्तिर्गुणप्रियः ॥ ७ ॥ बभूव प्रेयसी तस्य । प्रीतिपात्रं प्रियंवदा ॥ सुनंदाख्या सतीमुख्या । बंधुवर्गस्य वत्सला ॥ ८ ॥ मुक्तावलीव सद्वृत्ता । सद्गुणग्रामराजिनी ॥ सौम्या सर्वजनानंदा । चंद्रमूर्तिरिवामला ॥ ९ ॥ पद्मपत्रविशालाक्षी । विशालकमलालया ॥ मूर्ता लक्ष्मीरिवात्यंतं । सर्वलोकस्य वल्लभा ॥ १० ॥ सीतेव रूपसंपन्ना । शीलालंकारधारिणी ॥ ध्वस्तदोषारुणस्येव । मूर्तिर्लब्धमहोदया ॥ ११ ॥ सालंकारा सुवर्णाढ्या । सुपदा लक्षणान्विता ॥ सदर्था जैनवाणीव । विबुधानंददायिनी ॥ १२ ॥ देवानां पूजने सक्ता । गुरूणां भक्तिकारिका ॥ स्त्रीजनोचितकार्येषु । दक्षा सरलमानसा ॥ १३ ॥ हर्षोल्लसितरोमांचा । जल्पंती मधुरं वचः ॥ या ददौ सर्वदा दानं । दीनादिभ्यो निरुत्सुका ॥ १४ ॥ सप्रमोदो·

ऽनया सार्धं । सार्थवाहः सुमंगलः ॥ कुर्वाणः स्वकुलाचारं । बुभुजे विषयान् वरान् ॥ १५ ॥ अ-
न्यदा बहिरुद्याने । चंपकामोदनामनि ॥ विहरंतः समायाताः । सूरयः शीलसुंदराः ॥ १६ ॥ भव्य-
पद्माकरादित्या । बहुशिष्या बहुश्रुताः ॥ स्थिताः साधूचिते स्थाने । सर्वदोषविवर्जिते ॥ १७ ॥ वं-
दनार्थं समायातो । नागरीको जनो बहुः ॥ सुमंगलोऽपि सानंदः । सपत्नीकः समाययौ ॥ १८ ॥
ततो गंभीरनादेन । सूरिभिर्गुणभूरिभिः ॥ महामोहं निरस्यंती । प्रारब्धा धर्मदेशना ॥ १९ ॥ भो
भो भव्या भवाब्धौ—मंक्षु मोक्षाभिकांक्षिभिः ॥ विमुच्याधर्मकर्माणि । यतव्यं धर्मकर्मसु ॥ २० ॥
यतः सद्धर्म एवात्र । सर्वसौख्यप्रसाधकः ॥ साधुश्रावकभेदेन । स च द्वेधोदितो जिनैः ॥ २१ ॥
तत्र क्षमादिभेदेन । प्रथमो दशधोदितः ॥ सद्दर्शनादिसंयुक्तः । पंचव्रतविभूषितः ॥ २२ ॥ शुद्ध-
सम्यक्त्वमूलीयः । पंचाणुव्रतसंयुतः ॥ द्वितीयो गृहिणां धर्मो । नानाभिग्रहभूषितः ॥ २३ ॥ तत्त्य-
क्त्वा सर्वसावद्यं । सर्वसंगं विमुच्य च ॥ कुरुध्वं साधुसद्धर्मं । यदीच्छा सिद्धिशर्मणि ॥ २४ ॥ अ-
थवा देशतः कृत्वा । सावद्यारंभवर्जनं ॥ कुरुध्वं श्रावकं धर्मं । सुश्रावकनिषेवितं ॥ २५ ॥ धर्मा-
र्थिना च भो नित्यं । कर्तव्यं देवतार्चनं ॥ त्रिसंध्यं शुद्धभावेन । विधिना कुसुमादिभिः ॥ २६ ॥

देवश्चात्र स विज्ञेयो । यः क्षीणाशेषकल्मषः ॥ निःशेषदोषनिर्मुक्तः । सर्वज्ञः सर्वदर्शनी ॥ २७ ॥ तथा सद्गुरुसद्भक्ति—र्विधेया विधिपूर्वकं ॥ दानसन्मानसत्कारै—र्वैयावृत्त्यार्थनादिभिः ॥ २८ ॥ सद्गुरुश्च स विज्ञेयो । यो गीतार्थो बहुश्रुतः ॥ अक्षताचारचारित्रो । निःसंगो निःस्पृहस्तथा ॥२९॥ तदंते शुद्धसिद्धांतं । श्रोतव्यं शुद्धचेतसा ॥ श्रुत्वा तदनुसारेण । कर्तव्या सदनुष्ठितिः ॥ ३० ॥ तथा परोपकारोऽपि । कर्तव्यः शक्तितः सदा ॥ परोपकारिता येन । सत्पुरुषत्वलक्षणं ॥ ३१ ॥ ततः संतोषिभिर्भाव्यं । न भाव्यमतिलोभिभिः ॥ यतः संतोषिणां नित्यं । जायते परमं सुखं ॥३२॥ तथा भाव्यं भवस्यास्य । निर्गुणत्वं पदे पदे ॥ यत्र मित्राण्यमित्राणि । जायंते स्वजनाः परे ॥ ॥ ३३ ॥ माता जनी जनी माता । पिता पुत्रः सुतः पिता ॥ भ्राता रिपू रिपुर्भ्राता । यत्रासौ निर्गुणो भवः ॥ ३४ ॥ तथा नष्टे विनष्टे वा । मृते वा वल्लभे जने ॥ विदित्वा भवनैर्गुण्यं । शोकः कार्यो न धीधनैः ॥ ३५ ॥ शोको हि धर्मनाशाय । दुःखाय च प्रजायते ॥ नापि कंचिद्गुणं पुंसां । पुष्णातीह कृतोऽपि हि ॥ ३६ ॥ तथा भो भो निहंतव्याः । कषाया दुष्टशत्रवः ॥ हते स्नेहे स मोहोऽपि । हत एव न संशयः ॥ ३७ ॥ हते मोहे हतान्येव । शेषकर्माण्यपि स्फुटं ॥ सर्वकर्मप्र-

हाणे च । जायते शाश्वतं सुखं ॥ ३८ ॥ तथा लोकविरुद्धानि । वर्जनीयानि दूरतः ॥ तद्वर्जनपरो येन । सर्वदा श्लाघ्यते जनैः ॥ ३९ ॥ दातव्यं सर्वदा दानं । दीनादिभ्योऽनुकंपया ॥ सुपात्रेभ्यश्च सद्भक्त्या । निर्जरार्थं विधानतः ॥ ४० ॥ सुक्षेत्रे वापयेद्बीजं । सुपात्रे निक्षिपेद्धनं ॥ सुक्षेत्रे च सुपात्रे च । निक्षिप्तं न विनश्यति ॥ ४१ ॥ पालनीयं वरं शीलं । सर्वतो देशतोऽपि वा ॥ शीलं हि सर्वदा येन । निःशेषगुणभूषणं ॥ ४२ ॥ यतः—

ऐश्वर्यस्य विभूषणं चतुरता शौर्यस्य वाक्संयमो । रूपस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ॥ अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्वाच्यता । सर्वेषामपि सर्वकालनियतं शीलं परं भूषणं ॥ ४३ ॥ तथा द्वादशभेदेऽपि । तपःकर्मणि शक्तितः ॥ उद्यतव्यं यतो यांति । सर्वकर्माणि संक्षयं ॥ ४४ ॥ यथा यथा तपस्तीव्रं । तपस्यंति तपस्विनः ॥ तथा तथा प्रलीयंते । कर्माण्यात्मप्रदेशतः ॥ ४५ ॥ यतः—ताविज्जं तह पडरह । जह निवट्टइ लोहु ॥ तह जीवह तवताविय । फिट्टइ कम्मविरोहु ॥ ४६ ॥ तथा भव्याः सदा भाव्या । भावना भवभेदिका ॥ यतोऽत्र भावनाहीनं । दानाद्यपि न शस्यते ॥ ४७ ॥ तथा भवद्भिर्भो भव्याः । कर्तव्या शिष्टसंगतिः॥

उन्मार्गस्य निराकर्त्री । सन्मार्गस्य प्रवर्तिनी ॥ ४८ ॥ शिष्टसंगेन जन्यानां । दूरं नश्यति दुर्मतिः ॥ सुमतिर्वर्धते नित्यं । स्वार्थसिद्धिस्ततो ध्रुवा ॥ ४९ ॥ स्वार्थसिद्ध्या मनःस्वास्थ्यं । मनःस्वास्थ्ये सुधीरधीः ॥ सुष्टुधीरधियो नित्यं । धर्मध्यानं प्रवर्तते ॥ ५० ॥ धर्मध्यानप्रवृत्त्या च । शुक्लध्यानमवाप्यते ॥ ततः कर्मक्षयोऽवश्यं । ततो मोक्षः सदासुखः ॥ ५१ ॥ तथा गुणवल्लोकस्य । विधेयो विनयोऽनिशं ॥ विनयो हि नृणां येन । सर्वसंपत्तिकारणं ॥ ५२ ॥ निर्धनोऽपि कुरूपोऽपि । विदेश्योऽपि जडोऽपि हि ॥ विनीतो जायते जंतु—र्वल्लभः सर्वदेहिनां ॥ ५३ ॥ लभते च वरां विद्यां । कीर्तिं लक्ष्मीं च सुंदरां ॥ दुर्विनीतस्तु नो स्वार्थं । कदाचिदपि साधयेत ॥ ५४ ॥ युग्मं ॥ तथा दूरं परित्याज्याः । शब्दादिविषया बुधैः ॥ विषयिणां हि जायंते । नानारूपाः कदर्थनाः ॥ ५५ ॥ यतः—कलगीतमधुरगांधर्व—तूर्ययोषिद्विभूषणरवाद्यैः ॥ श्रोत्रावबद्धहृदयो । हरिण इव विनाशमाप्नोति ॥ ५६ ॥ मतिविभ्रमेंगिताकार—हास्यलीलाकटाक्षविक्षिप्तः ॥ रूपावेशितचक्षुः । शलभ इव विपद्यते विवशः ॥ ५७ ॥ स्नानांगरागवर्तक—वर्तिकधूपाधिवासपटवासैः ॥ गंधभ्रमितमनस्को । मधुकर इव नाशमुपयाति ॥ ५८ ॥ मिष्टान्नपानमांसो—दनादिमधुररसविषयगृद्धात्मा ॥ गलयंत्रपा·

शवद्धो । मीन इव विनाशमाप्नोति ॥ ५५ ॥ शयनासनसंबाधन—सुरतस्नानानुलेपनासक्तः ॥ स्प·
र्शव्याकुलितमति—र्गजेंद्र इव बध्यते मूढः ॥ ५६ ॥ एवमनेके दोषाः । प्रणष्टशिष्टदृष्टचेष्टानां ॥
दुर्नयमितेंद्रियाणां । भवंति बाधाकरा बहुशः ॥ ५७ ॥ एकैकविषयसंगा—द्रागद्वेषातुरा विनष्टास्ते
॥ किं पुनरनियमितात्मा । जीवः पंचेंद्रियवशार्त्तः ॥ ५८ ॥ तथा भो सर्वदा कार्यो । विवेकः सर्व·
कर्मसु ॥ विवेकादेव येनेह । कार्यसिद्धिर्भवेन्नृणां ॥ ५९ ॥ विवेकादेव सद्धर्मो । विवेकादेव पू·
ज्यता ॥ विवेकादेव सत्कर्म । विवेकादेव सद्गतिः ॥ ६० ॥ विवेको निर्मलं चक्षु—र्मोक्षमार्गप्रद·
र्शकं ॥ विवेकः सुंदरोदारं । नृणां हृदयमंडनं ॥ ६१ ॥ तथा हितं मितं सत्यं । वक्तव्यं कोमलं
वचः ॥ कोमलं भाषितो येन । जीवो रुष्टोऽपि तुष्यति ॥ ६२ ॥ न तथा शशी न सलिलं । न
चंदनं नापि शीतलच्छाया ॥ प्रह्लादयंति हृदयं । यथा हि मधुराक्षरा वाणी ॥ ६३ ॥ न तथा विषं
न शस्त्रं । नाग्निर्न रिपुर्न दारुणो व्याधिः ॥ उद्वेजयंति हृदयं । यथा कटुकभाषिणी वाणी ॥६४॥
तथा भवद्भिर्भो भाव्यं । सर्वदापि दयाद्रुभिः ॥ दया हि येन धर्मस्य । सर्वस्वमिति गीयते ॥६५॥
दानं शीलं तपो ध्यानं । मौनक्षांत्यादयो गुणाः ॥ सत्यं शौचं च पांडित्यं । दयायुक्तं हि शोभते

॥ ६६ ॥ यतः—पठितं श्रुतं च शास्त्रं । गुरुपरिचरणं च गुरुतपश्चरणं ॥ घनगर्जितमिव विजलं । विफलं सकलं दयाविकलं ॥ ६७ ॥ विनयविहीनः शिष्यो । गुरुरपि तत्वोपदेशताशून्यः ॥ ज्ञानं च जीवरक्षण—रहितं भस्मनि हुतं नियतं ॥ ६८ ॥ तथा भोभो यथा शक्त्या । विधेया संघपूजना ॥ संघं मुक्त्वा यतो नास्ति । पूज्यमन्यज्जगतत्रये ॥ ६९ ॥ संपूज्या हि गुणा एव । न पूज्यं देहिनां वपुः ॥ ते च सर्वेऽपि विद्यंते । संघे सातिशया यतः ॥ ७० ॥ सुसाधुव्रतिनीश्राद्ध—सुश्राविकाप्रभेदतः ॥ संघश्चतुर्विधो ज्ञेयः । स चावश्यं गुणान्वितः ॥ ७१ ॥ गुणाः पुनर्वरं ज्ञानं । दर्शनं चरणं तथा ॥ तपः सत्यं च शौचं च । सर्वं संघेऽस्ति सर्वदा ॥ ७२ ॥ एवमादिप्रबंधेन । सूरिणा देशना कृता ॥ प्रबुद्धा बहवो लोका । व्रतं च प्रतिपेदिरे ॥ ७३ ॥ देशतो विरतिं केचित् । सम्यक्त्वमपरे तथा ॥ अन्ये तु मद्यमांसादि—विरतिं प्रतिपेदिरे ॥ ७४ ॥ अत्रांतरे समुत्थाय । सार्थवाहः सुमंगलः ॥ नत्वा सूरिं बभाणैवं । ललाटघटितांजलिः ॥ ७५ ॥ भगवन् श्रावकं धर्मं । ममाख्याहि विशेषतः ॥ तमेव कर्तुमिच्छामि । साधुधर्मे न मे मतिः ॥ ७६ ॥ सूरिश्चाह शृणु श्रीमन् । सावधानं प्रकथ्यते ॥ इह हि श्रावकेणादौ । दातव्यालोचना गुरोः ॥ ७७ ॥ त्रिविधं त्रिवि-

धेनैव । सम्यग्मिथ्यात्वतस्ततः ॥ प्रतिक्रम्य समाश्रयं । सम्यक्त्वं सुविधानतः ॥ ७८ ॥ विधिश्चायं— समणो वासऊ पुवामेव मिछत्ताऊ पडिक्कमति, सम्मत्तं उवसंपज्जत्ति, नो से कप्पइ अज्जप्पभिति, अन्नउछिए वा, अन्नउछिय देवाणि वा अनउछिय परिग्गहियाणि वा चेइयाणि वंदित्तए वा, नमंसित्तए वा, पुविं अणालत्तएणं वा, आलित्तए वा, संलवित्तए वा, तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाऊं वा अणुपयाऊं वा अन्नबरायाभिऊगेणं बलाभिऊगेणं देवयाभिऊगेणं गुरुनिग्गहेणं वित्तीकंतारेणं सेय सम्मत्ते पसबसम्मत्तमोहणीयकम्माणुवेयणोवसमखयसमुबे, पसमसंवेगादिलिंगे सुहे आयपरिणामे पन्नत्ते, तत्र सम्यक्त्वं निसर्गाभिगमाभ्यां लभ्यते, तत्र निसर्गः स्वभावः, अभिगमो गुरुसकाशे धर्मश्रवणं, तत्र नैसर्गिकं सम्यक्त्वं सुश्रावकसत्कपुत्रपौत्राणां वेदितव्यं, स्वयंभूरमणादिसत्कमत्स्यादीनां वा, ते हि तत्र प्रतिमासंस्थानानि पद्मानि मत्स्यान् वा समालोक्य विशुद्धाध्यवसायसमायोगेन संजातजातिस्मरणाः सम्यक्त्वं प्रतिपद्यंते, निसर्गाभिगमाभ्यां लभंते, तत्राधिगमनेन पुनः सद्गुरुसकाशे धर्मश्रवणं कुर्वतां संवेगतो जीवाजीवादिसमस्ततत्वानां यदुत्पद्यते तदधिगमसम्यक्त्वमिति, अस्य तु श्रमणोपासकेनेमे पंचातिचारा ज्ञात-

व्याः, न समाचरितव्याः, तद्यथा—शंका कांक्षा विचिकित्सा परपाखंम्डप्रशंसा परपाखंडसंस्तव इति. तत्र शंका द्विविधा—देशतः सर्वतश्च, तत्र देशतः किमयं जीवोऽस्ति वा न वेत्याशंकते, सर्वतः पंचापि धर्मास्तिकायादयः संति वा न वेति. कांक्षापि सर्वदेशाभ्यां द्विधा, देशतस्तावदार्हतं दर्शनं सुंदरमिदमपि च सौगतं सुंदरमिति कृत्वा समाश्रयितुं युक्तमित्याकांक्षेति, सर्वतः सर्वाण्येव दर्शनानि. विचिकित्सा फलंप्रति संदेहः, यथास्य सदनुष्ठानस्य परलोके फलं किंचिद्भविष्यति न वेति. विद्वज्जुगुप्सा वा, विद्वांसः साधवस्तेषां जुगुप्सा निंदा. परपाखंडप्रशंसा परपाखंडिश्लाघा, परपाखंडिसंस्तवस्तत्परिचय इति. एवं सम्यक्त्वं प्रतिपद्याणुव्रतादीनि व्रतानि प्रतिपद्यते, तद्यथा—स्थूलकं प्राणातिपातं श्रमणोपासकः प्रत्याख्याति द्विविधंत्रिविधेनेत्यादिभंगकरचनया, स च प्राणातिपातो द्विविधः, संकल्पत आरंभतश्च, तत्र संकल्पतो यावज्जीवतया प्रत्याख्याति, तत्रापि निरपराधस्य प्रत्याख्यानं, न सापराधस्येति. आरंभजं प्राणातिपातं तु न प्रत्याख्यात्येव. स्थूलकप्राणातिपातविरमणस्य श्रमणोपासकेनेमे पंचातिचारा ज्ञातव्याः, न समाचरणीयाः, तद्यथा—वधो बंधश्छविच्छेदोऽतिभारारोपणं भक्तपानव्यवच्छेदश्च. एवं स्थूलमृषावादविरमणादीनि शेषैकादशश्रावकव्रतानि सविस्तरं सूरि॰

णा व्याख्यातानि.

ततो व्याख्यामिमां श्रुत्वा । सूरिं नत्वा सुमंगलः ॥ हृष्टचित्तो बभाणैवं । ललाटघटितांजलिः
॥ ७८ ॥ प्रयच्छानुग्रहं कृत्वा । गृहिधर्मं भदंत मे ॥ कर्तुं नालं यतेर्धर्मं । चारित्रावरणादहं ॥७९॥
ततो ज्ञात्वा तदाकूतं । सूरिणापि तथा कृतं ॥ ततश्च सूरिमानम्य । गतो गेहे सुमंगलः ॥ ८० ॥
सानंदो धर्मसंप्राप्त्या । दिनकृत्यानि चकार सः ॥ कृतार्थं मन्यमानः स्वं । सुष्वाप विधिना निशि
॥ ८१ ॥ प्रातरुत्थाय भूयोऽपि । गतः सूरिपदांतिकं ॥ श्रुतो धर्मो जिनाख्यातो । भक्तिसारं तदंति-
के ॥ ८२ ॥ एवं दिने दिने शृण्वन् । धर्मं सूरिसमीपके ॥ जातो जीवादितत्वेषु । विज्ञः सर्वज्ञ-
शासने ॥ ८३ ॥ ततोऽसौ कृतशृंगारो । विभूत्या सपरिच्छदः ॥ पंचधाभिगमेनैव । याति जैनेंद्रमं-
दिरे ॥ ८४ ॥ पूजयति विधानेन । जैनबिंबानि भक्तितः ॥ ततः करोति संपूर्णं । विधिवच्चैत्यवंद-
नं ॥ ८५ ॥ ततः स्तौति जिनं चारु—गंभीरार्थमहास्तवैः ॥ ततो महर्द्धितो याति । सानंदो गुरु-
सन्निधौ ॥ ८६ ॥ सुप्रशांतं गुरुं भक्त्या । वंदित्वा विधिपूर्वकं ॥ प्रत्याख्यानं यथाशक्त्या । करोति
सपरिच्छदः ॥ ८७ ॥ ततो गुर्वाज्ञया शेष—सुसाधूनभिवंदते ॥ प्रतिपत्तिं मुदा कृत्वा । श्रावकाणां

यथोचितां ॥ ८८ ॥ ततः शृणोति सिद्धांतं । प्रमोदन्नरनिर्ज्ञरः ॥ ततो याति निजे गेहे । धर्मांक·
र्णनरंजितः ॥ ८९ ॥ ततो न्याय्यं करोत्येष । व्यवहारमनिंदितं ॥ दापयित्वा ततो दानं । दीना·
दिज्यो यथोचितं ॥ ९० ॥ साधुवर्गं वराहारैः । सद्भक्त्या प्रतिलंभ्य च ॥ कृत्वा तस्मिं निजप्रेष्य—
शिशुवत्सादिगोचरां ॥ ९१ ॥ वंदित्वा गृहचैत्यानि । भावसारं विशालधीः ॥ प्रत्याख्यानं निजं स्मृ·
त्वा । पठित्वा पंचमंगलं ॥ ९२ ॥ काले ज्ञुंक्ते विधानेन । सुप्रशांतो निराकुलः ॥ हितं मितं वरं
पथ्य—माहारं पुष्टिकारकं ॥ ९३ ॥ त्रिज्ञिर्विशेषकं ॥ ज्ञुक्तांते च शुचिर्ज्ञूत्वा । वंदते जिनपुंगवं ॥
प्रत्याख्यानं ततः कृत्वा । विश्राम्यति क्षणांतरं ॥ ९४ ॥ ज्ञूयोऽपि याति साधूनां । पार्श्वे यदि नि·
राकुलः ॥ शृणोति तत्र सद्धर्मं । स्वाध्यायादि करोति च ॥ ९५ ॥ युग्मं ॥

ततो याति निजे गेहे । करिष्येद्यदि ज्ञोजनं ॥ नो चेत्तत्रैव साध्वंते । लात्वा सामायिकं त·
तः ॥ ९६ ॥ प्रतिक्रामति संविग्नः । सममेव हि साधुज्ञिः ॥ ततो विश्रामणां शक्त्या । साधूनां प्र·
करोति सः ॥ ९७ ॥ ततो गत्वा निजे गेहे । शेते कृत्वोचितं विधिं ॥ इत्यादि सर्वदा सर्वं । सु·
श्रावकजनोचितं ॥ ९८ ॥ विदधत्सदनुष्ठानं । गमयामास वासरान् ॥ अन्यदा रथयानेन । सप·

त्नीकः सुमंगलः ॥ ९९ ॥ गछन् ग्रामांतरं कंचित । पुरासन्नं ददर्श सः ॥ पतितस्तंभ घातं । भ-
ग्नप्राकारतोरणं ॥ १०० ॥ विशीर्णाशेषपट्टौघं । महज्जीर्णजिनालयं ॥ ततोऽसौ भार्यया भाणि ।
यथेदं दृश्यते किमु ॥ १ ॥ श्यामलं पर्वताकारं । महामेघसमप्रभं ॥ स प्रोवाच प्रिये जीर्ण—मे-
तज्जैनेंद्रमंदिरं ॥ २ ॥ पंचभिः कुलकं ॥ पतितं सर्वतो भग्नं । विशीर्णाशेषसंधिकं ॥ एवं तावथ
जल्पंतौ । संप्राप्तौ च तदंतिके ॥ ३ ॥ उत्तीर्य च रथात्तत्र । प्रविष्टौ तौ जिनालये ॥ दृष्टं जैनेश्वरं
बिंबं । शांतं कांतं मनोहरं ॥ ४ ॥ पूजितं च वरोदार—सुगंधकुसुमादिभिः ॥ कृतं च भक्तियोगे-
न । विधिवच्चैत्यवंदनं ॥ ५ ॥ ततो बहिर्विनिष्क्रम्य । सपत्नीकः सुमंगलः ॥ सम्यगालोकयामास ।
सर्वतस्तज्जिनालयं ॥ ६ ॥ दृष्टं च तत्तथा तेन । भग्नभुग्नं समंततः ॥ ततोऽसौ भार्यया भाणि । ध-
र्मे दत्तैकचित्तया ॥ ७ ॥ किंचिन्नाथाद्य याचेऽहं । यद्यवश्यं ददासि मे ॥ स प्राह याच्यतां यत्ते ।
रोचते मनसः प्रिये ॥ ८ ॥ सावदन्नाथ यद्येवं । सुप्रसादोऽसि मामभि ॥ तदेनमुद्धरस्व त्वं । शी-
र्णं जीर्णं जिनालयं ॥ ९ ॥ गृहाण फलमेतासां । संध्यारागचलश्रियां ॥ संस्थापय निजात्मानं ।
मुक्तिलक्ष्मीगृहे द्रुतं ॥ १० ॥ यतो जीर्णजिनागार—समुद्धारविधायिनां ॥ सर्वज्ञागमवेत्तारो । व-

र्णयंति महाफलं ॥ ११ ॥ तद्यथा—ये जीर्णमर्हतां गेह—मुद्धरंति महात्मनः ॥ आत्मानमुद्धरं-
त्येते । पतंतं दुर्गदुर्गतौ ॥ १२ ॥ निस्तीर्णस्तैर्भवांभोधि—र्विदीर्णो मोहमंदरः ॥ स्थगितं दुर्गति-
द्वारं । यैर्जिनागारमुध्धृतं ॥ १३ ॥ कुंदेंदुशंखसंकाशा । तेषां कीर्तिर्यशस्तथा ॥ स्वगोत्रं जीवितं ज-
न्म । तैरेव सफलीकृतं ॥ १४ ॥ स्वभावचंचलैर्वित्तैः । प्रातः प्राघूर्णकप्रभैः ॥ यैरकारि जिनागार-
समुद्धारो महात्मभिः ॥ १५ ॥ श्रुत्वेदं सुंदरं वाक्यं । सुनंदायाः सुमंगलः ॥ एवं प्रिये करोमीति ।
बभाषे बंधुरं वचः ॥ १६ ॥ साधु साधु त्वया प्रोक्तं । हे प्रिये प्रियभाषिणि ॥ प्रतिभाति ममापीदं
। त्वद्वाक्येन विशेषतः ॥ १७ ॥ ततो गत्वा गृहे तूर्णं । सप्रमोदः सुमंगलः ॥ सूत्रधारादिसामग्रीं ।
कृत्वा तत्र समागतः ॥ १८ ॥ स्तोकैरेव दिनैस्तेन । भूरिवित्तं प्रयछता ॥ समुध्धृतं जनानंदं । तुंगं
तज्जिनमंदिरं ॥ १९ ॥ कारिता च महायात्रा । नेत्रानंदविधायिनी ॥ प्रदत्तं च महादानं । संतो-
षितजगज्जनं ॥ २० ॥ कृता चतुर्विधस्यापि । संघस्य परिपूजना ॥ भक्तिसारं वराहार—वस्त्रपात्रा-
दिवस्तुभिः ॥ २१ ॥ ततो दीनादिलोकेभ्यो । ददद्दानं यथेप्सितं ॥ श्लाघ्यमानो जनैः सर्वैः । सा-
र्थवाहो गृहं गतः ॥ २२ ॥ एवं कारयता तेन । यात्रां तत्र जिनालये ॥ भूरिशः शासने जैने ।

कृता प्राज्या प्रभावना ॥ २३ ॥ बहुधा संघपूजा च । कृता तेन महात्मना ॥ सुश्रावकसमाचारो । विशुद्धः पालितश्चिरं ॥ २४ ॥ काले समाधिना मृत्वा । स्वर्ग ईशाननामनि ॥ इंद्रतुल्यः सुरो जातो । महातेजा महर्द्धिकः ॥ २५ ॥ सुनंदापि प्रिया तस्य । धर्मिष्ठा धार्मिका प्रिया ॥ सुश्राविकासमाचारं । पालयित्वा सुनिर्मलं ॥ २६ ॥ संप्राप्याराधनामंते । कल्प ईशान एव हि ॥ तस्यैवेंद्रसमानस्य । देवस्यामलतेजसः ॥ २७ ॥ जाताग्रमहिषीत्वेन । देवी दिव्यर्द्धिसंयुता ॥ कांतकांचनसन्नाया । चंद्रकांताभिधानका ॥ २८ ॥ त्रिभिर्विशेषकं ॥

ततः सुमंगलजीवो । देवो दिव्यं महासुखं ॥ चंद्रकांतायुतस्तत्र । भुक्त्वा संप्रीतमानसः ॥ ॥ २९ ॥ च्युत्वात्रैव समुत्पन्नो । भारतक्षेत्रसंस्थिते ॥ धरासारे पुरे रम्ये । महाधनजनाकुले ॥३०॥ पुत्रः श्रेष्ठिधनाख्यस्य । धनश्रीकुक्षिसंभवः ॥ जातः कालक्रमेणासौ । शुभग्रहनिरीक्षितः ॥ ३१ ॥ त्रिभिर्विशेषकं ॥ कारितं च ततः पित्रा । वर्धापनकमुच्चकैः ॥ मासांते विहितं नाम । धनसार इति स्फुटं ॥ ३२ ॥ वांछिताशेषसंपत्त्या । वर्धमानो गुणैः सह ॥ उदग्रं यौवनं प्राप्तः । कामिनीजनमोहनं ॥ ३३ ॥ इतश्च चंद्रकांतापि । ततश्च्युत्वा स्थितिक्षये ॥ अत्रैव च धरासारे । पुरे पौरगु-

णालये ॥ ३४ ॥ श्रीदत्तश्रेष्ठिनः पुत्री । श्रीकांताकुक्षिसंभवा ॥ जयश्रीर्नाम संजाता । रूपलावण्य· संयुता ॥ ३५ ॥ युग्मं ॥ संपद्यमाननिःशेष—निरंतरमनोरथा ॥ वर्धमाना यथासौख्यं । प्राप्ता च वरयौवनं ॥ ३६ ॥ अथैनामन्यदा बालां । क्रीडंतीं निजमंदिरे ॥ सखीभिः सह सानंदां । धनसा· रो व्यलोकयत ॥ ३७ ॥ पूर्वजन्मानुभावेना—नुरागोऽजनि तामभि ॥ वीक्षिता सा चिरं तेन । लोचनैः स्नेहमंथरैः ॥ ३८ ॥ तथाप्येष जनाध्यक्षं । सस्नेहं सादरं चिरं ॥ सर्वांगं मंथरैर्नेत्रै—र्वारं· वारं विलोकितः ॥ ३९ ॥ धनसारस्ततः कामं । विद्धः कामशिलीमुखैः ॥ गतो गेहे समं मित्रै—स्तामेव हृदि चिंतयन् ॥ ४० ॥ धनेनापि हि विज्ञातो । वृत्तांतोऽयं कथंचन ॥ ततः संप्रेषितास्तेन । तत्क्षणं निजका नराः ॥ ४१ ॥ श्रीदत्तश्रेष्ठिनो गेहे । जयश्रीयाचनाकृते ॥ गतास्ते कथितं त· स्य । धनश्रेष्ठिवचस्ततः ॥ ४२ ॥ युग्मं ॥ प्रतिपन्नं ततस्तेन । वचः सानंदचेतसा ॥ तैरागत्य नरै· स्तुष्टै—र्धनायेदं निवेदितं ॥ ४३ ॥ ततश्चोभयपक्षाभ्यां । समारब्धा सविस्तरं ॥ कर्तुं विवाहसाम· ग्री । प्रमोदभरनिर्भरं ॥ ४४ ॥ क्रमेण गणकाख्याते । संप्राप्ते लग्नवासरे ॥ वृत्तं तयोः प्रमोदेन । पाणिग्रहणमंगलं ॥ ४५ ॥ पूर्वजन्मानुभावेन । धनसारजयश्रियोः ॥ संजातो निबिडः स्नेहः । स·

मानंदितचित्तयोः ॥ ४६ ॥ अथास्य धनसारस्य । जातं मित्रचतुष्टयं ॥ सदा शिष्टसमाचारं । निबिडस्नेहबंधुरं ॥ ४७ ॥ राजपुत्रः सुसेनाख्यो । मंत्रिपुत्रो गुणाकरः ॥ सार्थवाहसुतश्चंडः । श्रेष्ठिपुत्रः शुभंकरः ॥ ४८ ॥ एवं च धनसारोऽसौ । सार्धं तैश्च वयस्यकैः ॥ क्रीडन्नानाप्रकाराभिः । क्रीडाभिः प्रीतमानसः ॥ ४९ ॥ प्रकृत्यैव दयादान—दाक्षिण्यादिगुणान्वितः ॥ प्रकृत्यैव च धर्मार्थी । गमयतिस्म वासरान् ॥ ५० ॥ युग्मं ॥

अन्यदा तं पदे कृत्वा । तत्पिता धननामकः ॥ धर्मस्थाने निजं वित्तं । विनियोज्य यथोचितं ॥ ५१ ॥ कृत्वा सौस्थ्यं कुटुंबस्य । संविग्नो भवभीरुकः ॥ शमसुंदरसूरीणां । समीपे व्रतमाददे ॥ ॥ ५२ ॥ युग्मं ॥ अथ कुलक्रमायातं । सद्व्यवहारमंजसा ॥ विदधद्धनसारोऽपि । राजादिजनसम्मतः ॥ ५३ ॥ पूर्वजन्मकृतोदार—संघपूजाप्रभावतः ॥ अचिरादेव स त्रिंश—त्स्वर्णकोटीश्वरोऽजनि ॥ ५४ ॥ ततोऽसौ राजपुत्राद्यैः । सममेव वयस्यकैः ॥ कुर्वन् शिष्टसमाचारं । बुभुजे निजसंपदं ॥ ५५ ॥ अन्यदा बहिरुद्याने । बकुलामोदनामनि ॥ विहरंतः समायाता । दयासाराख्यसूरयः ॥ ५६ ॥ शिष्यसंघसमायुक्ता । युक्ताः पंचमहाव्रतैः ॥ मतिश्रुतावधिज्ञान —विज्ञातभवविस्तराः

॥ ५७ ॥ स्थिताः साधूचितस्थाने । सर्वदोषविवर्जिते ॥ आयातो वंदनार्थं च । नागरीको बहुर्ज
नः ॥ ५७ ॥ श्रुत्वेदं धनसारोऽपि । समं राजसुतादिभिः ॥ सद्भक्तिकौतुकाक्षिप्तो । वंदनार्थमुपाग
तः ॥ ५८ ॥ ततश्च सूरिणा सजलजलदनादेन महामिथ्यात्वध्वांतध्वंसनैकभानुप्रभोपमा, शारीर-
मानसानेकदुःखदावानलविध्यापनैकमहामेघसमप्रभा, स्वर्गापवर्गसंसर्गकारिणी, अपारसंसारसागर-
निमज्जज्जंतुसंतानसमुत्तारविधायिनी प्रारब्धा धर्मदेशना. यथा भो भो भव्या जन्मजरामरणभीष
णोऽयं संसारः, विविधाधिव्याधिविधुरोऽयं सदासन्नतरापायः कायः. शरदभ्रविभ्रमोऽयं विभवविस्तारः,
सततपातुकमिदमायुष्कं, करिकर्णतरलतरं तारुण्यं, जलधिजलकल्लोललोलं लावण्यं, स्वकार्यनिष्ठोऽ-
यं बंधनभूतो बंधुवर्गः, दुर्गतिपातहेतुभूतोऽयं स्त्रीवर्गः, संसारवर्तिनां जीवानां पदे पदे इष्टजनविप्र-
योगः, अनिष्टजनसंप्रयोगः, रिपुराजादिकृतो महापरिभवः, मानखंडनं, चित्तसंतापः, सुलभा विप-
दो, दुर्लभाः संपदः, दुरंता नानानर्थकारिणो रागादयो महावैरिणः, दुर्लभा च भूयोऽपि जलधिज-
लमध्यपतितं रत्नमिव मानुषत्वादिसामग्री. तदिमामनंतानंतपुद्गलपरावर्तपर्यंते कथंचिदेव तुष्टिवशा-
दासाद्य विवेकवद्भिर्धर्मे यत्नो विधेयः, स चाहिंसादिलक्षणः पूर्वापराविरुद्धसर्वोपाधिविशुद्धः सर्वज्ञ-

भाषित एव दुर्गतिगर्तनिपतज्जंतूद्धरणलक्षणयोगात्परमार्थतो धर्मतां भजते, अतोऽयमेव प्रेक्षापूर्वकारिभिः कषच्छेदतापसशुद्धो जात्यस्वर्णमिवाविकलफलप्रदानप्रवणो ग्राह्य इति. अयं च सर्वज्ञप्रणीतो धर्मो द्विधा यतिश्रावकधर्मभेदात, तत्र यतिधर्मः क्षांतिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिंचन्यब्रह्मचर्यभेदाद्दशधा, श्रावकधर्मस्तु सम्यक्त्वमूलाणुव्रतपंचकगुणव्रतत्रिकशिक्षापदचतुष्टयभेदाद् द्वादशधा. इत्यादि यतिधर्मे श्रावकधर्मे च सप्रभेदे दयासारसूरिणा प्ररूपिते सति कैश्चिद्भव्यसत्वैः शारीरमानसानेकदुःखसंभारासारसंसारचारकावासनिर्विण्णैः निखिलकर्मक्षयोद्भूतनिर्व्याबाधनिरंतरनिरुपमानंदसंदोहसुंदरसुखपरंपरापरिकलितशाश्वतशिवसदनशिखरसंवासलंपटमानसैः जन्मजरामरणभीषणभवभ्रमणारीणप्राणिगणपरित्राणकारिणी दुरंतदुर्गतिगर्तनिपतज्जंतुसंतानसमुत्तारिणी निखिलकटुकठिनघनकर्मवनगहनदहनदावानलज्वलज्ज्वालावली सकलकलिलकलुषमलपटलक्षालनसजलजलदावली चतुर्गतिकसंसारोद्भवानंतदुरंततीक्ष्णदुःखप्रेंखद्व्याखिसंततिसंछेदनोद्धुरनिष्ठुरकुठारिका अमरनरनरेश्वरप्रवरतरप्राज्यराज्यादिसकलातुलविपुलकल्याणपरंपराकारिका सर्वसावद्ययोगविवर्जनरूपा सर्वविरतिः प्रतिपन्ना. कैश्चित् सम्यक्त्वमूलपंचाणुव्रतसप्तशिक्षापदरूपा देशविरतिरंगीकृता, केचित्त्व-

विरतसम्यग्दृष्टयः संजाताः, केचित्तु मद्यमांसादिविरतिरूपाननेकानभिग्रहान् प्रतिपन्नवंतः, अन्ये पुनर्भद्रकभावमुपगतवंत इति. अत्रांतरे धनसारो । नत्वा सूरिमपृछत ॥ यथा स्वामिन् किमस्माभिः । कृतं कर्म शुभं पुरा ॥ ५९ ॥ पंचानामपि सत्प्रीति—रस्माकं येन वर्तते ॥ एवंविधाश्च संजाताः । संपदः केन हेतुना ॥ ६० ॥ युग्मं ॥ सूरिः प्रोवाच भो भद्राः । श्रूयतां सावधानकैः ॥ युष्माकं येन सत्प्रीति—स्तदेतत्कथयाम्यहं ॥ ६१ ॥

अत्रैव भारते वर्षे । पुरे विश्वपुराभिधे ॥ बभूव धनसार त्वं । सार्थवाहः सुमंगलः ॥ ६२ ॥ एते त्वासन् सुसेनाद्या । वणिक्पुत्रास्तवैव भोः ॥ सस्नेहा एकचित्ताश्च । चत्वारोऽपि परस्परं ॥६३॥ वाणिज्यं चक्रिरे तत्र । द्रव्यमादाय तावकं ॥ त्वयापि सह संप्रीति—रेतेषामभवत्सदा ॥ ६४ ॥ तथा चैषां त्वमेवासीः । प्रमाणं सर्वकर्मसु ॥ तत्राप्येभिः समं सख्यं । स्नेहसारं तवाभवत् ॥ ६५ ॥ गृहीत्वा श्रावकं धर्मं । सूरिणामंतिके पुरा ॥ संहतैरेव युष्माभिः । सर्वैरासेवितः किल ॥ ६६ ॥ तथा जिनगृहं जीर्णं । धनसार त्वया सदा ॥ समुध्धृत्य कृता चारु—र्यात्रा तत्र जिनालये ॥६७॥ भूरिद्रव्यव्ययो जातो । जाता तीर्थप्रभावना ॥ तथा कृता सुवस्त्राद्यैः । संघपूजा च तत्र भोः ॥६८॥

एतदेभिर्भवन्मित्रैः । सर्वमेवानुमोदितं ॥ प्रदत्तं च निजं वित्तं । धर्मस्थानेषु शक्तितः ॥ ६९ ॥
ततो मृत्वा गताः सर्वे । कल्प ईशाननामनि ॥ ततश्च्युत्वा च संजाता । यूयमेते वयस्यकाः ॥७०॥
तद्वो पूर्वभवाभ्यासा—ज्जाता वः प्रीतिरंजसा ॥ संघपूजा कृता तेन । तवेदृक्षा गृहे श्रियः ॥७१॥
एवं सूरिभिराख्याते । तेषां प्राचीनजन्मनि ॥ जातिस्मरणमुत्पन्नं । सर्वेषामपि तत्क्षणं ॥ ७२ ॥ त-
तः संवेगमापन्नाः । सर्वे संसारभीरवः ॥ कृत्वा करांजलिं मूर्ध्नि । सूरिमेवं बभाषिरे ॥ ७३ ॥ भग-
वन्न सुस्थतां कृत्वा । स्वकुटुंबस्य सांप्रतं ॥ संसारोत्तारिणीं दीक्षां । गृहीष्यामस्तवांतिके ॥ ७४ ॥
सूरिणोक्तं च ह्यत्रार्थे । मा विलंबं करिष्यथ ॥ सूरिं नत्वा ततो गेहे । गताः सर्वे निजे निजे ॥
॥ ७५ ॥ ततस्तैः संहतैर्भूत्वा । चारुयात्रामहोत्सवाः ॥ कारिताः सर्वचैत्येषु । सर्वर्ध्या सर्वयत्नतः ॥
॥ ७६ ॥ दीनानाथादिलोकेभ्यो । दत्तं दानं किमिच्छितं ॥ दानपूर्वमनाघात । उद्घोषितः पुरादि-
षु ॥ ७७ ॥ वरैर्वस्त्रैर्वरैः पात्रै—र्वराहारैर्वरौषधैः ॥ वरैः कंबलरत्नैश्च । वरैर्धर्मध्वजादिभिः ॥ ७८ ॥
संपूजितः समग्रोऽपि । संघः सर्वगुणालयः ॥ भावसारं गुणाधारः । संसारोत्तारणक्षमः ॥ ७९ ॥
युग्मं ॥ सर्वसाधर्मिकाणां च । कृतं वात्सल्यमुच्चकैः ॥ दत्तं द्रव्यं विशेषेण । सर्वतीर्थेषु पुष्कलं ॥

॥ ८० ॥ इत्यादि सकलं कृत्यं । कृत्वा कृत्यविचक्षणाः ॥ कृत्वा स्वस्य कुटुंबस्य । सर्वसौस्थ्यं विशे-
षतः ॥ ८१ ॥ ततः कांचनसद्रत्न—रम्यासु शिबिकासु ते ॥ आरुह्य कृतशृंगारा—श्चारुचंदनच-
र्चिताः ॥ ८२ ॥ शुभ्रालंकारसद्वस्त्रा । महर्ध्या पुरमध्यतः ॥ निष्क्रांता ददतो दानं । यथाकामं त-
दर्थिनां ॥ ८३ ॥ श्लाघ्यमाना जनैः सर्वैः । स्तूयमानाश्च बंदिभिः ॥ एवं क्रमेण कुर्वंतो । वरां ती-
र्थप्रभावनां ॥ ८४ ॥ गता उद्यानैकट्ये । ततः सर्वेऽपि संहताः ॥ शिबिकातः समुत्तीर्य । व्रतो-
त्कंठितमानसाः ॥ ८५ ॥ पंचभिः कुलकं ॥ गतास्ते पादचारेण । सूरीणामंतिकं ततः ॥ दत्वा प्र-
दक्षिणास्तिस्रो । नत्वा सूरिं बभाषिरे ॥ ८६ ॥ निर्विण्णा वयमेतस्मा—त्प्रभो संसारवासतः ॥ देहि
दीक्षां जिनोद्दिष्टां । संसारोच्छेदकारिणीं ॥ ८७ ॥ ततस्ते सूरिणा सर्वे । दीक्षिता विधिपूर्वकं ॥ अ-
नुशिष्टाश्च सद्वाक्यै—र्भवनैर्गुण्यदर्शकैः ॥ ८८ ॥ यथा भो भो दुरापेयं । बह्वीभिर्भवकोटिभिः ॥
मानुषत्वादिसामग्री । सा संप्राप्ता भवादृशैः ॥ ८९ ॥ तथा तथा यतध्वं भो । संयमे नियमे व्रते
॥ सफलेयं समग्रापि । जायते च यथा यथा ॥ ९० ॥ एवं दत्वा प्रबंधेन । गुरुणा त्वनुशासना ॥
तैरप्यत्यंतसंविग्नैः । सम्यगेव प्रतीच्छिता ॥ ९१ ॥ ततस्ते साधवो जाताः । शांतचेतोजितेंद्रियाः ॥

पंचधाचारसंपन्ना—स्तपःसंयमसंयुताः ॥ ९२ ॥ शिक्षिता द्विविधा शिक्षा । ग्रहणासेवनाभिधा ॥ जाताः क्रमेण गीतार्थाः । शीलसंयमशालिनः ॥ ९३ ॥ भव्योपकरणे निष्ठा । विहृताः सह सूरिभिः ॥ नानाप्रकारदेशेषु । ग्रामेषु नगरेषु च ॥ ९४ ॥ तपोभिः कृशतां नीतं । शरीरं सह कर्मभिः ॥ अन्यदा धनसाराख्यः । साधुः साधितसत्क्रियः ॥ ९५ ॥ भावयन् भावना भव्या—श्चिंतयामास मानसे ॥ दुर्बलं मामकं देहं । संप्रत्यनशनं वरं ॥ ९६ ॥ युग्मं ॥ ददाम्यालोचनां सम्य—क्शल्योद्धारं करोम्यहं ॥ संविग्नश्चिंतयन्नेवं । गुरूणामंतिकं गतः ॥ ९७ ॥ वंदित्वा द्वादशावर्त—वंदनेन गुरून् स च ॥ प्रारब्धः शुद्धभावेन । दातुमालोचनामलं ॥ ९८ ॥ यच्छन्नालोचनामेवं । परं संवेगमागतः ॥ शुक्लध्यानं समारूढः । कर्मारण्यदवानलं ॥ ९९ ॥ प्रक्षीणं च ततस्तस्य । घातिकर्मचतुष्टयं ॥ संजातं केवलं ज्ञानं । लोकालोकप्रकाशकं ॥ २०० ॥ तदेवं धनसारस्य । शल्योद्धारं प्रकुर्वता ॥ घातिकर्मक्षये जाते । संजातः केवलोदयः ॥ १ ॥

एवमेव सुसेनोऽपि । साधुः साधुगुणालयः ॥ दृष्ट्वा स्वं दुर्बलं देहं । देहत्यागचिकीर्षया ॥ ॥ २ ॥ गुरूणामंतिकं प्राप्तः । शुध्यमानो यथोत्तरं ॥ गुरूणां वंदनं दत्वा । ददावालोचनां स्फुटं ॥

॥ ३ ॥ सर्वं कृत्यं विधायाशु । गुरोरंतिक एव सः ॥ ततो महाव्रतोच्चारं । कर्तुमेवं समुद्यतः ॥४॥ अहं भदंत निःशेषं । प्रत्याख्यामि तवांतिके ॥ प्राणघातं मृषावाद—मदत्तादानमेव च ॥ ५ ॥ मैथुनासेवनं सर्वं । सर्वमेव परिग्रहं ॥ रजनीभोजनं सर्वं । सर्वथापि त्यजाम्यहं ॥ ६ ॥ सर्वं क्रोधं च मानं च । मायां लोभं तथाखिलं ॥ रागं द्वेषं च निःशेष—मभ्याख्यानं तथैव च ॥ ७ ॥ सर्वं परपरीवादं । पैशून्यं कलहं तथा ॥ सर्वां मायामृषां मिथ्या—दर्शनं च तथाखिलं ॥ ८ ॥ देहमप्यंतिमोच्छ्वासे । जिनाध्यक्षं त्यजाम्यहं ॥ कुर्वन्नेवं व्रतोच्चारं । स साधुः शुद्धमानसः ॥ ९ ॥ परं संवेगमापन्नः । शुक्लध्यानवशादथ ॥ संप्राप्तः केवलं ज्ञानं । लोकालोकविलोकनं ॥ १० ॥ युग्मं ॥ एवमेव वरज्ञान—दर्शनादिगुणोदधिः ॥ साधुर्गुणाकरो नाम । देहत्यागाभिकांक्षया ॥ ११ ॥ गुरूणामंतिकं गत्वा । शल्योद्धारं विधाय च ॥ कृत्वा सर्वव्रतोच्चारं । संवेगभरनिर्भरः ॥ १२ ॥ प्रारब्धः क्षामणां कर्तुं । मूर्ध्नि कृत्वा करांजलिं ॥ अनंतगुणशुद्ध्या च । शुद्ध्यमानः क्षणे क्षणे ॥१३॥ त्रिभिर्विशेषकं ॥ व्रतिनां व्रतिनीनां च । या कृताशातना मया ॥ श्रावकश्राविकाणां च । तत्सर्वं क्षमयाम्यहं ॥ १४ ॥ क्षमयाम्येव निःशेषं । जीवराशिं चराचरं ॥ सर्वे क्षाम्यंतु मे जीवाः । समभा-

वमुपेयुषः ॥ १५ ॥ इत्यादिक्षामणां तस्य । कुर्वतः शुद्धचेतसः ॥ केवलज्ञानमुत्पन्नं । सर्वभावाव-
भासकं ॥ १६ ॥ एवं चंद्राभिधानोऽपि । साधुः संशुद्धमानसः ॥ गत्वा गुर्वंतिके तं च । वंदित्वा-
लोचनां ददौ ॥ १७ ॥ महाव्रतानि सर्वाणि । समुच्चार्य प्रशांतधीः ॥ सर्वं संघं च जीवांश्च । क्षा-
मयित्वा मुहुर्मुहुः ॥ १८ ॥ वंदित्वा सर्वचैत्यानि । सर्वसाधूंश्च भावतः ॥ एवं विधातुमारब्धो—ऽन-
शनं परतो यतः ॥ १९ ॥ युग्मं ॥ उध्धृताशेषशल्यौघः । समभावव्यवस्थितः ॥ भदंत भवनाशाय
। प्रत्याख्यामि भवांतकं ॥ २० ॥ चतुर्धाप्यहमाहारं । सर्वमेव तवांतिके ॥ एवं भवांतिमं तस्य ।
प्रत्याख्यानं प्रकुर्वतः ॥ २१ ॥ उल्ललास शुभध्यानं । कर्मकांतारपावकं ॥ ततः क्षीणं क्षणादेव ।
घातिकर्मचतुष्टयं ॥ २२ ॥ लोकालोकगतानेक—वस्तुस्तोमप्रकाशकं ॥ उत्पन्नं केवलं ज्ञानं । य-
द्दुरापमिहांगिनां ॥ २३ ॥ एवमेव गुणाधार—सारसंयमसंयुतः ॥ साधुः शुभंकरो नाम । नाशि
ताखिलकल्मषः ॥ २४ ॥ दृष्टांगं तपसा क्षीण—मक्षीणोज्ज्वलभावतः ॥ गुरूणां सन्निधौ गत्वा ।
सम्यगालोचनां ददौ ॥ २५ ॥ युग्मं ॥ संविग्नः शुद्धभावेन । व्रतोच्चारं विधाय च ॥ संघं च सर्व-
जीवांश्च । क्षामयित्वा विधानतः ॥ २६ ॥ ततः कृत्वा विधानेन । संपूर्णं चैत्यवंदनं ॥ एवं स्तोतुं

समारब्धः । संवेगभरनिर्भरः ॥ २७ ॥ युग्मं ॥ देव तुह चरणकमलं । तिहुयणसिरिकुलमणोहरं रम्मं ॥ सुतुट्ठिएहिं दिट्ठं । जेहिं जए ते जणा धन्ना ॥ २८ ॥ तुह गीवा गुणसायर—सुवन्ननिम्मलतिरेहरेहिल्ला ॥ निद्दाविगमे दिट्ठा । न जेहिं किं तेहिं नयणेहिं ॥ २९ ॥ वच्छत्थलंमि विलसिर—सिरिवच्छे स जण सेविए तुम्ह ॥ जे वीसमिया जहपहु । दुहदाहो ताण परनट्ठो ॥३०॥ पुरवरदुवारवरफलिह—दीहरा तारतंब करकमला ॥ भुयदंडा दिवसमुहे । तुह पहु पुन्नेहिं दीसंति ॥ ॥ ३१ ॥ नाहिदहम्मि तुह कंत—कंतिपयपूरिए पभायंमि ॥ ण्हायंति जे महायस । ते कम्ममलेण मुच्चंति ॥ ३२ ॥ तुह ऊरुजुग्गं जिणवर । केवललच्छीपवेसतोसेण ॥ थंभजुगंपिव विहिणा । निम्मवियं तोरणट्ठाए ॥ ३३ ॥ वट्टाणुपुव्विकरिकर—करणी कल्लाणकारणं परमं ॥ जंघाजुगं पभाए । तुह दीसइ पुन्नवंतेहिं ॥ ३४ ॥ देव तुह पायपउमे । निच्चं चिय जाण अविचला भत्ती ॥ ताण गुविलोवि जायइ । भवोदही गोपयसमाणो ॥ ३५ ॥ देव तुह पायपायव—छाया संसारियाण सुहजणणी ॥ भवदहसंतावहरा । संजायइ भत्तिमंताणं ॥ ३६ ॥ किं तेण गुणगणेणं । कुलेण किं तेण किं च विहवेण ॥ रूवेण जोव्वणेण य । जिणिंद तुह भत्तिरहिएण ॥ ३७ ॥

जइ न बुझसि हियए । थुव्वसि न गिराए नेव काएण ॥ पणमिज्जसि देव तुमं । अलाहि किं तेण जम्मेण ॥ ३८ ॥ देव तुमाउ न अन्नो । मह नाहो इहभवे परभवे वा ॥ एसा मह पडिवत्ती । कम्मवसा कज्जनिप्फत्ती ॥ ३९ ॥ नाह तुमाउ न अन्नो । नमामि न थुणामि नेव अच्चेमि ॥ पच्छेमि नेव जिणवर । सुत्तो सुमिणे न समरामि ॥ ४० ॥ तं चेव मुणसि मुणिवइ । जइएयमकारिमं तत्तमत्र ॥ तुह पयसेवासहिउ । भवे भवे होज्ज जिणजम्मो ॥ ४१ ॥ तविंयं तवो तवोनिहि । सुयासुई तुम्ह भाविउ अहो ॥ संपइ समाहिमरणं । जह होइ तहा करेज्जासु ॥ ४२ ॥ इय तिसलहनंदणि डुहसय—खंडणि वद्धमाणपहुथुयचलणि ॥ वरलक्खणलंछणि भव—भयभंजणि होउ भत्ति मह वीरजिणि ॥ ४३ ॥

एवमादिस्तुतिस्तोत्रैः । संवेगरसदायिभिः ॥ वंदित्वा भक्तितो देवान् । ववंदे विधिना गुरून् ॥ ४४ ॥ सर्वस्यापि त्रिलोकस्य । वंदनीयपदांबुजान् ॥ सर्वसाधूंश्च वंदित्वा । विधायानशनं ततः ॥ ॥ ४५ ॥ भावयन् भववैरस्यं । चंचलत्वं च संपदां ॥ मानुषत्वादिसामग्र्या । भूयोऽप्यत्र डुरापतां ॥ ॥ ४६ ॥ सर्वथा दुर्जयत्वं च । महामोहमहीपतेः ॥ दारुणत्वमकल्याण—मित्रवर्गाभिसंगतेः ॥

॥ ४७ ॥ कल्याणमित्रयोगस्य । सर्वकल्याणदायिनः ॥ असमंजसकारित्वं । रागिणां च पदे पदे
॥ ४८ ॥ सद्वृत्तेः प्रतिपंथित्वं । सर्वांतरद्विषां तथा ॥ एवमादिसमग्राणां । त्रैलोक्योदरभाविनां ॥
॥ ४९ ॥ सुंदरेतरभावानां । शुभेतरविपाकतां ॥ स संस्तारकमारूढः । प्रौढसद्भावनायुतः ॥ ५० ॥
षड्भिः कुलकं ॥ सम्यक्पंचनमस्कारं । सारमार्हतशासने ॥ उच्चचार स्फुटैर्वाक्यैः । संसारार्णवतार-
कं ॥ ५१ ॥ वारकं सर्वदोषाणां । नाशनं निखिलापदां ॥ एवमुच्चरतस्तस्य । भावतः पंचमंगलं ॥
॥ ५२ ॥ संजातं पंचमं ज्ञानं । विश्वविश्वावभासकं ॥ एवं ते साधवः शुद्ध—पंचमज्ञानसंयुताः ॥
॥ ५३ ॥ पंचापि पंचमोदार—चारुचारित्रशालिनः ॥ प्रक्षीणाशेषकर्मांशाः । सर्वे क्लेशविवर्जिताः
॥ ५४ ॥ कषायरहिताश्चापि । सर्वथा मोहवर्जिताः ॥ संप्राप्ताः परमानंद—सुंदरं परमं पदं ॥ ५५ ॥
तदेवं धनसारोऽसौ । सार्धं स्वीयवयस्यकैः ॥ संघपूजाप्रभावेण । जातः कल्याणभाजनं ॥ ५५ ॥
तदिममिह विलोक्य श्रेयसामेकहेतुं । भवजलनिधिमज्जज्जंतुसंतानसेतुं ॥ शमितदुरितदावं संघ-
पूजाप्रभावं । कुरुत भविकलोकाः सादरं संघपूजां ॥ ५६ ॥ तदेवं धनसारेण । संघपूजां प्रकुर्वता
॥ तीर्थप्रभावनाकारि । श्रीमज्जैनेंद्रशासने ॥ ५७ ॥ यतः—तं किंपि पुरिसरयणं । संघसमुद्दंमि

जायइ महग्घं ॥ उज्जोइ जइ सयलंपि । सासणं जेण जगगुरुणो ॥ ५८ ॥ इति संघपूजाधिकारे धनसारश्रेष्ठिकथानकं समाप्तं ॥ तत्समाप्तौ च समाप्तः संघपूजाधिकारः. अथ सूरिः प्रकरणकरणोपात्तपुण्येन शुभप्रार्थनां कुर्वन् श्लोकद्वयमाह—

॥ मूलम् ॥—सुभाषितसुधाधाम—धर्मरत्नकरंडकं ॥ भव्यसत्वोपकाराय । कृत्वा यच्चार्जितं शुभं ॥ १ ॥ तेनैव मम भूयोऽपि । भूयाज्जन्मनि जन्मनि ॥ ज्ञानदर्शनचारित्र—भावश्रीवर्धमानता ॥ २ ॥ व्याख्या—सुभाषितान्येव सुधा पीयूषं, तस्य धाम स्थानं सुभाषितसुधाधाम, विशेषणमिदं, विशेष्यमाह—धर्मरत्नकरंडक धर्मस्य संबंधिनो ये दानादिभेदास्त एव रत्नानि धर्मरत्नानि, तेषां करंडक इव करंडकः संगोपनस्थानं प्रकरणाभिधानमिदं, भव्यसत्वोपकाराय भव्यलोकानुग्रहाय कृत्वा विधाय यदर्जितं यदुपार्जितं शुभं पुण्यमिति, तेनैव शुभेन मम मह्यं भूयोऽपि पुनरपि भूयाद्भवेज्जन्मनि जन्मनि आसंसारमित्यर्थः, ज्ञानदर्शनचारित्राण्येव भावलक्ष्मीस्तस्या वर्धमानता प्रवर्धमानत्वं ज्ञानदर्शनचारित्रभावश्रीवर्धमानता, अनेन काका प्रकरणकृता स्वाभिधानमुक्तमिति. ॥ १–२ ॥ अथ सूरिः प्रकरणस्य स्वकृतत्वमावेदयन्नाह—

॥ मूलम् ॥—श्रीमदभयदेवाख्य—सूरिशिष्येण निर्मितः ॥ सूरिणा वर्धमानेन । धर्मरत्न·
करंडकः ॥ १ ॥ व्याख्या—श्रीमांश्चासावभयदेवाख्यसूरिश्च, तस्य शिष्यो विनेयस्तेन निर्मितो वि·
रचितः, सूरिणाचार्येण वर्धमानाभिधानेन धर्मरत्नकरंडको धर्मरत्नकरंडकाख्यो ग्रंथ इति श्लोकार्थ
इति. ॥ १ ॥ अथ ग्रंथाग्रंथं सूत्रस्य श्लोकसंख्यया प्राह—

॥ मूलम् ॥—ग्रथितेऽपि हि विज्ञेयं । श्लोकानां सर्वसंख्यया ॥ पूर्वापर्येण संपिंड्य । पंचत्रिं·
शं शतत्रयं ॥ १ ॥ व्याख्या—श्लोकोऽयं व्यक्त एव. ॥ १ ॥ इतश्च—श्रीजयसिंहभूपाल—भक्तो
भरिजनाश्रयः ॥ ग्रामोऽस्ति दायिकाकूपो । जैनवेश्मविराजितः ॥ १ ॥ तत्रासीज्जिंदकः श्रेष्ठी । हुं·
वटान्वयभूषणः ॥ द्वितीयश्चाजितो नाम । तस्य भ्राता सहोदरः ॥ २ ॥ ताभ्यां विशालचित्तेन ।
शुभवित्तेन कारिता ॥ रम्या पौषधशालास्ति । साधुश्रावकसंश्रया ॥ ३ ॥ जिंदकश्रेष्ठिनः कीर्ति—
रंजितस्य च धीमतः ॥ पुत्रयोः सर्वदेवस्य । श्रेष्ठिनः श्रेष्ठकर्मणः ॥ ४ ॥ सूरिणा वर्धमानेन । त·
स्यां संतिष्ठता सता ॥ भव्यलोकोपकाराय । प्रबंधोऽयं विनिर्मितः ॥ ५ ॥ युग्मं ॥ अगाधांतःपरि·
स्पंदे । गूढार्थावर्त्तदुस्तरे ॥ सारस्वते हृदे मग्ना । श्रांता संतरणाक्षमा ॥ ६ ॥ धीवरेणेव येनैषा ।

स्वयं संवाह्य यत्नतः ॥ संप्रापिता परं पारं । मन्मतिर्गौरिवाबला ॥ ७ ॥ युग्मं ॥ स तपस्वी यशस्वी च । धर्मवान् धार्मिकप्रियः ॥ पार्श्वचंद्र उपाध्याय—श्चिरं जीवतु नंदतु ॥ ८ ॥ गणिनाशोकचंद्रेण । लिखिता प्रथमा प्रतिः ॥ तथा धनेश्वरेणापि । साधुना पुण्यहेतवे ॥ ९ ॥ सूरिणा वर्धमानेन । नेमिचंद्रमुनीश्वरैः ॥ पार्श्वचंद्रोपाध्यायैश्च । पंडितैरेष शोधितः ॥ १० ॥ तथापि चासमीचीनं । यदत्र परिज्ञाप्यते ॥ तत्संशोध्य समीचीनं । प्रविधेयं विचक्षणैः ॥ ११ ॥ नमः श्रीपार्श्वनाथाय । प्रत्यूहापोहहेतवे ॥ अर्हद्वक्त्रनिवासिन्यै । श्रीमद्वाण्यै नमोनमः ॥ १२ ॥ पूर्वापरेण संपिंड्य । सावधानेन चेतसा ॥ प्रायो दशसहस्राणि । ग्रंथमानं विनिश्चितं ॥ १३ ॥ विक्रमतो वर्षाणां । शतेष्वेकादशस्वतीतेषु ॥ द्वासप्तत्या वर्षै—रधिकेषु कृता विवृत्तिरेषा ॥ १४ ॥ इति श्रीजैनशासनसौधमध्यप्रदीपकल्पचंद्रगच्छीयश्रीमदजयदेवाख्यसूरिपादपद्मचंचरीकायमानश्रीवर्धमानाचार्यरचितो धर्मरत्नकरंडकः परिसमाप्तः ॥ शिवमस्तु सर्वजगतः । परहितनिरता भवंतु भूतगणाः ॥ दोषाः प्रयांतु नाशं । सर्वत्र सुखीभवंतु लोकाः ॥ १ ॥ इति श्रीमच्चंद्रगच्छीयश्रीअजयदेवसूरिपादपद्मचंचरीकश्रीवर्धमानाचार्यविरचितो धर्मरत्नकरंडकः संपूर्णः ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात ॥

लब्ध्वा यदीयचरणांबुजतारसारं । स्वादच्छटाधरितदिव्यसुधासमूहं ॥
संसारकाननतटे ह्यटतालिनेव । पीतो मया प्रवरबोधरसप्रवाहः ॥ १ ॥
वंदे मम गुरुं तं च । चारित्रविजयाह्वयं ॥ परोपकारिणां धुर्यं । चित्रं चारित्रमाश्रितं ॥ २ ॥ युग्मं.
चारित्रपूर्वा विजयाभिधाना । मुनीश्वराः सूरिवरस्य शिष्याः ।
आनंदपूर्वविजयाभिधस्य । जातास्तपागच्छसुनेतुरेते ॥ ३ ॥

---

आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे
पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे.

॥ इति श्रीधर्मरत्नकरंडटीकायां द्वितीयो भागः समाप्तः ॥